

# श्रुतितात्पर्यनिर्णयः

श्रीमच्छाश्वतिकदिव्यमूर्तिपरमपुरुषाऽऽराधनाया एव भगवच्चरणद्वारकसम्प्राप्तभगवत्सेवारूपमोक्षफलकत्वेन प्रतिपित्सितार्थाऽसाधारणसाधनपरमप्रेमात्मकभक्तेस्तदङ्गभूतानां धर्मज्ञानवैराग्याणां च श्रुतिस्मृतिसूत्रपुराणेतिहासादिप्रतिपाद्यानां महापुरुषानुष्ठितानां भगवद्विषयमात्राभिप्रयुक्तनिष्कामभावाऽभिपन्नानां मानुषावतारे आजीवनकर्तव्यतया प्रतिपादितानां कर्मप्रवृत्तिविरतिस्वरूपाणामन्ततस्तद्भक्तिपर्यवसितानां तदधिकारिहितार्थं वैशद्यमपेक्षणीयमिति तदप्युपासनाविशेष एवेति यत्नोऽयमाद्रियते–

तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन(बृ. उ. ६/४/२२)इत्यनेनाऽऽजीवनाऽनुवचनकथाकीर्तनश्रवणवन्दनयजनपूजनदानपुण्यचिरस्थायितपोव्रतादिकर्मभिः, 'यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः (पु. सू.) इत्यनेन यजनधर्मादिभगवत्सम्बन्धिप्रथमधर्मात्मकसर्वक्रियाकलापादिना, 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः (ई. वा. २) इत्यनेन कर्मकाण्डेन, 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्' इत्यनेन ब्रह्मचर्यादिभिरन्यतपोभिश्च, 'तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि तान्याचरथ नियतं सत्यकामा वः पन्थाः सुकृतस्य लोके' (मु० १, ख० २, मं-१) इत्यनेन बहुधा सन्ततकर्मभिः, 'धर्मं चर धर्मान्न प्रमदितव्यम्, यान्यस्माकं सुचरितानि त्वयोपास्यानि (तै० शि० अ० ११ । २) अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु यश्चास्मिन् धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मः' (बृ० अ० २, ब्रा० पू० मं-११) इत्यनेन सर्वाधिकृतसामान्यविशेषधर्मैर्भगवदर्पणात्मकैर्मोक्षो निर्दिश्यते ।

अथ 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुते-

ने'ति तु तेन तेन भगवद्धरणशून्येनन लभ्यः (कठ० अ० व० २ मं-२३) 'यत्कर्मिणो न प्रवेदयन्ति रागात् (मु० खं० २, मं-९) 'इष्टापूर्तं मन्यमाना वरिष्ठं (मु० खं० २, मं-१०) 'न कर्मणा न प्रजया न धनेन एकेऽमृतत्वमानशुः' 'त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानं···सर्वे एते पुण्यलोका भवन्ति (छा० अ० २, खं० २३, मं-१) 'अविद्वान् अग्निहोत्रं जुहोति यथाऽङ्गारान् अपोह्य भस्मनि जुहुयात् तादृक् स्यात् (छा० अ० ५, खं० २३, मं-१) 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते (छा० अ० ८, खं १, मं-६) 'साधुकारी साधुर्भवति पापकारी पापो भवति, पुण्यः पुण्येन कर्मणा पापः पापेन (बृ० अ० ४, ब्रा० ४, मं० ५) 'तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य (बृ० अ० ४, ब्रा०४, मं-६) 'सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात् स्यां न्वहं तेनाऽमृताऽऽहो ३ नेति नेति (बृ० अ० ४, ब्रा० ५, मं-३) 'अमृतस्य नाऽऽशाऽस्ति वित्तेने'त्यादौ केवलभगवत्सम्बन्धशून्यधर्मकर्मवित्तप्रजाभिरमृतत्वाऽप्राप्तिकथनाद् वर्णाश्रमधर्मा लोकसमाजमध्यसुखमात्रकरा न तु मोक्षदाः, अतो भगवत्सम्बन्धकरा एव सर्वकर्मवृत्तिधर्मादयो मोक्षदा इति धर्मपदेन भागवतधर्म एवाऽत्र साधनान्तर्गतो बोध्यः, सत्कर्मजन्यः स्वर्गादिसुखदो विधिबोधितकर्तव्यताको वा धर्मः पुण्यविशेषः, स एव भगवत्प्रसन्नतात्मको दिव्यो धर्मो भगवत्सम्बन्धवान् भागवतधर्मः, मानवानां देशादिभेदाद् भिन्नानां भिन्नशाखो धर्मः सत्कर्मात्मकः शारीरकैन्द्रियकाऽऽन्तःकरणिकाऽऽत्मीयभेदभिन्नः 'सर्वोऽपि लौकिको भगवद्योजितो मुक्तिद इति सर्वोऽपि कर्मकाण्डः भगवत्प्रसन्नतारूपो भागवतधर्मानुगुणो हंसरूपदेवप्रशंसितसयुग्वरैक्वीयभगवदर्पितकृषिप्रभृतिनिष्कामकर्म (छा० अ० ४, ख० १, मं-६, ८) वन्मोक्षशास्त्रे वेदितव्यः। अत्र आश्रयतासंसर्गेणाऽऽत्मनिष्ठसेवात्मकमोक्षं प्रति विषयतासंसर्गेणाऽऽत्मनिष्ठभगवत्प्रसन्नतात्मकभागवतधर्मस्य कारणत्वम्। यद्वा आत्मनिष्ठस्वाश्रयप्रकारतासम्बन्धावच्छिन्नविशिष्टोयाऽऽनन्दात्मकमोक्षं प्रति स्वस्नेहीयविशेष्यताकप्रकारताकत्वसंसर्गावच्छिन्नसेवायाः कारणत्वम्। मोक्षस्य प्रातिस्विकरूपेणाऽनुभूयमानत्वात् प्रातिस्विककार्यकारणभावस्यापि फलबलकल्पनीयस्यापि सामञ्जस्यात्।

अथ द्वितीयं साधनं ज्ञानं, तच्च जडचेतनविवेकरूपम्, जडेषु प्रकृतिविकृत्यादिषु चेतनेषु जीवेश्वरमुक्तब्रह्मपरब्रह्मसु च यथापेक्षं  [illegible] विवेकः, समुपार्जनीयम्, साधर्म्यवैधर्म्यबोधपूर्वकस्तत्तत्स्वरूपाऽवगमो

फलतः कार्यकारणात्मकं सर्वं विशिष्टाद्वैततत्त्वमेकमेवेति वेदान्तजन्यविवेकः, तथाहि–

तत्र नित्यजडे जगदंकुराधानत्व – साम्यावस्थावत्त्वसूक्ष्मविकारस्वरूपयोग्यत्वाऽनुद्भूतभोग्यत्व – नामरूपभाक्पूर्वावस्थत्व – परस्पराकृतहेतुकत्वोपमर्द्योपमर्दकभावानुस्यूतत्व - सततविकारोन्मुखत्वाऽविषमपरिणामवत्त्वाऽचेतनत्वाऽऽपूरकत्वपरार्थत्व – तत्त्वान्तरोपादानकत्वचैतन्यशून्यत्वाऽच्छत्वलयाऽनवच्छिन्नत्वनित्यजडत्वचेतनाधिष्ठितत्वाऽक्रियजडत्वैकत्वलिङ्गबीजत्वनिरवयवत्वनित्यगुणस्वरूपत्वविचित्रार्थगर्भत्वप्रतिप्रसवसत्तावत्त्वसूक्ष्मचेतनग्रन्थिमूलत्वनिगूढभोगशक्तित्व–ब्रह्मज्योतिश्छायात्वजडाऽनुद्भूतभावत्वमूलप्रकृतित्व–सृष्टिसौक्ष्म्याऽन्तिमाऽऽश्रयत्वमूलाऽविद्यात्वमूलाऽज्ञानत्वाऽनुद्भूतकारणतमस्त्वाऽकार्यावस्थोपलक्षितगुणसामान्यत्वमहामायात्वादिधर्माणां वेदनम्।

नित्यसत्त्वे सुखप्रकाशलाघवादिनिदानत्व – पदार्थाऽवभासकत्व–सत्प्रतीतिविषयत्व–समाधिस्थित्यादर्शत्व – दृष्टस्वस्वरूपाऽवस्थानदृष्टिसजातीयत्व – साधकसुखपराकाष्ठाप्रयोजकाऽनुयोगित्वादिधर्माणां वेदनम्।

नित्यरजसि दुःखप्रवृत्तिचलत्वादिनिदानत्व – पदार्थाऽभिप्रवर्तकत्व–रजःप्रतीतिविषयत्व–दिव्यसिद्धिशेवधित्व–दृष्टसक्रियाऽवस्थानसञ्चालनवत्त्व – सम्प्रवृत्तदुःखमात्राप्रयोजकानुयोगित्वादिधर्माणां वेदनम्।

नित्यतमसि मोहनियमनोपष्टम्भादिनिदानत्व – लक्ष्यवेगनिवर्तकत्व–तमःप्रतीतिविषयत्व–शून्यभावापादकत्वदृष्टनिष्क्रियाऽवस्थापकत्व–यावन्निवृत्तमुग्धमूर्छाऽऽवरणादिमात्राऽनुस्थित्यनुयोगित्वादिधर्माणां वेदनम्।

अनित्यजडेषु हेतुमत्त्वाऽनित्यत्वाऽव्यापित्वसक्रियत्वाऽनेकरूपत्वकारणाऽऽश्रितत्वतिरोभावाविर्भावधर्मित्वसावयवत्त्वसञ्चालकाऽधीनसञ्चरणवत्त्वस्थूलतात्मकव्यक्तत्व–कार्यात्मकत्वविकारत्व–तत्त्वान्तरोपादेयत्व – स्वालक्षण्यव्यावृत्तिमत्त्व – भिन्नाऽवस्थत्व–कारणात्मकत्व–परस्पराकृतहेतुकवृत्तित्वविकृतिसत्ताश्रयत्वविषमस्थितिकत्व–ध्वंसयोग्यत्व–नामाकृतिज्ञप्तिपरिवर्तनविषयत्व–साधारणत्व–दृश्यत्व–भोग्यत्वोद्भूतजडत्वाऽऽश्रयाऽऽश्रयिभाववत्त्वाऽन्तर्बहिर्ग्राहकग्राह्यभावाऽन्यतरत्व–मध्याऽवस्थितिकत्व-क्रमावच्छिन्नत्व-परिणामाऽन्यत्व–क्रमाऽन्यत्वनैकसंयोगित्व–नैकविभागित्व–कालास्पदत्वादिधर्माणां वेदनम्।

नित्याऽनित्योभयजडेषु त्रिगुणकत्वाऽपृथक्सिद्धहेतुहेतुमद्भा-

वत्व-सामान्यविशेषत्व-शान्तघोरमूढत्वस्वरूपयोग्यत्वविषयत्व-भोग्य-जडत्वोपलक्षितत्व-प्रसवधर्मित्व-विशेषगर्भत्वक्रियायोग्यस्वरूपत्व-कृतिपदार्थत्व-मायावाच्यात्मकत्व-हेयहेतुसंयोगान्वयित्व-जडपदवाच्यत्वाऽचेतनतत्त्वाऽचेतनपुरीत्व-संघाततादात्म्यवत्त्व-चेतनार्थकत्वादिधर्माणां। वेदनम्।

कालपदार्थे कालपदवाच्यत्व-भगवल्लीलोपकरणत्वसृष्टिकलनस्वभाववत्त्व-क्षणादिविविधाङ्कित्व-परत्वाऽपरत्वधीहेतुत्व-प्रलयाऽप्रलयाऽन्यतरनिरूपकत्व-मायादिक्षोभकत्व-वैरूप्यसंश्लेषप्रतियोगिकत्वादिधर्माणां वेदनम्।

सामान्यचेतनतत्त्वे चैतन्यवत्त्व-चिच्छक्तितादात्म्यत्वज्ञानप्रकाशवत्त्वाऽऽनन्दवत्त्वाऽजडत्वनित्याऽधिष्ठात्रवस्थाश्रयत्व-क्षेत्रज्ञत्व-मायिकगुणशून्यत्वाऽप्रसवधर्मित्वाऽक्षरणधर्मत्वाऽऽत्मपदाभिधेयत्व-सच्चिदानन्दत्व-जडचैतन्यापादकत्व-जडशरीरित्वाऽभिलापेक्षणादिमत्त्व-मोक्षभागित्व-कैवल्यार्थित्व-संयमित्व-तापसत्व-स्वांशस्वतन्त्रस्वरूपत्व-स्वाश्रयातिविलक्षणनियामकधर्मवत्त्वचेतनपदवाच्यत्वाऽचेतनभिन्नत्वादिधर्माणां वेदनम्।

नियाम्यचेतनतत्त्वे अकारणकचेतनत्व-नित्यव्याप्यचेतनत्व-निष्क्रियप्रेर्यचेतनत्वाऽनेकचेतनत्वपरब्रह्माश्रितचेतनत्व-निरवयवचेतनत्व-ज्ञानप्रभावत्व-मायिकगुणशून्यव्याप्यानन्दित्वस्वरूपभिन्नचित्त्वाऽसाधारणभोक्तृत्वाऽप्रसवधर्मिस्वामित्व-जडाधिष्ठातृत्व-कैवल्याऽभिसन्धातृत्वद्रष्टृत्वाऽक्षरणधर्मित्व-परब्रह्मनियाम्यचित्तत्त्व-पराधीन[illegible]त्व-शरीरचित्त्वोपासकत्व-परब्रह्मांशज्ञत्वप्रकाश्यचेतनत्व-ससाक्षिकत्वादिधर्माणां वेदनम्।

जीवचेतने नित्यज्ञानधनत्व-मलिनान्तःकरणावच्छिन्नत्व-निरवयवज्ञानिधर्माऽधर्मादिमत्त्व-त्रिविधकर्मास्कन्दितत्व-वासनावत्त्वा[illegible]ज्ञानात्मककारणदेहित्व-मोक्षाधिकारिहिरण्यगर्भसृष्टिचित्त्व-दुःखयोगार्हत्व-कर्मफलभोक्तृत्व-शोकमोहादिमच्चित्त्व ज्ञानगुणसारत्वस्थूलादिशरीरित्व-स्वसंवेद्यज्ञानस्वरूपत्वाऽनादिकर्मरूपाऽविद्याकृतनानाविधज्ञानसंकोचविकासवत्त्व-भोग्याऽचिद्भूतभौतिकसंसर्गवत्त्वाऽणुचेतनत्वेश्वरभिन्नमायिकचेतनत्वाऽनुमानशब्दादिप्रमाणसापेक्षप्रमावत्त्व-योगाभ्यासस्वरूपयोग्यत्व-लौकिकसन्निकर्षसापेक्षप्रत्यक्षदर्शित्व-संशयविपर्ययतर्कादिमत्त्व-वाणीजन्यबोधाऽपेक्षितत्व-त्रिदेवानुशास्यचेतनत्वादिधर्माणां वेदनम्।

ईश्वरचेतनेषु-नित्यैश्वर्यघनत्व-शुद्धान्तःकरणावच्छिन्नत्व-ब्रह्मा-

णुसञ्चालकत्व-विराडादिदेहित्व-जीवोर्ध्वमुक्तानिम्नकोटिकचेतनत्व-मूलाऽविद्याधिष्ठातृत्व-जीवभिन्नमायावच्छिन्नचेतनत्व-सृष्ट्यंकुरोपलक्षितचेतनत्व-शुद्धसत्त्वावच्छिन्नचेतनत्व-प्रकृतिजन्यतत्त्वाधिष्ठातृत्व-तत्तत्तत्त्वव्यापकचेतनत्वादीश्वरपदवाच्यत्वादिधर्माणां वेदनम्।

मुक्तचेतनेषु भोगमात्रीयब्रह्मसाम्यलिङ्गत्व-जगद्व्यापार-वर्जब्राह्मैश्वर्यवत्त्व-मायारहितब्रह्मभिन्ननियाम्यचेतनत्वाऽक्षरब्रह्मव्याप्यमायापारचेतनत्व-ब्रह्मलोकाश्रितनियाम्यसर्वज्ञचेतनत्व-मुक्तपदवाच्यत्व-मुक्तिस्थितिसम्पादयितृत्वादिधर्माणां वेदनम्।

अक्षरब्रह्मणि-प्रकाशघनत्व-मुक्ताधारपरब्रह्मव्याप्यचेततनत्व-परब्रह्मभिन्नसर्वाधारचेतनत्वसाकारनिराकारोभयविधचेतनत्व-केवलान्वयिशरीरत्व-भोग्यभोगोपकरणात्मकविशिष्टधामत्व-परब्रह्मप्रकाशावच्छेद्यव्यापकप्रकाशत्व-मुक्तनियामकत्वविशिष्टपरब्रह्मनियाम्याऽक्षरत्वाऽक्षरधामपदवाच्यत्वादिधर्माणां वेदनम्।

परब्रह्मणि सर्वान्तर्यामित्व-सर्वप्रेरकत्व-सर्वकारयितृत्व-फलरूपत्वाऽनानात्व-हेयगुणरहितकल्याणगुणवत्त्व-परमसर्वज्ञत्व-सर्वशक्तिमत्त्व-नामरूपव्याकरणशीलत्व-सर्वाधारत्व-सर्वनियन्तृत्व-सर्वेशितृत्व-सर्वशेषित्व-सर्वपतित्व-सर्वशरीरित्व-सत्यकामत्व-सत्यसंकल्पत्व-सर्वात्मभूतत्व-परब्रह्मत्व-स्वप्रकाशत्वाऽपहतपाप्मत्वाऽक्षराधिपत्व-देशकालवस्तुपरिच्छेदशून्यत्व-विभुत्व-सर्वगतसूक्ष्मत्वाऽव्ययत्व-जगज्जन्मादिमत्त्व-सत्यज्ञानान्तत्व-सर्वप्रमावत्त्व-सर्वप्रत्यक्षदर्शित्व-सर्वान्वयव्यतिरेकित्व-निरतिशयौज्ज्वल्यसौन्दर्य-सौगन्ध्यसौकुमार्य-लावण्ययौवनादिमद्दिव्यसाकारत्व-निर्विकारसत्तायोगित्व-सदैकरूपवत्त्व-सदानिर्दोषत्व-सर्वसृष्टृत्वपालकत्वधारकत्वसंहारकत्व-सर्वैश्वर्यत्व-सर्वप्रकारकत्व-सर्वविभासकत्व-कालाद्यस्पृष्टत्व-स्वलीलापरिकरवत्त्व-निरवद्यत्व-निरञ्जनत्व-विज्ञानानन्दत्व-निर्विकारत्व-निष्कलत्व-निष्क्रियत्व-शान्तदिव्यगुणादिमत्त्व-मायागुणरहितत्व-सर्वकर्माराध्यत्व-सर्वकर्मफलप्रदत्व-सर्वकार्योत्पादकत्व-सर्वव्यापकत्वाऽनवधिकवृहत्त्ववत्त्व-मुक्तप्राप्योत्तमपुरुषत्व-सर्वहेयप्रत्यनीकत्व-सदैकरूपकिशोरसाकारत्व-सर्वविधचमत्कारैश्वर्यविभूतिगुणादिमत्त्वादिधर्माणां वेददम्।

एवं यथायथं परस्परमिश्रितजडचेतनादिविविधावश्यकज्ञेयधर्माणां वेदनं चापि समुपार्जनीयम्।

अथ सर्वं विशिष्टतत्त्वमेकमेव श्रुतिप्रतिपाद्यं कार्यकारणात्मकं सूक्ष्मस्थूलावस्थापन्नं चिदचिदात्मकम्।

प्रकृतिकालजीवेश्वरमुक्तब्रह्माक्षरब्रह्मविभूतिज्ञानात्मकद्रव्यपदाभिलाप्यं सत्त्वरजस्तमःशब्दस्पर्शरूपरसगन्धसंयोगशक्त्यात्मकगुणपदाभिलाप्यं प्रकारप्रकारिशेषशेषिविशेषणविशेष्याऽऽधेयाऽऽधारपरतन्त्रस्वतन्त्रव्याप्यव्यापकगौणमुख्यभावापन्नं प्रमेयं विशिष्टात्मकमेवेति।

ब्रह्मलोके व्यतिरेकस्वरूपेण वर्तमानः परब्रह्म परमात्मा स्वैश्वर्यगुणाद्यन्वयिभावेन साकाराऽक्षरब्रह्मणि शरीरिरूपोऽपि विशिष्टो मूर्तामूर्तप्रविष्टो विराजते, स एव ब्रह्मविशिष्टो मुक्तान्तर्यामिशरीरितया मुक्तविशिष्टो मुक्ताऽक्षरविशिष्टो विराजते, स एव महापुरुषविशिष्टो महापुरुषाक्षरविशिष्टो विराजते, स एव महामायाविशिष्टो महामायापुरुषाऽक्षरविशिष्टो विराजते, महामायासाक्षि-महापुरुषसाक्षि-ब्रह्माऽक्षरसाक्षि-स्वगुणादिसाक्षिरूपश्चतुर्धा विशिष्टस्तत्तच्छरीरनियतस्तत्तच्छरीरिनियतपरिगणनागतोऽवश्याऽस्तित्वाऽवगतो विशिष्टो बोध्यः, स एव प्रधानमायाया यः पुरुष ईश्वरस्तद्विशिष्टः—तत्पुरुषसाक्षि—तन्महामायासाक्षि—तन्महापुरुषसाक्षि—तदक्षरसाक्षि-स्वगुणसाक्षिरूपः पञ्चधा विशिष्टः, स एव प्रधानाख्यमायासाक्षि-प्रधानपुरुषसाक्षि-महामायासाक्षि-महापुरुषसाक्षि-ब्रह्माऽक्षरसाक्षि-स्वगुणसाक्षिरूपः षड्धा विशिष्टः, सनिष्ठ्यनुप्रवेशात् तत्तच्छरीरनियतस्तत्तच्छरीरिनियतपरिगणनागतोऽवश्याऽस्तित्वाऽवगतो विशिष्टो बोध्यः इदमेव महत्तत्त्वविशिष्टं तत्त्वमिति।

अथाऽग्रे महाविष्णुविशिष्टः स एव, स एव च महाविष्णुसाक्षि-प्रधानसाक्षि-तत्पुरुषसाक्षि-महामायासाक्षि-महापुरुषसाक्षि-ब्रह्माऽक्षरसाक्षिस्वगुणसाक्षिरूपः सप्तधा विशिष्टः, इदमेवाऽहंकारविशिष्टं तत्त्वमिति चिताऽपरिसंख्यानम्।

अथाऽग्रे वैराजार्थोत्पन्नमनःप्राणेन्द्रियतन्मात्रभूतादितत्तच्छक्तिविशिष्टस्तत्तत्प्रतिनियतो द्वात्रिंशतिसाक्षिरूपस्तदुत्पन्नवैराजसाक्षिकोऽपि स्वतन्त्रविशिष्टः स एव त्रयोत्रिंशतिरूपः, स एव च वैराजसाक्षि-महाविष्णुसाक्षि-प्रधानसाक्षीश्वरपुरुषसाक्षि-महामायासाक्षि-महापुरुषसाक्षि-ब्रह्माऽक्षरसाक्षि-स्वगुणसाक्षिरूपोऽष्टधा विशिष्टोऽवान्तरसहकृतत्रिंशद्रूपस्तत्तच्छरीरतत्त्वनियतस्तत्तच्छरीरिनियतपरिगणनागतोऽवश्याऽस्तित्वाऽवगतो विशिष्टो बोध्यः। इदमेव स्थूलेश्वरविशिष्टं तत्त्वम्। प्राणो न वायुरूपः किन्तु अहंकारोत्पन्नप्राणनशक्तिरूपो हस्तसंचालनसमर्थो वाय्वाद्यात्मकः।

अथाऽग्रे विष्णौ शंकरे वेधसि वैकस्मिन् लक्ष्म्यां पार्वत्यां सावित्र्यां वैकस्यां तत्तद्विशिष्टः स एव, स एव च विष्ण्वादिसाक्षि-

वैराजसाक्षि-महाविष्णुसाक्षि-प्रधानसाक्षि-तदीश्वरपुरुषसाक्षि-महामायासाक्षि-महापुरुषसाक्षि-ब्रह्माऽक्षरसाक्षि-स्वगुणसाक्षिरूपो नवधा विशिष्टोऽवान्तरतत्त्वसाक्षिसहितश्चैकत्रिंशद्रूपो विशिष्टो बोध्यः। स एव मानवे जीवात्मनि साक्षिरूपो विशिष्टः, स एव जीवसाक्षि-विष्णुसाक्षि-वैराजसाक्षि-महाविष्णुसाक्षि-प्रधानसाक्षि-तदीश्वरपुरुषसाक्षि-महामायासाक्षि-महापुरुषसाक्षि-ब्रह्माऽक्षरसाक्षि-स्वगुणसाक्षिरूपो दशधा विशिष्टोऽप्यवान्तरतत्त्वसाक्षिसहितः स एव द्वात्रिंशद्रूपो विशिष्टः, स एवाऽन्तःकरणेन्द्रियप्राणप्रत्येकदेवतासाक्षिरूपश्चतुर्दशरूपो विशिष्टः, मिलित्वा मानवे देहे व्यष्ट्यनुस्यूतभावे समष्टिरूपः षट्चत्वारिंशद्रूपो विशिष्टो जडचेतनात्मककार्यकारणात्मकस्थूलसूक्ष्मात्मकसंसाराऽसंसार्यात्मकविशिष्टः स एव परब्रह्म परमात्मा मुख्यजीवसाक्षिरूपो विशिष्ट एक एव तत्त्वात्मकः सर्वशरीरी 'रूपं रूपं प्रतिरूपो बभूव अजायमानो बहुधाऽभिजायते इति न विशिष्टातिरिक्तं किमपि समं वाऽभ्यधिकं तत्त्वमिति सूक्ष्ममीक्षणीयम्। स विशिष्टः साक्षी सर्वत्र साकार एव विद्यते इति विशिष्टं तत्त्वमेकं श्रुतिभिर्निरूपितम्। असंसारदशायां सूक्ष्मकारणात्मकं शरीरिपरब्रह्मैकमेवविशिष्टमासीत्।

तदत्र 'सदेव सोम्येदमग्र आसीदित्यावेदिते सृष्ट्यस्थूलसत्तासमये परब्रह्मणोऽस्तित्वस्य स्वरूपस्य बोधकानि श्रुतिवचनानि—

सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयं ब्रह्म (छा० अ-६, खं-२, मं-१) सत्यं ज्ञानमनन्तं ब्रह्म, आनन्दो ब्रह्म, रसो वै सः, (तै.) विज्ञानमानन्दं ब्रह्म (बृ० अ० ४) 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् (ई० उ० मं-८) मायिकविकृतिशून्यं परब्रह्मेति तात्पर्यम्। 'न तत्र सूर्योभाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः, तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति (क० अ० २, व० २, मं-१५) साकारभगवद्दिव्यप्रकाशेन सर्वं प्रकाशितं भवतीति तात्पर्यम् 'स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते, विद्वान् यत्तच्छान्तमजरममृतमभयं परं च (प्र० प्र० ५, मं-५, ७) ओंकारवाच्यब्रह्मोपासकः स्वपुरेशयं दिव्यपरमात्मानं शान्तसुखमजरममृतमभयं च जरामरणभयवर्जितं साक्षिरूपमीक्षत इत्यर्थः 'य एषोऽकलोऽमृतो भवति (प्र० प्र० ६, मं-५) षोडशकलालयेऽस्ति साक्षिरूपः परमपुरुषोऽकलोऽमृतो यस्य जीवघनस्योत्क्रमणे सहाग्रकृद्भवति। 'तं वेद्यं पुरुषं वेद (प्र० प्र० ६, मं-६) अनेन

परमात्मस्वरूपं मायिककलाशून्यं स्वीयकलं प्रतिपाद्यते। 'यः सर्वज्ञः स सर्वविद् यस्य ज्ञानमयं तपः (मु० १, खं० १, मं-९) तत्तद्विशेषज्ञातृ सामान्यज्ञातृ च स्वयं ज्ञानेन तपसा संकल्पेन विशिष्टस्वात्मककारणात् विशिष्टस्वात्मककार्यं भवति, अतो ज्ञानसंकल्पादिमत् परब्रह्मैव सगुणमिति तात्पर्यम्। 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः, अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः (मु० २, खं० १, मं-२,) दिव्यो-द्योतनगुणः, अमूर्तः-मायामूर्तिरहितो दिव्यमूर्तिः पुरुषः-शरीरी, बाह्याभ्यन्तरव्यापकः, दिव्यप्राणशक्तिमान् दिव्यसंकल्पवान् मायिकप्राणमनोरहितः सदोज्ज्वलो विराजते। 'आविः सन्निहितं गुहाचरं नाम महत्पदमत्रैतत् समर्पितम् एजत् प्राणन्निमिषच्च। यदेजज्जानथ सदसद्वरेण्यं परं विज्ञानाद्वरिष्ठं प्रजानाम् (मु० २, खं० २, मं-१) स्वप्रकाशैकस्वरूपमन्तर्यामि महद्व्यापकं परब्रह्म कार्यकारणोभयात्मकं सर्वं वरिष्ठं साकारं सर्वावस्थं सततैकरूपं जानथेत्यर्थः 'अमृतस्यैव सेतुः (मु० २, खं० २, मं-५) मोक्षस्य स्वयमेवोपायभूतः'न तत्र सूर्यो भाति…तस्य भासा सर्वमिदं विभाति (मु० २, खं० २, मं-१०) साकारमूर्तिः प्रकाशप्रदो हरिरित्यर्थः। 'बृहच्च तद् दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत् सूक्ष्मतरं विभाति, दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् (मु० ३, खं २, मं० ७) दिव्यमूर्तिचित्ताऽग्राह्यसर्ववर्तिस्वात्मान्तर्यामिणं पश्यतीत्यर्थः। 'परात्परं पुरुषमुपैति दिव्यम् (मु० ३, खं० २, मं० ८) दिव्यसुरूपपरमपुरुषं प्राप्नोतीति तदर्थः। 'सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन्, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता (तै० आ० आ० १) जडव्यावृत्तपरब्रह्मपरं सत्यपदम्, देशकालवस्तुपरिच्छिन्नव्यावृत्तपरब्रह्मपरम् अनन्तपदम्, व्यावृत्तिः परब्रह्मैव, एकत्वतात्पर्यनिश्चयात्तत्तत्पदार्थविरोधिप्रत्यनीकपरत्वात्, सर्वपदानामर्थवत्त्वादेकार्थत्वादपर्यायत्वाच्च, सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयमित्यनेनैकार्थ्याच्च परब्रह्मैव सजातीयविजातीयव्यावृत्तमद्वितीयं सर्वाखण्डरसमयम्, विशिष्टस्वसजातीयविजातीयसमशून्यत्वादिति। सत्यम्—निरुपाधिकसत्तायोगि, रूपान्तरनामान्तरभजनानर्हम्, निर्विकारसत्तायोगि परब्रह्म। अचेतनप्रधानात् प्रधानसंसृष्टजीवाच्च व्यावृत्तं परब्रह्म। नामान्तरभजनाऽर्हाऽवस्थान्तरयोगेन प्रधानजीवयोर्निरुपाधिकसत्तायोगरहितत्वात् तद्व्यावृत्तं परब्रह्म। ज्ञानम्—नित्याऽसंकुचितज्ञानैकाकारम्, तेन कदाचित् संकुचितज्ञानत्वेन मुक्ता व्यावृत्ताः, ज्ञानधर्मकज्ञान-

स्वरूपत्वलक्षणाभिधानात्, आनन्दधर्मकत्वाऽऽनन्दस्वरूपत्वाद्यपि बोध्यम। नित्याऽसंकुचितज्ञानगुणसारत्वात् ज्ञानं परब्रह्म, ज्ञातृशब्दस्य स्वप्रकाशतारूपज्ञानत्वं प्रवृत्तिनिमित्तम्, धर्मभूतज्ञानद्रव्याऽभिधानेऽपि ज्ञानत्वस्य प्रवृत्तिनिमित्तत्वात्, स्वरूपस्य ज्ञानत्वात्, प्रकाशवच्चाऽवैयर्थ्यात् प्रकाशस्वरूपत्वं ब्रह्मणः। अनन्तत्वम्–देशकालवस्तुपरिच्छेदरहितस्वरूपम्,। इहेदं नान्यत्रेति परिच्छेत्तुमशक्यम्, देशाऽपरिच्छेदः–सर्वदेशसामानाधिकरण्यार्हत्वम्, कालाऽपरिच्छेदः–इदमिदानीं नान्यदेति परिच्छेदाऽयोग्यत्वम्, सर्वकालसामानाधिकरण्याऽर्हत्वम्, वस्त्वपरिच्छेदः–इदम् इदं न भवतीतिपरिच्छेदाऽयोग्यत्वम्, सर्ववस्तुसामानाधिकरण्याऽर्हत्वम्, सगुणत्वात् स्वरूपस्य स्वरूपेण गुणैश्चाऽऽनन्त्यम्। इदमिदमितिवस्तुस्वभावपरिच्छेदाभाववत्त्वम्. सत्यज्ञानपदव्यावृत्ताः सातिशयस्वरूपगुणाः, तद्व्यावृत्ता निरतिशयनित्या परब्रह्म गीत्यर्थः। ततः जगज्जन्मादिनाऽवगतस्वरूप परब्रह्म सकलेतरवस्तुविसजातीयं लक्ष्यते, स्वरूपमात्रलक्षणं सत्यं ज्ञानमनन्तं ब्रह्मेति। विशिष्टस्य लक्षणं जगज्जन्मादिमत्त्वमिति। 'विज्ञानं यज्ञं तनुते, विज्ञानं देवा, ब्रह्मोपासते, विज्ञानं ब्रह्म वेद, सर्वान् कामान् समश्नुते, स वा एष पुरुषविधः (तै० आ० १, अनु–५) विज्ञानात्मशरीरिसुरूपपुरुषज्ञः सर्वकामभुग्भवतीत्यर्थः। 'असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः (वं० आ० अनु–६) सद्ब्रह्मस्वरूपवेत्ता सर्वार्थसत्तावान् भवति, असत्त्वं ब्रह्मेति वेद स सर्वार्थविधुरोऽसन्निव पाषाणकल्पो भवति। 'सैषाऽऽनन्दस्य मीमांसा भवति, शतं शतमुत्तरमुत्तरं मानुषगान्धर्वदेवगन्धर्वपितृआजानदेवकर्मदेवोत्तमदेवेन्द्रबृहस्पतिप्रजापतिब्रह्मानन्दाऽनुज्ञानवान् आनन्दघनाऽऽनन्दात् सर्वानन्दिसाकारपरब्रह्म लभते इत्यर्थः। 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः, तस्य यथा कप्यासं पुण्डरीकमेवाऽक्षिणी तस्योदितिर्नाम (छा० अ० खं० ६, मं–६, ७) उपासकयोगिना सूर्यमण्डले स्वर्णवर्णो देदीप्यमानः 'पद्मपत्राक्षः परमात्मोपासनीयः, उपासको मायारहितो भवतीत्यर्थः। 'द्वे वा ब्रह्मणो रूपे मूर्तं चैवाऽमूर्तं च मर्त्यं चाऽमृतं च स्थितं चाऽस्थितं च यच्च सच्च त्यच्च (बृ० अ० २, ब्रा० ३, मं–१) परब्रह्मणः सूक्ष्मं स्थूलं चेति द्वेधा रूपम्। 'तस्य हैतस्य पुरुषस्य रूपम् (बृ० अ० २, ब्रा० ३, मं–६) दिव्यं रूपं परब्रह्मण इत्यर्थ। 'विज्ञानमानन्दं ब्रह्म (बृ० अ० ३, ब्रा० ९, मं–२८) ज्ञानानन्दैकरसं परब्रह्म सर्वकर्मफलप्रदं बोध्यम्। 'वाग् वै सम्राट परमं ब्रह्म, प्राणः परमं ब्रह्म, चक्षुर्वै

परमं ब्रह्म, श्रोत्रं वै परमं ब्रह्म, मनो वै परमं ब्रह्म, हृदयं वै परमं ब्रह्म (बृ० अ० ४, ब्रा० १) वागादिशरीरकं वागादिशक्तिकं परब्रह्मोपास्यमिति। 'अयं पुरुष आदित्यज्योतिश्चन्द्रज्योतिरग्निज्योतिर्वागादिज्योतिरात्मज्योतिर्हृद्यन्तर्ज्योतिर्विज्ञानात्मा (बृ० अ० ४)। अयं विशिष्टपुरुषः स्वप्रकाशो विज्ञानप्रकाशः परमात्मा बोध्यः। 'अत्राऽयं पुरुषः स्वयंज्योतिर्भवति (बृ० अ० ४, ब्रा० ३) स्वापे ह्यात्मना परमात्मज्योतिर्भवतीत्यर्थः तत्र रथान् रथयोगान् पथः सृजते, आनन्दान्मुदः प्रमुदः सृजन् वेशान्तान् पुष्करिणीः स्रवन्तीः सृजते परमात्मा, जीवस्य पुण्यापुण्यसापेक्ष एव स परमात्मा कर्तेत्यर्थः। 'हिरण्मयः पुरुषः एकहंसः (बृ० अ० ४, ब्रा० ३, मं-११, १२) प्रकाशमयः परमात्मा एकहंसः सृजते, अयं पुरुषः स्वयंज्योतिः, असंगो ह्ययं पुरुषः, विशिष्टशरीरी स्वप्रकाशोऽसंगीत्यर्थः। 'अहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः (बृ० अ० ४, ब्रा० ३, मं—२०) सर्वपरब्रह्मबोधवतः परमधामलोको भवतीत्यर्थः। 'स वाऽयमात्मा ब्रह्म विज्ञानमयः····ब्रह्मैव सन् ब्रह्माऽप्येति (बृ० अ० ४, ब्रा० ४, मं—५, ६) विज्ञानाऽनन्दपूरितः परब्रह्मात्मको विशिष्टो भवतीत्यर्थः। 'अत्र ब्रह्म समश्नुते (बृ० अ० ४, ब्रा० ४, मं—७) प्रकारात्मकोऽपि विशिष्टोपासनयाऽमृतः कामनाशून्यः परब्रह्मानन्दवान् ब्रह्मविद् भगवल्लोकात्मकस्वर्गं विन्दतीति। 'आत्मानं चेद् विजानीयादयमस्मीति पूरुषः (बृ० अ० ४, ब्रा० ४, मं—१२) स्वस्य विशिष्टपरमपुरुषरूपज्ञानाऽऽप्तकामो विशिष्टपरमात्मा सन् परमात्मकः सन् परब्रह्मात्मकतामनुभवतीत्यर्थः। 'स हि सर्वस्य कर्ता, य एतद् विदुरमृतास्ते भवन्ति, ईशानं भूतभव्यस्य पश्यति, विद्वान् ब्रह्माऽमृतोऽमृतम्, ते निश्चिक्युर्ब्रह्मपुराणमग्र्यम् (बृ० अ० ४, ब्रा० ४, मं—१३····१८) विशिष्टकार्यरूपस्य परमात्मनो ज्ञानामृतो विशिष्टो भवति विशिष्टं पश्यति अमृतं जानाति परब्रह्म यातीत्यर्थः। एतेषां वाक्यानां परब्रह्मणः साकारतनुगुणाऽऽनन्दघनस्वरूपप्रतिपादनपरत्वम्, एतेषामध्ययनेन तथाविधपरब्रह्मभक्त्युदयः फलमिति। अथ परब्रह्ममहिमवाक्यानि—

'एतावानस्य महिमाऽतो ज्यायाँश्च पूरुषःपादोऽस्य विश्वा भूतानि त्रिपादस्याऽमृतं दिवि, त्रिपादूर्ध्वमुदैत् पुरुषः, पादोऽस्येहाऽभवत्पुनः, ततो विश्वं व्यक्रामत् (पुरुषसूक्तम्) भूतभविष्यवर्तमानास्पदसर्वविषयज्ञानवान् सर्वात्मकोऽमृतेशानः स्वैकचतुर्थांशस्थूलसृष्टिमान् स्वत्रिभागाऽमृतधामधामी सर्वोपरिवर्तमानो भगवान् विश्वं व्याप्नोतीति सोऽयमन्वयव्यतिरेकशाली महामहिमा राजतेऽतः सर्वं विशिष्टं परब्रह्म वि

तात्पर्यम्। 'भीषाऽस्माद् वातः पवते, भीषोदेति सूर्यः, भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः, (तै० आनं० अनु० ८) जडचेतनतत्त्वानां चलनभ्रमणप्रकाशनप्रवर्षणसंहारणादिसर्वं परब्रह्मपरमेश्वराऽधीनमेवेति सर्वकारणकार्यशक्तिमत् परब्रह्मेति तात्पर्यम्। 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह,आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन, एतं ह वाऽव न तपति किमहं साधु नाऽकरवम्, किमहं पापमकरवम्, स य एवं विद्वान् एतम् आत्मानं स्पृणुते (तै० आन० अनु० ९) सातिशयानन्दाभिमुखवाङ्-मनसी निरतिशयाऽऽनन्दब्रह्मणि न प्रवर्तेते, ये तु प्रवर्तेते, तदाऽयम् परमात्मनः सर्वानन्दभोगी भवति, अस्य पुण्याऽकरणादिशोको निवर्तते,परमात्मानमाप्नोतीत्यर्थः। 'तावानस्य महिमा ततो ज्यायाँश्च पुरुषः, पादोऽस्य विश्वा भूतानि त्रिपादस्याऽमृतं दिवि, अन्तःपुरुष आकाशः, अन्तर्हृदय आकाशः (छा० अ-३, खं० १२, मं-६, ८, ९) गायत्राख्यपरब्रह्मभूतपुरुषादपि विलक्षणो य एकभागसृष्टयात्मकस्त्रिभागब्रह्मलोकात्मकः स एव बाह्यपदार्थात्मक आकाशात्मक आत्मान्तर्यामी च पूर्णब्रह्मेत्यर्थः। 'षोडशकलः सौम्य पुरुषः (छा० अ० ६, खं० ७, मं० १) षोडशकरणशक्तिमद्ब्रह्मेत्यर्थः 'अरेऽस्य महतो भूतस्य निःश्वसितमेतद् ऋगवेदः.....तत् सर्वेषामेकायनम् (बृ० आ० ५, ब्रा० ४, मं० १०, ११) साकारमूर्तिभगवन्निःश्वासादाविर्भूतऋग्वेदादिकं सर्वं तदेव विशिष्टं परब्रह्म सर्वतत्त्वानामेकायनं शरीरि बोध्यमित्यर्थः 'अरे इदं महद्भूतम् अनन्तम् अपारम् विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवाऽनुविनश्यति (बृ० अ० २, ब्रा० ४, मं० १२) विज्ञानघनो जीवः परब्रह्मणि प्रविष्टो न नामरूपादिग्रहणयोग्योऽवशिष्यते, तत्परब्रह्म महद्भूतमनन्तमपारं च विशिष्टमेवेति। 'इयं पृथिव्ययमृतमयः पुरुषः इदं ब्रह्मेदं सर्वम्, अग्निः, आदित्यः, चन्द्रः, विद्युत्, स्तनयित्नुः, आकाशः, धर्मः, सत्यं मानुषम् आत्मा मधु आत्मभेदममृतमिदं ब्रह्मेदं सर्वम्, सर्व एते आत्मानः समर्पिताः (बृ० अ० २, ब्रा० ५) रूपं रूपं प्रतिरूपो बभूव, तदस्य रूपं प्रतिचक्षणाय, इन्द्रो मायाभिः पुरुरूप ईयते, तदेतद् ब्रह्माऽपूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः (बृ० अ० २, ब्रा० ५) पृथिव्यादि परमात्मविशेषमेवाऽमृतम्, तादृशं यद् यद् रूपं तत्तदन्तर्यामी तत्तदनुरूपः परमात्मा समरूपो बभूव, स एव भगवान् स्वलीलाभिः सर्वरूपशरीरी भवति, तत्परब्रह्माऽपूर्वं सूक्ष्मानर्हम्, अनपरम्-विशेषितरूपम्, अनन्तरम्-अपृथक्सिद्धम्, अबाह्यम्-अस्थूलम्, अप्ययमात्मा सर्वानुभूः-सर्वशरीरी स्थूल इति परमात्माऽयं विशिष्टपरब्रह्मैकमेवेत्यर्थः। 'य-

त्साक्षादपरोक्षाद् ब्रह्म स आत्मा सर्वान्तरः (बृ० अ० ३, ब्रा० ४, मं० १) आत्मना योगेन प्रत्यक्षीकृतः स्वविशिष्टपरमात्मा सर्वान्तर्यामीत्यर्थः। 'यत्साक्षादपरोक्षाद् ब्रह्म स आत्मा सर्वान्तरः (बृ० अ० ३, ब्रा० ४, मं० १) सर्वान्तरात्मा जीवात्मनि साक्षाद् वर्तते साकारं परब्रह्मेत्यर्थः। 'सर्वान्तरो न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयान्न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीथाः, एष त आत्मा सर्वान्तरः (बृ० अ० ३, ब्रा० ४, मं–२) सर्वसाक्षात्कर्ताऽन्तरान्तःऽकरणायत्तः परमात्मा, तं दृष्टेर्द्रष्टारं श्रुतेः श्रोतारं मतेर्मन्तारं विज्ञातेर्विज्ञातारं न शृणुथा न मन्वीथा न विजानीथाः, तस्याऽप्यान्तरो यस्तवैष आत्मा सर्वान्तरः स द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति यदेव साक्षादपरोक्षाद् ब्रह्म स आत्मा सर्वान्तरः (ब्रा० ५) 'कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्च (बृ० अ० ३, ब्रा० ६) जीवेशब्रह्मसृष्टयादिलोकाः परमात्मनि विशिष्टे स्थूलसूक्ष्मप्रकारतया ओताश्च प्रोताश्चेति तदेव परब्रह्माऽन्तर्यामि बोद्धव्यम्। 'पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्, उताऽमृतत्वस्येशानः (पुरुषसूक्तम्) स्थूलं सूक्ष्मं कारणं कार्यं जडं चेतनं विभिन्नावस्थाकं सर्वं विशिष्टं परब्रह्मैकमेव व्याप्यं व्यापकमन्वयि व्यतिरेकि तत्तद्देशि सर्वदेशि व्यष्टिरूपं समष्टिरूपं बाह्यमान्तरं संसारि मोक्षभाक् परतन्त्रं स्वतन्त्रं प्रालेयं सार्जनेयं सर्वं विशिष्टं परब्रह्मैवेति बोध्योऽस्य महिमेतितात्पर्यम्। अथाऽद्वैतनिराकारसाकारवाक्यानि—

अथ 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् (क० अ० १, व० २, मं–२२) प्राकृतशरीरादिरहितं दिव्यमूर्तिकं सर्वत्रस्थितमन्तर्यामीत्यर्थः। 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धं यत्, अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते (क० अ० १, व० ३, मं–१५) मायिकशब्दादिरहितं दिव्यगुणसहितं महतो जीवात्मनः परं परब्रह्म निचाय्य साक्षात्कृत्य मृत्योः मोहस्य मुखाद् अज्ञानात् प्रमुच्यत इत्यर्थः। 'तदेतदितिमन्यतेऽनिर्देश्यं सुखं भाति विभाति च (क० अ० २, व० २, मं–१४) अनिर्देश्यं निराकारं परब्रह्मेति न, किन्तु भासा प्रभासा युक्तं दिव्यविग्रहमित्यर्थः। 'एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः स परेऽक्षरे आत्मनि सम्प्रतिष्ठते, परमेवाऽक्षरं प्रतिपद्यते, स यो ह वै तत् अच्छायम् अशरीरम् अलोहितं शुभ्रम् अक्षरं वेदयते यस्तु सौम्य, स सर्वज्ञः सर्वो भवति (प्र० प० ६, मं–५) अत्र नदीनां समुद्राऽपृथक्सिद्धत्ववत् अपृथक्सिद्धसकलविकलात्मविशिष्टपरब्रह्मणाऽपृथक्सिद्धत्वं सकलविकलात्मन इत्यभिप्रायः, तत्

च न निराकारं परब्रह्म न वाऽऽत्मनोऽस्तभाव इति। 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्, नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीरा (मु० १, खं० १, मं–६) तत्परब्रह्म अद्रेश्यम्–मायिकेन्द्रियाऽविषयम्, अग्राह्यम्–मायिकप्रत्यक्षग्रहाऽविषयम्, अगोत्रम्–मायिकनामगोत्रादिरहितम्, अवर्णम्–मायिकरूपादिरहितम्, अचक्षुःश्रोत्रम्–मायिकचक्षुःश्रोत्राद्यपराधीनम्, अपाणिपादम्–मायिककरपादाऽनधीनम्, नित्यं कालाऽबाध्यम्, विभुम्–देशाऽबाध्यम्, सर्वगतम्–अन्तर्यामिशरीरि, सुसूक्ष्मम्–सूक्ष्मपराकाष्ठास्थितम्, अव्ययम्–ह्रासवृद्धिरहितंसदैकस्वरूपम्, भूतयोनिम्–सृष्टयुपादानम्, अक्षरम्–स्वरूपेऽवस्थाक्षरणशून्यम्, परब्रह्मयाथात्म्यविज्ञानवन्तस्तदेव परब्रह्म परिपश्यन्ति, सर्वात्मकतया साक्षादेव तद् भवतीत्यर्थः। 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः, अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः (मु० २, खं० १, मं–२) मायिकमूर्तिरहितो दिव्यगुणवान् पुरुषः शरीरी मायिकप्राणमनोरहितः शुभ्रः सदास्वप्रकाशवान् अक्षरब्रह्मणोऽपि परोऽन्तर्यामी विराजते इत्यर्थः। 'हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्, तच्छुभ्रं ज्योतिषां ज्योतिस्तद् यद् आत्मविदो विदुः (मु० २, खं० २, मं–९) दिव्यब्रह्मलोके मायिककलारहितं शुभ्रं सुशोभं सप्रभं सर्वप्रभाप्रदं परब्रह्म साकारं विराजते, तद्दर्शनेन वासनासंशयकर्मनाशः, सूर्यचन्द्रतारकाविद्युदग्निगततत्प्रदत्तप्रकाश इति तात्पर्यम्। 'नाऽन्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाऽप्रज्ञम्, अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा विज्ञेयः (मा० खं० २, मं–५) नाऽन्तःप्रज्ञं–स्वप्नरहितम्, न बहिःप्रज्ञं–जाग्रदवस्थारहितम्, नोभयतःप्रज्ञम्–भ्रमरहितम्, न प्रज्ञानघनम्–जीवभावरहितम्, न प्रज्ञम्–सुषुप्त्यवस्थस्वभानमात्रं न, नाऽप्रज्ञम्–अल्पप्रज्ञं न, किन्तु सर्वज्ञम्, अदृष्टम्–इन्द्रियाऽगोचरम्, अव्यवहार्यं–शब्दवाच्यं न, अग्राह्यम्–मनोग्राह्यं न, अलक्षणम्–जातिवर्णादिशून्यम्, अचिन्त्यम्–इत्थमितिचित्तसामान्याऽग्राह्यम्, अव्यपदेश्यम्–निर्विकल्पकाऽविषयम्–देवादिव्यपदेशाऽनर्हम्, ऐकात्म्यप्रत्ययसारम्–विशिष्टकारणकार्यात्मकम् विशिष्टज्ञानविषयम्, प्रपञ्चोपशमं–पञ्चविंशतितत्त्वाऽस्पृष्टम्, शान्तम्–अपर्याप्तभावरहितम्, शिवम्–नित्यानन्दि, अद्वैतम्–विशिष्टस्वसमानाऽन्यरहितम्, एवंविधं परब्रह्म सर्वात्मा। 'अन्तर्हृदय आकाशः, आकाशशरीरं ब्रह्म (तै० अ० ६, मं–१, २) हृत्स्थात्मगताकाशः परब्रह्म प्रकाशिमूर्तिक इत्यर्थः। 'अशरीरस्य वा व सन्तं प्रियाऽप्रिये न स्पृशतः (छा० अ० ८, खं०

१, २, मं-१) कर्मकृतशरीरशून्यस्य दिव्यमूर्तेः स्वेन रूपेणाऽऽविर्भूतस्य प्रियाऽप्रिये न स्पृशतः (छा० अ० ८) स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसंगमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरबाह्यं न तदश्नाति (बृ० अ० ३, ब्रा० ८, मं-८) स्वरूपस्वभावाद्यक्षरणंपरब्रह्म मायिकस्थौल्याऽणुत्वह्रस्वत्वदीर्घत्वलोहितत्वस्निग्धत्वछायातमोवाय्वाकाशसंयोगरसगन्धचक्षुःश्रोत्रवाङ्मनस्तेजःप्राणमुखमात्राजवनिकादिरहितं दिव्यतद्भावसहितं सर्वत्र ओतं च प्रोतं चेति। 'एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ····द्यावापृथिव्यौ····निमेषा····मुहूर्ता····अहोरात्राणि····अर्धमासा····मासाः····ऋतवःसम्वत्सरा विधृतास्तिष्ठन्ति, नद्यः स्यन्दन्ति, मनुष्या दानं प्रशंसन्ति, तद्वैतदक्षरं गार्गि अद्रष्टृ अश्रुतं श्रोत्रम् अमतं मन्तृ अविज्ञातं विज्ञातृ नाऽन्यदतोऽस्ति द्रष्टृ श्रोतृ मन्तृ विज्ञातृ एतस्मिन्नक्षरे आकाश ओतश्च प्रोतश्चेति (बृ० अ० ३, ब्रा० ८, मं-११) अक्षरणस्वभावपरब्रह्मविशिष्टं सर्वशासितृ सर्वान्तर्यामि सर्वज्ञातृ आकाशादिसर्वं तत्रैव ओतं च प्रोतं चेति व्यापकं परब्रह्मेति तात्पर्यम्। 'यद्वै तन्न पश्यति न तु तद् द्वितीयमस्ति ततोऽन्यद् यद्विभक्तं पश्येत् जिघ्रेद् रसयेद् वदेच्छृणुयान्मन्वीत स्पृशेद् विजानीयाद् अन्यदिव स्याद् अन्योऽन्यत् पश्येत्, एको द्रष्टाऽद्वैतो भवति, एषोऽस्य परमो लोकः परम आनन्दः, एतस्यैवानन्दस्याऽन्यानि भूतानि मात्रामुपजीवन्ति, स मनुष्याणां शतम् आनन्दः, पितॄणां गन्धर्वाणां कर्मदेवानाम् आजानदेवानाम् प्रजापति... कस्य परम आनन्द एष ब्रह्मलोकः (बृ० अ० ४, ब्रा० ३, मं-२३····३३). यस्य सर्वपरब्रह्मद्रष्टिस्तस्य विशिष्टद्वितीयाऽभावाद् भेदाऽवलोकनं लुप्यते, विशिष्टस्यैव द्रष्टृत्वात्, अद्वितीयपरब्रह्मपरमानन्दवान् सर्वगतविशिष्टबोधवान् निरतिशयपरमानन्दिपरब्रह्मभावान्नाऽवशिष्यते कि- ञ्चित्, साकारपरब्रह्मानन्दमग्नो भवतीत्यर्थः। 'सर्वाणि भूतानि प्रतिकल्पन्ते इदं ब्रह्म आयातीति (बृ० अ० ४, ब्रा० ३, मं-३७) विशिष्टब्रह्मात्मभावस्य सर्वत्र गतिमत्त्वात् परिच्छिन्नद्रष्टिमतामपि अयं विशिष्टब्रह्मरूप इति भानं जायते। 'स विज्ञानो भवति विज्ञानमेवाऽन्वक्रामति (बृ० अ० ४, ब्रा० ४, मं-२) विशिष्टब्रह्मविज्ञः सर्वज्ञो ज्ञानप्रपूरितो भवतीत्यर्थः। 'रूपं कुरुते ब्राह्म वा (बृ० अ० ४, ब्रा० ४, मं-४) मुक्तदशापन्नो विशिष्टपरब्रह्मरूपो भवति दिव्यं रूपं लभते इति तात्पर्यम्।

अद्वैतवाक्यानां विशिष्टाद्वैतपरब्रह्मातिरिक्तस्य विशिष्टपरब्र...

न्तरस्य निषेधपरत्वम्, निराकारवाक्यानां मायिकाकारनिषेधपरत्वम्, निर्गुणवाक्यानां मायिकगुणनिषेधपरत्वं, परब्रह्मस्वरूपे परब्रह्मशरीरात्मकजडचेतनविशेषणगतजडत्वदुःखादिराहित्यं दिव्यासंख्येयगुणागारसुमूर्तिकत्वं चेतितात्पर्यकत्वं बोध्यम्। सर्वप्रमाणानां सविशेषवस्तुविषयत्वात्, सर्वानुभवानाम् आत्मसाक्षिकसविशेषविषयत्वात्, परब्रह्मस्वरूपस्य सत्तातिरेकिस्वाऽसाधारणस्वभावविशेषैर्निष्कृष्यमाणत्वात्, नित्यसंविदः विषयप्रकाशनस्वभावत्वात् स्वप्रकाशवत्त्वाच्च विशिष्टत्वात्, वस्तुनः प्रामाणिकनित्यत्वादिविधाभेदैर्विशिष्टत्वात्, शब्दस्य सविशेषवस्तुनि अभिधानसामर्थ्यस्य प्रकृतिप्रत्ययादिविशिष्टार्थप्रतिपादकत्वात्, पदभेदस्याऽर्थभेदनिबन्धनत्वात्, पदसंघातवाक्यस्य अनेकपदार्थसंसर्गविशेषाभिधायित्वेन सविशेषप्रतिपादनपरत्वात्, प्रत्यक्षस्य निर्विकल्पकस्य एकजातीयद्रव्यीयप्रथमपिण्डग्रहणस्य केनचिद्विशेषेण ग्रहणत्वात्, सविकल्पकस्य निर्विकल्पकानुभूतपदार्थविशिष्टप्रतिसन्धानकजात्याद्यनेकपदार्थविशिष्टविषयत्वात्, निर्विकल्पकस्य प्रथमपिण्डग्रहणे सास्नादिवस्तुसंस्थानाऽननुवृत्तिकपिण्डग्रहणरूपत्वात्, सविकल्पकस्य पुनः पिण्डग्रहणे सास्नादिसंस्थानाऽनुवृत्तिकपिण्डग्रहणरूपत्वात्, निर्विकल्पकस्य इदमित्थमित्यत्र सास्नादिसंस्थानात्मकेत्थंभावस्य सत्त्वात्, प्रथमं सकलेतरव्यावृत्तं गोत्वादिसंस्थानविशेषविशिष्टव्यावृत्तिप्रतीतिकत्वात्। 'नैकस्मिन्नसंभवादि'ति (२-२-३१) सूत्रेऽपि अनेकधर्माणामन्योन्यतादात्म्याभावाद् ब्रह्मस्वरूपमात्रपरताया असंभवादित्युक्तत्वात्। प्रत्यक्षस्य सविशेषविषयकग्रहणरूपत्वात्, मानसस्यापि सविशेषविषयकग्रहणरूपत्वात्, सविकल्पकस्य यथा सविशेषविषयकग्रहणरूपत्वं तथा निर्विकल्पकस्य अननुवृत्तसविशेषविषयकग्रहणरूपत्वात्, अनुमानस्य सविशेषविषयकसम्बन्धविशिष्टग्रहणरूपत्वात्, प्रमाणान्तराणामपि सविशेषसदृशधर्मादिसन्न्वितग्रहणरूपत्वात् प्रकृतिप्रत्ययार्थान्विताऽभिधेयार्थग्रहणरूपत्वाद् बालमूकादिज्ञानानामपि परिच्छिन्नवस्तुग्रहणरूपत्वात् ब्रह्मेति – तदितरानवच्छिन्नत्वाद्यनुस्यूतवस्तुविषयकग्रहणरूपत्वाद् धर्मिग्रहात्मकत्वात्, निर्विकल्पकस्य एकक्षणवर्तिप्रत्यक्षीयस्वक्षणमात्रस्थितवस्तुभेदरूपतत्संस्थानरूपगोत्वादिग्रहरूपत्वात् क्षणान्तरीयग्रहणाऽनपेक्षत्वात् अनवस्थाया विरहात्, एकक्षणे एव वस्तुभेदरूपतत्तत्संस्थानात्मकगोत्वादिग्रहान्न न्योन्याश्रयणम्। शब्दानां सविशेषपदार्थबोधकत्वेनाऽश्वहस्तिमहिषादिनिलक्षणपिण्डादिबोधोपपत्तेरन्यथा निर्विशेषसन्मात्रग्राहित्वे सर्वानुभूतयथार्थबोधविलोपापत्तिः स्याद् भ्रान्तार्थकत्वं सर्वमापद्येतेति। सर्वस्वरूपाभिमतशब्दानां स्वरूपमात्रम् स्वाऽपृथक्सिद्धाऽनन्विन्दशाविरहादेव

विशिष्टपरत्वात्, सतः अनुवर्तमानत्वात्परमार्थत्वम्, तत् सिद्धमेव, न साधनमर्हति, साधने तु सिद्धसाधनापत्तेः, अनुभूतिसतोः विषयिविषयभावेन स्थितयोर्भेदसिद्धेः, अनुभूतिः सती इत्यभेदनिरासात्, अनुभूतेः स्वतःसिद्धस्वप्रकाशत्वे परानुभूतेरनुमानविषयत्वेन स्वप्रकाशत्वस्य सत्प्रतिपक्षितत्वापत्तेः, स्वयम्प्रकाशत्वस्य जडचेतनसाधारणस्य स्वसत्तयैव स्वाश्रयाय प्रकाशमानत्वस्य धर्मधर्मिभावसिद्धत्वात्, संविदः संवेत्र्याः स्ववेत्रीत्वे विषयविषयिणोरुपपन्नता, अवेत्रीत्वे जडता, वेत्रीत्वेऽनुभवितारमुपस्थापयतीति संविद्विशिष्टात्मा सिद्ध्यति, यथैकमेव द्रव्यं तेजः प्रभा प्रभावद्रूपेणाऽवतिष्ठते, प्रभागुणभूता, प्रभावद्द्रव्यम्, प्रभागुणोऽपि स्वाश्रयादन्यत्र वर्ततेऽतो द्रव्यमपि, तथा आत्मा चिद्रूपः चैतन्यगुणः, चिद्रूपता स्वयम्प्रकाशता, ज्ञानं चित्, प्रसरणस्वभावं द्रव्यं प्रभावत्, आत्मापि द्रव्यपदार्थः, चिदाश्रयः तेजोवत्, स्वयम्प्रकाशोऽपि ज्ञाता, न ज्ञप्तिमात्रम्, ज्ञातैवाऽहमर्थः, ज्ञानं संकोचविकासाऽर्हम्, गुणत्वमस्य तु नित्यस्वाश्रयशेषत्वनिबन्धनम् । अहम् इति स्वापाद्यवस्थाऽऽत्मा प्रकाशमानोऽवभासतेऽहमिति, स्वात्मानं प्रति स्वसत्तयैव सिद्ध्यन्नजडेऽहमर्थ एवात्मा, तत्सम्बन्धवत्त्वात् ज्ञानस्य प्रकाशता, स्वाश्रयचेतनं प्रति प्रकटता, तत आत्मा ज्ञाता, 'अरेऽयमात्मा प्रज्ञानघनः, विज्ञानघनः, स्वयंज्योतिः, विज्ञातुर्विज्ञातेर्न परिलोपो विद्यते, योऽयं विज्ञानमयोऽन्तर्ज्योतिर्विज्ञानात्मा पुरुषो द्रष्टुः षोडशकलाः ज्ञोऽत एवेति अनुभूतिसद्विशेषयोर्विषयविषयिभावेन भेदस्य सिद्धत्वादबाधितत्वाच्च प्रकारतामापन्नोऽपि स्वरूपेण भिन्न आत्मा तज्ज्ञानमपि तथा, परानुभवस्य [illegible] नोपानादिलिंगकानुमानज्ञानविषयत्वेन, स्वानुभवस्याऽपि अतीतस्य 'अज्ञासिषमि'ति ज्ञानाऽविषयत्वेन, स्वगताऽतीताऽनुभवानां परगताऽनुभवानां चाऽनुभाव्यत्वेन, शब्दार्थसम्बन्धग्रहणात्मकानुभवानुभाव्यत्वेन च, अनुभूतित्वस्य वर्तमानकालीनस्वसत्ताकस्वाश्रयाऽनुप्रकाशमानत्वेन, स्म[illegible]रणानुमानागमयोगिप्रत्यक्षादीनां भूतभविष्यविषयकत्वेन, अनुभूतेः स्वाश्रयनिष्ठस्वसद्भावप्रयोज्ययत्किञ्चिद्वस्तुव्यवहारानुगुण्यापादनस्वभाववज्ज्ञानाऽवगतिसंविदवबोधादिपरिचेयसकर्मकाऽनुभवित्रात्मगत—'घटमहं जानामी'तीममर्थमवगच्छामि' 'पटमहं संवेद्मी'तिसार्वजनिकात्मसाक्षिक—प्रसिद्धधर्मविशेषत्वेन सर्वकालवर्तमाननित्यात्मगतचेतनाऽसाधारणधर्मात्मकज्ञातृत्वगतज्ञानात्मकतासिद्धेः, ज्ञातृत्वस्य ज्ञानगुणाश्रयत्वेन, ज्ञानस्य संकोचविकासस्वभावत्वेन विक्रियात्मकज्ञातृत्वस्य 'नाऽऽत्मा श्रुतेः' 'ज्ञोऽत एवे'तिदर्शितनित्याऽपरिच्छिन्नज्ञानस्वरूपात्मवृत्तित्वेन प्रतिपादनात् । यथा घटे ज्ञानाश्रयत्वप्रसक्तिश्शून्ये नाऽज्ञानाश्रयत्वं तथा ज्ञा[illegible]

मात्रात्मनि ज्ञानाश्रयत्वप्रकाशकिशून्ये नाऽज्ञानाश्रयत्वं ज्ञानस्य स्वविषयेऽज्ञाननिवर्तकत्वात् अतो ज्ञानिसंविदात्मा,। स्वापोत्तरम्-अहं मां न ज्ञातवानित्यत्र-अहं-स्वापावस्थनिद्राऽविशदस्वानुभवैकतानात्मा, माम्-जागरिताऽवस्थानुसंहितजात्यादिविशिष्टाऽस्मदर्थम्, न ज्ञातवान्-विशदयथावदवबोधाऽभाववन्तं लब्धवान्, इतिज्ञायमानलब्धौ स्वरूपमेवाऽऽत्मनोऽस्मदर्थः प्रकाशते, तद्धर्मो ज्ञानं प्रकाशते,। 'अहं सुखीतिज्ञानामी'त्यत्र त्वहमर्थात्मनः सुखित्वं ज्ञातृत्वं चेति। मुक्तावपि स आत्मा अहमर्थ एव प्रकाशते, स्वस्मै प्रकाशमानत्वात्, घटादेस्तथाऽभावात्। 'तद्धैतत्पश्यन्' ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च, अहमेकः प्रथममासं वर्तामि च भविष्यामि चेत्यत्रापि विशिष्टभावापन्नः अहमिति आत्मैव प्रकाशते। 'हन्ताऽहमिमास्तिस्रो देवता अनुप्रविश्य नामरूपे व्याकरवाणि' 'बहु स्यां प्रजायेय' 'स ईक्षत लोकान्नु सृजा'इत्यत्राऽहमिति परब्रह्मात्मस्वरूपं प्रकाशते। बाधकाऽपेताऽहंभावस्य त्वात्मप्रकाशस्याऽभूततद्भावे च्विः, आत्मनः स्वयंज्योतिषो जडस्वरूपाऽहंकाराभिव्यंग्यत्वाऽयोगात्। स्वरूपज्ञानरूपाऽहंप्रत्ययस्याऽज्ञानाऽनापादकत्वेन संसारित्वानवच्छिन्नत्वात्, एतादृगात्मज्ञानस्य स्वाभिज्ञानत्वे सत्यत्वं, तद्विषयाणां त्वसत्यत्वं, हर्षशोकाधायकज्ञानत्वात्। मायामयज्ञानस्य सत्यत्वं, मन्त्रौषधादिप्रभवस्य ज्ञानस्य विषयाऽसत्यत्वं, प्रीतिभयजनकज्ञानत्वात्। विषयेन्द्रियादिदोषजन्यरज्ज्वाधिष्ठानकसर्पज्ञानस्य सत्यत्वं, भयहेतुत्वात्। वस्तुभूते जलादौ मुखप्रतिभासो मुखनिश्चयहेतुः सत्यः, अर्थक्रियाकार्युत्पत्तिमत्त्वेनैतेषां संवेदनानां सत्यत्वम्। हस्त्यादीनामभावेऽपि तद्बुद्धीनां सालम्बनमात्रत्वेनापि सत्यत्वम्, अबाधितबुद्धेः सत्यत्वात्, दोषस्य बाधितत्वेनाऽसत्यत्वाद् दोषजन्यप्रतिभासस्याप्यसत्यत्वात्। शब्दरेखायाः सत्यत्वेन तज्जन्यज्ञानस्य सत्यत्वात्। रेखागवयात् सत्यगवयबुद्धेः सादृश्यनिबन्धनत्वात् सादृश्यस्य च सत्यत्वात्। अहमिति आत्मा यत्र ज्ञातृत्वेन प्रकाशते तत्र-अहं ज्ञातृपरः, अहंभावः अहंबुद्धिः ज्ञातृपरा, अहंकारः-अहंबुद्धिः ज्ञातृपरा, अहंकारादेशः-चेतनात्मवाची न मायिकोऽयमहंकार इति। अथ अहंकारो मायिकस्तत्र च्विः लुप्तः, क्विलोपः, कृञः करणे घञ्, वृद्धिः, सोऽयमहंकारोऽचेतनत्वप्रकृतिपरिणामत्वदृश्यत्वपराक्त्वपदार्थत्वादियोगवत्त्वात्, अनात्मन्यात्माहंभावेऽयं गर्वाऽपरनामको हेयतया प्रतिपादितः जडवाची चेति आत्मवाच्यहंतः पृथग् ज्ञेयः। मायिकज्ञानेऽपि दर्पणे मुखदर्शने मुखाभिव्यञ्जकः

चाक्षुषतेजःप्रतिफलनरूपदोष एव हेतुः, तद्दोषकृतस्तत्राऽन्यथाऽवभासः, अभिव्यञ्जकस्त्वालोकादिः, मुखाभिव्यञ्जको न दर्पणादिरिति तत्राऽहंकुब्ज इति ज्ञाने दोषस्य बाधितत्वं दोषजन्यप्रतिभासस्यांऽशेऽसत्यत्वम्। भगवन्मूर्तिविषयकधारणाध्यानसमाधिवृत्त्यात्मकं ज्ञातृत्वं सत्यं फलमपि सत्यं, तथैवोपलब्धेरितिवेदितव्यम्। एवं वेदान्तवाक्यानां विशिष्टदिव्यार्थबोधकत्वेन सत्यार्थतात्पर्यकत्वमित्यवसेयम्।

अथ परब्रह्मणोऽस्तित्वस्य कारणत्वस्य च वाक्यानि सदेव सौम्येदमग्र आसीत्, (छां० अ० ६ खं० २) ब्रह्म वा इदमग्र आसीत्, (बृ० अ० १ ब्रा-४ मं० ११) आत्मा वा इदमग्र आसीत्, (बृ० अ० १ ब्रा० ४) एको ह वै नारायण आसीत्, तदैक्षत बहुस्यां प्रजायेय, (छां० अ० ६ खं- २) स ईक्षांचक्रे (प्र० प्र० ६ मं० ३) सोऽकामयत (बृ० अ० १ ब्रा० २ मं० ४)। अग्रे स्थूलभावानापन्नसृष्टिकाले, सत्-सूक्ष्मभावापन्नस्वसत्ताकं ब्रह्म परब्रह्म परमात्मा नारायणः सूक्ष्मविशिष्ट एक आसीत्, तेन स्थूलकार्यात्मकबहुभवनरूपसंकल्पः कृतः-सूक्ष्मशरीर्यहं स्थूलशरीरो भवामीति तात्पर्यार्थः। 'आत्मन एव एषः प्राणो जायते (प्र० प्र० ३ मं० २) परमात्मनो महामहिमशालिप्राणः प्राणनशक्तिरूपो जायते। 'स ईक्षाञ्चक्रे कस्मिन्नहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति (प्रश्न० प्र० ६, मं-३) 'सः प्राणमसृजत् प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवी इन्द्रियं मनः, अन्नम् अन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु च नाम च (प्र० प्र० ६, मं-४) अन्तर्यामीक्षांचक्रे विहरणसंकल्पः किंद्वारा ममोत्क्रान्तिप्रतिष्ठादिकं घटेतेति विहरणोपकरणात्मकषोडशकला जनयामासेति। यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति, यथा सतः पुरुषात् केशलोमानि भवन्ति तथाऽक्षरात् संभवतीह विश्वम् (मु० १, खं० १, मं-७) तन्तुं प्रति लूताशरीरविशिष्टस्योपादानतावत् मायाविशिष्टस्य सजातीयोपादानता परब्रह्मणः, वृक्षादिकं प्रति पृथिवीशरीरविशिष्टस्योपादानतावत् मायाविशिष्टस्य मिथो विजातीयभावोपादानता परब्रह्मणः, जडकेशान् प्रति सचेतनशरीरविशिष्टस्योपादानतावत् मायाविशिष्टस्य सर्वथा विरूपभावोपादानता परब्रह्मण एवेति तात्पर्यम्। सूक्ष्मचिदचिद्विशिष्टपरब्रह्मणः स्थूलचिदचिद्विशिष्टब्रह्मणि उपादानत्वम्। 'तपसा चीयते ब्रह्म (मु० १, खं० १, मं-८) तपसो-संकल्पविशिष्टवेषेण परब्रह्म निमित्तकारणमपि भवतीत्यर्थः। 'तदेतत्स-

यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः, तथाऽक्षराद् विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवाऽपि यन्ति (मु० २, खं० १, मं-१) विशिष्टकारणात्मकपरब्रह्मणो विशिष्टकार्यात्मकसरूपं जगद् वह्निसरूपविस्फुलिङ्गवद् विभज्यते इत्यर्थः। 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च, बह्वीः प्रजाः पुरुषात्सम्प्रसूताः, पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् (मु० २, खं० १, मं० ३, ५, १०) 'स एषोऽन्तश्चरते बहुधा जायमानः (मु० २, खं० २, मं० ६) सर्वान्तरात्मविग्रहविशिष्टवैषेण बहुरूपो भवतीत्यर्थः। 'एषः सर्वेश्वरः एषः सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् (मा० खं० २, मं० ४) परब्रह्म सर्वनियामकं सर्वज्ञात सर्वान्तर्यामि सर्वोपादानं सर्वस्थापकं सर्वसंहारकं चेति त्रेधा कारणकार्यात्मकं बोध्यमिति। 'तस्माद्वा एतस्मादात्मनः आकाशः संभूतः (तै० आन० अनु० १) नित्यसाकारपरमपुरुषात् स्वशरीराद् आकाशादिकं जायत इत्यर्थः। 'सोऽकामयत बहु स्यां प्रजायेय, स तपोऽतप्यत, स तपस्तप्त्वा इदं सर्वमसृजत, यदिदं किञ्च, तत्सृष्ट्वा तदेवाऽनुप्राविशत्, तदनुप्रविश्य सच्च त्यच्चाऽभवत्, निरुक्तं चाऽनिरुक्तं च, निलयनं चाऽनिलयनं च, विज्ञानं चाऽविज्ञानं च, सत्यं चाऽनृतं च, सत्यमभवत्, यदिदं किञ्च, तत् सत्यमित्याचक्षते (तै० आनं० अ० ६) स्वरूपगुणादियुक्तस्वरूपं परब्रह्म स्वसंकल्पात्मकतपोद्वारा कारणकार्यात्मकरूपमभवत् तत्तच्छरीरं चाऽभवत्, सत्-चैतन्यरूपं सत्, अवस्थान्तरस्वभावं त्यत्, अनुप्रवेशः-स्थूलावस्थेऽप्यन्तर्यामिता, नामरूपभाग् उपादानोपादेयभावः, स्थूलाकाशादि निरुक्तम्, स्थूलाऽऽत्मादि अनिरुक्तम्, अचेतनाधारं निलयनम्, तदन्यद् अनिलयनं चेतनम्, विज्ञानं चेतनं, तदन्यद् अचेतनम्, एकरूपं सत्यम्, विकारास्पदम् अनृतम्, स्वयं तु स्वरूपे सत्यमेव. अतः सर्वं कारणकार्यभावं ब्रह्मैव सत्यं नाम। 'असद्वा इदमग्र आसीत्, ततो वै सद् अजायत, तदात्मान स्वयमकुरुत, रसो वै सः, रसं ह्येवाऽयं लब्ध्वाऽऽनन्दीभवति, को ह्येवान्यात् कः प्राण्याद् यद्येष आकाश आनन्दो न स्यात्, एष ह्येवाऽऽनन्दयाति, यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयंगतो भवति, यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति (तै० आनं० अनु० ७) असत् आसीदित्यादिव्याघातवारणाय असत्-नामरूपविभागरहितसूक्ष्मम् अग्रे आसीत्, सत्-नामरूपविभागकम् अजायत, स्वयं कारणं परब्रह्म स्वं स्थूलम्



अकुरुत, स परमात्माऽऽनन्दरसः, रसं लब्ध्वा रसवान् आनन्दी भवति, रसी उपास्यः प्राप्यः फलप्रदश्च प्रकाशो आनन्दी यदि न स्यात्, तर्हि शरीरात्मा अन्नवान्-अपहतपाप्मत्वादिरूपलिप्सत्ति-मान्, प्राणनवान्-स्थूलस्वरूपी प्राणयोगादिमान्, वा कथं स्यात्, परमात्मैव स्थूले सूक्ष्मे स्वरूपे आनन्दं ददातीति तात्पर्यम्, अदृश्ये-मायिकदृश्यभिन्ने, अनात्म्ये-प्राकृतशीर्णतारहिते, अनिरुक्त-मायिक-नामादिशून्ये, अनिलयने-मायिकाऽऽधाराऽनपेक्षे, परमात्मनि. उपासकः अभयं-शाश्वतीं प्रतिष्ठाम् उपासनां विन्दते, स उपासको भावाभयशून्यो भवतीति, यदि तु परमात्मनि उदरं स्वल्पमप्यन्तरम् उपासनाविच्छेदं कुरुते तस्य तावत्प्रमाणं भयं ब्रह्मानन्दानुभवा-त्मकभयं भवति इति 'यतो वेमानि भूतानि जायन्ते…स तपस्तप्त्वा, अन्नात् खल्विमानि भूतानि जायन्ते…स तपस्तप्त्वा, प्राणाद्धि ख-ल्विमानि भूतानि जायन्ते…स तपस्तप्त्वा, मनसः खल्विमानि भूता-नि जायन्ते…स तपस्तप्त्वा, विज्ञानात् खल्विमानि भूतानि जायन्ते… स तपस्तप्त्वा, आनन्दात् खल्विमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद् ब्रह्म तद् विजिज्ञासस्व (तै० भृगु० अनु० १, २, ३, ४, ५) स्वसंकल्पेनाऽन्नप्राणमनोविज्ञानानन्दा-भिधपरब्रह्म एव जगज्जन्मादिकारणमितिज्ञानवान् उपासको बृहत्त्व-गुणवान् भवति, पुरुषात्मनि आदित्यात्मनि तमेव परमात्मानमुपा-सीतेत्यर्थः, तस्मात् सूक्ष्मात् सर्वमिदं स्थूलमुत्पन्नं स्वात्मकमेवेति भावः। भक्तो ब्रह्मानन्दी हावुहावु हावु इति गायन् चेतनाऽचेतनं जातं सर्वस्मिन् व्याप्तमिति समवगच्छन् 'सुवर्णज्योतिः' (तै० भृ० अ० १०) कमनीयप्रकाशमान् दिव्यमुक्तरूपो भवतीति तात्पर्यम्। 'आत्मा वेदमेक एवाऽग्र आसीत्, नान्यत् किञ्चन मिषत्, स ईक्षते लोकान्नु सृजा इति, स इमान् लोकानसृजत, स ईक्षत इमे नु लोका लोक-पालान्नु सृजा इति (ऐ० अ० १, खं० १) सृष्टेः प्राक् नामरूपवि-भागरहितविशिष्टात्मा परब्रह्माऽऽसीत्, नामरूपविकारापन्नं किमपि नासीत्, स संकल्पितवान् लोकसृष्टिम् महदादिक्रमेण सृष्टिम्, ततो लोकपालान् समष्टिपुरुषं हिरण्यगर्भं सर्वशक्तिमदकरोत्, स एव स्थूलशरीरावस्थोऽभवदित्यर्थः। 'स ईक्षते मे नु लोकपालाश्चाऽन्नम् एभ्यः सृजा इति (ए० अ० १, ३) सः परमेश्वरः संकल्पितवान् मूर्तम् अन्नं स्वयमजायत, देहेन्द्रियादिशक्तिमान् ग्राहकोऽपि स्वयम-जायत। 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते… आकाशो ज्यायान् परायणम् (छा० अ० १, खं० ९, मं-१) अ

प्रकाशते परमात्मा महान् व्यापकः सर्वकार्यात्मकः परागतिश्चेत्यर्थः। असदेवेदमग्र आसीत् तत्सदासीत् समभवत् तदाऽण्डं निरवर्तत (छा० अ० ३, खं० १९ मं-१) असत्-नामरूपभेदसम्पत्त्यभाववत्, तत् सत्-स्वरूपसत् सूक्ष्मम, आसीत्, तत् समभवत्-अभिव्यक्त्यर्हस्थूलाण्डरूपम् अभवत् ततो विशेषा अभवन्, यत्तदजायत सोऽसावादित्यः-आदित्यशरीरी परब्रह्मैवेत्यर्थः। सर्वाणि भूतानि-सर्वभूतशरीरि परब्रह्म, स य एतमेव विद्वान् आदित्यं ब्रह्मेत्युपास्ते-एवंविधाऽऽदित्यशरीरिपरब्रह्मोपासकस्य साधवः आनन्दा उपतिष्ठेरन्निति। 'सदेव सौम्येदमग्र आसीदेकमेवाऽद्वितीयं, तद्धैके आहुः-असदेवेदमग्र आसीदेकमेवाऽद्वितीयं तस्मादसतः सज्जायते (छां० अ० ६, खं० २, मं-१) नामरूपाऽनापन्नं सत्तामात्रं विशिष्टं सद्ब्रह्मासीत्, असत्-स्थूलसत्तानापन्नम्, तस्मादसतः-सूक्ष्मात्, सत्-स्थूलम् अजायत। 'कुतस्तु खलु सौम्यैवं स्यादि'ति (मं-२) मन्त्रेण भ्रान्त्याऽसद्भावो निरस्तः। 'तदैक्षत बहु स्यां प्रजायेय, तत्तेजोऽसृजत, तत्तेज ऐक्षत बहु स्यां प्रजायेयेति, तदपोऽसृजत (छां० अ० ६, खं० २, मं-३) स्वयं संकल्प्य तेजः स्थूलरूपं स्वात्मानमसृजतेत्यर्थः। 'ता आप ऐक्षन्त बहु स्यामिति प्रजायेमहीति ता अन्नमसृजन्त (छां० अ० ६, खं० २, मं-४) जलात्मपरब्रह्म स्वं पृथिवीरूपमसृजतेत्यर्थः। 'सेयं देवतैक्षत हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि (छां० अ० ६, खं० ३, मं०-२) तेजोऽबन्नशरीरिषु व्याप्तोऽहमात्माऽनुप्रविश्य नामरूपविशेषवान् भवामीत्यर्थः। 'नैवेह किञ्चनाऽग्रे आसीन्मृत्युनैवेदमावृतमासीत् (बृ० अ० १, ब्रा० २, मं-१) इदं विभक्तनामरूपं सृष्टेरग्रे मृत्युना-संहृतसूक्ष्मभावेन समापन्नमासीत्। 'सोऽकामयत द्वितीयो म आत्मा जायेतेति (बृ० अ० १, ब्रा० २, मं-४) नामरूपानापन्नाद् द्वितीयं नामरूपापन्नं जायेतेति। 'आत्मैवेदमग्र आसीत् पुरुषविधः (बृ० अ० १, ब्रा० ४, मं-१) शूक्ष्मं परब्रह्म सुमूर्तमासीत्, स पुरुषो दिव्यः प्रपंचमपश्यन् अहं स्वयं स्वमुक्त्वा अहन्नामा शरीरी हिरण्यगर्भशरीरीऽभवत्। 'द्वितीयाद्वै' भयं भवति (बृ० अ० १, ब्रा० ४, मं-२) स्वसमजातीयाऽभावान्न भयमिति तात्पर्यम्। स सूक्ष्मरूपो नैव रेमे एकाकी न रमते स द्वितीयमैच्छत् (बृ० अ० १, ब्रा० ४, मं-३) स्वस्य स्थूलकार्यभावीयरमणमिच्छन् नरनारीस्वरूपो विशिष्टोऽभवदित्यर्थः। 'सर्वमसृजत-स्थूलावस्थं स्वयं विभिन्नाकारधर्मिप्रकारकमभवत्। 'तद्धेदं तर्ह्यव्याकृतमासीत्, तन्नामरूपाभ्यां व्याक्रियते (बृ० अ० १, ब्रा० ४, मं-७) इदं सर्वं पूर्वं अव्याकृत-

नामरूपविभागकार्यताऽनापन्नमासीत्, तत् स्थूलनामरूपकार्यात्मकं जायते 'ब्रह्म वा इदमग्रे आसीत् तदाऽऽत्मानमेवाऽवेद् अहं ब्रह्माऽस्मीति तस्मात् तत्सर्वमभवत् (बृ० अ० १, ब्रा० ४, मं-१०) सूक्ष्मत्वेन नामरूपरहितं परब्रह्म स्वज्ञानात् स्थूलावस्थम् अभवत्। 'ब्रह्म वा इदमग्र आसीद् एकमेव तदेकं सन्न व्यभवत् तच्छ्रेयोरूपं अत्यसृजतक्षत्रम् (बृ० अ० १, ब्रा० ४, मं-११) अविभक्तनामरूपं परब्रह्मक्षत्रादिस्थूलरूपविशिष्टम् अभवत्। 'एवमेवात्मानं लोकमुपासीत (बृ० अ० १, ब्रा० ४, मं-१५) देवर्षिमानवादिसर्वस्थूलभावापन्नं विशिष्टं सर्वात्मकं परब्रह्मैवोपासीत। 'आत्मैवेदमग्र आसीद एक एव सोऽकामयत जायाविस्तम्-सूक्ष्मात्मा परब्रह्म जायावित्तादिस्थूलात्मनाऽभवदित्यर्थः। 'एको ह वै नारायण आसीत् न ब्रह्मा नेशानो नेमे द्यावापृथिव्यौ न नक्षत्राणि, सोऽकामयत बहु स्यां प्रजायेयेति। अत्र—

एतैः कारणवाक्यैः कारणं सत् सूक्ष्मावस्थापन्नं सूक्ष्मावस्थापन्नजडचेतनशरीरकं सृष्टेः प्राक् प्रतिपाद्यते, तेन सङ्कल्प्य लीलया स्वीया स्थूलावस्थापन्नजडचेतनशरीरिणी सृष्टिः प्रकाश्यते, स्वमेव विशिष्टं सर्वविश्वकारणं स्वमेव सुविशिष्टं सर्वविश्वकार्यात्मकं जायते इति कारणकार्यात्मकं साकारं सगुणं दिव्य विशिष्टमेव परब्रह्मेति प्रतिपाद्यते। तथा च परब्रह्मात्मकद्रव्यस्य स्वात्मककारकव्यापाराय-त्ततत्तदवस्थाऽर्थैवाव-सदुत्पत्तिमत्व-सत्कार्यात्मकत्वम् उपपन्नतरम्, द्रव्यस्य पूर्वपूर्वसंस्थानसंस्थितस्य तिरोभाव उत्तरोत्तरसंस्थानयोगः स्वावस्थोत्पत्तिश्च, तत्र सर्वत्रानुस्यूतद्रव्यसत्वात् सत्कार्यता सम्पन्ना। अवस्थानां पृथक्प्रतिपत्तिकार्ययोगाऽनर्हत्वाद् अवस्थात एव द्रव्योत्पत्त्यादिकं सर्वं व्यवह्रियते। कपालत्वचूर्णत्वपिण्डत्वैकत्वाऽवस्थाविगमपूर्वकघटत्वमहत्त्वपृथुबुध्नत्वाद्यवस्थानुयोगस्याऽविरोधात्। सदेव सौम्येदमग्र आसीदेकमेवाऽद्वितीयमित्यस्य एतत्कालीनविभक्त नामरूपनानापदव्यवहार्यसदिदमाद्यास्पदजगत्, सृष्टिपूर्वकालीननामरूपविभागाऽयोगापन्नैकसशक्तिकाऽधिष्ठात्रन्तराऽसहकृताऽनन्यरूपसत्ताकं समवर्ततेत्यर्थः तदैक्षत बहु स्यां प्रजायेयेतिवाक्येन–स्रक्ष्यमाणतेजःप्रभृतिविविधविचित्रस्थिरत्रसरूपजगदात्मकस्वीयबहुभवनविषयकसंकल्पवत्परब्रह्मसाकारशरीरिसकाशजगत्सर्गाभिधानेन परमकारणपरब्रह्मोत्पन्नकार्यभूतजगदीयस्वकारणाऽनन्यत्वाऽध्यवसायः सम्पद्यते, सर्वज्ञसत्यसंकल्पनिरवद्यसच्छद्बवाच्यपरब्रह्मण एव सदेवेदमिति निर्देशार्हजगत्त्वात्। नामरूपविभागाऽभावादेकत्वम् अधिष्ठात्रन्तरनिरपेक्षम्, ततो विविधस्थिरत्रसरूपजगत्त्वेन बहुभवनसंकल्पापेक्ष

स्वयं चक्रे। 'सेयं देवतैक्षत हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतं करवाणीत्यनेन तिस्रो देवता इति कृत्स्नोऽचिद्वर्गो निर्दिष्टः, स्वात्मकजीवानुप्रवेशपूर्वकैनद्विचित्रनामरूपभाक्त्वम् तस्य निर्दिष्टम्। 'तत्सृष्ट्वा तदेवानुप्राविशदि'त्यनेन, 'तदनुप्रविश्य सच्च त्यच्चाऽभवदि'त्यनेन च सजीवं जगत् परब्रह्मणाऽऽत्मतयाऽनुप्रविष्टमिति निर्दिश्यते। अतः कार्यावस्थस्य कारणावस्थस्य च चिदचिद्वस्तुनः स्थूलस्य सूक्ष्मस्य च परब्रह्मशरीरत्वम्, परब्रह्मणश्च तदात्मत्वम्, तच्चान्तर्यामिमन्त्रेषु सिद्धं स्मारितमेव। अचिद्वस्तुनि सजीवे, आत्मतया परब्रह्मण्यवस्थिते नामरूपव्याकरणोक्तेः चिदचिद्वस्तुशरीरकं परब्रह्मैव जगच्छब्दवाच्यं, शरीरभूतचिदचिद्वस्तुगताः सर्वे विकारा अपुरुषार्थाश्च परब्रह्मणि शरीरिणि नेति परब्रह्मणो निरवद्यत्वं कल्याणगुणाकरत्वं सूपपन्नम्। 'अधिकं तु भेदनिर्देशात् (२/१/२२) इत्यनेन सूत्रेण आध्यात्मिकादिदुःखयोगार्हजीवात्मतः परब्रह्म विशिष्टमपि शरीर्यपि अर्थान्तरभूतं परब्रह्म ज्ञापितम्, 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः' 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनाऽमृतत्वमेति' 'सः कारणं करणाधिपाधिपः' 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन् अन्योऽभिचाकशीति' 'ज्ञाज्ञौ द्वावजावीशानीशौ' 'प्राज्ञेनात्मना सम्परिष्वक्तः' 'प्राज्ञेनाऽऽत्मनाऽन्वारूढः' 'अस्मान्मायी सृजते विश्वमेतत् तस्मिँश्चाऽन्यो मायया सन्निरुद्धः' प्रधानक्षेत्रज्ञपतिर्गुणेशः' नित्यो नित्यानां चेतनश्चेतनानाम् एको बहूनां यो विदधाति कामान्' 'योऽव्यक्तमन्तरे सञ्चरन् यस्याऽव्यक्तं शरीरं यमव्यक्तं न वेद योऽक्षरमन्तरे सञ्चरन् यस्याऽक्षरं शरीरं यमक्षरं न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः'इत्यादिश्रुतिभिरपि जीवात्मतोऽर्थान्तरभूतं परब्रह्म वर्णितम्। 'अश्मादिवच्च तदनुपपत्ति'रिति (२/१/२३) सूत्रेणापि–यथा सततविकारास्पदाऽत्यन्तहेयाऽश्मकाष्ठलोष्ठाद्यचिद्विकाराणां निर्विकारनिरवद्यनिखिलहेयप्रत्यनीककल्याणैकतानस्वेतरसमस्तवस्तुविलक्षणाऽनन्तज्ञानानन्दैकस्वरूपनानाविधानन्तमहाविभूतिपरब्रह्मस्वरूपैक्यं नास्ति तथा खद्योतकल्पाऽनन्तदुःखयोगार्हचेतनस्य अपहतपाप्मत्वादिवाक्यावगतसकलहेयप्रत्यनीकाऽनवधिकातिशयाऽसंख्येयकल्याणगुणसागरपरब्रह्मैक्यं नास्त्येवेति। अयमात्मा ब्रह्मेत्यादिसामानाधिकरण्यनिर्देश-



तु यस्यात्मा शरीरमित्यादिश्रुतिप्रतिपाद्यस्यपरब्रह्मशरीररूपजीवस्य

जीवशरीरिरूपपरब्रह्मणस्तादात्म्येनाऽवस्थितिपरो जीवप्रकारपरब्रह्मप्रतिपादनपर एवेति न विरोधः। 'अवस्थितेरिति काशकृत्स्नः' (१/४/२२) इतिसूत्रेण, 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः, योऽक्षरमन्तरे सञ्चरन् यस्याऽक्षरं शरीरं यमक्षरं न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः, अन्तःप्रविष्टः शास्ता जनानाम्, इत्यादिप्रदर्शितजीवानुप्रविष्टपरब्रह्मशरीरभूतजीवात्माऽन्तरात्माऽवस्थितिकपरब्रह्मशरीरितन्नियामकताऽवसेयजीवशब्द-द्वारकपरब्रह्मप्रतिपादनमिति जीवशब्दस्य परमात्मपर्यन्तजीववैयधिकरण्यवाचकत्वमिति न तु जीवमात्रस्य, एवमात्मशरीरभावेन तादात्म्योपपादने परब्रह्मणोऽपहतपाप्मत्वादिसर्वज्ञत्वादिविरोधिन्यो शोकितजीवस्य मोक्षवादिन्यश्च जगत्सृष्टिप्रलयाभिधायिन्यो जगद्ब्रह्मतादात्म्योपदेशपराश्च सर्वाः श्रुतयोऽविरोधेन समन्विता भवन्ति, इतिकाशकृत्स्नमतं समीचीनं वेदव्यासः प्राह। सम्पद्याऽऽविर्भावः स्वेन शब्दादिति (४/४/१) सूत्रेणापि 'अस्माच्छरीरात् समुत्थाय परं ज्योतिरूपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते' इत्यादिश्रुतिमुक्तजीवात्ममोक्षदशोपपन्नस्वरूपाभिनिष्पन्नत्वमपि जीवात्मनः परमात्मपर्यन्ताभिन्नाब्रह्मणकारणेन परब्रह्मस्वरूपोपपन्नता निराबाधा वर्णितेत्युच्यते।

मैत्रेय्या अमृतत्वोपायं प्रति पृष्टो याज्ञवल्क्य आह-आत्मा वाऽरे द्रष्टव्य इत्यादि परमात्मोपासनम् अमृतत्वोपायः, आत्मनि खल्वरे दृष्टे श्रुते इत्यादि उपास्यपरमात्मलक्षणम, उपासनोपकरणमनआदिनियमनम्, स यथा सर्वासामपां समुद्र एकायनमित्यादिनादर्शितम् उपास्यपरब्रह्मगतसकलसृष्ट्येककारणत्वम्, करणनियमनम्, स यथा सैन्धवघनोऽयं विज्ञानघन इत्यादि अमृतत्वोपायप्रवृत्तिप्रोत्साहक-जीवात्मस्वरूपाऽवस्थितपरमात्माऽपरिच्छिन्नज्ञानैकाकारत्वम्, अपरिच्छिन्नज्ञानैकाकारात्मनः संसारदशापन्नभूतपरिणामानुवृत्तित्वम्; मोक्षदशाकालीनज्ञानसंकोचाभावत्वम्, यत्र द्वैतमिव भवतीत्यादि नानादर्शनमज्ञानकृतम्, ब्रह्मात्मककृत्स्नसृष्ट्यनुभवोत्तरभेददर्शननिरासः, परमात्माऽऽहितज्ञानवज्जीवात्मगतदोषाभाववत्त्वम्, समस्तवस्तुविसजातीयसर्वसृष्ट्येककारणभूतं सर्वविज्ञात परब्रह्म पुरुषोत्तमोऽमृतत्वम् अमृतत्वोपायश्चेति-तदुपासनं प्रतिपाद्यम्, परब्रह्मैव कारणमिति।



जगदुपादानकारणस्य परब्रह्मणः स्वव्यतिरिक्ताऽविशिष्टाऽन्तर

निवारणेन अचिच्छक्तियोगप्रतिपादनम् बुद्धिस्थनिमित्तान्तरनिवारणम् अद्वितीयपदेनाऽऽवेद्यते। कारणभावादेव सविशेषं परब्रह्म प्रतिपादितं भवति। कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिच्छरीरः परमपुरुष एवेति कारणकार्याऽनन्यत्वप्रयुक्तैकविज्ञानलभ्यसर्वविज्ञानोपपन्नता, कारणावस्थपरमात्मवाचिशब्दैः कार्यावस्थपरमात्मवाचिशब्दानां सामानाधिकरण्योपपन्नता चेति समीचीनम्। ब्रह्मोपादानत्वेऽपि संघातस्योपादानत्वेन चिदचितोर्ब्रह्मणश्च स्वभावाऽसंकरः सुस्थः, कार्यावस्थायामपि भोक्तृत्वभोग्यत्वनियन्तृत्वाद्यसंकरः सुस्थ एव, अतः प्रकारिप्रकारादिसर्वशब्दवाच्यः परमपुरुष एव, कार्यानुप्रवेशेऽपि स्वरूपाऽन्यथाऽभावाऽभावात् अविकृत एव परमपुरुषः। विशेषणाऽवस्थान्तरयोगात्मककार्यतायाः स्वरूपविकारेऽप्रयोजकत्वात्। यथासंकल्पं सृष्टेर्जनकत्वात् नाऽपृथक्सिद्धविशेषणगतसावधिकी सृष्टिः, तादृशसृष्टिकर्तृत्व लक्षणम्, एवं तनुभुवनादि, सकर्तृकं, उत्पत्तिमत्त्वात्, सकर्तृकत्वं शक्यक्रियत्वं शक्यक्रियोपादानादिविज्ञानत्वं चेति यस्य शक्यं स परमात्मा। धर्माधर्मौ स्वसाक्षात्कारिचेतनविशेषाधिष्ठितावेव कार्यकरौ, अचेतनत्वात्, वास्यादिवत्, धर्माधर्मसाक्षात्कर्तृ परमपुरुषात्मकाऽधिष्ठातृसिद्धिः, प्रत्यक्षमूलकाऽनुमानादेस्तत्राऽप्रवृत्तेरपि अप्रत्यक्षमूलकानुमानादेः प्रवृत्तेः, योगिप्रवृत्तेः, आत्मसाक्षिप्रवृत्तेः, शास्त्रयोनित्वादित्येतदपि जगज्जन्मादिकारणत्वानुमानगर्भकं शब्दप्रमाणम्। यद्वा यतो वेत्यादि जगज्जनकत्वानुमानाश्रयश्रुतिबलत्वे तु योगिसाक्षिप्रत्यक्षसिद्धानुमानशब्दसिद्धेः पृथक्पृथक् तत्प्रमाणं योक्तव्यम्, एकेन सिद्धेऽपरेण साधने न सिद्धसाधनम्ः अभ्यासान्तर्वर्तित्वात्, प्रयोक्तृभेदाद्, एकबुद्धेरव्यापनात्, रीतिभेदात्। अथ 'भोक्ता भोग्यं प्रेरितारं च मत्वा ततस्तेनाऽमृतत्वमेति' इत्यनेन प्रेरकत्वं परमात्मनि भोक्तृत्वं जीवात्मनि भोग्यत्वं ..स्थिरूपे, इत्येवं जडचेतनविशिष्टकार्यं ज्ञात्वा सूक्ष्मजडचेतनविशिष्टं परमात्मानं व्यतिरेकिणम् अक्षरे धाम्नि सर्वामृतसन्निकर्षणमवाप्नोतीति फलमुक्तम्।

अथ परब्रह्माऽभिधायकनामव्याख्याति—

पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजः, एतानि नामानि परब्रह्मपराणि, पूषन्—आश्रितपोषकः, एकर्षे—अद्वितीयाऽतीन्द्रियेशत्, यमः—नियमयिता, सूर्यः—धीप्रेरकः, प्राजापत्य—सर्वपते, दिव्यमूर्तिरश्मीन् संहर, सौम्यं क्षमं तेजः प्रकटीकुरु (ई० उ० मं० १६) 'तद्वनमित्युपासितव्यं (के० खं० ४, मं० ६) परब्रह्म वनमित्युपासितव्यम्। 'ईशानं भूतभव्यस्य (क० आ० २, वा० १, मं० ५) ईशानं—

नियन्तारं परब्रह्मेत्यर्थः। 'या प्राणेन संभवत्यदितिर्देवतामयी (क० अ० २, व० १, मं० ७) अदितिः—कर्मफलाऽत्ताऽऽत्मा. साऽदितिः गुणं प्रविश्य तिष्ठन्तीति तद्विशिष्टपरमात्मेत्यर्थः। 'अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः, दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः, एतद्वै तत् (क० अं० २, व० १. मं० ८) गर्भिणीभिः—ऋत्विग्भिः याजकः तज्ज्ञैर्मानवैः स्तुत्योऽग्रे नीयते यः सोऽग्निः अग्रनेता अग्निशरीरकं परब्रह्मेत्यर्थः। यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्. महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति, भयादस्याऽग्निस्तपति भयात्तपति सूर्यः, भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः (क० अ० २, व० ३, मं० ३) अत्र प्राणशब्देन परमात्मा प्रोक्तः, तेन सञ्चालितं सर्वं संचलितं भवतीत्यर्थः। 'प्रजाकामो वै प्रजापतिः तपोऽतप्यत मिथुनमुत्पादयते रयिं च प्राणं चेति (प्र० प्र० १, मं० ४) हिरण्यगर्भशरीरको भगवान् तपःस्रष्टव्याऽऽलोचनमकरोत्, आदित्याख्यं प्राणं चन्द्रमाख्यं रयिं चाकरोत्, मूर्तं चाऽमूर्तं च सर्वं रयिः, वैश्वानरोऽग्निरपि सूर्योऽनुग्राह्यः, प्राणसूर्यवैश्वानराग्नयः तच्छरीरकपरमात्मवाचकौ। 'सम्वत्सरो वै प्रजापतिस्तस्याऽयने दक्षिणं चोत्तरं च (प्र० प्र० १, मं ९) परमात्माऽयनद्वयात्मकसम्वत्सरात्मकोऽभवत्; कर्मोपासकाः पितृयाणं दक्षिणायनं पुनरावृत्तिकं परमब्रह्म प्रपद्यन्ते इत्यर्थः। 'शान्तं शिवमद्वैतम् (मा० खं० २, मं० ५) शिवं—परमानन्दविशिष्टस्वसमानशून्यं परब्रह्मेत्यर्थः, शिवपदं परब्रह्मतात्पर्यकम्, 'अव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोंकार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद (मा०. खं० ४, मं० १) शब्दाऽविषयो जडतत्त्वाऽस्पृष्टो विशिष्टस्वसमातिरिक्तशून्यः शिवः परमानन्दी परमात्मेत्यर्थः। 'अन्तर्हृदय आकाशः, आकाशशरीरं ब्रह्म (तै० अ० ६, मं० १, २) हृत्स्थात्मन्याकाशो ब्रह्म प्रकाशशरीरीत्यर्थः। 'येऽन्नं ब्रह्मोपासते, अन्नाद् भूतानि जायन्ते (तै० आ० अ० २ मं० १) अन्नविशिष्टब्रह्मोपासितव्यमित्यर्थः, अन्नविशिष्टब्रह्मणो भूतानि जायन्ते इत्यर्थः। 'प्राणं ब्रह्मोपासते (तै० आ० २, अनु० ३) प्राणशरीरकब्रह्मोपासितव्यमिति। 'कोऽयमात्मा····वयं कतरमुपास्महे····प्रज्ञाने प्रतिष्ठितं, प्रज्ञानं ब्रह्मेति (ऐ० अ० ३, खं० ४) परमात्मपरिमार्गणे दर्शनादिमननादिविज्ञानादिदेवादिभूतादिस्थावरजंगमात्मकप्रज्ञाननामकपरब्रह्मज्ञानवान् अमृतो भवतीत्यर्थः। 'ओमित्येतदक्षरमुद्गीथमुपासीत (छां० अ० खं० मं० १) उद्गीथम् ओमिति परब्रह्मनाम, 'सर्वाणि ह वेमानि भूतानि प्राणमभिसंविशन्ति, सैषा देवता प्रस्तावमन्वायत्ता

आदित्यः उद्गीथमन्वायत्ता देवता, अन्नमिति प्रतिहारमन्वायत्ता देवता (छा० अ० १, खं० ११, मं० ५, ७, ९) प्राणान्तरात्मा द्योतमानान्तरात्माऽन्नान्तरात्मा परब्रह्मैव बोध्यमिति। 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म, यदेव कं तदेव खं यदेव खं तदेव कमिति (छा० अ० ४, खं० १०, मं० ४, ५), सर्वत्र प्राणपितृपरब्रह्म, कंसुखि, खं-निरतिशयम्, तथा च सर्वप्राणपितृनिरतिशयसुखरूपं ब्रह्मोपास्यमित्यर्थः। 'अथ हैनं गार्हपत्योऽनुशशास.....अन्वाहार्योऽनुशशास.....आहवनीयोऽनुशशास (छा० अ० ४, खं० ११, १२, १३) अग्निमयशरीरी परमात्मा बोध्य इति। 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मा.....एष उ एव वामनीः, एष उ एव भामनीः,.....तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति (छा० अ० ४, खं० १५) वामनीः—स्पृहणीयगुणयोगवान्, भामनीः भाः प्रकाशस्तद्गुणवान्, परमात्मा प्राप्यते उपासकेनेत्यर्थः। 'सोऽकामयत, स ऐक्षत, ओं खं ब्रह्म पुराणं वेदोऽनेन यद्वेदितव्यम्, (बृ० अ० ५, ब्रा० १, मं० १) प्रणवाभिधेयं खं विदाकाशमहदाकाशशरीरं शाश्वतं परब्रह्म प्रणवेन वेदितव्यम्, परब्रह्म यो वेदेत्यर्थः। खं-परब्रह्मनाम। सत्यं ह्येव ब्रह्म (बृ० अ० ५, ब्रा० ४, मं० १) सत्याभिधेयं ब्रह्म जानानोऽमृतं हिनस्ति। 'मनोमयोऽयं पुरुषः (बृ० अ० ५, ब्रा० ६, मं० १) मनोमयाभिधानकं परब्रह्मेत्यर्थः।

अत्र वेदशास्त्रसूत्रपुराणेतिहासादिषु परब्रह्मविशेषबोधकाः परमेश्वरपरब्रह्मपरमात्मपुरुषोत्तमभगवदक्षरातीतमायेशजीवेशात्मेशेश्वरेशजडचेतनेशादयो मुख्यवृत्तयो यथा तथा गुणिवाचका गोविन्दमाधवकेशवदामोदरपुण्डरीकाक्षजनार्दनत्रिविक्रमरामकृष्णनारायणादयोऽपि परब्रह्मणि विशिष्टे मुख्यवृत्तय एव, एवमेव तत्तनूवाचका अपि ब्रह्ममुक्तेश्वरात्मदेवेन्द्रवरुणप्रजापतिप्रभृतिशब्दाः परब्रह्मण्येव विशिष्टे वाचिनो बोध्याः, एवं जडचेतनात्मकसर्वजगद्गतप्रचलिताः सर्वेऽपि तनुपर्याप्तबोधका अपि शब्दास्तत्तच्छरीरविशिष्टशरीरिणि पर्यवस्यन्तीति सर्वशब्दवाच्यं प्रकारविगुणं परब्रह्मैव सर्वशब्दजालमावेदयतीति तत्तन्नाम्नोपासकानां तत्तद्भावनाफललब्धिः परब्रह्मत इव भवतीति राद्धान्तः। सर्वशब्दानां लोकव्युत्पत्त्यवगततत्तत्पदार्थविशिष्टब्रह्मात्माभिधायित्वात्, जात्याकृतिव्यक्तीनां पदार्थतावत् प्रकारविशेषणान्वयानामपि पदार्थत्वात् गुणधर्मकर्मणामपि पदार्थत्वात् परस्मिन् ब्रह्मणि तत्तद्धर्माकृतिव्यक्तिप्रकारविशेषणाऽन्वयगुणकर्मादीनां जडचिदात्मकानां प्रकारतया पदार्थत्वेन सामानाधिकरण्येन प्रयोगार्हत्वमिति परब्रह्मात्मकचेतनप्रविष्टवस्तूनां शब्दवाच्यत्वमप्यवसेयम्। द्रव्याणां शरीरभावेन विशेषणत्वेन मुख्यं

सामानाधिकरण्यम्, जातिगुणयोः द्रव्यप्रकारत्वं सामानाधिकरण्यनिबन्धनम्, मनुष्यत्वविशिष्टपिण्डस्य आत्मप्रकारत्वं सामानाधिकरण्यनिबन्धनम्, मनुष्यादिशरीराणाम् आत्मैकाश्रयत्वम्, आत्मविश्लेषे शरीरनाशात्, आत्मैकप्रयोजनत्वम्, कर्मफलभोगार्थसद्भावात्, आत्मैकप्रकारत्वम्, आत्मविशेषणत्वात्, देवमनुष्यादिपिण्डानाम् आत्मैकाश्रयत्वाऽऽत्मैकप्रयोजनत्वात्मप्रकारस्वभावादेव देवो मनुष्य आत्मा इति सामानाधिकरण्यं लोकवेदयोः। तत्प्रकारतैकस्वभावत्वं सामानाधिकरण्यनिबन्धनम्, आत्मप्रकारभूतशरीरस्य पदार्थविवेकप्रदर्शनार्थं शरीरमिति निष्कर्षशब्दः, गोदेवमनुष्यादिशब्दा आत्मपर्यन्ताः, परब्रह्मप्रकारतया चिदचिद्वस्तूनां पदार्थत्वात् तत्सामानाधिकरण्येन तत्प्रयोगाः, शरीरस्यापि शरीरं प्रति प्रकारत्वात् प्रकारवाचिनां शब्दानां प्रकारिणि पर्यवसानात् शरीरवाचिनां शब्दानां शरीरिपर्यवसानमिति सर्वशब्दानां परब्रह्मवाचकत्वम्, प्रकाराः वाच्यतावच्छेदकाः, परब्रह्म वाच्यम्, परमात्मवाचिशब्देन सामानाधिकरण्यं मुख्यमेव, जीवस्य जडस्य च परमात्मानं प्रति प्रकारतयाऽन्वयात् जीवगता जडगता वा धर्माः परमात्मानं न स्पृशन्तीति बोध्यम्।

अथान्यान्यपि श्रुतिवाक्यानि तत्तच्छब्दैः परब्रह्मबोधयन्ति—

'सर्वाणि ह वेमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाश एवैतेभ्यो ज्यायान् आकाशः परायणम्'इत्याकाशशब्दाभिधं परब्रह्म बोध्यम्, आकाशते आकाशयति चेति आकाशः परब्रह्म। 'सर्वाणि ह वेमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जीहते'इत्यत्रापि प्राणयति सर्वभूतानि तत्परब्रह्म प्राणशब्देनाभिधीयते। 'यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु इदं वाव तत् यद् इदम् अस्मिन् अन्तःपुरुषे ज्योति'रित्यत्र निरतिशयदीप्तियुक्तं ज्योतिःशब्दाभिधेयं परब्रह्म बोध्यम्। 'गायत्री वेदं सर्वम्, गीयते त्रायते च तत् परब्रह्म गायत्रीपदाभिधेयं बोध्यम्। 'क्रतुमयोऽयं पुरुषः'इत्यत्र क्रतुपदेन परब्रह्म बोध्यम्। 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः', इत्यत्रोदनस्य अत्तृत्वं संहर्तृत्वं परब्रह्मण एव बोध्यम्। 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्टं पुराणम्, हृद्गुहास्थजीवगतपरमात्मैव गुहाहितपदेन ग्राह्यः। अन्तर्यामिपदेन परब्रह्म बोध्यम्। 'अक्षरात् परतः परः' अक्षरात्–अव्याकृतात्, परतः अवस्थितात् पुरुषात्, परः–परमात्मा बोध्यः। 'अथ परा यया तदक्षरमधिगम्यते', अक्षरं भूतयोन्यक्षरं परब्रह्म व बोध्यम्। 'आत्मानमेव वैश्वानरमुपास्स्वे'त्यत्र वैश्वानरः परब्रह्मैवेति। 'अमृ

स्यैष सेतुः' इत्यत्र सेतुपदेन परब्रह्म बोध्यम्। यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, अत्र भूमशब्देन परब्रह्म बोध्यम्। 'तदक्षरं ब्राह्मणा गार्गि अभिवदन्तीत्यत्र अक्षरपदेन परब्रह्मोच्यते। सूर्यचन्द्राकाशादिविधारणस्य तस्यैव संभवात्। 'दहरं पुण्डरीकं वेश्म'इत्यनेन दहराकाशः परमात्मा बोध्यः। 'अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठतीत्यत्र अंगुष्ठमात्रप्रमितः परमात्मा। परंज्योतिरुपसम्पद्येत्यत्र परंज्योतिः परमात्मा। 'अजामेका'मित्यत्र ब्रह्मात्मिकाऽजा। असदेवेदमग्रआसीत्, 'असद्वा इदमग्र आसीदि'त्यत्र अग्रे नामरूपविभागाभावात् तादृशविभागसम्बन्धितयाऽस्तित्वाऽभावदत् ब्रह्मैवाऽसदित्युच्यते। 'तद्धेदं तर्ह्यव्याकृतमासीदि'त्यत्र अव्याकृतपदेन अव्याकृतशरीरं परब्रह्मैवाभिधीयते। 'आत्मनः कामाय सर्वं प्रियं भवतीत्यत्र आत्मपदेन परब्रह्म बोध्यम्। 'स्वयमात्मानमकुरुते'त्यत्र पदद्वयमपि परब्रह्मवाचकम्, अविभक्तनामरूपात्मा कर्ता, स एव विभक्तनामरूपः कार्यम्, स्वयमेव निमित्तमुपादानं कार्यं चेति। कर्तारमीशं पुरुषं ब्रह्मयोनिम्'इत्यत्र योनिः उपादानं परब्रह्मेति। इत्येवं रुद्रशिवविष्णुब्रह्मवासुदेवयज्ञहरिहंसव्याससाधुमुन्यादिशब्दा अपि तत्तच्छरीरिणि परमात्मनि पर्यवस्यन्तीति बोध्यम्।

अथ सर्वात्र परब्रह्मदर्शनवाक्यानि—

'यस्तु सर्वाणि भूतानि आत्मन्येवाऽनुपश्यति, सर्वभूतेषु चाऽऽत्मानं ततो न विजुगुप्सते (ई० उ० मं० ६) 'यस्मिन् सर्वाणि भूतान्यात्मैवाऽभूद् विजानतः, तत्र को मोहः कः शोक एकत्वमनुपश्यतः (ई० उ० मं० ७) 'यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि (ई० उ० मं० १६) तमक्रतुः पश्यति वीतशोकः धातुः प्रसादान्महिमानमात्मनः (क० अ० १ व० २, मं० २०) अक्रतुः-काम्यकर्माऽनासक्तः, अस्मिन् परब्रह्मणि क्रतुः-कर्मकाण्डेऽर्पितो येन स धातुः-आत्मनः परब्रह्मणः प्रसादान्महिमानं पश्यति जानातीत्यर्थः। 'यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम् (क० अ० १, व० २, मं० २३) परमात्मा यं प्रसन्नो भवति तेन साक्षात् क्रियते इत्यर्थः। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः क० अ० १, व० ३, मं० १२) अन्वयग्रहणयोग्यविज्ञानेन साक्षाद्दर्शनीयो भवतीत्यर्थः। 'उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत (क० अ० १, व० ३, मं० १४) परमेशे यत्नवन्तः सततस्मरणवन्तः वरान्-तदनुग्रहं लब्ध्वा तं विजानीतेत्यर्थः। 'य इमं मध्वदं वेद आत्मानं जीवमन्तिकात्, ईशानं भूतभव्यस्य न ततो विजुगुप्सते, एतद्वै

तत् (क० अ० २, व० १, मं० ५) मध्वदं फलभोक्तारं जीवमन्तिकं परमेश्वरं पश्यति तस्य भेदकृता घृणा नेत्यर्थः। 'यः सर्वज्ञः स सर्वविद् यस्यैष महिमा भुवि, दिव्ये ब्रह्मपुरे ह्येष व्योम्नि आत्मा प्रतिष्ठितः, मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय, तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद् विभाति (मु० २, खं० २, मं० ७) दिव्यब्रह्मपुरस्थसर्वज्ञः स एव मनःप्राणहृदयादिषु अन्तर्यामी,इति तस्य सर्वशरीरिविज्ञानेन ब्रह्मलोकादिसर्वदर्शनं भवति। 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्, तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति (मु० ३, खं० १, मं० ३) साकारदिव्यमूर्तिपरब्रह्मदर्शनवान् अपेतवासनः अपहतपाप्मत्वादिभिः साम्यमुपैति, भेदस्याऽनपायित्वादिति। 'आत्मक्रीड: आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः (मु० ३, खं० १, मं० ४) परमात्मना क्रीडति रमते करोति,नियामकत्वातिरिक्तवरिष्ठत्वमश्नुते इत्यर्थः। 'स वा एष पुरुषविधः, तस्य पुरुषविधताम्, अन्वयं पुरुषविधः (तै० आ० अनु० ४) विज्ञानमयात्मशरीरी सुरूपपुरुषो बोध्य इत्यर्थः। 'मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः (छा० अ० ३, खं १४, मं० २) मनःप्राणप्रभाऽऽकाशादिशरीरी सर्वप्रवृत्तिकामनागन्धरससंकल्पादिगुणी सर्वव्यापी अवाकी परिपूर्णोऽप्रयोजनश्च द्रष्टव्य इत्यर्थः। 'एष म आत्माऽन्तर्हृदय: एतद्ब्रह्मैतमितः प्रेत्याऽभिसंभवितास्मि (छा० अ० ३, खं० १४, मं० ४) एवं पूर्णव्यापी पूर्णगुणः ममान्तर्यामी मम मोक्षे प्राप्य इति तत्समो भविष्यामीत्यर्थः। 'सूर्यमगन्म ज्योतिरुत्तममिति (छा० अ० ३, खं० १७, मं० ८) सूर्यान्तर्यामिणं सर्वतेजःप्रदम् ज्योतिःशरीरिणं प्रपद्यन्ते इत्यर्थः। 'तरति शोकमात्मवित् (छां० अ० ७, खं० १, मं० ३) विशिष्टकार्यकारणरूपः परमात्मवित् शोकं संसारं तरतीत्यर्थः। 'नामवाङ्मनःसंकल्पचित्तध्यानविज्ञानबलाऽन्नजलतेजोवाय्वाकाशस्मराऽऽशाप्राणपर्यन्ततदन्तर्यामिब्रह्मोपासनायाः प्रदर्शनात्, सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमपर्यन्ततदन्तर्यामिब्रह्मोपासनायाः प्रदर्शनात्,। 'प्राज्ञेनाऽऽत्मना सम्परिष्वक्तो न किञ्चन वेद (बृ० अ० ४, ब्रा० ३, मं० २१) आनन्दमयेन परमात्मना सम्यक् स्वमानप्रतिद्वन्द्विपरिसंगमवाप्य परमात्मभानवान् बाह्याभ्यन्तरं यत्कर्मजन्यं सुखं दुःखं न वेद, वेद केवलपरमानन्दम् अपहतपाप्मत्वादिरूपमित्यर्थः। 'तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति (बृ० अ० ४, ब्रा० ३, मं० २२) 'न तु द्वितीयमस्ति, ततो-

ऽन्यद् विभक्तं यद् विजानीयात् (बृ० अ० ४, ब्रा० ३, मं० ३०) विशिष्टपरमेश्वरादन्यन्न विद्यते यज्ज्ञानमवशिष्येतेत्यर्थः ।

अनादिकर्मप्रवाहरूपाऽज्ञानमूलत्वाद्बन्धस्य, तन्निबर्हणं जीवात्मविसजातीयाऽन्तर्यामिब्रह्मज्ञानं परमपुरुषार्थसाधनं चेति । तदुत्पत्तिः अहरहरनुष्ठीयमानपरमपुरुषाराधनवेषात्मयाथात्म्यबुद्धिविशेषसंस्कृतवर्णाश्रमोचितकर्मलभ्या, अनभिसंहितफलपरमपुरुषाराधनवेषाणां कर्मणाम् उपासनात्मकज्ञानोत्पत्तिद्वारेण परब्रह्मयाथात्म्यानुभवरूपाऽनन्तस्थिरफलत्वं च कर्मस्वरूपज्ञानादृते न ज्ञायते, अतो निष्कामकर्मानुस्यूतपरब्रह्मोपासना कर्तव्या । 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, सोऽन्वेष्टव्यः स विजिज्ञासितव्यः, विज्ञाय प्रज्ञां कुर्वीत, दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्, तत्रापि दह्रं गगनं विशोकं तस्मिन् यद् अन्तः तदुपासितव्यम्', इत्यादिभिः प्राप्तोपासनात्मकब्रह्मदृष्टेः फलं 'ब्रह्मविदाप्नोति परमि'ति ब्रह्मप्राप्तिः—दुःखाऽसम्भिन्नधामविशेषप्राप्तिः, यजेत पूजयेदर्चयेदित्यत्र तत्तदनुष्ठानद्वारकतत्तद्देवताद्यन्तर्यामिपरमपुरुषसमाराधनं धात्वर्थः, समाराधितपरमपुरुषान्मोक्षफलसिद्धिः, 'फलमत उपपत्ते'रितिसूत्रेण परमपुरुषप्राप्तिरूपं मोक्षाख्यं फलमुक्तम्, एहिकाऽऽमुष्मिकसर्वफलं स एव सर्वज्ञसर्वशक्तिमहोदारयागदानभक्त्याद्युपासनसमाराधितपरमात्मैव, स एव ऐहिकामुष्मिकभोगजातात्मकस्वप्राप्त्यात्मकफलदानायेष्टे, सं वा एष महान् अज आत्माऽन्नादो वसुदानः, 'एष ह्येवाऽऽनन्दयाति,—इत्यानन्ददातृत्वं परमपुरुषस्यैवोक्तम् । 'यो वायौ तिष्ठन्, योऽग्नौ तिष्ठन्, य आदित्ये तिष्ठन्नित्यादौ परमपुरुषस्यैवाऽलौकिकदर्शनमभिहितम्, एवं शंकरे, विष्णौ, वेधसि, वैराजे, षट्चक्रेषु, आत्मनि, तपसि, अवतारेषु, लक्ष्म्यां राधायां सरस्वत्यां गंगायां तीर्थेषु पार्षदेषु गणेषु भक्तेषु साधुषु गुरुषु गायत्र्यां कालभैरवे महालक्ष्म्यां चण्डिकायां पार्वत्यां दुर्गायां चान्यदेवतासु सर्वात्मसु यत्र क्वाप्युपास्यस्य तत्तच्छरीरिपरमपुरुषस्यैव तत्र तत्रोपासकानां फलदातृत्वमिति सर्वकर्मव्रततपोऽनुष्ठानाऽऽराधनस्तुतिनमस्कारहोमप्रभृत्यनेककर्मकाण्डकीर्तनार्चनध्यानभक्त्यादीनां तदाराधनानां तत्तच्छरीरकपरमपुरुष एव तत्र तत्र फलप्रदोऽलौकिकयोगजप्रत्यक्ष एवं भावनानुरूपप्रतीकद्वारकस्वात्मकस्वदर्शकफलप्रयच्छक इति 'सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चने'तिश्रुत्युक्तसर्वात्मकब्रह्मदर्शनं सर्वज्ञत्वापादकं शुकवद्वामदेववन्मंकणकवत्कपिलवत्पिण्डब्रह्माण्डाद्यैक्यावेदकं स्थूलसूक्ष्मयावच्छरीरमूर्तिपरब्रह्मैक्यं प्रतिपाद्यते, तदेव श्रुत्यध्ययनफलत, वर्णितफलं च पर-

ब्रह्मसकलभोगाशनानन्दवत्त्वमिति । ऐतदात्म्यमिदं सर्वं तत्सत्यं स त आत्मे'त्यनेनापि परब्रह्ममूर्तिरूपेणं सृष्टिरुक्ता, विभिन्नमूर्तिकं परब्रह्म रमते इति परब्रह्मैव सर्वम् । 'यत्र नान्यत्पश्यति नाऽन्यच्छृणोति नान्यद्विजानाति स भूमा'इत्यनेनापि द्रष्टा श्रोता ज्ञाता मन्ता भूना परमात्मैव मदात्मकस्त्वदात्मक एतदात्मकः सर्वात्मकः स्थूलसूक्ष्ममूर्तिको विभिन्नाकारोऽपि त्वन्तरेकाकार एवाऽभिहितः । नाऽयमन्यत्राऽन्याऽवभासः, किन्तु स्वीये स्वकीये स्वस्मिन् साक्षात्परम्परया वा स्वावभास एव तस्मिंस्तद्बुद्धिरूपः प्रकारप्रकारिभावो जीवच्छरीरात्मवदिति । अथ कथं ब्रह्मदर्शनं मन्तव्यमिति चेत् । इत्थम्-मानवादिशरीरेषु सुरूपता सुन्दरता मनोहरता कान्तिमत्ता चाकचक्यं समाकर्षणं प्रेमा स्नेहिलता सुघटता साक्षिप्रियताऽन्तर्याभिनिष्टतामोदप्रमोदतासमुत्सवाऽऽनन्दतासुखताशीतलताशान्तलतृप्तितापूर्णरसताद्यनुभूयमानं साक्षादेव कार्यतनुकं परब्रह्म दृश्यते । तत आन्तरं सुधातुलासुबलतासुमदतासुशक्तितास्वोजस्त्वसुकान्तिकमनीयताऽऽह्लंश्वर्यवत्तादिव्यसिद्धिमत्तेन्द्रियसौष्ठवताकामनारतिस्वादपुलाकितासुस्वेदतामधुवाहितालास्यादिगतामृतताजाठरादिगतस्वागततातृप्तिसूङ्गारतासुरक्ताऽगहततामज्जानिर्मलतासन्धिनिरातंकतासुनिद्रितासर्वतत्त्वस्वस्थतात्मकानुभूयमानं साक्षादेव मानसप्रत्यक्षं कार्यतनुकं परब्रह्म दृश्यते । ततः सुषुप्तं सुखघनोऽहमस्वाप्सम् आनन्दघनोऽहं सुसुप्तः शान्तिघनेऽनतंऽरम् विरमितः करणग्रामः आनन्दवाहिन्याऽजीवं स्वचैतन्यमनुभवं तापाऽसंभिन्नस्वरूपेऽन्वमज्जम् प्रसादसंभूतोऽजजागरम् अनानन्दं न किञ्चिदवेदिषम्-इत्यादिप्रत्ययैर्यत्स्वरूपमनुभूतं तत् स्वशरीरि परब्रह्माऽऽत्मना स्वे। चिदा स्वस्मिन् साक्षात्कृतम्, आत्मानुयोगिप्रतियोगिविम्नाऽवृत्याऽलौकिकया सिद्धिरूपयाऽभ्यासपरिचेयया स्वर्भिकया गोचरीकृतं पौरुषेयीकृतं परब्रह्माऽपरोक्षं स्वात्मतनुकं दृश्यते । अथाऽऽत्मनोऽप्यर्पणवेलायां साक्षिणि परब्रह्मणि तुर्यपदोपस्थित्याऽसम्प्रज्ञातवृत्याऽऽत्मीयलीनीभावसत्तया परब्रह्मानुभवः परब्रह्मदृष्ट्या परब्रह्मसाक्षात्कारात्मकः पराकाष्ठीयमोक्षस्थितिकलभ्यः पराकाष्ठीयसमाधिपरिपाकप्रान्तोपार्ज्योऽपुनरावर्तकसाक्षात्कारः सोऽयं परमपुरुषख्यात्यात्मकः परमपुरुष एव दृश्यते तदा फलितं सर्वं खल्विदं ब्रह्मेति बोध्यम् । एतावत्पर्यन्तः संसारलयश्च परमपुरुषप्राप्तिश्च परमपुरुषसाक्षात्कार'श्चेति सर्वसाधनफलोपासनायोगनिदिध्यासनादिसिद्धिश्चेति ब्रह्मभोगश्चेति । अतद्दशायां चरितार्था 'ब्रह्म वेद ब्रह्मैव भवति' 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' 'निरञ्जनः परमं साम्यमुपैति' 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽ-

भिनिष्पद्यते' 'मुक्तोपसृप्यव्यपदेशाच्च(१/३/२)त्यनेनैतदुक्तम्, 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्, तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय, तथा विद्वान् नामरूपाद् विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' देवमनुष्यादिपिण्डेषु वर्तमानं परब्रह्मैकमेव नापरमिति परब्रह्माऽद्वैतदर्शनम्। सर्वासां ब्रह्मविद्यानाम् अनवधिकातिशयपरब्रह्मानन्दः फलम्, विज्ञानानन्दैकाकारतयाऽभेदी भवति, न तु स्वरूपाऽकारतयाऽभेदी भवति, असंसार्यवस्थायां स्वरूपमात्रं चेतनं भगवच्छरीरम्, मुक्तावस्थायामुत्कृष्टतमं जीवस्य भगवच्छरीरत्वम्, चिदचिद्रूपमुभयमन्योन्यसंसृष्टं तु तदानीं संसारि निकृष्टं भगवच्छरीरम्, समष्ट्यवस्थितचिदचितोर्भगवदात्मकत्वम्, व्यष्ट्यवस्थयोरसंसृष्टयोः संसृष्टयोरपि भगवदात्मकत्वम्। आत्मस्वरूपं मुक्ताऽऽपन्नं तु कर्ममलप्रकृतिशोकमोहाद्यशेषहेयाऽसंगि उपचयाऽपचयाऽनर्हतयैकरूपं सन्मूर्तैकरूपम्आविर्भूतपरब्रह्मनिभस्वरूपं परब्रह्मशरीरम् परब्रह्मात्मकमेवेति

अथ परब्रह्मणो व्यापकत्ववाक्यानि—

'ईशा वास्यमिदं सर्वं यत् किञ्चिज्जगत्यां जगत् (ई० उ० मं० १) वास्यं व्याप्यमिति परमात्मना सर्वं वासितमनुप्रविश्य च व्याप्तिमत्कृतमिति तदर्थः। 'अनेजदेकं मनसो जवीयो नैनद् देवा आप्नुवन् पूर्वमर्षत्, तद्धावतोऽन्यानत्येति तिष्ठत् तस्मिन्नपो मातरिश्वा दधाति (ई० उ० मं० ४) यत्र देवा यान्ति तत्र पूर्वमेव लभ्यते पश्चादपि तिष्ठति सर्वानत्येति चेति सर्वान्तर्बहिरुभयव्याप्तिमद् परब्रह्मेत्यर्थः। 'तदेजति तन्नैजति तद्दूरे तद्वद् अन्तिके, तदन्तरस्य सर्वस्य तदु सर्वस्याऽस्य बाह्यतः (ई० उ० मं० ५) सर्वत्र केवलान्वयिव्याप्तिमत् परब्रह्मेति तात्पर्यम्। 'वायुरनिलममृतम् (ई० उ० मं १७) अवायुत्वं-व्यापकत्वम्, अनिलत्वम्-परिच्छिन्ननिलायनरहितत्वम्, अमृतत्वम्-मोक्षस्वरूपत्वम् व्यापकत्वं चेति। 'श्रोत्रस्य श्रोत्रं मनसो मनो यद् वाचो ह वाचं स उ प्राणस्य प्राणः, चक्षुषश्चक्षुः (के० उ० मं० २) सर्वेन्द्रियशक्तिमत्तया स्थितं परब्रह्मेत्यर्थः। 'भूतेषु भूतेषु विचिन्त्य धीराः (के० खं० २, मं० ५) सर्वभूतव्याप्तिमत्परब्रह्म चिन्तनीयम्। 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् (क० अ० १, व० २, मं० १२) सर्वस्थं सर्वहृदयस्थं यावत्पदार्थस्थं परब्रह्मेत्यर्थः। 'अणोरणीयान् महतो महीयान् आत्माऽस्य

जन्तोर्निहितो गुहायाम् (क० अ० १ व० २, मं० २०) अणुत्वेन महत्त्वेन च परब्रह्मणः सर्वत्राऽस्तित्वरूपव्यापकत्वं दर्शितम्। 'आसीनो दूरं व्रजति शयानो याति सर्वतः'। सर्वव्यापकस्य परब्रह्मण आसीनत्वदूरव्रजत्वशयानत्वसर्वयानभावादि समकालीनं भवतीति। 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये, छायातपौ ब्रह्मविदो वदन्ति (क० अ० १, व० ३, मं० १) छायातपौ–अल्पज्ञसर्वज्ञौ, ऋतं कर्मफलं सत्यं संकल्पफलं सत्यं, जीवः तादृशफलभोगाय, परमात्मा तु लीलारसानुभवाय, सहस्थितौ व्याप्यव्यापकभावेनेति। 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः (क० अ० १, व० ३, मं० ११) सर्वविशिष्टपरमपुरुषातिरिक्तं न व्यापकं किञ्चित्, परमपुरुष एव सर्वत्र गम्य इत्यर्थः। 'एष सर्वेषु भूतेषु गूढो आत्मा न प्रकाशते (क० अ० १, व० ३, मं० १२) जडचेतनभूतादौ गूढतया व्यापकः परमात्मा सर्वेषां दर्शनाऽविषय इत्यर्थः। 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति (क० अ० २, व० १, मं० ४) व्यापकं सर्वगं परमात्मानं साक्षात्कृत्वाऽऽनन्दपरिपन्थी न भवतीत्यर्थः। 'गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत, एतद्वै तत् (क० अ० २, व० १, मं० ६) अन्तर्यामितया व्यापकं तिष्ठन्तमित्यर्थः। 'यतश्चोदेति सूर्योऽस्तं यत्र गच्छति, तं देवाः सर्वेऽर्पिताः तदु नात्येति कश्चन, एतद्वै तत् (क० अ० २, व० १, मं० ९) सूर्योदयास्तमनादिसर्वस्थलीयव्यापकपरब्रह्मणि सर्वदेवार्पणं परब्रह्म नोल्लंघयति स्वरूपेणापि कश्चनेति। 'अंगुष्ठमात्रपुरुषो मध्य आत्मनि तिष्ठति (क० अ० २, व० १, मं० १२) अंगुष्ठमात्रः पुरुषो ज्योतिरिवाऽधूमकः, ईशानो भूतभव्यस्य स एवाऽद्य स उ श्वः, एतद्वै तत् (क० अ० २, व० १० मं० १३) अंगुष्ठस्याऽग्ररेखातिसूक्ष्महृदयस्थात्मस्थपरमपुरुषः सूज्ज्वलः शाश्वतिको सर्वात्ममध्यव्यापकः सर्वकालव्यापकः सर्वभूतभव्यव्यापकश्चेत्यर्थः। सर्वं तदात्मकमिति यावत्। 'हंसः शुचिषद् वसुरन्तरिक्षसत् होतावेदिषत् अतिथिर्दुरोणसत्, नृषद् वरसद् ऋतसद् व्योमसद् अब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् (क० अ० २, व० २, मं० २) शुचौ व्योम्नि सद् वर्तमानः हंसः सूर्यः, अन्तरिक्षे वसुः वायुः, वेदिकायां होता, दुरोणे गृहाग्रेऽतिथिः, नरयोनौ वरे देवयोनौ ऋते सत्यलोके व्योम्नि, जलजेषु पृथिवीजेषु सत्यजेषु अद्रिजेषु सर्वेषु बृहत्–परब्रह्म ऋतं सत्यमेव व्यापकं वर्तते इत्यर्थः। 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः, तदेव शुक्रं तद् ब्रह्म तदेवाऽमृतमुच्यते, तस्मिँल्लोकाः श्रिताः सर्वे

तदु नात्येति कश्चन, एतद्वै तत् (क० अ० २, व० २, मं० ८) परमपुरुषः स्वप्ने विषयनिर्माता तत्परब्रह्म शुभ्रम्, अमृतं भोग्यं च, कर्मानुसारस्वाम्नपदार्थभूतस्तत्र पुण्यपापतत्त्वनिग्रामको व्यापकः परमपुरुष इत्यर्थः। 'एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च (क० अ० २, व० २, मं० ९, १०) 'न लिप्यते लोकदुःखेन बाह्यः (क० अ० २, व० २, मं० ११) 'एको वशी सर्वभूतान्तरात्मा एकं बीजं बहुधा यः करोति, तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् (क० अ० २, व० २, मं० १२) जडचेतनसर्वान्तरात्मा रूपानुरूपो बाह्यश्च अग्निवायुवत् व्यापकः सर्वान्तर्यामी बहुदिव्यरूपः बाह्यदोषाऽलिप्तः परमात्मा प्रधानाख्यमायां महदादिरूपेण करोति, तत्सर्वोपादानात् स्वात्मस्थं प्रत्यक्षीकरोति, तस्य शाश्वतं सुखं मोक्ष इति तात्पर्यम्। 'नित्यो नित्यानां चेतनश्चेतनानाम् एको बहूनां यो विदधाति कामान्, तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् (क० अ० २, व० २, मं० १३) नित्यानां बहूनां चेतनानाम् अन्तर्यामितया सन्निहित एकः परमात्मा तत्तत्कर्मानुगुणात्मकामान् विदधाति, तं पश्यतां शाश्वती शान्तिरिति सर्वात्मस्वन्तर्यामितया व्यापकत्वमुक्तम्। 'तमेव भान्तमनुभाति सर्वम् (क० अ० २, व० २, मं० १५) सर्वं परब्रह्मोपजीव्यकप्रकाशाः, सोऽन्तर्यामी सुमूर्तो व्यापक इत्यर्थः। 'ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः, तदेव शुक्रं तद्ब्रह्म तदेवाऽमृतमुच्यते, तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन, एतद्वै तत् (क० अ० २, व० ३, मं० १) प्रकृतिपुरुषमूलकवृक्षं छित्वा सर्वलोकाश्रयं शुभं परब्रह्म व्यापकम् उपादेयं च बोध्यमित्यर्थः। 'अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च इत्यत्र परमपुरुषस्य व्यापकत्वं मायिकलिङ्गरहितत्वं च प्रोक्तम्। ब्रह्मैवेदममृतं पुरस्तात् पश्चाद् दक्षिणतश्चोत्तरेण अधश्चोर्ध्वं प्रसृतं विश्वमिदं वरिष्ठम् (मु० २, खं० २, मं० ११) सर्वं ब्रह्मात्मकं सर्वदिग्गतं सर्वान्तरवस्थितिमत्तया व्यापकमित्यर्थः। 'स ईक्षत कथं न्विदं मदृते स्यादिति, स ईक्षत कतरेण प्रपद्या इति (ऐ० अ० १, खं० ३) परमात्मा स्वसृष्टौ स्वान्वयभावं प्रपेदे इत्यर्थः। 'स एतमेव पुरुषं ब्रह्म ततम् अपश्यत् इदम् अदर्शमिति तमिन्द्रमाचक्षते परोक्षेण (ऐ० अ० १, खं० ३) सः सर्वेश्वरः लीलारसमयं सर्वं ब्रह्मपुरुषात्मकस्वात्मकं वीक्ष्य परोक्षनाम्ना स्वमिन्द्रमित्याह ततो व्यापकतां ततभावाम् अपश्यदिति। 'पादोऽस्य विश्वा भूतानि त्रिपादस्याऽमृतं दिवि (छा० अ० ३, खं०

१२, मं० ६) परब्रह्मणस्त्रिभागो ब्रह्मलोकः, एकभागा सृष्टिस्तदात्मकः परमपुरुषो विशिष्टो व्यापक इत्यर्थः। 'अथ यदतः परो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु उत्तमेष्वनुत्तमेषु लोकेषु इदं वाव तद् यद् अन्तःपुरुषे ज्योतिः (छा० अ० ३, खं १३, मं० ७) स्वप्रकाशेन व्यापकं परब्रह्म विश्वेषु धामसु आत्मसु सर्वेषु वर्तते इति 'यो वै भूमा तत्सुखं नाऽल्पे सुखमस्ति, यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा (छा० अ० ७, खं० २३, २४, मं० १,१,) भूमत्वं व्यापकत्वं विशिष्टपरब्रह्मण एव। 'स एवाऽधस्तात् स उपरिष्टात् पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः, स एवेदं सर्वम् (छा० अ० ७ खं० २५, मं० १) सर्वदिक्षु परब्रह्मैव व्यापकम्। 'अथाऽतोऽहंकारादेश आत्मादेशः(२)आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति सर्वेषु लोकेषु कामचारो भवति, तस्य ह वैतस्यैवं पश्यतः एवंमन्वानस्यैवं विजानतः, आत्मतः प्राणः आशास्मराकाशःतेजोवार्याविर्भावतिरोभावा ऽन्नबलविज्ञानध्यानचित्तसंकल्पमनोवाङ्नाममन्त्रकर्माण्यात्मत एवेदं सर्वं सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः, स एकधा भवति त्रिधा पञ्चधा सप्तधा नवधा एकादश शतं दश चैकश्च सहस्राणि च विंशतिः, तस्मै तमःपारं दर्शयति भगवान् (छा० अ० ७ खं० २६) अत्र सर्वात्मकान्तर्यामिव्यापकपरब्रह्मदृष्टिरूपोपासना विहिता। 'दहरं पुण्डरीकं वेश्म दहरोऽस्मिन् अन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम् (छा० अ० ८, खं० १, मं० १) हृत्स्थजीवात्मस्थव्यापकपरमात्माऽन्वेषणीय इति तात्पर्यम्। 'तस्मिन् सर्वं समाविष्टं, एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः, तज्ज्ञाता सर्वेषु लोकेषु कामचारो भवति, सर्वसंकल्पितसम्पन्नो भवति। 'अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरूपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते, एतद्ब्रह्मणो नाम सत्यम्, अपहतपाप्मा ह्येष ब्रह्मलोकः (छा० अ० ८) सर्वसमाविष्टपरमात्मा सर्वव्यापकः, व्यापकत्वज्ञाता सर्वलोकचारी भवतीति सर्वत्र परमात्माऽस्तित्वं व्यञ्जितम्। अत्र शरीरे परब्रह्म परज्योतिर्धाम्न्यपि परब्रह्म सत्यं सत्तावद् व्यापकम्। अत्र व्यापकत्वं यथासंभवं बोध्यम्, पदार्थानामनेकरूपत्वात्, परब्रह्मणः सर्वत्र रूपानुरूपतयाऽन्वितत्वात्, स्वरूपाऽन्वयित्वाच्च। तत्र स्वस्मिन् तादात्म्येन स्वाऽन्यूनवृत्तित्वं, स्वगुणैश्वर्यशक्त्यादिषु स्वभिन्नतदात्मकप्रकारवृत्तित्वाभावत्वम्, अक्षरब्रह्मणि

मुक्तेषु ईश्वरेषु आत्मसु चेतनवर्गे तादात्म्यावच्छिन्नचेतनवर्गनिष्ठा-
न्तर्यामितासंसर्गावच्छिन्नविरहाप्रतियोगित्वम्, जडवर्गे सूक्ष्मस्थूला-
वस्थतादात्म्यावच्छिन्नजडनिष्ठनियमनात्मकसंसर्गावच्छिन्नविरहाप्रति-
योगित्वम्, यन्निष्ठयन्निरूपिताऽऽधेयतासामान्ये जडत्वचेतनत्वोभया-
भाववत्त्वं तन्निष्ठाधेयतानिरूपकत्वं सार्वभौमव्यापकत्वं परब्रह्मणो
बोध्यम्। यद्वा स्वाश्रयनिरूपितप्रकारतावच्छेदकतासम्बन्धेन परब्रह्म-
त्वं स्वनिरूपितकालिकाऽकालिकाऽन्यतरविशेषणतावच्छेदतासम्बन्धेन
विशेषणव्यापकम्। विशेषणतावच्छेदकनिष्ठं सामानाधिकरण्यम्। स्वा-
ऽपृथक्सिद्धविशेष्यतासंसर्गेण यत्र विशेषणं तत्र तादात्म्येन परब्रह्मे-
ति व्यापकत्वम्। विषयतासम्बन्धेन यत्र प्रेरयितृत्वशक्तिः तत्र स्व-
संकल्पवत्तासम्बन्धेन परब्रह्मेति व्यापकत्वम्। यत्र सर्गप्रतिसर्गाऽ-
सर्गान्यतमत्वं तत्र ईक्षणविषयतासम्बन्धेन परब्रह्मेतिव्यापकत्वम्।
यत्र यन्निष्ठावस्थाप्रयोज्यरूपवत्त्वं तत्र तन्निष्ठाऽनुप्रवेशप्रयोजकाऽनुरूप-
वत्त्वमिति व्यापकत्वम्। यत्र यदवस्थानुकूलपरिच्छिन्नशक्तिमत्त्वं तत्र
तदवस्थाप्रयोजकव्यापकशक्तिमद्वत्त्वमिति परब्रह्मव्यापकत्वम्। स्वरूपे-
ण यत्र ज्ञेयत्वं तत्र विलक्षणसार्वज्ञ्यसंसर्गेण परब्रह्मवत्त्वमिति व्या-
पकत्वम्। यत्र प्रकाश्यविषयिताविषयिताऽन्यतरसम्बन्धावच्छिन्नप्रका-
शि ह्यत्वं तत्र प्रकाशवत्तासम्बन्धेन स्ववत्त्वं परब्रह्मणो व्यापकत्वम्।
स्वीयशरीरित्वनिरूप्यतासम्बन्धावच्छिन्नशरीरत्ववत्त्वं सर्वत्र व्यापक-
त्वम्। स्वाऽविनाभाववृत्तिकत्वावच्छिन्नाऽस्तितावत्त्वं वा व्यापक-
त्वम्। 'अहं सर्वभूताशयस्थित आत्मा' 'न तदस्ति विना यत् स्यात्
मया भूतं चराचरम्' 'नित्यं विभुं सर्वगतं सूक्ष्मम्' 'सन्मूलाः सर्वाः
प्रजाः' 'ऐतदात्म्यमिदं सर्वमि'ति परमात्मनो व्यापकत्वम् उक्तम्,
कृत्स्नं जगत् ज्ञानात्मना परब्रह्मणाऽऽत्मतया व्याप्तत्वेन परब्रह्मणो
मूर्तम्। अत्र व्यापकत्वाऽज्ञाने भगवदात्मके जगति देवमनुष्याद्यात्मक-
त्वं भ्रान्तिः, ज्ञानाकाराणामात्मनां देवमनुष्याद्यर्थाकारत्वदर्शनमपि
भ्रान्तिः, कृत्स्नस्य तदात्मकतया तद्व्यतिरेकेणाऽवस्थितस्याऽपार-
मार्थ्यस्य पारमार्थ्यभ्रान्तिः, विभिन्नतत्त्वानां व्याप्यव्यापकभाव-
प्राप्तेरत्र अचिद्वस्तूनां भोग्यत्वेन चिद्वस्तूनां भोक्तृत्वेन परब्रह्मण-
श्चेशितृत्वेन स्वरूपविवेकमाहुः श्रुतयः–'अस्मान्मायी सृजते विश्वमेतत्
तस्मिँश्चान्यो मायया सन्निरुद्धः, मायां तु प्रकृतिं विद्यान्मायिनं तु
महेश्वरम्, क्षरं प्रधानम् अमृताऽक्षरं हरः,(आत्मा),क्षरात्मना वि-
शते देव एकः (परमात्मा), अमृताऽक्षरहरो भोक्ता। सकारणं
करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः, प्रधानक्षेत्र-

ज्ञपतिर्गुणेशः, पतिं विश्वस्याऽऽत्मेश्वरं शाश्वतं शिवमच्युतम्, ज्ञाऽसौ द्वावजावीशनीशौ, नित्यो नित्यानां चेतनश्चेतनानाम् एको बहूनां यो विदधाति कामान्, भोक्ता भोग्यं प्रेरितारं च मत्वा, तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन् अन्यः अभिचाकशीति। पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनाऽमृतत्वमेति, अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः, समाने वृक्षे पुरुषो निमग्नो ह्यनीशया शोचति मुह्यमानः, जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः। इति।

जगद्योनिभूतं महद्ब्रह्म मदीया प्रकृतिरेव भूतसूक्ष्माऽचिद्वस्तु, तत्र चेतनात्मकं गर्भं संयोजनं स्थापयामि, ततोऽहं प्रविशामि, मद्युक्तात् चिदचित्संघातात् चिदचिन्मिश्रभूतानां संभवो भवतीति मदीयमेव व्यापकत्वमिति॥ अथ भोग्यभोक्तृरूपसाऽवस्थचिदचितोः परमपुरुषनियम्ययोः परमपुरुषाऽपृथक्सिद्धयोः परमपुरुषस्यात्मत्वम्– आहुः काश्चन श्रुतयः–'यः पृथिव्यां तिष्ठन्…आत्मनि तिष्ठन्…यः पृथिवीमन्तरे सञ्चरन्…योऽक्षरमन्तरे सञ्चरन्…मृत्युमन्तरे संचरन्, एष सर्वभूताऽन्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः। इति। अत्र मृत्युः तमः सूक्ष्मावस्थम् अचित्। अव्यक्तम् अक्षरे लीयते अक्षरं तमसि लीयते इति वचनात्॥ एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारी परमपुरुष एव कार्यावस्थकारणावस्थजगद्रूपेणाऽवस्थितः स्वयं व्याप्यव्यापकभावापन्नः, इतीममर्थं ज्ञापयितुं काश्चन श्रुतयः कार्यावस्थं कारणावस्थं च जगदपि स एवेत्याहुः।–'सदेव सौम्येदमग्र आसीदेकमेवाऽद्वितीयं, तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत,…सन्मूलाः सौम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः, ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो, सोऽकामयत बहु स्यां प्रजायेय, स तपोऽतप्यत, स तपस्तप्त्वा, इदं सर्वम् असृजत,…सत्यं चाऽनृतं च सत्यम् अभवत्, इत्याद्याः॥ अत्रापि श्रुत्यन्तरसिद्धचिदचितोः परमपुरुषस्य च स्वरूपविवेकः स्मारितः, हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, तत्सृष्ट्वा तदेवाऽनुप्राविशत्, तदनुप्रविश्य सच्च त्यच्चाऽभवत्, विज्ञानं चाऽविज्ञानं च, सत्यं चाऽनृतं च, सत्यमभवत्। अनेन जीवेनात्मनानुप्रविश्येति जीवस्य ब्रह्मात्मकत्वम्, तदनुप्रविश्य सच्च त्यच्चाऽभवद् विज्ञानं चाऽविज्ञानं चेत्यनेनैकार्थ्यात् ब्रह्मात्मकत्वम् आत्मशरीरभावनिबन्धनम्। तः

च ब्रह्मात्मकत्वमेवाऽनतिरिक्तरूपव्यापकत्वम्। यथा तादात्म्येन शरीरे चैतन्यशक्त्याऽऽत्मनो व्यापकत्वम्, यथा वृक्षे आपूरकत्वेन पृथिव्या व्यापकत्वम्, यथा प्रकाशे जनकत्वेन विद्युदादेर्व्यापकत्वम्, यथा वर्षणे घनत्वेन मेघस्य व्यापकत्वं यथा ज्ञाने उद्भावकत्वेनात्मनो व्यापकत्वम्, तथा चेतनेषु जडेषु च संस्फुरणेन परमात्मनो व्यापकत्वम्। सर्वत्र व्यापकपरब्रह्मदृष्ट्या हेयपरित्यागपूर्वकग्राह्योपासनयाऽपरोक्षसाक्षात्कारोत्तरसुखव्यवस्थानमिति तात्पर्यम्।

अथ नानात्वनिषेधकवाक्यानि—

यदेवेह तदमुत्र यदमुत्र तदन्विह, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति (क० अ० २, व० १, मं० १०, ११) अत्र नानात्वनिषेधः-परमात्मसत्ताव्याप्यसत्तातिरिक्तसर्वपदार्थगतस्वतन्त्रसत्ताया निषेधः, सर्वात्मकः सर्वप्रकारः परमात्मा एक एवेति शास्त्रसंस्कृतमनसा विशिष्टत्वमेकमेवेति, विशिष्टब्रह्मातिरिक्तं तत्समानं नानावाच्यं द्वितीयं यदि जानाति तदा मृत्युसंसारमाप्नोतीति तात्पर्यम्। 'तत्परमं ब्रह्म वेद ब्रह्मैव भवति (मु० ३, खं० २, मं० ९) परब्रह्मणा सह सर्वकामान् अश्नन् भवति, एवकारः सौसादृश्ये वर्तते। 'सर्वं ह्येतद्ब्रह्माऽयमात्मा ब्रह्म सोऽयमात्मा चतुष्पात् (मा० खं० १, मं० २) विशिष्टस्यैव कारणस्य कार्यत्वाद् अभेदव्यवहारः, न वास्तविकोऽभेद इति। 'सुषुप्तस्थाने एकीभूतः प्रज्ञानघन एवाऽऽनन्दमयो ह्यानन्दभुक् चेतोमुखः (मा० खं० २, मं० ३) प्रज्ञानघन आत्मा आनन्दघने सम्परिष्वक्तो भवति तेन साक्ष्यानन्दभुग् भवतीत्यर्थः। न तु स्वरूपैक्यमिति भावः। 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत (छा० अ० ३, खं० १४, मं० १) परब्रह्मणो जायते लीयते अनति सर्वमिति सर्वात्मकं परब्रह्मोपासीत—उपादानोपादेयात्मकमुपासीत, इदं स्थूलावस्थापन्नम् दृश्यमानं सर्वम् उपादानोपादेयं परब्रह्मैवोपासीत, अन्तर्गतभेदाऽनिरासेन समष्टिव्यपदेशः। 'तदनन्यत्वमारम्भणशब्दादिभ्यः (२/१/१४) ऐतदात्म्यमिदं सर्वं तत्सत्यम् (छा० अ० ६, खं० ८, मं० ७) 'नेह नानास्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, यत्र हि द्वैतमिव भवति तदेतर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाऽभूत् तत् केन कं पश्येत्, इन्द्रो मायाभिः पुरुरूप ईयते', इत्यादिभिर्ब्रह्मव्यतिरिक्तस्य मिथ्यात्वभ्रान्तिः, अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य, एको देवः सर्वभूतेषु गूढः, एको देवो बहुधा सन्निविष्टः,

एष सर्वभूतेषुगूढ आत्मा न प्रकाशते, नाऽन्योऽतोऽस्ति द्रष्टा श्रोता मन्तेत्यादिभिः जीवशरीरकपरब्रह्मशरीरित्वप्रतिपादनात् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यमुपपन्नतरम्। घटादिकार्यमप्यबाधितसत् परमेश्वरशरीरमेव, देशकालादिकारणसमवधानकार्योत्पत्तिसंभवात्, पूर्वम् अविकृतस्य कालादिसमवधानकृतविकारवत्त्वसंभवात् सत्त्वं न व्याहन्यते, देशकालादिसमवधानरूपविशेषमापन्नकारणस्य कार्यं प्रत्यारम्भकत्वम् अबाधितमेव, देशकालादिसपरिकरहेममात्रस्य भूषारम्भकत्वात्, हेमातिरिक्तवुद्धिकारुभावादिसमवधानलभ्यस्वस्तिकादिसत्त्वव्यञ्जनात्, अतः आत्मा ज्ञाताऽहमंशस्त्वात्मन एव, अन्तःकरणभूतस्त्वहंकारो जडो न ज्ञाता, आत्मसाक्षिकं स्वप्रकाशज्ञानं ज्ञेयविशेषसिद्धिरूपं ज्ञातृगतमेव, साक्षित्वभ्रमादीनां ज्ञातृविशेषगतत्वादेव, प्रकाशस्य पुरुषनिष्ठाऽर्थविशेषविषयकसिद्धिरूपत्वात्, सर्वत्र परमार्थादेव कारणात् कार्योत्पत्तेः, सर्वविज्ञानजातस्य पारमार्थिकज्ञातृगतत्वात्, परमार्थरूपत्वादर्थविशेषसिद्धिरूपत्वाच्च, किञ्चिज्ज्ञानस्य परमार्थदोषमूलकत्वात् पारमार्थिकसामग्रीजन्यत्वाच्च लोकव्यवहारस्याऽव्याहतत्वात्, दोषदोषाश्रयत्वज्ञातृत्वज्ञानानाम् अपारमार्थ्ये स्थलेऽपि तत्तदंशे भ्रमत्वविरहात् पारमार्थिकत्वात्, आत्मनामानन्त्येऽपि बद्धमुक्तव्यवस्थाया देशकालाद्युपाधिमद्घटादिसंख्यावत्त्ववद् देशकालाद्युपाधिमत्संख्यावत्त्वसंभवात्, ब्रह्मणोऽपि देशकालसम्बन्धस्य प्रमाणान्तरापततो विरोधाऽभावात्, सर्वचिदचिद्वस्तुशरीरत्वेन सर्वप्रकारकत्वस्य ब्रह्मणः स्वतः परतः परिच्छेदाऽभावात्, तस्मात् परमकारणाद् ब्रह्मणोऽनन्यत्वं जगतः, तदुपपादयन्त्य आरम्भणशब्दादिभ्यः, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्, सदेव सौम्येदमग्र आसीदेकमेवाऽद्वितीयं, तदैक्षत बहु स्यां प्रजायेयेति, अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, सन्मूलाः सौम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः, ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो', एतानि वाक्यानि चिदचिदात्मकस्य जगतः परस्माद् ब्रह्मणोऽनन्यत्वमुपपादयन्ति। 'इदं सर्वं यदयमात्मा (बृ० अ० २, ब्रा० ४, मं० ६) ब्रह्मक्षत्रादिकं सर्वं विशिष्टं परब्रह्मैवाऽयं स्थूलः संसारः, विशिष्टब्रह्मात्मैवेति। 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र वा सर्वमात्मैवाऽस्याऽभूत् तत् केन कं पश्येत्, विज्ञातारमरे केन विजानीयात् (बृ० अ० २, ब्रा० ४, मं० १४) विशिष्टाऽज्ञानवतो विशेषणमात्रेषु मुख्यविशेष्यभेदभ्रमः, यदि विशिष्टैक्यज्ञानं सर्वमात्मैव विशिष्टत्वं तदा स

ज्ञानवान् विशिष्टज्ञानवन्तं परब्रह्मविशिष्टं केनाऽन्येन विजानीयात्, विशिष्टब्रह्मातिरिक्तत्वाऽभावादिति । 'नेह नानाऽस्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति (बृ० अ० ४, ब्रा० ४, मं० २०) 'एकधैवाऽनुद्रष्टव्यम् एतदप्रमेयं ध्रुवम्, स वा एष महान् अज आत्मा योऽयं विज्ञानमयः, सर्वस्य वशी सर्वस्येशानः सर्वस्याऽधिपतिः, तमेव विदित्वा मुनिर्भवति (बृ० अ० ४, मं० २०, २२) 'आत्मन्येवाऽऽत्मानं पश्यति, ब्रह्म भवति य एवं वेद (बृ० अ० ४, ब्रा० ४, मं० २४, २५) विशिष्टब्रह्मातिरिक्तं स्वतन्त्रं किमपि नास्ति, स्वतन्त्रद्रष्टा मृत्युमाप्नोति, एकं ध्रुवम् अजरं विज्ञानमयम्, सर्ववशिनं सर्वाधिपतिं विशिष्टं विज्ञाय मुनिर्ज्ञानी मोक्षगो भवतीति तात्पर्यम् ।

अन्या अपि श्रुतयः– 'आत्मन्येवाऽऽत्मानं पश्येत्, एकमेवाऽद्वितीयम्, अयमात्मा ब्रह्म, तत्त्वमसि, न पुनर्मृत्यवे तदेकं पश्यति, अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद, त्वं वाऽहमस्मि····अहं वै त्वमसि देवता योऽसौ सोऽहमस्मि,' इत्यभेदबोधिकाः, अन्तर्यामिदर्शनं, प्रकारप्रकारिभावापन्नमेकम्, एतदात्मविशिष्टं, तदीयशरीरत्वत्पदवाच्यं, विशिष्टमेकं पश्यतो न संसारः, विभिन्नविशेषणकब्रह्म विहाय स्वतन्त्रत्वन्तदादिज्ञाता भ्रान्तः, इत्यादि विशिष्टमेव वर्णयन्ति, न तु विशेषणनानात्वं निवारयन्ति, तत्राऽसामर्थ्यात् । तथाऽनेककल्याणगुणवत्त्वं विविधशक्तिमत्त्वमपि उपक्रमे उपसंहारेऽभ्यासेऽपूर्वभावे फलेऽर्थवादे उपपत्तौ च तात्पर्यविषयं समुत्तरति—तथाहि— सदेव सौम्येदमग्र आसीदित्यादिसद्विद्यायाः सविशेषवस्तुन्येव षड्विधतात्पर्यलिंगं विद्यते—

उपक्रमे 'उत तमादेशमप्राक्ष्यः' अत्राऽऽदेशशब्देन प्रशासिताऽभिधीयते, प्रकृत्यर्थः शासनम्, प्रसिद्धश्चायमर्थः, आङ्‌पूर्वो दिशतिर्नियोक्तृप्रयोजनवचनः, नियोक्तृ प्रयोजनं यस्य तस्याऽर्थस्य वाचकः, शासितृत्वं ब्रह्मणोऽसाधारणम्, 'अन्तःप्रविष्टः शास्ता जनानाम्, एतस्य वाऽक्षरस्य प्रशासने गार्गि'इत्यादिनिरुपाधिकप्रशासनस्य ब्रह्माऽसाधारणत्वस्य श्रवणात्, येनाऽश्रुतमित्युपादानत्वे सिद्धे प्रशासितृत्वेन निमित्तत्वं सिद्धचेत्, प्रतिपिपादयिषितवस्तुनोऽभिमताऽसाधारणाकारविशिष्टतयैव प्रतिपादनम्, प्रशासनार्थे प्रधानभूतप्रकृत्यर्थस्वारस्यम्, अर्थौचित्यं च, अतः उपक्रमे निरुपाधिकप्रशासनगुणयोग उक्तः, तथा जगदुपादानत्वम्, निमित्तत्वम्, तदनुगुणसार्वज्ञसर्वशक्तिमत्त्वादिकं चाऽवगतम् ।

उपसंहारे–'तत्त्वमसीति सामानाधिकरण्येन जीवान्तर्यामित्वं

नाम गुणविशेष उक्तः ।

अभ्यासे—जीवान्तर्यामित्वस्य बहुशः आवर्तितत्वात् जीवान्तर्यामितया शरीरशरीरिभावेन नियमनसामर्थ्यवत्त्वस्योक्तत्वात्

अपूर्वतायाम्—ब्रह्मणः जगत्कारणत्व–जगदन्तरात्मत्वादिगुणानां प्रमाणान्तराऽप्रतिपन्नत्वात् श्रुतिमात्रप्रतिपन्नत्वात्

फले—'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इत्युपासकस्य शरीरपातानन्तरं मोक्षश्रवणात्

अर्थवादे—पितुः पुत्रं प्रति प्रतिवचनरूपत्वात् विशिष्टब्रह्मार्थप्रतिपादकत्वरूपपरार्थवादात्मकाऽर्थवादस्य सत्त्वात् ।

उपपत्तौ—मृत्पिण्डादिदृष्टान्तोपपादनात् सर्वथा सर्वजडचेतनपिण्डादिपिण्डिरूपपरब्रह्मणः प्रतिपादनात् एकविज्ञानेन सर्वविज्ञानप्रतिपादनाच्च ।

मृत्पिण्डसुवर्णपिण्डलाक्षापिण्डादौ परिणामपक्षानुगुणम् एव स्वारस्यं दृश्यते, दार्ष्टान्तिकविषयवाक्ये 'तत्तेजोऽसृजते'त्युक्तत्वात्, 'तदात्मानं स्वयमकुरुते'त्यत्रापि परिणामस्याऽऽदरात्, सूत्रं च 'परिणामा-दि'ति । स्मृतिषु च 'कटमुकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम्' परिणाम एव आदृतः । परिणामः सद्वारक एव, निर्विकारत्वादिदोषत्वाऽनुप्रवेशशरीरशरीरिभावादिविषयाऽनेकश्रुतिस्वारस्यात् । परिणामोऽयं तात्त्विकाऽवस्थान्तरयोगात्मको बोध्यः । तथा च नानात्वनिषेधस्यापि विशिष्टनानात्वनिषेधे तात्पर्यम्, विशेषणनानात्वनिषेधे न तात्पर्यम् । 'सेयं देवतैक्षत हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति' । अत्र तिस्रो देवतास्तेजोवारिपृथिव्यात्मिकाः इति कृत्स्नम् अचिद्वर्गम् निर्दिशन्ति, स्वात्मकजीवानुप्रवेशेन च सूक्ष्मेऽचिद्वर्गे स्थूलताऽऽपादनं नामरूपभाक्त्वं करवाणीति प्रोक्तत्वात् न सूक्ष्मस्थूलोभयविशिष्टदशायां धर्मगुणधर्म्यादिनानात्वनिषेधः इति न नानात्वनिषेधे तात्पर्यम् ।

अथाऽऽत्मपरमात्मभेदबोधकानि वाक्यानि—

'नित्यो नित्यानां चेतनश्चेतनानाम् एको बहूनां यो विदधाति कामान्' (क० २/५/१३) प्रकृतिप्रत्ययविभक्तिवचनादीनां भिन्नार्थकत्वेन एकवचनबहुवचनप्रयुक्तानाम् अभेदेन बोधाऽन्वयविरहप्रयुक्तार्थबोधाऽजनकत्वेन भेदेनैवान्वयबोधस्य ध्रौव्यादात्मपरमात्मनोः भेदस्याऽव्याहतत्वात् । 'एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते (प्र० प्र० ५, मं० ५) परात्परमित्यनेन जीवघनस्य व्यापकाऽक्षरब्रह्मतोऽपि परं भिन्नं परमपुरुषं दर्शनार्हमाह । छायातपयोरिव ब्रह्मलोके (क० अ० [illegible]

व० ३, मं० ५) ब्रह्मलोके छायातपवत् शरीरशरीरिभावेन नियाम्य-नियामकत्ववैधर्म्येण मुक्तपरमात्मनोरवस्थितिरुक्ता। 'एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च (क० अ० २, व० २, मं० ९) एकः परमात्मा सर्वभूतप्राणिमात्राणामन्तरात्मा प्रतिरूपभिन्नतया तथा बहिर्व्यतिरेकतयाऽव्यवस्थित इत्यत्राऽन्तःपदं व्याप्यव्यापकभावसूचकं प्रतिरूपपदं द्वितीयत्वसूचकं बहिःपदं पारमार्थिकभेदसूचकं च वर्तते। व्याप्यव्यापकस्थितावपि भिन्नावेवेति। 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये, छायातपौ ब्रह्मविदो वदन्ति (क० अ० १, व० ३, मं० १) कर्मफलादनकर्तुः कर्मफलभिन्नलीलारसवेत्तुर्भिन्नत्वात् सुकृतस्य मोक्षस्य धाम्न्यपि शरीरशरीरिभावेन मुक्ततदुपास्यभावेन स्वल्पाऽनल्पभावेन स्थितौ यावत्र हृदयगुहायामपि वर्तेते तत्र द्वित्वमेव पर्याप्त्या भेदबोधकम्। वास्तवभेदो यत्र तत्र द्वन्द्वः, आश्रयभेदस्य ध्रौव्यात्। छायाऽऽतपौ=आत्मपरमात्मानौ। क्वचित् पदार्थभेदात् क्वचित्पदार्थतावच्छेदकभेदात् द्वन्द्वः क्वचिद्विशेषणभेदादपि स्थूलह्रस्वौ घटाविति द्वन्द्वः। 'यमेव एष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् (क० अ० १, व० २, मं० २३) अत्र प्रसादप्रयोक्ता प्रसादपात्रं च भिन्नमिति द्वितीयया तृतीयया स्वामिति स्वत्वेन तस्येतिभेदे षष्ठ्या भिन्नावेवात्मपरमात्मानौ एषेतिपदद्वयेन स्वरूपतो भिन्नौ प्रतिदर्शितौ। शरीरशरीरिभावाऽपृथक्सिद्धत्वेऽपि भेदो नित्यो दर्शितः। 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते, तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन् अन्योऽभिचाकशीति'। 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः, जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः (मु० ३, खं० १, मं० १, २) संसारे कर्मभोक्तृत्वफलप्रदत्वाभ्यां भिन्नौ सहस्थौ, तत्रापि मायावृतो जीवात्मा परमेशमन्यं पश्यति तदा वीतशोको जायते इति, अत्रोभयत्र अन्यपदद्वयेन आत्मपरमात्मनोर्वास्तवभेदः स्वरूपसन्निर्दिष्टः। 'परेऽव्यये सर्व एकीभवन्ति (मु० ३, खं० २, मं० ७) परमात्मनि विशिष्टे सर्वगुणाविर्भावतयैक्यमिवापादयन्ति मुक्तौ, अपृथक्सिद्धतया मुक्ता भवन्ति, वास्तवभेदो न निषिध्यते, रूपजातिरसगन्धाकृतिसम्पिण्डिताम्रफले एकत्वप्रयोगो न मिथस्तत्त्वानां भेदविरोधीतिपदात्मपरमात्मनोः वास्तवभेदविरोधी एकीभवन्तीतिपदार्थो न। प्रत्युत प्राग् यत् न एकं किन्तु भिन्नं तत् एकीभवति एकमिवाऽऽभातीत्यर्थः। 'योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद (बृ० अ० १, ब्रा० ४, मं० १०) त्राऽन्यपदप्रयोगपूर्वकं न स वेदेति वेदनस्योक्तत्वात् वेदनविषयमन्यं

स्वातन्त्र्येणाऽन्यं नोपासीत किन्तु विशिष्टदेवतारूपमुपासीतेति वेदनभावेऽप्यते तेन वास्तवभेदो न निरस्यते। प्रकारविशेषणगुणधर्मादिशून्याऽविषयतानिरूपकद्वित्वात्मकाऽपेक्षाबुद्धयविषयतादात्म्यस्यैव स्वसंसर्गिगतभेदविरोधित्वात् आत्मपरमात्मनोस्तथात्वाभावात् न भेदनिषेधः। विशिष्टब्रह्मातिरिक्तदृष्टिमान् अज्ञानी भ्रान्त इत्यावेदितम्। 'आदित्ये, चन्द्रे, विद्युति, आकाशे, वायौ, अग्नौ, अप्सु, आदर्शे, शब्दे, दिक्षु, छायामयः आत्मनि सुप्तो विज्ञानमयः पुरुषोत्तमो तत्तदात्मशरीरी सर्वत्र वर्णितः। 'यस्य पृथिवी, आपः, अग्निः, वायुः, अन्तरिक्षं, द्यौः, आदित्यः, दिशः, चन्द्रतारकं, आकाशः, तमः, तेजः, सर्वाणि भूतानि शरीरम्, यस्य प्राणः, वाक्, चक्षुः, श्रोत्रं, मनः, त्वक्, विज्ञानं, रेतः शरीरम्, यस्य बुद्धिः, अहंकारः, चित्तं, अव्यक्तम्, अक्षरं, मृत्युः शरीरम्, पृथिवी अप्सु, तेजसि, वायौ, आकाशे, इन्द्रियेषु, तन्मात्रेषु, भूतादौ, महति, अव्यक्ते, अक्षरे, तमसि, तमः परदेवे एकीभवति' इति पृथिव्याद्यारभ्य तमःपर्यन्तानां भिन्नगुणधर्मशक्तीनां तत्त्वानां परस्परवैलक्षण्यशाश्वतिकानाम् परब्रह्मणि अपृथक्सिद्धतादात्म्येनैकीभावतां विशिष्टताप्रन्नानां पृथक्सिद्धताविरहात् सत्त्वयात् व्याप्यसत्तानां परमसत्तैक्यावेदनमेव तत्र प्रकाश्यते।

सांख्यस्मृत्याऽऽत्मविवेकस्य मोक्षसाधनत्वे वर्णिते शाश्वतिकस्वागतीकृतमोक्षकालीनात्ममात्रस्थितिकदशाऽव्यवहितपूर्वत्यक्तमायिकसंचारनामपि स्वरूपशाश्वतिकत्वं विलक्षणाऽऽत्मस्वरूपशाश्वतिकत्वं च पारमार्थ्यात् स्वीकृतमेवेति न विरोधोऽत्र विषये। नित्यमोक्षदशापन्नः कश्चिदाक्षिप्यतेऽनित्यमोक्षगामिसमाकांक्षितपूर्वसिद्धताहशस्थितिक इति तत एव पारमार्थ्यात् परमात्मसिद्धिः।

योगस्मृत्याऽपि संयमलक्ष्यीभूतक्लेशकर्मविपाकाशयाऽपरामृष्टपुरुषविशेषो नित्यमोक्षस्थितिको मोक्षदोऽभिप्रेतः प्रणवोपासनाविषयो मुक्ताभिगम्य इति भेदः शाश्वतिक एवात्र।

शाब्दिकैरपि शब्दस्याऽर्थबोधकःस्फोटात्मकः शब्दाऽर्थोभयसम्बन्धनिर्माता सूक्ष्मस्थूलाऽक्षरपदवाक्यादिवर्ति चेतनाधारोऽभिधासमानाधिकरणो बोधस्फुरणशब्दान्वयी साक्षात्परम्परया वा सामर्थ्यविशेषोऽङ्गीकृतः स्वस्वरूपसाफल्याभिप्रवर्तकमाक्षिपति परब्रह्म सर्वार्थज्ञं सर्वज्ञं परमात्मानमात्मज्ञानप्रयोजकमिति तत्रापि भेद एव, पारमार्थिकतयाऽर्थात् सिद्ध आत्मपरमात्मनोरिति।

न्यायविद्भिरपि ब्रह्माण्डोपादानगोचराऽपरोक्षज्ञानचिकीर्षाकृतिमत्त्वादिना सर्वज्ञात्मा निमित्तकारणतया स्वीकृतः, भगवत्तज्ज्ञानेच्छा

कृतीनामपि कारणत्वं स्वीकृतम्, सर्वेषामात्मनां व्यापकत्वं च स्वीकृतम्, जीवात्मनां शरीरावच्छेदेन ज्ञानम्, परमात्मनस्तु नित्यसर्वज्ञस्य व्यापकस्याऽवच्छेदकत्वं नास्ति ज्ञानादौ यज्ज्ञानं सर्वत्र वर्तमाने परमात्मनि सर्वत्र न स्यात्, ततश्च कार्ये कर्तव्ये भगवदिच्छाकृतिज्ञानानामिव घटादौ कुलालस्येच्छाकृतिज्ञानानां सत्त्वात् कार्याकारावसानपर्यन्तं आत्मपरमात्मनोरुभयेच्छाकृतिज्ञानानां विषयत्वात् लाघवाद् विषयताया ऐक्ये द्वयोर्ज्ञानीयविषयतायाः कृतिविषयताया इच्छाविषयतायाश्चैक्ये विषयतानिरूपकाणामपि अपृथक्सिद्धसत्ताकतया व्याप्यव्यापकभावापन्नत्वं कथं न स्यात्, तत आत्मा परमात्मनोऽपि देशान्तर्गतस्थितिकतया व्याप्यः कथं न स्यादिति वास्तविकविचारतः समागतं परमात्माधीनत्वमात्मनाम् एवं जडानां तु सुतरामिति रूपान्तरेण किं विशिष्टतत्त्वेऽरुचिभावनम्, अर्थाद् विशिष्टं सिद्धमेवेति।

संसारिप्रत्यनीकभंगत्वादिभिरप्यसंसारस्थितिकैतद्विलक्षणतयाऽभिमतम् असदादि वाच्यम् अर्थात् प्राप्तं तत् किमपि व्याप्त्यनास्कन्दितं बृहदिति स्वीकृतम् अकारणम्, अर्थात् कारणत्वस्याऽकारणम्, अकारणत्वस्य तु कारणमिति लब्धमाक्षेपात्, ततश्च यल्लब्धं तच्छाश्वतं ब्रह्मैवेति को विरोधो ब्रह्मणि सर्वतत्त्वात्मके विशिष्टे।

कारणभूताद् ब्रह्मणोऽनन्यत्वं कार्यभूतजगतः, कार्यस्य कारणे सत्त्वात्, स्थूलत्वविरोधिसूक्ष्मत्वरूपधर्मान्तरयोगाद् विद्यमानस्यैव कारणदशायामसत्त्वव्यपदेशः, किन्तु सदेव कार्यं नामान्तरापन्नम्।

परब्रह्मणः स्वसंकल्पमात्राऽवक्लृप्तजगज्जन्मादिध्वंसादिसर्वं लीलामात्रं प्रयोजनम्, अनादितत्तत्कर्माऽपेक्षितसृष्टिकरणात् परब्रह्मणो न वैषम्यं न नैर्घृण्यं च।

आत्मा ज्ञातृत्ववान्, अणुः, गुणेन ज्ञानेन सकलदेहं व्याप्यावस्थितः, मण्यालोकवत् ज्ञातुः प्रभास्थानीयस्य ज्ञानस्य स्वाश्रयादन्यत्र वृत्तिमत्त्वात् गुणत्वेऽपि द्रव्यत्वं प्रसरणशीलत्वात्। विज्ञानमेवाऽऽत्मनः सारभूतो गुणः, सुषुप्त्यादिवर्तमानज्ञानस्य जाग्रदादावभिव्यक्तेर्जायमानत्वात् आत्मनः कर्तृत्वम्, शास्त्रशासनवत्त्वम्, पुण्यादिमत्त्वं च, प्रवृत्ताविच्छाकारणम्, इच्छायां ज्ञानम्, इच्छया करोति प्रवर्तते, जीवस्य कर्तृत्वं परमात्मायत्तम्, सर्वासु क्रियासु पुरुषेण कृतं प्रयत्नम् उद्योगम् अपेक्ष्याऽन्तर्यामी परमात्मा तदनुमतिदानेन प्रवर्तयन्ति, जीवोऽयं ब्रह्मणोंऽशः, ब्रह्मात्मकः, तत्र स्रष्टृत्वस्रज्यत्वनियन्तृत्वनियाम्यत्वसर्वज्ञत्वाऽज्ञत्वस्वाधीनत्वपराधीनत्वशुद्धत्वाऽशुद्धत्वकल्याणगुणाकरत्वतद्विपरीतत्वपतित्वशेषत्वादिभिः तत्त्वमसीति अभेदेन व्यपदेशात्, नित्यो नित्यानामिति

भेदेन व्यपदेशाच्च । ब्रह्मत्वज्यत्वनियाम्यत्वशरीरत्वशेषत्वाधारत्वपाल्यत्वसंहार्यत्वोपासकत्वतत्प्रसादलभ्यचतुःपुमर्थभावत्वादयो भेदे प्रयोजकाः। विशिष्टस्यैकस्य विशेषणमंश एव, द्वयोः स्वभाववैलक्षण्यात् । उपासनया वरणेन चात्मना परमात्मा लब्धोऽपि विशेषतो लभ्यः । विशिष्टवस्त्वेकदेशत्वेनाऽभेदव्यवहारो मुख्यः, विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेदव्यवहारो मुख्यः । सद्विद्याभूमविद्यादहरविद्योपकोसलविद्याशाण्डिल्यविद्यावैश्वानरविद्याऽऽनन्दमयविद्याऽक्षरविद्यापञ्चाग्निविद्यापञ्चकोशविद्योद्गीथविद्याक्रतुविद्यामध्वक्षिविद्याप्राणविद्यादहरविद्यादिवेद्यं तत्तच्छरीरकं परब्रह्मैव, नामविद्याप्रतर्दनविद्याऽऽदित्यविद्यामनोविद्याप्रतीकविद्यादिभिरपिपरब्रह्मैव वेद्यम् विशिष्टम् । प्रत्यगात्मनः अपहतपाप्मत्वादयः स्वाभाविका गुणाः परंज्योतिरूपसम्पन्नस्याऽऽविर्भवन्ति, न तूत्पद्यन्ते, ज्ञानानन्दादिगुणानां कर्मभिरात्मनि संकुचितानां परं ज्योतिरुपसम्पद्य कर्मरूपबन्धक्षये विकासरूपाऽऽविर्भावो भवतीति, स्वेन रूपेणाऽभिनिष्पद्यते इति स्वरूपाविर्भावो भगवत्साम्य एवेति ।

अत एव निर्गुणत्ववादिन्यः श्रुतयो हेयगुणाऽसम्बन्धात् परात्मनि उपपद्यन्ते, पापजरामृत्युशोकजिघत्सापिपासादिगुणानां निषेधं, सत्यकामसत्यसंकल्पतादिकल्याणगुणानां विधानं च व्यवस्थापयन्ति । ज्ञानस्वरूपस्य सर्वज्ञस्य सर्वशक्तियुतस्य निखिलहेयप्रत्यनीककल्याणगुणाकरस्य परात्मनः स्वरूपं ज्ञानैकाकारं स्वप्रकाशं च निरूपयन्, सर्वज्ञत्वं सर्वशक्तिमत्त्वं ज्ञानबलक्रियावत्त्वं विज्ञातृत्वं नाऽन्यज्ञेयत्वं च श्रुतयः 'यः सर्वज्ञः सः सर्ववित्' 'सत्यं ज्ञानमनन्तं ब्रह्म' पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाश्च' 'विज्ञातारमरे केन विजानीयादि'त्याद्याः उपपादयन्ति ।

'सोऽकामयत बहु स्यां, तदैक्षत बहु स्यां, नामरूपाभ्यां व्याक्रियत, इत्याद्यास्तु परब्रह्मण एव संकल्पद्वारा विचित्रस्थिरत्रसरूपतया नानाप्रकारामवस्थिति, तत्प्रत्यनीकाऽब्रह्मात्मकवस्तुनानात्वाद्यतत्त्वम्, निवेदयन्ति । 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, नेह नानाऽस्ति किंचन, यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाऽभूत् तत् केन कं पश्येत् केन कं विजानीयात्' इत्याद्या अपि अब्रह्मात्मकाऽप्रकारताकवस्त्वतत्त्वभावं निवेदयन्ति । अथ बहु स्यां प्रजायेयेतिदर्शितं स्वसंकल्पसिद्धं परब्रह्मणो नानानामरूपभाक्त्वं नानाप्रकारताकत्वं च ननिवारयन्ति, अपि तु 'यत्र त्वस्य सर्वमात्मैवाऽभूदित्यादिना नानानामरूपभाक्त्वं स्थापितमेव, 'तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेद'इत्या

दिना सुमूर्तपरब्रह्मणो विमर्शात्मकवेदाद्युत्पादनेन तत्तन्नामरूपवत्त्वं विशेषतः दृढीकृतमिति ।

इत्येवं चिदचिदीश्वराणां स्वभावभेदं स्वरूपभेदं च वदन्त्यः श्रुतयः परब्रह्मणो विशिष्टस्यैव कारणकार्यभावं कारणकार्याऽनन्यत्वं चाऽऽवेदयन्त्यो न विरुद्ध्यन्ते, एतत्तत्त्वं चिदचितोः परमात्मनश्च सार्वाधिकशरीरात्मभावं शरीरभूतयोः कारणदशायां नामरूपविभागाऽनर्हसूक्ष्मदशापत्ति कार्यदशायां च तदर्हस्थूलदशापत्ति वदन्तीभिः श्रुतिभिरेव विज्ञायते । चिदचिदीश्वराणां पृथक्स्वभावतया तत्तच्छ्रुतिसिद्धानां शरीरात्मभावेन प्रकारप्रकारितया श्रुतिभिरेव प्रतिपन्नानां श्रुत्यन्तरेण कारणकार्यभावप्रतिपादनं कारणकार्ययोरैक्यप्रतिपादनं च समुपपद्यते ।

'क्षरं प्रधानममृताऽक्षरं हरः क्षरात्मनावीशते देव एकः, पतिं विश्वस्यात्मेश्वरम्, आत्मा नारायणः परः, इत्याद्याभिः पृथक्त्वं चिदचिदीश्वराणां प्रतिपाद्यते । 'यस्य पृथिवी शरीरं, यस्यात्मा शरीरं, यस्याऽव्यक्तं शरीरं, यस्याऽक्षरं शरीरं, एषः सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इत्याद्याभिः सर्वावस्थावस्थितचिदचितोः परमात्मशरीरता परमात्मतदात्मता च प्रतिपाद्यते, शरीरभूतपरमात्माभिधायिस ब्रह्मात्म दिशब्दैः कार्यावस्थो यः स एव कारणावस्थः स एवान्वयीति पृथक्प्रतिपन्नं वस्तुत्रयं 'सदेव सोम्येदमग्र आसीत्' ऐतदात्म्यमिदं सर्वं सर्वं खल्विदं ब्रह्मे'त्यादिभिश्च प्रतिपाद्यते, चिदचिद्वस्तुशरीरिणः परब्रह्मणः परमात्मशब्देनाऽभिधानं सुखिमनुष्यशरीरकात्मनः अयमात्मा सुखीतिवद् भवत्येव । तथा च प्रकारापन्ननानात्वनिषेधगन्धोऽपि नास्ति श्रुतिषु । विशिष्टपरब्रह्मातिरिक्ताऽतत्स्वात्मकमेव निषेधधीविषयमिति ।

अथैकविज्ञानेन सर्वविज्ञानबोधकानि वाक्यानि—

'येन रूपं रसं गन्धं शब्दान् स्पर्शान् मैथुनान्, एतेनैव विजानाति किमत्र परिशिष्यते एतद्वै तत् (क० अ० २, व० १, मं० ३) एतेन परमात्मसाक्षात्कारेण विजानाति । 'स्वप्नान्तं जागरितान्तं चोभौ येनाऽनुपश्यति (क० अ० २, व० १, मं ४) येन प्रत्यक्षीकृतेन विशिष्टपरमात्मना सर्वम् अनुपश्यति । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति, एवं मुनेर्विजानतः आत्मा भवति गौतम (क० अ० २, व० १, मं० १५) विशिष्टं ब्रह्म विजानतः स्वयमात्मा शुद्धपरमात्मार्पितो दृश्यते, सर्वमपि तथा दृश्यते इति तात्पर्यम् । परमात्मन्यासक्तमात्मस्वरूपमपहतपाप्मत्वादिना तत्समानाकारं भवतीति तद्विज्ञानेन सर्वविज्ञानमिति भावः । 'विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि

सम्प्रतिष्ठन्ति यत्र, तदक्षरं वेदयते यस्तु सौम्य स सर्वज्ञः सर्वमेवाऽऽविवेश (प्र० ४, मं० ११) विज्ञानस्वरूपो जीवात्मा यत्र सुषुप्तौ अक्षरे साक्षिणि सर्वैः सह प्रतियाति, तदक्षरं यो वेत्ति सः सर्वज्ञाता भवति सर्वसुखवान् भवति समुद्रे गोष्पदवत् सर्वं सरलतया पश्यतीत्यर्थः। 'तान्होवाचैतावदेवाऽहमेतत्परब्रह्म वेद नातः परमस्तीति (प्र० ६, मं० ७) परब्रह्मणः स्वरूपगुणाद्यपरिच्छिन्नस्याऽकलस्य वेदनेन ज्ञातव्यमपरं नाऽवशिष्यत इत्यर्थः। 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति, तस्मै स होवाच, द्वे विद्ये वेदितव्ये, इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवाऽपरा च, अथ परा यया तदक्षरमधिगम्यते (मु० १, खं० १, मं० ३, ४, ५) अक्षरवाच्यपरब्रह्मविज्ञानात्मकैकविद्यया विशिष्टवेदनेन सर्वं प्रकारप्रकारिभूतं विज्ञातं भवतीत्यर्थः। 'ह्येष सर्वभूतान्तरात्मा (मु० २, खं० १, मं० ४) एषः सर्वकारणं परमात्मा सर्वान्तर्यामीति पृथक् ज्ञातव्यं नाऽवशिष्यते इत्यर्थः। 'तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति (मु० २, खं० २, मं० ७) अन्वयव्यतिरेकब्रह्मज्ञानेन सर्वं परिज्ञातं भवतीति सर्वमानन्दरूपं विभातीति तदर्थः। 'येनाऽश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति (छा० अ० ६, खं० १, मं० ३) विशिष्टे स्वात्मकपरब्रह्मणि श्रुते मते विज्ञाते सर्वं तत्पिण्डापन्नं श्रुतं मतं विज्ञातं भवतीति। 'यथा सौम्येकेन मृत्पिण्डेन,....यथा सौम्यैकेन लोहमणिना,....यथा सौम्येकेन नखनिकृन्तनेन मृत्तिकाद्यं विज्ञातं भवति (छा० अ० ६, खं० १, मं० ४, ५, ६) सूक्ष्मावस्थापन्नं यत् तदेव स्थूलावस्थापन्नमिदं परब्रह्म, मृत्तिकापिण्डजभाण्डवत् विशिष्टं सर्वं विज्ञातं भवतीत्यर्थः। 'सदेव सौम्येदमित्यत्रइदमा गम्याः कार्यविशेषाः सत्कारणदशायां व्यवच्छिद्यन्ते, सूक्ष्मचिदचिच्छरीरकः परमात्मा परब्रह्म सत्, एकमेव–सजातीयमन्यन्नासीत्अद्वितीयः–नाऽस्याऽधिष्ठानुरपेक्षा। 'असदेवेदमग्र आसीत्–अस्यापि अल्पं सूक्ष्मं सदासीत् तस्मादसतः सूक्ष्मात् सत् स्थूलं जायते। यद्वा प्रागभावाद् भावोत्पत्तिरिति मतान्तरं न युक्तमित्युक्तम्। येन विशिष्टपरब्रह्मणा श्रुतेन मतेन विज्ञातेन अश्रुतम् अमतम् अविज्ञातं कालान्तरीणं देशान्तरीणं सूक्ष्मं स्थूलं किमपि पदार्थनामधेयं तत्त्वं श्रुतं मतं विज्ञातं भवति, परमात्मदृष्ट्या सर्वप्रत्यक्षदर्शितावत्त्वात्। आत्मनि–परमात्मनि जगदुपादाने जगन्निमित्ते सर्वज्ञे सर्वशक्तिमति सत्यसंकल्पे सर्वान्तरात्मनि सर्वाधारे सर्वनियन्तरि सर्वगुणविशिष्टे कृत्स्नजगदात्मके त्वदात्मके श्वेतकेत्वात्मके ज्ञाते विज्ञाते श्रुते सर्वं ज्ञातं विज्ञातं श्रुतं भवति, वाणीव्यवहारप्रयोजकमात्रमारम्भण-

घटत्वद्रव्यत्वाद्यवस्थावद्रूपं, वाक्पूर्वकदानादिव्यवहारप्रयोजनकमृत्पिण्डकरणकघटत्वाद्यवस्थावन्नामरूपसम्बन्धाभाकवदिदमिति। मृत्तिकेत्येव सत्यम्-मृन्मयघटादिमृद्द्रव्यत्वावस्थं प्रामाणिकम्। सदेवेति असत्त्वं निरसनीयम्, सच्छब्दः सृष्टेः प्राक् विशेष्यभूतपरमात्मनो वाचकः, कारणविशत्वसामर्थ्यात्, कारणत्वौपयिकगुणविशिष्टं प्रकृतिपुरुषकालशरीरकं परब्रह्मोपस्थापयति. अतः कालरूपविजातीयभेदः, चेतनरूपसजातीयभेदः, सार्वज्ञ्यादिमृग्यनुगुणगुणरूपस्वगतभेदश्च तदानीमस्त्येव, एकमेव-अविभक्तनामरूपं कारणावस्थं परब्रह्म, एकत्वावधारणस्य बहु स्यामिति स्रक्ष्यमाणकार्यबहुत्वप्रतियोग्येकतरपरत्वात्, एकेन मृत्पिण्डेनेति दृष्टान्तसामर्थ्याच्च, तद्धेदं तर्ह्यव्याकृतमासीदिति श्रुत्यन्तरैकार्थ्याच्च, एव-भ्रान्तनित्याकाशादिसंहाराभिप्रायक एवकारः, अविभक्तनामरूपत्वाद् ब्रह्मण उपादानत्वं सिद्धमेव, उपादानत्वं भाव्यवस्थाविशेषवन्निष्ठप्रागवस्थायोगवत्त्वम्। अद्वितीयम्-निमित्तान्तरनिषेधः, उपादानस्य प्रस्तुतत्वेन निमित्तस्य धीस्थत्वात्, निषेधस्य विहितव्यतिरिक्तविषयत्वात्, एकमेवेति-अविभक्तनामरूपम्, बहु स्यामित्यनेन गृह्यते, तदैक्षत तत्तेजोऽसृजतेत्यनेन अद्वितीयपदस्य निमित्तान्तराऽभावपरत्वमवगम्यते, परब्रह्मणः सर्वदा सत्त्वेन सदेवेत्यवधारणम्, भ्रान्ताऽसत्कार्यव्युदासपरम्, उपरितनेन कथमसतः सज्जायेतेत्यनेन दृश्यते, कथमसतः-इति भ्रान्ताभावकारणनिरासपरम्, तद्धैक आहुरित्यसत्कारणवादनिरासपरम्, 'कुतः खलु सोम्यैवं स्यात्,' मृदः उत्पन्नस्य मृदात्मकत्वात् असदुत्पन्नस्याऽसदात्मकत्वं स्यात् तत्प्रत्यक्षविरुद्धमिति उक्तमिति नासि-अपूर्वावस्थान्तरागमः, असद्भवनलक्षणागमः। वाचारम्भणमित्यनेन भावितोऽयमर्थः, तदु तजीय कथम् असतः सज्जायेते युक्तम्, निराश्रयावस्थासंभवः कथमपि नेत्यर्थः। तदैक्षत बहु स्यामित्यनेक्षणात् सर्वज्ञत्वम्, असृजतेति निमित्तत्वम्, बहु स्यामित्युपादानत्वम्, तत्तदनुगुणं सर्वशक्तिसंकल्पादिमत्वं च। अनेन जीवेनाऽऽत्मनोऽनुप्रविश्येति सर्वान्तरत्वम्, जीवशरीरकात्मशरीरित्वेत्यर्थः। सर्वज्ञत्वगुणकस्य परब्रह्मणः अल्पज्ञत्वगुणकजीवेनैक्याऽसंभवात् शरीरशरीरिभावस्य 'यस्यात्मा शरीरम्' 'तदनुप्रविश्ये'त्यादिना शरीराद्यनुप्रवेशस्य च निश्चितत्वात्, शरीरवाचिशब्दस्य शरीरिपर्यन्तत्वस्य मुख्यवृत्त्योपपत्तेश्च्यात्। सदायतना-सर्वाधारता। तत एव सर्वनियमनता। 'एतस्य वाऽक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः'इतिप्रशासनधारणवत्त्वश्रवणात्, अतः सर्वाधारत्वसर्वनियामकत्वसर्वान्तर्यामित्वादि-

शरीरितया जगच्छरीरकत्वं परब्रह्मणो बोध्यम्। 'ऐतदात्म्यमिदं सर्वम् (छां० अ० ६, खं० १, मं० ७) इत्यत्रापि भगवदात्मकसर्वजगत्कत्वमर्थः, तत् सत्यम्, तदात्मकत्वपूर्वकसत्यत्वमर्थः, कृत्स्नजगदात्मकत्वम्। तत्त्वमसि–तदात्मकसर्वजगत्त्वात् जगदन्तर्यामी यः स त्वदात्मेत्यर्थः। त्वम्-तदर्थस्तद्बुद्धिस्तत्पर्यन्तः। आदेशः–उपदेष्टृ-तदुपदेश्यं चाक्षिपति, प्रकृत्यर्थ उपदेशः, प्रत्ययार्थः कर्मत्वम्, उपदेशे ब्रह्मणः कर्मत्वोपपत्तेः, आदेशः घञ्प्रत्ययान्तः। 'स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाऽश्रुतं श्रुतं भवत्यमतं मतम् अविज्ञातं विज्ञातम् (छां० अ० ६, खं० १, मं० ३) इति कृत्स्नस्य जगतो ब्रह्मैककारणत्वम्, कारणात् कार्यस्याऽनन्यत्वम् इतिकारणभूतपरब्रह्मविज्ञानेन कार्यभूतस्य सर्वस्य विज्ञाने प्रतिज्ञाते सति कृत्स्नस्य ब्रह्मैककारणताम् अजानता शिष्येण 'कथं नु भगवः स आदेशः (छां० अ० ६, खं० १, मं० ३) इति नोदितः, अन्यज्ञानेन अन्यज्ञाततासंभवम्, ब्रह्मैककारणतामुपदेक्ष्यन् लोकसिद्धं कारणात् कार्यस्याऽनन्यत्वं 'यथा सौम्येकेन मृण्मयेन विज्ञातेन सर्वं मृण्मयं विज्ञातं स्यात् (छा० अ० ६, खं० १, मं० ४) इत्येकमृत्पिण्डारब्धानां घटशरावादीनां तस्मादनतिरिक्तद्रव्यतया तज्ज्ञानेन ज्ञातता, 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् (छा० अ० ६, खं० १, मं० ४) आरम्भण (घटादि) कर्मकवाचा–घटेन जलमाहरेदितिव्यवहारसिद्ध्यर्थम् मृद्द्रव्यात्मकपृथुबुध्नोदरादिसंस्थानात्मकविकारो घट इति नाम च, स्पृश्यते–उदकाहरणादिव्यवहारविशेषसिद्ध्यर्थम् मृद्द्रव्यमेव संस्थानान्तरनामधेयान्तरभाग् भवति, अतो घटाद्यपि मृत्तिका, सत्यम्–प्रमाणत्वेनोलभ्यते, तत्तदवस्थैकद्रव्यस्यैव बुद्धिशब्दकार्यादीनि युज्यन्ते इति। 'सौम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः (छा० अ० ६, खं० ९, मं० २) सर्वप्रजानिजनामरूपविधुरदशायां सद्ब्रह्मणि ब्रह्मसूक्ष्मप्रकारभावापन्ना स्थूलभाववेदनरहिता भवन्ति तदैक्यं जानन्तीति। शुङ्गरसनदीशाखान्यग्रोधबीजलवणपुरुषमुमुक्षु-स्तेनदृष्टान्तैः परब्रह्मणि तदात्मभावापन्नोपदेश मोक्षस्थितिक उक्तः। 'य एवं वेदाऽहं ब्रह्माऽस्मीति स इदं सर्वं भवति (बृ० अ० १, ब्रा० ४, मं० १०) स्वशरीरपृथक्सिद्धज्ञानवान् सर्वात्मकं स्वं विशिष्टमेव जानाति तेन सर्वं ज्ञातं भवतीति। 'त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति पुत्रः प्रत्याहाऽहं ब्रह्माऽहं यज्ञोऽहं लोक इति (बृ० अ० १, ब्रा० ५, मं० १७) पुत्रशरीरकब्रह्मबोधाद् विशिष्टोऽहमिति साक्षात्कारो जात इति। मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन सर्वं विदितं

भवतीति (बृ० अ० २, ब्रा० ४, मं० ५) इत्यादावन्तर्यामि परब्रह्मैव विशिष्टं प्रियं भवति तद्विशिष्टविज्ञानेन सर्वं विज्ञातं भवेदिति। 'सूत्रं विद्यात्तम् अन्तर्यामिणमिति स ब्रह्मवित् स लोकवित् स स देववित् स वेदवित् स भूतवित् स आत्मवित् स सर्वविदिति (बृ० अ० ३, ब्रा० ७, मं० १) एवं सर्वान्तर्यामिविशिष्टसूत्रात्मकपरब्रह्मवेत्ता सर्वब्रह्मलोकदेववेदभूतादिविद् भवतीति। 'अन्तर्यामिणं ब्रूहि'''यः पृथिव्यां तिष्ठन् अप्सु, अग्नौ, अन्तरिक्षे, वायौ, दिवि, आदित्ये, दिक्षु, चन्द्रतारके, आकाशे, तमसि, तेजसि, सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयति एष त आत्माऽन्तर्याम्यमृत इति (बृ० अ० ३, ब्रा० ७, मं० १५) अत्र पृथिव्यादिशरीरी परमात्माऽन्तर्यामी सर्वशरीरिस्वान्तर्यामीति व्यापकता विशिष्टैकतत्त्वरूपता च दर्शिता। 'यः प्राणे तिष्ठन् वाचि चक्षुषि श्रोत्रे मनसि त्वचि विज्ञाने रेतसि तिष्ठन् रेतसोऽन्तरो रेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नाऽन्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता (बृ० अ० ३, ब्रा० ८, मं० २३) प्राणादिशरीरी सर्वान्तर्यामी सर्वक्रियादिविशिष्टपरमात्मैव त्वं विशेषणतयाऽन्वित इति त्वं विशिष्ट एवेति। 'यद्भूतं भवच्च भविष्यच्च कस्मिँस्तदोतं च प्रोतं च, द्यावापृथिव्यौ, आकाशे, आकाशोऽक्षरे (बृ० अ० ३, ब्रा० ८, मं० ७) सर्वम् अक्षरे स्वरूपस्वभावाद्यक्षरणशीले परमात्मनि ओतं च प्रोतं चेति, तदोतप्रोतज्ञानेन सर्वज्ञानं भवतीति। 'तं पुरुषं विद्यादात्मनः परायणं स वै वेदिता स्याद् वेद वा अहं तं पुरुषम् अयं शारीरः पुरुषः (बृ० अ० ३, ब्रा० ९) आत्मशरीरिणं जानीयात् शारीरं सर्वात्मानमहं याज्ञवल्क्यो वेद तज्ज्ञानेन शाकल्य! सर्वं दृष्टं भवति। 'ब्रह्मपुरुषस्याऽमृतं देवता तस्य स्त्रियः स्त्रीणां देवताः सत्यं तस्य दिशः तासां मृत्युः तस्याऽसुः, तस्य वरुणः तस्य प्रजापतिः, दिक्षु देवताः, औपनिषदं पुरुषं पृच्छामि (बृ० अ० ३, ब्रा० ९) औपनिषदं सर्वतत्त्वेषु उप उपाश्रित्य निषीदन्तं पुरुषं परमात्मानं पृच्छामि यज्ज्ञानेन ज्ञानतृष्णा विरमेतेति। 'मैत्रेयि! आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इद सर्वं विदितम्, ब्रह्मैवेदं सर्वं यदयमात्मा, ब्रह्मैव सर्वेषामेकायनम्, यथा रसघनोऽयमात्मा (बृ० अ० ४, ब्रा० ५, मं० १४) विशिष्टब्रह्मविज्ञानेन सर्वं प्रकारप्रकारिभावापन्नं तत्त्वं विज्ञातं भवति, भिन्नवृत्त्या

रुग्णतरुवतनुवत् कारुकृत्या धातुरसीकृतनिष्पादितपुत्तलवत् मान्त्रि-करचितैन्द्रजालिकदृश्यवत् सिद्धयोगिनिर्मितयथेष्टनूतनपदार्थवत् उ-पासनाप्रयोगापादितसर्वब्रह्मदृष्टिविषयसर्वगोचरविज्ञाता जायते इति। यथा पुरुषस्य स्वशरीरादिवत् परशरीरादिज्ञानम्, प्रमदायाश्च स्वश-रीरादिवत् पराशरीरादिज्ञानम्, राज्ञः स्वकलापवत् परराजादिकला-पज्ञानम्, एक एव मानवो विप्रो वा कर्मठो वा प्रधानो वाऽमात्यो वा राजा वा देवो वा यद्यत्कलापप्रविष्टो जायते तत्तत्कलापज्ञानी भवति, तथा देवकलापप्रविष्टोवेश्वरकलाप्रविष्टो वोपासनया ब्रह्मकला-पप्रविष्टः परब्रह्मकलापप्रविष्टश्च परब्रह्मवत् सर्वदर्शी भवतीति न ज्ञातव्यमस्याऽवशिष्यते इत्यभिप्रायः।

अथ मोक्षसाधनवाक्यानि—

'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते (ई० उ० मं० ११) अविद्याकर्म, मृत्युः-विद्याविरोधि पापम्, विद्या-उपासनात्मकज्ञा-नम्, अमृतं मोक्षम्। विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते (ई० उ० मं० १४) विनाशशीलं कर्म संभूतिः, असंभूतिः-कर्मशून्य-मात्रस्वरूपम्, तज्ज्ञानेनाऽमृतम्। 'धीराः प्रेत्याऽस्माल्लोकादमृता भवन्ति (के० खं० १, मं० २) इन्द्रियादिशक्तिप्रदपरब्रह्मज्ञानादमृ-तत्वमिति। 'प्रतिबोधविदितं मतम् अमृतत्वं हि विन्दते, आत्मना विन्दते वीर्यं विद्ययाऽमृतमश्नुते (के० खं० २, मं० ४) प्रतिबोधः-सत्यत्वज्ञानत्वानन्दत्वाद्यैर्ज्ञातं येन सः, आत्मना-परमात्मना, वीर्यं प्रणिधानसामर्थ्यं प्राप्य विद्यया परब्रह्मज्ञानेनाऽमृतं विन्दते। 'भूतेषु भूतेषु विचिन्त्य धीराः प्रेत्याऽस्माल्लोकादमृता भवन्ति (के० खं० २, मं० ५) सर्वान्तर्यामिणम् अवधार्य मोक्षं गच्छन्तीत्यर्थः। 'तद्ध तद्वनं नाम तद्वनमित्युपासितव्यम् (के० खं० ४, मं० ६) अग्निवाय्वा-द्यन्तर्गतं परब्रह्म वनाभिधेयम् उपासितव्यम्। 'एवं स्वर्गे प्रतितिष्ठ-ति (के० खं० ४, मं० ९) परब्रह्मोपासनया स्वर्गाख्याऽक्षरधामनि प्रतिष्ठितो भवतीत्यर्थः। 'ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति (क० अ० १, व० १, मं० १७) ब्रह्मजज्ञम् आ-त्मानं देवं परमात्मानं विदित्वा निचाय्य-ध्यानतः साक्षात्कृत्य शान्तिं मोक्षमेतीत्यर्थः। 'त्रिणाचिकेतस्त्रयमेतद्विदित्वा शोकातिगो मोदते स्वर्गलोके (क० अ० १, व० १, मं० १८) अग्निम् आत्मानम् परमात्मानं च ज्ञात्वा निरतिशयसुखमयाऽक्षरधामात्मकस्वर्गे लोके मोदत इत्यर्थः। 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति (क० १/२/१२) अध्यात्मयोगाधिगमेन-आत्मान्तर्यामिपरब्रह्म-

ज्ञानेन, मत्वा उपासनयाऽवलोक्य संसारान्निवर्तते इत्यर्थः। 'एत-दालम्बनं ज्ञात्वा ब्रह्मलोके महीयते (क० अ० १, व० २, मं० १७) एतदोमित्यक्षरवाच्यपरब्रह्मोपासनयाऽक्षरब्रह्मलोके महीयते-महद्भोग-वान् जायत इत्यर्थः। 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति (क० अ० १, व० २, मं० २२) महावैभवशालिपरमात्मानं विज्ञाय संसारदुःखान्निवृत्तो भवतीत्यर्थः। 'यदिच्छन्तो ब्रह्मचर्यं चरन्ति (क० अ० १, व० २, मं० १५) ब्रह्मचर्यम्-अगार्ह-स्थ्यपूर्वकब्रह्मोपासना ब्रह्मचर्या बोध्यः। 'यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः, स तु तत्पदमाप्नोति यस्माद् भूयो न जायते (क० अ० १, व० ३, मं० ८) परमात्मविज्ञानवान् अपुनरावृत्तिक-ब्रह्मलोकगतिमान् भवतीत्यर्थः। 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः, सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् (क० अ० १, व० ३, मं० ९) विज्ञानी वैराग्यवान् व्यापकश्रीहरेर्धाम प्राप्नोतीत्यर्थः। 'पुर-मेकादशद्वारम् अजस्याऽवक्रचेतसः, अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते (क० अ० २, व० २, मं० १) वक्रचेतनावान् जीवात्मा प्रमाचेतने परमात्मनि शरीरादिकं समर्प्य-शरणागतिं प्राप्य मोक्षं गतो भवती त्यर्थः। 'हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृ-तास्ते भवन्ति (क० अ० २, व० ३, मं० ९) मननमहिम्ना ब्रह्मसा-क्षात्कारेणाऽमृतत्वं लभ्यते। 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् (क० अ० २, व० ३, मं० १०) इन्द्रियान्तःकरणानां वृत्तिराहित्ये सति आत्मनः स्वविशि-ष्टस्वरूपेऽवस्थानं परा गतिः प्रोच्यते। 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः, अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते (क० अ० २, व० ३, मं० १४) सर्वकामनावासनाशून्यो विशिष्टबोद्धाऽत्रैव मोक्षगतो वर्तते, ब्रह्मसाक्षात्कारं विन्दते इति। 'यदा सर्वे प्रमुच्यन्ते हृदयस्येह ग्रन्थयः, अथ मर्त्योऽमृतो भवति (क० अ० २, व० ३, मं० १५) सवासनाहंममग्रन्थिभेदे सति ब्रह्माऽमृतमाप्यते इत्यर्थः। 'अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽऽदि-त्यमभिजयन्ते, एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेत-स्मान्न पुनरावर्तन्ते इति (प्र० प्र० १, मं० १०) विज्ञानेन ब्रह्मार्पणेन शरणागत्योपासनया च विशिष्टपरब्रह्मपरायणममृतमभयं प्राप्य न पुनरावर्तते इति। तत्तद्विशिष्टपरमात्मनः सर्वत्र हेतुत्वमिति ज्ञापि-तम्। 'तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठि-तम्, तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति

(प्र० प्र० १, मं० १५, १६) तपः, आत्मविद्या, ब्रह्मार्पणम्, सत्यब्रह्मनिदिध्यासनम्, कौटिल्यमिथ्याचारमिथ्यावाङ्मिथ्याडम्बरराहित्यं यस्य तस्य ब्रह्मलोकप्राप्तिरित्यर्थः। 'अध्यात्मं चैव प्राणस्य विज्ञायाऽमृतमश्नुते (प्र० प्र० ३, मं० १२) प्राणाऽध्यात्मसूर्यशरीरकब्रह्मज्ञानान्मोक्षमाप्नोतीत्यर्थः। 'तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः, सूर्यद्वारेण ते विरजाः प्रयान्ति यत्र स पुरुषो ह्यव्ययात्मा (मु० १, खं० २, मं० ११) विशिष्टपरब्रह्मयाथात्म्यविदः शान्तवृत्तयो देहयात्रातृप्ताः त्वरया परब्रह्मोपासकाः विरजस्काः-निष्कामकर्मिणो मायारहिताः सूर्याऽर्चिमार्गेण दिव्यश्रीभृत्परमात्मानं प्रति ब्रह्मलोके प्रयान्ति। 'ओमित्येवं ध्यायथाऽऽत्मानं स्वस्ति वः पाराय तमसः परस्तात् (मु० २, खं० २, मं० ६) परमात्मनिदिध्यासनेन सर्वविधस्वस्त्यात्मकमोक्षगतिः परापाररूपा भवतीति। 'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग् ज्ञानेन ब्रह्मचर्येण नित्यम्, अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः (मु० ३, खं० १, मं० ५) विषयवासनारागशून्यो ब्रह्माभ्यासी सततोपासनया तं स्वान्तर्यामिणं सुमूर्तं परमपुरुषं पश्यतीत्यर्थः। ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तं पश्यति निष्कलं ध्यायमानः (मु० ३, खं० १, मं० ८) विशिष्टस्वात्मपरमात्मज्ञानोत्तरं ध्यानयोगाभ्यासजसमाधिना मायिकाकाररहितं दिव्यफलं परब्रह्म पश्यतीत्यर्थः। 'एषोऽणुरात्मा चेतसा वेदितव्यः (मु० ३, खं० १, खं० ९) ध्यानयुक्तचेतसा ततः समाधिनाऽन्तरात्मा परमात्मा साक्षात्कृतो भवतीति। 'वेदान्तविज्ञानसुनिश्चितार्थाः···परिमुच्यन्ति धीराः (मु० ३, खं० २, मं० ६) शास्त्रजन्यसत्त्वप्रकर्षितविशुद्धविज्ञानिनः परमात्मपरिचर्योत्तीर्णाः साधुजनाः परिमुच्यन्तीत्यर्थः। 'ब्रह्मविदाप्नोति परम् (तै० आ० व० अनु० १) परब्रह्मणः सप्रकारकस्य स्वात्मकतयोपासकः परब्रह्म साक्षात्करोति। 'स एवं विद्वान्···अमृतः समभवत् (ऐ० अ० २, खं० ४) परमात्मदर्शी रेतःस्रावो गर्भजन्म देहत्यागात्मकजन्म, एतत्त्रयात्मविशिष्टपरब्रह्मज्ञानी सर्वविधकार्यकारणज्ञाता शाश्वतमोक्षभागी भवतीत्यर्थः। 'ब्रह्मसंस्थोऽमृतत्वमेति (छा० अ० २, खं० २३, मं० १) सर्वथा सर्वत्र ब्रह्मार्पणप्राप्तः परब्रह्मदृष्टिस्थितिकसाधुर्मोक्षपदं याति। 'स युग्वानमिव रैक्वमात्थेति (छा० अ० ४, खं० १, मं० ३) परमात्मनि सर्वकृषिकर्माद्यर्पणवन्तं निष्कामधर्माचरणं रैक्वं जीवन्मुक्तं देवा आहुः। 'सत्यकामो ह जाबालिः (छा० अ० ४, खं० ४, मं० १) सत्यादिमत्वात् जाबालिः मे क्षत्रियायोग्यो

यज्ञोपवीताधिकारी प्रोक्तः। 'स होवाच न वाऽरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः, जाया, पुत्राः, वित्तं, ब्रह्म, क्षत्रं, लोकाः, देवाः, भूतानि, सर्वं प्रियं भवति, आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वाऽरे दर्शनेन श्रवणेन मत्या विज्ञानेन इदं सर्वं विदितम् (बृ० अ० २, ब्रा० ४, मं० ५) आत्मनः अन्तर्यामिणः परमात्मनो विशिष्टस्य तृप्तये सर्वं प्रियं भवति, स एव स्वात्मको विशिष्ट उपासनीयस्तद्दर्शनादिना सर्वं दृष्टं मतं विज्ञातं भवतीत्यर्थः। 'न वाऽरे पत्युः कामाय पतिः प्रियो भवति जाया पुत्रा वित्तं पशवो ब्रह्म क्षत्रं लोका देवा वेदा भूतानि सर्वम् आत्मनः कामाय प्रियं भवति, आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, मैत्रेयि आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम् (बृ० अ० ४, ब्रा० ५, मं० ६) प्रियं प्रियकरं प्रियविषयं प्रियतापात्रं प्रियतान्वितं प्रियात्मकं प्रियापूरकं प्रियाकर्षकं प्रियरूपकं प्रियसंसर्गकं प्रियपरिणामकं प्रियानुभावकं पिण्डभावापन्नसर्वतत्त्वप्रियव्यापितकं सर्वस्वरूपप्रियरूपकं परब्रह्म सर्वरूपरसगन्धस्पर्शशब्दादीनामेकायनं स्वविशिष्टप्रियं ज्ञातं सत् सर्वं विशिष्टप्रियतृप्तं ज्ञातं भवतीति। क्लेद्यं पंकिलं लालायितं पूतिगन्धियं विदग्धं लोहितायितं कुष्ठायितं कद्रूपायितं दुष्पाकायितं पर्युषितायितं स्वेदायितं कटुधूम्रायितं वा यत्किंचिदपि तथापि प्रियरसाधायकं प्रेमास्पदं भवति तत् तत्र परब्रह्मांश एव प्रेमास्पदः, तस्मात् सर्वमपि स्थूलं सूक्ष्मं ससंज्ञम् असंज्ञं वा तत्त्वं धर्मरूपं धर्मिरूपं वा व्यक्तम् अव्यक्तं वा शब्दमात्रबोध्यं स्फुरणमात्रव्यवहार्यं वा सर्वं परब्रह्मांशप्रियतान्वितं भवति, ततः स्वविशिष्टप्रिये परब्रह्मणि ज्ञाते समुपासिते साक्षात्कृते सर्वं साक्षात्कृतं भवति, परब्रह्मद्रष्टा सर्वदर्शको जायते इत्यभिप्रायः।

तदेतत् परब्रह्मविज्ञानं स्वात्मप्रकारताकविशिष्टविज्ञानं परमभागवतज्ञानविज्ञानात्मकं नैर्गुण्यस्वरूपापन्नं मोक्षकारणम् प्रतिपादितम्। 'तमेव विदित्वाऽतिमृत्युमेति, तमेव विद्वान् अमृत इह भवति, नान्यः पन्था अयनाय विद्यते, य एनं विदुरमृतास्ते भवन्ति, ब्रह्मविद् आप्नोति परम्, तपो हि वै तत्परं वेद, ब्रह्मवेद ब्रह्मैव भवति' इत्यादौ वेदनार्थकपदैः सततस्मरणध्याननिदिध्यासनात्मकं मोक्षसाधनमभिहितम्। 'यमेवैष वृणुते स तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्'इत्यनेनानुध्यानात्मकशरणरूपप्रसादपात्रस्यात्मने। प्रेमात्मकप्रियतारूपभक्तिमत्तया निरवधिकातिशयस्नेहप्रीतिसत-

तैकतानतारसद्भावात्मकपरानुरक्तिरूपया लभ्यते परमपुरुष इत्यावेद्यते। निरतिशयप्रियाऽनन्यप्रयोजनसकलेतरवैतृष्ण्यावहज्ञानविशेषपरिणामप्रीतिपराकाष्ठात्मकभक्त्या परमात्मना भक्तो वरणीयो भवतीति वरणीयेन वरो वरतरः समुद्ग्राह्यते, प्रेमरसो व्यज्यते, एवंविधपरमभक्तिरूपचित्तिज्ञप्तिशेवधिसमभिव्यञ्जकः सततादरनैरन्तर्याऽऽसेवितसर्वैकाण्डिकसमर्पणात्मकभक्तियोग एवेति। 'न तस्येशे कश्चन तस्य नाम महद् यशः, न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम्, हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति' इत्यस्यापि परमपुरुषोद्ग्राहितात्मना चक्षुषा हृदा मनीषया मनसा तत्त्वा क्रियया व्यापारादिनाऽपि साक्षात् स पुरुषोत्तमो वरतया प्राप्तः श्रिया लक्ष्म्या इव पत्न्या साक्षात्क्रियते। शास्त्राधिगतविशिष्टतत्त्वज्ञानपूर्वकस्वकर्मानुगृहीतभक्तिनिष्ठासाध्या ऽनवधिकातिशयप्रियविशदतमप्रत्यक्षतापन्नाऽनुध्याना मकधवलदिव्यपुरोभागविशेषे प्रेमानुगृहीतनृत्यानन्दवर्षी सर्वकामपूरकः स्वात्मकः स्वविशिष्टः स्वस्वरूपः स्वसाकारः परमात्मा स्वरसरसितध्यानात्मकधवलमिष्टाब्धिभक्तिरमणरामको विद्योतते सर्वकामाशनाशनायकः तदैकप्रीतिविशेषभक्तिभरः सार्वेश्यपराकाष्ठापन्नपराप्रीतिज्ञानसागरसल्लोलः समवर्तते। 'आनन्दो ब्रह्म, रसो वै सः रसं ह्येवाऽयं लब्ध्वाऽऽनन्दी भवति, ब्रह्मैव सुखं ब्रह्म लब्ध्वा सुसुखी भवति परब्रह्मैवाऽऽत्मानं प्रापयति।

आत्मस्वरूपं ज्ञानैकाकारं ज्ञानं च सुखं प्रीतिः, ज्ञानैकाकारता पुरुषार्थता, परमपुरुषस्यैव परमा प्रीतिः सुखं ज्ञानं च स्थिरम् अनवधिकातिशयम्, कं ब्रह्म खं ब्रह्म आनन्दो ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मेति, तमेव विद्वान् अमृत इह भवति, ब्रह्म वेद ब्रह्मैव भवति चेत्यादिना-सेवा वेदनं भक्तः परभक्तिरूपापन्नं वेदनं ब्रह्मविद्या पराविद्या तत्त्वतो भगवत्प्राप्तिसाधनं च प्रोक्तम्, 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' (ई० उ० मं० २) इत्यनेन सर्वकर्माणिप्रेमपूर्वकवर्तनकर्तुर्न कर्मलेपो भक्तिरूपत्वादित्यावेदितम्। 'य एषोऽन्तराऽऽदित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः, तस्य यथा कप्यासं पुण्डरीकमेवाऽक्षिणी, तस्य उदिति नाम स एषः सर्वपाप्मभ्य उदितः, उदेति ह वै सर्वेभ्यः पाप्मभ्यः य एवं वेद, तस्य ऋक् च साम च गेष्णौ' इत्यनेनापि परमात्मा साकारः सर्वरूपानुरूपप्रदः सुरूपतमो वर्णितः सूर्यान्तरात्मतया वर्णनाभिप्रायस्तु

सूर्यस्य सर्वतेजोऽधिकतया तदन्तःस्थपरमपुरुषस्य सौन्दर्यसुरूपतादि झटिति श्रोत्रवगमविषयं स्यादित्यर्थः । 'एवमेव 'अथ योऽन्तरेऽक्षिणि पुरुषो दृश्यते···तद् ब्रह्म···तस्यैतस्य तदेव रूपम् यदमुष्य रूपम्'इत्यनेनापि झटिति ध्यानगोचरीभवनार्थं चक्षुषि परमपुरुषसाकारमूर्तिवर्णनं कृतमिति । पुण्यापुण्यरूपकर्मनिमित्तदेवादिशरीरप्रविष्टतत्प्रयुक्तसुखदुःखानुबन्धनिवृत्तिरपि भक्तिरूपापन्नोपासनप्रीतपरमपुरुषप्रसादलभ्येति तद्दर्शनमपि चक्षुषि वा भास्करे वा स्वात्मनि वा तत्प्रसादलभ्यमेवेति ।

अथ गुरूपसत्तिवाक्यानि—

'स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् परब्रह्माऽवबोधार्थं गुरुशरणमाश्रयेदिति । 'तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः (मु० ३, खं० १, मं० १०) मोक्षादिसम्पत्तिमिच्छन् परमात्मज्ञगुरुं सेवेतेत्यर्थः । 'एवमेवेहाऽऽचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये (छा० अ० ६, खं० १४, मं० २) विशिष्टपरब्रह्मसाक्षात्कर्तुर्मोक्षे विरता नास्ति देहपाते परब्रह्मसम्पत्तिस्तात् भवतीत्यर्थः । 'तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव, तन्न व्यजानन्त किमिदं यक्षमिति (के० खं० ३, मं० २) परब्रह्मरूपं यक्षस्वरूपं देवा न विदुः, उपदेशार्थमागतम् यक्षम् । 'स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद् यक्षमिति (के० खं० ३, मं० १२) परब्रह्मरूपं ब्रह्मविद्यादर्शकं तं यक्षं हिमपुत्री पार्वती समागत्य परिबोधयामास, ततो यक्षाद् देवा ब्रह्मविद्यां जगृहुः । 'नचिकेताः ब्राह्मणो यमराजं जगाम, नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम् । उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते (क० अ० १, व० ३) 'मृत्युप्रोक्तां नाचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम्, ब्रह्मप्राप्तो विरजोऽभूद् विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव (क० अ० २, व० ३, मं० १८) पितुर्वचनेन नाचिकेता यमं प्रति गत्वाऽऽत्मविद्यां बहुप्रकारेण ब्रह्मविद्यां प्राप, तया विद्यया परब्रह्म प्राप्तिर्भवतीति नाचिकेतसो मृत्युर्गुरुः प्रोक्तः । भरद्वाजः, सत्यकामः, गार्ग्यः, आश्वलायनः, भार्गवः, कात्यायनः, षडेते पिप्पलादं गुरुमुपसन्नाः, विविधब्रह्मविद्यां लब्धवन्तः (प्र० मं० १) 'ब्रह्माऽथर्वाय ब्रह्मविद्यां प्राह, अथर्वाऽङ्गिरे प्राह, अङ्गिः सत्यवाहाय, सत्यवाहः अगिरसे प्राह, शौनकः अंगिरसं गुरुमुपसन्नः पराऽपराविद्याद्वयं लब्धवान् (मु० खं १, मं० ३) 'आचार्यः पूर्वरूपम् अन्तेवासी उत्तररूपम् (तै० अ० ३) 'वेदमनूच्याऽऽचार्योऽन्तेवासिनम् अनुशास्ति (तै० अ० ११) 'स वा एष पुरुषविधः (तै० आ० अनु० ४) इत्यादिभिर्ब्रह्मविद्यार्थम् अनुशा-

सकगुर्वाचार्याद्यपेक्षोक्ता। 'भृगुर्वै वारुणिर्वरुणं पितरमुपससार (तै० भृ० अनु० १) वरुणो गुरुः पिता पुत्रं ब्रह्मविद्यामाह। 'ता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतन्, तम् अशनापिपासाभ्यामन्ववार्जत् (ऐ० अ० १, खं० २) देवाः श्रीपरब्रह्म संसारार्णवे कारणतयाऽन्वासादयामासुः। 'शिलकः, चैकितायनः, प्रवाहणः, मिथ उद्गीथविद्यां परिष्कारयामासुः (छां० अ० खं० ८) परस्परं त्रयोपि गुरुशिष्यसतीर्थ्यान्यतमवृत्त्या उद्गीथब्रह्मविद्यां विचारयामासुः। उषस्तिः यज्ञं गत्वा प्रस्तोतर्यादिदेवताविज्ञानं यजमानाय प्राह (छा० अ० १, खं० ११) बको दाल्भ्यः श्वानं पालयामास, तत उद्गीथं हिं चक्रुः श्वानः हिंकारं बहुविधं वर्णयामासुः (छां० अ० १, खं० १२) ब्रह्मा दक्षाय, स मनवे, स प्रजाभ्यः, पिता उद्दालकाय मधुविद्यां ब्रह्मविद्यां प्राह (छां० अ० ३, खं० ११) मनोमयत्वादिकं शाण्डिल्यो ब्रह्मज्ञानं प्राह (छा० अ० ३, खं० १४) 'जानश्रुतिः राजा सयुग्वरैक्वकुक्षिवलात् संवर्गविद्यां ब्रह्मविद्यां लेभे (छा० अ० ४, खं० ३) जाबालाय शिष्याय वायुर्बलिवर्दो भूत्वा चतुःकलं परब्रह्म प्राह, ततो गौतमोऽपि तामेव प्राह (छा० अ० ४, खं० ५) 'उपकोसलो जाबालं वनस्थं रोगिणम् अक्षिविद्यामाह, जाबालाय अग्नयो वने कं ब्रह्म ख्यादिब्रह्मविद्यां प्राहुः, जाबालो गोश्रुत्ये प्राणविद्यां शुष्कशाखाप्ररोहफलां ब्रह्मविद्यां प्राह (छा० अ० ४, खं० १०) 'श्वेतकेतुः पञ्चालानां समितिम् एयाय, गौतमः पिता पंचालराजतः पञ्चाग्निविद्यां प्राप्तवान् (छा० अ० ५, खं० ३, ४, ५, ६) 'प्राचीनशालः, सत्ययज्ञः, इन्द्रद्युम्नः, जनः, बुडिलः, एते मीमांसयित्वा उद्दालकं वैश्वानरविद्यार्थं जग्मुः, अथ ते षट् अश्वपतिनृपं प्रति विद्यार्थं जग्मुः (छा० अ० ५, खं० ११, १२, १३, १४, १५) 'आरुणिः पिता श्वेतकेतवे एकविज्ञानेन सर्वविज्ञानार्थिकां बहुप्रकारां विद्यां प्राह। उद्दालकः श्वेतकेतवे सर्वतत्त्वानां मूलं सद् ब्रह्माऽऽह, भिन्नदृष्टान्तैस्तत्त्वमसि नववारमाह (छा० अ० ६) 'नारदः सनत्कुमाराय शोकतारकं पप्रच्छ, ब्रह्मोपासनां च लेभे (छा० अ० ७) प्रजापतिः देवाऽसुरेभ्यः आत्मविद्यामाह, इन्द्राय विरोचनाय च दहरविद्यायां परागात्मविद्यां प्राह (छां० अ० ८) 'ब्रह्मा प्रजापतये, स मनवे, स प्रजाभ्यो विद्यामाह, 'आचार्यकुलाद् वेदमधीत्य (छा० अ० ८, खं० १५) 'देवा आसुराश्च प्राणन्, आंगीरसम् अनुसस्रुः। 'ब्रह्मदत्तो वाचा प्राणेन उदगायत् (बृ० अ० १, ब्रा० ३, मं० २४) प्रेऽयन् पिता पुत्रमाह त्वं ब्रह्म, पुत्र आह अहं ब्रह्मेति (बृ० अ० १, ब्रा० ५, मं० १६) बालाकिर्गार्ग्योऽनूचानः (ब्रह्मस्वरूपयाथार्थ्यानभिज्ञोऽपि)

अजातशत्रवे काश्याय परब्रह्मज्ञानमब्रवीत्, ततोऽजातशत्रुः गार्ग्याय ब्रह्मज्ञानमाह, (बृ० अ० २, ब्रा० १) 'याज्ञवल्क्यो मैत्रेयीपत्न्यै ब्रह्म-प्रियविद्यां मधुविद्यां च प्राह (बृ० अ० २, ब्रा० ४) 'जनकसभायां याज्ञवल्क्यो बहुविधां ब्रह्मविद्यामाह। होताऽश्वलः आर्तभागः, भुज्युः, उषस्तः, कहोलः, गार्गी, उद्दालकः, विदग्धः, शाकल्यः, अहल्लिका, एते सर्वे याज्ञवल्क्याद् ब्रह्मविद्या अधिजग्मुः। (बृ० अ० ३) 'शैलिनिः जनकनृपतये वागात्मकं ब्रह्म प्राह, उदंकः प्राणं ब्रह्म, भारद्वाजः श्रोत्रं ब्रह्म, जाबालो मनो ब्रह्म, शाकल्यो हृदयं ब्रह्मेत्याहुः। (बृ० अ० ४) 'याज्ञवल्क्यो जनकाय विद्यया क्व गमिष्यसि इति पृष्ट्वा–कतम आत्मेति आदित्यज्योतिरित्यादि ब्रह्मविद्यां प्राह (बृ० अ० ४, ब्रा० २) 'याज्ञवल्क्यो मैत्रेय्यै प्रियविद्यामाह। कौरव्यायणीपुत्रः खं ब्रह्माद्याह (बृ० अ० ५) प्रजापतिः द,द,द, देवेभ्यो मनुष्येभ्योऽसुरेभ्यश्च प्रददौ, दाम्यत, दत्त, दयध्वमिति ब्रह्मगुणानाह (बृ० अ० ५, ब्रा० २) 'जनको बुडिलाय गायत्रीरूपब्रह्म प्राह (बृ० अ० ५, ब्रा० १४, मं० ८) श्वेतकेतुः पञ्चालानां परिषदि प्रवाहणनृपम् आजगाम प्रवाहणात् पञ्चाग्निविद्यां गौतमः पिता जग्राह पुत्राय श्वेतकेतवे च प्राह (बृ० अ० ५, ब्रा० १४, मं० ८) इत्येवं गुरूपसत्तिं प्राप्य सर्वेऽपि ब्रह्मविद्यां प्राप्ता इति शरणागतिः सर्वत्र ब्रह्मविद्योपार्जने उत्तेजिका, गुर्वनुवृत्तिः ब्रह्मविद्योपार्जने कारणम्. गुर्वनाश्रयः ब्रह्मविद्योपार्जने प्रतिबन्धकः. तथा च शरणागत्यभावविशिष्टगुर्वनाश्रयत्वाभावो गुर्वनुवृत्तिरूपः ब्रह्मविद्योपार्जने कारणम्। अत एव सम्प्रदायेति सार्थकः शब्दः, सम्प्रदीयते ब्रह्मात्मज्ञानादि शिष्याय यत्र विधौ, तद्विधानस्वरूपात्मकः सम्प्रदायः, विशिष्टपरमात्मना तत्तद्गुरुशरीरगतशरीरिरूपिणा सर्वज्ञताप्रयोज्यभ्रमप्रमादाद्यस्पृष्टेन गुरुपदाभिधेयेन समुपदिष्टपरब्रह्मदृष्टयाद्यात्मकप्रमापात्रशिष्यो ब्रह्मविद्याविकसितात्मसाक्षात्कारः सन् मोक्षभाग् ब्रह्मणा सह सर्वकामाशनो मोदप्रमोदानन्दप्रपूरितपूर्णात्मा परानन्दप्रमग्नो वर्तते इति ब्रह्मविदामनुभवः।

याज्ञवल्क्येन मैत्रेय्यै अमृतत्वोपायं प्रतिपृष्टेन पतिरूपगुरुणा बहुधोपदिष्टं परब्रह्मज्ञानकरणतादिकम्। 'आत्मा वाऽरे द्रष्टव्य'इत्यादिना अमृतत्वोपायरूपं परमात्मोपासनमुक्तम्, 'आत्मनि खल्वरे दृष्टे'-इत्यादिना उपास्यं विशिष्टं परब्रह्म सलक्षणमुक्तम्, दुन्दुभ्यादिदृष्टान्तैश्च उपासनोपकरणभूत–मनःप्रभृतिकरणनिग्रमनमपि सामान्यतयाऽभिहितम्, 'स यथाऽऽर्द्रैन्धनाऽग्ने'रित्यादिना 'स यथा सर्वासामपां समुद्र-मेकायनम्'इत्यादिना च उपास्यभूतपरब्रह्मनिष्ठनिखिलकारणत्वं करण

ग्रामनियमनं चोपदिष्टम्, 'स यथा सैन्धवघनः' इत्यादिनाऽमृतत्वोपाय-प्रवृत्तिप्रोत्साहकं जीवात्मस्वरूपाऽवस्थितपरब्रह्माऽपरिच्छिन्नज्ञानैकाकार-त्वं चोपपादितम्, 'विज्ञानघन एव एतेभ्यो भूतेभ्यः समुत्थाय तान्येवा-ऽनुविनश्यती'त्यादिना अपरिच्छिन्नज्ञानैकाकारात्मकस्यात्मीयसंसारदशाऽ-नुस्यूतभूतपरिणामानुवृत्तिरभिहिता, 'न प्रेत्य संज्ञाऽस्ती'ति मोक्षदशायां स्वाभाविकाऽपरिच्छिन्नज्ञानात्मकात्मनो भूतसंघातेनैकीकृत्य मानुषदेवा-दिरूपज्ञानाभाव उक्तः, पुनश्च 'यत्र द्वैतमिव भवती'त्यादिना अज्ञानकृतम् अब्रह्मात्मकनानाभूतवस्तुदर्शनं निरस्तम्, तथा निरस्तनिखिलाऽज्ञान-कृत्स्नजगद्ब्रह्मात्मकानुभवब्रह्मव्यतिरिक्तवस्त्वन्तराऽभावज्ञस्य भेददर्शनं च निरस्तम्, 'येनेदं सर्वं विजानाति तं केन विजानीयात्' इत्या-दिना जीवात्मा स्वात्मतयाऽवस्थितेन येन परमात्मनाऽऽहितज्ञानः स-न्निदं जानाति, अयं तं केन विजानीयात्, न केनापीति परमात्मनो दुरवगमत्वमुपपादितम्, स एष नेति नेती'त्यादिना अयं सर्वेश्वरः स्वे-तरसमस्तचिदचिद्वस्तुविलक्षणस्वरूप एव सर्वशरीरः सर्वस्याऽऽत्मतया-ऽवस्थित इति सर्वशरीरभूतचिदचिद्वस्तुगतैर्दोषैर्न स्पृश्यते इत्यभिहितम्, 'विज्ञातारमरे केन विजानीयादि'ति च 'एतावदरे खलु अमृतत्वम्' इति समस्तवस्तुविजातीयं निखिलजगदेककारणभूतं सर्वविज्ञातृ परमपुरुषरूपं परब्रह्म विनोपासनाभक्ति को विजानीयादित्यप्यमृतत्वोपाय उक्तः। अथ 'परा यया तदक्षरमधिगम्यते' इत्यत्रापि प्राकृतहेयगुणाः प्रतिषिद्धाः, नित्यत्वविभुत्वसूक्ष्मत्वसर्वगतत्वाऽव्ययत्वभूतयोनित्वसार्वज्ञ्यादिकल्याणगु-योगः परब्रह्मणि प्रतिपादितः। 'सत्यं ज्ञानम् अनन्तं ब्रह्मे'त्यत्रापि सामानाधिकरण्यम् अनेकविशेषणविशिष्टैकार्थाभिधानव्युत्पत्तिमत्, प्रवृ-त्तिनिवृत्तिभेदेन एकार्थवृत्तित्वात्मकसामानाधिकरण्यार्थकत्वम्, सत्यज्ञा-नादिमुख्यगुणैः एकस्मिन्नर्थे पदानां प्रवृत्तौ निमित्तभेदश्च, एकस्यैव वस्तुनः अनेकविशेषणविशिष्टप्रतिपादनपरत्वम्, भिन्नप्रवृत्तिनिमित्तानाम् एकस्मिन्नर्थे सामानाधिकरण्यं चेत्यादि प्रतिपाद्यते। अद्वितीयपदं जग-दुपादानभूतपरब्रह्मातिरिक्ताऽधिष्ठानान्तरनिवारणपूर्वकविचित्रशक्तियो-गप्रतिपादनपरम्, 'तदैक्षत बहु स्यां प्रजायेय तत्तेजोऽसृजते'त्यादिना विचित्रशक्तियोगोऽवगमितः। 'सदेव सौम्येदमग्र आसीदेकमेवे'त्यादिना सिसृक्षुपरब्रह्मगतोपादानकारणत्वं प्रतिपादितम्, अद्वितीयपदेन कार्यो-त्पत्तिस्वभावाऽऽक्षिप्तबुद्धिस्थनिमित्तान्तरं निषिद्धम्, अतः कारणवाक्य-स्वभावादपि 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यनेन सविशेषं ब्रह्मैव प्रतिपादितं भवति। निर्गुणवाक्यानि प्राकृतहेयगुणनिषेधविषयाणि, ज्ञानमात्रस्वरूप-वादिनीश्रुतयः ज्ञानरूपताभिधानपरायणा अपि मणिद्युमणिदीपादिवत्

ज्ञातृगतज्ञानस्वभावज्ञानस्वरूपज्ञानाश्रयत्वनिरूपिका ज्ञानवज्ज्ञातृत्वपरायणाः, 'यः सर्वज्ञः स सर्ववित्' 'तदैक्षत, सेयं देवतैक्षत, स ईक्षत लोकान्नु सृजा, चेतनश्चेतनानाम्, ज्ञाऽज्ञौ द्वौ, 'तमीश्वराणां परमं महेश्वरं, न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते, पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः, इत्याद्याः ज्ञातृत्वप्रमुखान् कल्याणगुणान् विदधति, 'भीषाऽस्माद् वातः पवते'इत्यादिना ब्रह्मणि शास्तृत्वादिगुणा उक्ताः, 'ते ये शतमानन्दा'इत्यादिना क्षेत्रज्ञाऽऽनन्दातिशय उक्तः; 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान्'इत्यादिना ब्रह्मणः कल्याणगुणाऽऽनन्त्यम् अभिहितम्' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'तिवाक्यं ब्रह्मवेदनफलात्मकाऽसंख्याऽशनप्रतिपादनपूर्वकविपश्चित्परब्रह्मगतगुणानन्त्यं प्रतिपादयति, गुणप्राधान्यद्योतकः सहशब्दः, 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथा प्रेत्य भवती'त्यनेन फलोपासनयोः प्रकारैक्यं दर्शितम्, 'ब्रह्मविदाप्नोति परम्, ब्रह्म वेद ब्रह्मैव भवति, इत्यादिना ब्रह्मज्ञानजन्यमोक्षः उपदिष्टः, असन्नेव स भवति असद् ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः' इत्यत्र ब्रह्मज्ञानाऽभावे आत्मनाशः पर्वतषण्डदेहापत्तिरूपः, ब्रह्मज्ञानसद्भावे आत्मभोगं चेति प्रोक्तम्, अतः ब्रह्मविषयवेदनमेव अपवर्गोपायं सर्वाः श्रुतयो वदन्ति, ज्ञानं भागवतज्ञानम् उपासनात्मकम्, उपासनं च सततस्मरणभक्त्यात्मकम्, उपास्यं च ब्रह्म सगुणम् 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह'इत्यत्र ब्रह्मणोऽनन्ताऽपरिच्छिन्नगुणस्य वाङ्मनसोरेतावदितिपरिच्छेदाऽयोग्यत्वेन ब्रह्मैतावदितिपरिच्छेदवतां ब्रह्माऽविज्ञातममतं च भवति, ब्रह्मज्ञस्य तु अपरिच्छिन्नं ज्ञातं भवतीति निर्दिश्यते। 'न दृष्टेर्द्रष्टारं न मतेर्मन्तारमिति'वाक्येन ज्ञातारमात्मानमज्ञानस्वरूपिणं मा मन्वीथाः, अपि तु द्रष्टारं मन्तारं दृष्टिमतिरूपं पश्येः, तथाविधं वा द्रष्टारं प्रतिबिम्ब्य सर्वभूतान्तरात्मानं परमात्मानमुपास्स्वेति प्रोच्यते। 'आनन्दो ब्रह्मे'त्यनेनापि ज्ञानपरिपाकाऽऽनन्दविज्ञानाऽऽनन्दब्रह्मेतिज्ञानज्ञातृत्वमितिआनन्दानन्दि चेति परब्रह्म प्रोच्यते। 'यत्र हि द्वैतमिव भवति, नेह नानास्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, यत्र त्वस्य सर्वमात्मैवाऽभूत् तत्केन कं पश्येत्, इत्यादिवाक्यानि ब्रह्मकार्यात्मककृत्स्नजगत्प्रकारकशरीरिब्रह्मप्रत्यनीकसमातिरिक्तं निषेधयन्ति। 'यदा ह्येवैष एतस्मिन् उदरम् अन्तरं कुरुते, अथ तस्य भयं भवति, भेददृष्टिमतो भयनाशार्थं

'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते'ति सर्वविशिष्टब्रह्ममात्रदृष्ट्या शान्तिर्विधीयते। यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति,—इत्यादिनाऽभयप्रतिष्ठा उपासकस्य ब्रह्मणि प्रतिपाद्यते। 'न स्थानतोऽपि (३/१/११) 'मायामात्रं तु (३/३/३) इत्यत्र स्वाप्नानामप्यर्थानां जागरितावस्थानुभूतपदार्थवैधर्म्येण मायामात्रत्वम्, स्वाप्ने पृथिवीत्वादिकं विमर्शविषयतामात्रम्। किन्तु भोग्यतया पारमार्थिकत्वम्। एवं सविशेषं परब्रह्म पारमार्थिकम्, तत्प्रकारमपि जगत् पारमार्थिकम्। कृत्स्नचिदचिद्वस्तूनां सर्वावस्थाऽवस्थितस्य पारमार्थिकस्य परब्रह्मशरीरतया रूपत्वम्, शरीररूपतन्वंशशक्तिविभूत्यादिशब्दैः रूपमुच्यते, विभूतिरूपं चिद्वस्तु स्वरूपेणाऽवस्थितम्, अचिन्मिश्रतया क्षेत्ररूपेणाऽवस्थितम्, क्षेत्रज्ञाऽवस्थायां पुण्यपापात्मककर्मरूपाऽविद्यावेष्टितम्, स्वाभाविकज्ञानरूपत्वाऽननुसन्धानम्, अचिद्रूपार्थाकारानुसन्धानम्, अपि ब्रह्मविभूतिभूतम् अतः पारमार्थिकम्, परब्रह्म पारमार्थिकं सविशेषम्, स्वभावत एव निरस्तनिखिलदोषगन्धं समस्तकल्याणगुणात्मकं जगदुत्पत्तिस्थितिसंहाराऽन्तःप्रवेशनियमनादिलीलं स्वरूपतो व्यतिरेक्यपि विशिष्टतयाऽन्वयि ततः सर्वात्मकं स्वमेव एकं तत्त्वं नान्यत् किञ्चिदिति पिण्डीभूते विशिष्टेऽद्वैते वेदान्तानां तात्पर्यम्, तच्च गुर्वनुसेवया समज्ञायतेऽतः शरणागतिः सर्वेषां विहिता ब्रह्मविद्यार्थं ब्रह्मप्राप्त्यर्थं ब्रह्मतार्थं ब्रह्मभोगार्थं चेतिचतुष्टये उपनिषद्विद्यानां मूर्तता बोध्या।

अथ वैराग्यादिवाक्यानि—

येऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते (क० अ० १, व० १, मं० २९) शतायुष्ट्वं पुत्रपौत्रादिमत्त्वं हस्त्यश्वादिबहुपशुमत्त्वं विशालभूमिमत्त्वं वित्तजीविकावत्त्वं रामावत्त्वं सतूर्यरथवत्त्वं सर्वं जरणस्वभावं तर्पणाऽकारकं वदन् नाचिकेताः प्राह 'अभिध्यायन् वर्णरतिप्रमोदान् अतिदीर्घे जीविते को रमेत (क० अ० १, व० १, मं० २८) को रमेत? अर्थाद् विरमेतेति वैराग्यमाह, विरक्तिः केवला न ब्रह्मयोजयित्री, विरक्तिसहकृता ब्रह्मरक्तिर्ब्रह्मयोजयित्रीति, अन्यत्र विरक्तिर्ब्रह्मरक्तिपोषिका, ब्रह्मातिरिक्ताऽस्मृतौ विरक्तिः ब्रह्मरक्तिरूपापन्ना मिष्टधर्ममेधा भवति, विरक्तिः विशिष्टरक्तिः सम्पद्यते इति। न त्वा कामा बहवोऽलोलुपन्त (क० अ० १, व० २, मं० ४) इत्यनेन कामितपदार्थलोलुपताराहित्यं दर्शितम्, आत्मज्ञानजिज्ञासोर्वैराग्यं मोक्षस्वरूपयोग्यतावद् विज्ञापितम्। 'जानाम्यहं शेवधिरित्यनित्यम् (क० अ० १, व० २, मं० १०) शाश्वतात्मनोऽशाश्वताऽनानन्द-

कत्वं स्वाभाविकमिति शेवधिद्रव्यादावपि रागशून्यत्वं दर्शितम् । 'अन्यत्र धर्मादन्यत्राऽधर्मात् (क० अ० १, व० २, मं० १४) इत्यनेन धर्मभिन्नं अधर्मो विरागस्तद्भिन्नं कृताऽकृतभिन्नं सततध्यानभक्त्यात्मकं परब्रह्मदर्शनसाधनमित्युक्तम् । 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन (क० अ० १, व० २, मं० २३) परमपुरुषाराधनाविधुरश्रुतमेधाप्रवचनानां परमात्मलभ्यसाधनत्वमुक्तम् । 'नाऽविरतो दुश्चरितान्नाशान्तो नाऽसमाहितः, नाऽशान्तमानसो वा प्रज्ञानेन एनमाप्नुयात् (क० अ० १, व० २, मं० २४) इत्यनेन वैराग्य-शम-समाधि-विरतिसहकृतविज्ञानात्मकोपासनया परब्रह्मप्राप्तेरुक्तत्वात् । 'यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः, न स तत्पदमाप्नोति संसारमधिगच्छति (क० अ० १, व० ३, मं० ७) अमनस्को रागी वासनिकोऽज्ञानी मोक्षं न याति । 'यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः, स तु तत्पदमाप्नोति यस्माद् भूयो न जायते (क० अ० १, व० ३, मं० ८) ज्ञानी विरागी निर्वासनिक उपासको मोक्षं यातीत्यर्थः । विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः, सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् (क० अ० १, व० ३, मं० ९) यच्छेद् वाङ्मनसी प्राज्ञस्तद् यच्छेज्ज्ञान आत्मनि, ज्ञानमात्मनि महति नियच्छेत् तद् यच्छेच्छान्त आत्मनि (क० अ० १, व० ३, मं० १३) यतमानव्यतिरेकैकेन्द्रियवशीकारगुणवैतृष्ण्याख्यपञ्चवैराग्योत्तरसात्मनः परमपुरुषशरणगमनेन मोक्षं गच्छेदिति भावः । 'पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मन्, कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् (क० अ० २, व० १, मं० १) धीरः-मायिकविषयशून्यबुद्धिमान्, आवृत्त-चक्षु-रागशून्येन्द्रियस्थितिके ऽमृतेषी प्रत्यगात्मविशिष्टपरमात्मानम् ऐक्षदित्यर्थः । 'अथ धीरा अमृतत्वं विदित्वा ध्रुवम् अध्रुवेष्विह न प्रार्थयन्ते (क० अ० २, व० १, मं० २) धीराः प्रलोभनशून्या मुक्तिं ध्रुवां निश्चित्याऽध्रुवकाम्येषु दोषदर्शनान्नेच्छावन्तो भवन्ति, विरक्ता एव जायन्ते । 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन (मु० १, खं० २, मं० १२) कृतेन कर्मणा न अकृतो मोक्षः, अत एव कर्मचितेषु विनाशिषु निर्वेदमायात् वैराग्यमासादयेत् । 'येनाऽऽक्रमन्ति ऋषयो ह्याप्तकामाः' (मु० ३, खं० १, मं० ६) कामो रागस्तद्रहिता वैराग्यवन्त इन्द्रियनिग्रहिणो देवयानेन तं परमपुरुषं प्राप्नुवन्तीत्यर्थः । 'उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः (मु० ३, खं० २, मं० १) अकामाः वैराग्यवन्तः शुक्रं ब्रह्मधाम प्राप्नुवन्ति सोपासनाश्चेदित्यर्थः ।

'पर्याप्तकामस्य कृतात्मनस्त्विहैव सर्वे प्रविलीयन्ति कामाः (मु० ३, खं० २, मं० २) पर्याप्तवासनारागस्य संकल्पशान्तिमतः रागशून्यस्य संस्कारा अपि लीयन्ते तत्र आत्मवेत्ता भवतीत्यर्थः। 'नाऽयमात्मा प्रवचनेन लभ्यो....विवृणुते तनूं स्वां तेन लभ्यः (मु० ३, खं० २, मं० ३) स्वप्रसादपात्रेण परमात्मा लभ्यो न प्रवचनादिना, स्वतनूं स्वीकृत्य स्वाऽऽवासे सति स्वयं वास्येन लभ्यो वसतिः परात्मेत्यर्थः। 'तस्यैष आत्मा विशते ब्रह्मधाम (मु० ३, खं० २, मं० ४) अध्यात्मध्यानेन लभ्यः परमात्माऽक्षरे धाम्नि स्वात्मकेऽक्षरे शरीरे च स्वेन लभ्य इत्यर्थः। 'कृतात्मानो वीतरागाः प्रशान्ताः (मु० ३, खं० २, मं० ५) वैराग्यवन्तः सर्वव्यापकं परब्रह्मोपासनयाऽऽविशन्तीत्यर्थः। 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन (तै० ब्र० अनु० ४) अनवधिकब्रह्मानन्दाऽपात्रीभूते मनोवाण्यौ विना तदुपासनां तद्वरणं चाऽप्राप्य ब्रह्मानन्दे वृत्तिशून्ये प्रजायेते असामर्थ्यात्, विशिष्टोपासकस्तु ससामर्थ्यः परमपुरुषाऽऽवेशितविशिष्टदिव्याऽप्रतिहतशक्तिकेन्द्रियमनोवाङ्प्रेरकः पात्रीभूतो ब्रह्मानन्दभोगी ब्रह्मयोगी भयवर्जितो विशिष्टो विलक्षणो ब्रह्मात्मको भवतीत्यर्थः।

भागवतधर्मानुवृत्तरक्तो वेदान्तोपनिषत्प्रदिष्टज्ञानविज्ञानसम्पन्नो विविधविचित्रवैराग्यविधूनितसर्वमायातद्बन्धतद्गन्धः परमेशपरानुरक्तिभक्तिसम्पन्नः स्वप्रकारप्रकारिसाक्षात्कारं लब्ध्वा सर्वप्रकारप्रकारिसाक्षात्कारानुगुणलब्धोत्कर्षः सर्वात्मना ब्रह्मार्पणविधया ब्रह्मदृष्टिमान् सर्वकामाशनो जीवन् वाऽजीवन् ब्रह्मजीवनोऽक्षरपदे परममोक्षं प्रयातीति शास्त्राश्रयगुर्वाश्रयसाधनाश्रय-साध्याश्रयैदंपर्यम्। 'ये इह आत्मानम् अनुविद्य व्रजन्ति एतांश्च सत्यान् कामान् तेषु सर्वेषु लोकेषु कामचारा भवन्ति' परमपुरुषार्थभूतस्याऽनवधिकातिशयानन्दस्वरूपस्य 'सत्यं ज्ञानमनन्तं ब्रह्म, आनन्दो ब्रह्म'तिवाक्याभिधेयपरब्रह्मानन्दान्विता भवन्तीति भावः। अनादिकर्मरूपाऽविद्यावेष्टनतिरोहितपरावरतत्त्वयाथात्म्यस्वरूपावबोधानां सर्वखनिगतस्त्रीपुंनपुंसकभेदभिन्नानां क्षेत्रज्ञानां व्यवस्थितधारकपोषकभोग्यविशेषाणां मुक्तानां स्वस्य चाऽविशेषेणाऽनुभवसंभवे स्वरूपगुणविभवचेष्टितैरनवधिकातिशयाऽऽनन्दजननं परब्रह्माऽस्तीति तदुपासनं तदुपायरूपं 'ब्रह्मविदाप्नोति परम् आत्मानमुपासीतेतिवाक्यविहितं भवतीति। अन्तर्यामित्यधिष्ठिताऽजाप्रकृतिमायाप्रधानाऽविद्यादितत्तच्छक्तिशरीरिपरमायागतोपादानतालक्षितं स्वोपास्यं तन्निर्लिप्तं प्राप्यमिति ततो मोक्षलाभः। अन्नमयकोशविशिष्टपरब्रह्म

प्राणमयकोशविशिष्टपरब्रह्म मनोमयकोशविशिष्टपरब्रह्म विज्ञानमयकोशविशिष्टपरब्रह्म आनन्दमयकोशविशिष्टपरब्रह्मेति तद्वत् षाट्कौशिकविशिष्टपरब्रह्म सप्तधातुविशिष्टपरब्रह्म चतुर्विंशतितत्त्वविशिष्टपरब्रह्म त्रिगुणविशिष्टपरब्रह्म सर्वचेतनविशिष्टपरब्रह्मेति विशेषदृष्ट्यभ्यासोऽत्थसर्वविशिष्टपरब्रह्मेति स्वात्मकपरब्रह्मसाक्षात्कारफलकविश्रान्तिपर्यवासनं परमपुरुषार्थप्रवर्तनं प्रद्योतते इति।

अथाऽऽवश्यकब्रह्मसूत्राणि

'जन्माद्यस्य यतः (१/१/२) सूक्ष्मावस्थनामरूपव्यपदेशानर्हचिदचिद्विशिष्टकार्यावस्थपरब्रह्मतः अस्य स्थूलावस्थनामरूपव्यपदेशार्हचिदचिद्विशिष्टकार्यावस्थपरब्रह्मणो जन्मस्थितिलयादिव्यवहारभाक्त्वा भवति, प्रकृतिविशिष्टवेषेणोपादानता, संकल्पविशिष्टवेषेण निमित्तता, कालविशिष्टवेषेण सहकारिता, प्रकृतिकार्यात्मकवेषेण भोग्यता, आत्मावस्थितिवेषेण भोक्तृता, अन्तर्यामिवेषेण प्रेरयितृता, सर्वत्र वृत्तिमत्त्वरूपेण अन्वयिता, स्वराट्स्वरूपेण व्यतिरेकिता, स्वस्वरूपेणाऽपरिमिताऽऽनन्दिता, सर्वप्रकाशवत्तारूपेण सर्वज्ञता, कर्मफलप्रापकत्वेन साक्षिता, कर्मफलरहितत्वेन निर्लिप्तता, कार्यानुगुणत्वेन लीलारसवत्ता, प्रत्येकावस्थितत्वेन सरूपता, सर्वत्र सत्तावत्तया व्यापकता, स्थूलयोगानभिभूतस्वरूपेणाऽदृश्यता, विकसिताकृत्यभियोगेन दर्शनविषयता, शक्यसर्वशक्तिमत्त्वेन स्वतन्त्रता, कालाऽनवच्छेद्यतया नित्यता, स्थानवच्छेद्यतया शाश्वतिकता, व्यापाराद्यनवच्छेद्यतया सततैकरूपता, उपासनापूराऽऽप्लविततया प्राप्तिविषयता, अनुग्रहाऽऽत्ततनुकतया सेव्यता, फलकामवर्षितया आनन्दयिता, सृष्टिमुक्तिप्रवाहसातत्यापेक्षितब्रह्मसत्ताकतया परब्रह्मता, स्वरूपगुणवत्तया सगुणता, विशेषणगतगुणानवच्छिन्नतया निर्गुणता, स्वाधेयमात्रगुणैश्वर्यसामर्थ्यशक्तिबलवीर्यतेजोजवनग्रहणेक्षणप्रवेशनदर्शनेक्षणसंकल्पचिकीर्षाकृतिकासकौशल्यादिमत्पुरुषविधतावत्त्वात् साकारता, मायिकाकाराऽप्रविष्टस्वरूपतया निराकारता, स्वसत्तातिरिक्तसत्ताकत्वाभाववत्सर्वपदार्थस्वायत्तताकतया सर्वात्मकता, बृहत्त्वगुणयोगिब्रह्मविशिष्टव्यवहार्यतया ब्रह्मता, मुक्तिमग्नानन्तब्रह्मपुरुषविशिष्टव्यवहार्यतया मुक्तता, महापुरुषादिविशिष्टव्यवहार्यतया पुरुषता, अवतरणस्वाभाव्यात् अवतारता, अवतरितनिधानत्वात् अवतारिता, ऐश्वर्यार्थिविशिष्टव्यवहार्यत्वाद् ईश्वरता, अन्तःकरणापेक्षात्मस्थितसहवासाद् आत्मता, जडवर्गसंचालनसत्ताकत्वात् मायिकता, जडचेतनादिशरीरवत्त्वात् शरीरिता, तत्तद्विशेषविशिष्टतया विशेषता, इत्येवं परब्रह्मलक्षणानि व्या-

वर्तकानि यथासंभवं बोध्यानि। एवं प्रमाविषयत्वात् प्रमेयत्वम्, अभिधाविषयत्वादभिधेयत्वम्, ज्ञतिविषयत्वात् ज्ञेयत्वम्, उपनिषद्वाग्विषयत्वात् वाच्यत्वम्, एवमन्यान्यपि यथासंभवं बोध्यानीति।

भेदव्यपदेशाच्चान्यः (१/१/२२) 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्याऽऽदित्यः शरीरं य आदित्यमन्तरो यमयति (बृ० ५/७/९) य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति (बृ० ५/७/२२) 'योऽक्षरमन्तरे सञ्चरन् यस्याऽक्षरं शरीरं यमक्षरं न वेद यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः (सुबाल ७ खं) इत्यादिश्रुतिभिरादित्यात्माऽक्षरकालाद्यन्तर्यामी तत्तद्भिन्नत्वेन व्यपदिष्टः परमात्मा वास्तविकतत्तद्भेदवान् बोध्यः।

ननु भेदो न तत्त्वम्, अतत्त्वाक्तोऽप्यतत्त्वम्, इति चेन्न, अयम् अस्य भिन्न इति यदर्थकयोगे षष्ठी तदर्थस्य सिद्धत्वात् भेदपदवाच्यार्थस्य पदार्थत्वात्, भावभिन्नपदार्थान्तर्गतत्वत्वात्, नन्वभावस्याऽधिकरणात्मकत्वेन लाघवात् भेदस्याऽधिकरणात्मकत्वमेवेति परब्रह्माऽभावतत्त्वतामापद्यते इति चेन्न, नैतावता परब्रह्मणो भावतालीता, मुख्यविशेष्यस्याऽपलपितुमशक्यत्वात्, पटभिन्नो घट इत्यादौ पटभेद इत्युक्ते घट इत्युक्तं स्यात् घट इत्युक्ते पटभेद इत्युक्तं स्यात् एवं पौनरुक्त्येन शाब्दबोधानुपपत्तौ व्यवहारविलोप आपद्येत, भावेन सह नञस्तत्प्रतिद्वन्द्विपदार्थादबोधकत्वात्, स्तम्भः पिशाचो नेत्यत्र स्तम्भस्य पिशाचत्वापत्तिवारणाय स्तम्भयोग्यतायाः पिशाचभेदात्मकतत्त्वसाक्षात्कारतायामपेक्षणात्, इतरपदार्थभेदरूपव्यावृत्तेरपि पदार्थत्वेन लक्षणानां साफल्यं स्यात्, अन्यथाऽवगमाऽभावाद्व्यवहारलोपप्रसंगो भवेत्, अभावो भावाधीनोऽपि न भावरूपतां लभते, पृथग्व्यवहार्यत्वात्। आधाराधेयभावविषयत्वात्, अनेकविरोधिविशेषणाऽभावानामेकात्मकत्वे तत्तत्प्रतियोगिज्ञानाधीनज्ञानानामनर्थकतया प्रतियोगिज्ञानानामप्यानर्थक्येन भावव्यवहारो विलुप्तो भवेत्, तस्माल्लोकसिद्धत्वं तावद् अभावव्यवहार्यत्वं भेदस्य तु सुतरामिति सिद्धमेव तत्त्वं परमात्मनि ख्यापयति श्रुतिः। अतः स्वेतरसमस्तप्रतियोगिकभेदवत्स्वरूपः परमात्माऽनेन सूत्रेण वर्णितः।

उभयेऽपि हि भेदेनैनमधीयते (१/२/२१) 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः'इतिमाध्यन्दिनाः—माध्यन्दिनीशा-

खावद्वैदिकाः, यो विज्ञाने तिष्ठन् विज्ञानोऽन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं य विज्ञानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' इति क प्वाः-कण्वशाखावद्वैदिकाः, एते उभयेऽपि ब्रह्मदर्शिना गताः परं परमात्मानम् अन्तर्यामिणं आत्मतो विज्ञानतश्च भिन्नं भिन्नस्वरूपं वर्णयन्ति, 'प्राज्ञेनाऽऽत्मना सम्परिष्वक्तः प्राज्ञेनात्मनाऽन्वारूढः'इत्यन्योन्यभिन्नाकारेण स्वरूपनिर्णयात्, 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते, तयोरन्यः पिप्पलं स्वादु अत्ति अनश्नन् अन्यो अभिचाकशीति, ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये, छायातपौ ब्रह्मविदो वदन्ति' 'अन्तः प्रविष्टः शास्ता जनानाम्'इत्याद्या जीवात्मपरमात्मनो भेदं व्यपदिशन्ति।

ननु चित्स्वरूपस्य ब्रह्मपरब्रह्मात्मप्रकाशचैतन्यज्ञानविज्ञानवित्तिबुद्धिप्रभृतिशब्दाभिधेयस्य 'नित्यं विज्ञानमानन्दं ब्रह्मे'तिश्रुत्या नित्यत्वम् एकत्वम् एकतात्वत्वम् तस्यैव सत्यत्वम्, सदनुभूतिरूपं तदेव स्वतःसिद्धं स्वसत्तयैव प्रकाशमानं तत्रैव स्वं प्रकाशते स्वस्यैव भ्रान्त्या ज्ञातृज्ञेयज्ञानरूपविचित्रभेदाः, तत्तु स्वयं नित्यशुद्धबुद्धमुक्तस्वभावम्, भ्रान्तिस्त्वविद्यारूपम् आगन्तुकम् अज्ञानम्, इति चेन्न। चित्स्वरूपस्य चेतयतिस्वभावात् चिदन्यनित्याऽनित्यसमाश्रितचित्तत्त्वस्य स्वविषयस्वान्यस्वभावानुस्वभावतादात्म्यात् रूप्यसमरूपणवत्वात् रूप्यसमस्वभावत्वे सिद्धे रूप्यस्याऽऽगन्तुकभ्रमात्मकस्याऽतथ्यस्य पराभूतिविषयतयाऽनुभूतेरपि पराभूतित्वाक्रान्तत्वेन नित्यचित्त्वव्याकोपात्। ब्रह्मादिविविधशब्दाभिधेयस्य तादृशविविधशब्दशिक्षाभिधेयातिरिक्तस्य तस्यैव नित्यविज्ञानातिरिक्ताऽभिधेयसाधकत्वं समायातम्, तथा च नित्यत्वम् अनित्यत्वसमानाधिकरणविज्ञानव्यावृत्तत्वं निवेदयत् अनित्यं विज्ञानमपि निवेदयति तदनित्यविज्ञानं ज्ञानं स्वाश्रयं प्रातिस्विकरूपेण साधयतीति ज्ञाताऽऽत्मा नित्यविज्ञानाद्भिन्नः सिद्ध एव, एवं सति ज्ञातृस्वभाव आत्मा स्वानुप्रविष्टस्वज्ञातृस्वभावमन्तर्यामिणं साधयतीति तत्परब्रह्मापि ज्ञानगुणसारं ज्ञातृ सर्वार्थदर्शि अर्थात् सिद्ध्यतीति, विज्ञाने विषयभेदात् प्रकारताविशेष्यतानिरूपितविषयिताभेदात् विशिष्टाकारभेदेन भिन्नत्वमपि सिद्ध्यतीति ततः एव प्रमाणभेदा प्रमाभेदा अप्युपपद्यन्ते, अत एव च न्यूनातिरिक्तभावापन्नविषयावगाहित्वेन विषयतत्त्वभेदेन विज्ञानतत्त्वभेदोऽपि निष्प्रत्यूह एव, तस्यैव सत्यत्वमिति तु विषयसत्यत्वनिबन्धनम्, तच्च सदनुभूतिरूपं तु चिरकालस्वानुभवात्मकाक्रममाणं स्वस्यैव नित्यात्मनां नित्यानाद्यनन्तकालीनस्वभानानुक्रम-

माणं तथैव परमात्मनोऽपि स्वानुरूपसाक्षात्कारात्मकप्रवाहाक्रममाणं सदानुवर्तमानमिति स्वत एव सुस्वरूपसम्पन्नं स्वयंप्रकाशं विषयप्रकाशप्रदायकं विषयप्रकाशकं विषयप्रकाशाश्रयं च ज्ञातृरूपं तत् परब्रह्म विज्ञानानन्दरूपं सर्वज्ञं सविषयकं चेति स्वज्ञानस्वभावतया सिद्ध्यति, नेदं नित्यविज्ञानं परमपुरुषरूपं भ्रान्तिं स्पृशति, यत्र भ्रान्तिस्तं भ्रान्तमनुभासयति, ततोऽज्ञानम् आगन्तुकमपि न परब्रह्मणः अज्ञानस्याऽक्रियत्वेन गमनाऽभावात्, ततश्च सत्यं ज्ञानमनन्तं ब्रह्म, नित्यविज्ञानमानन्दं ब्रह्म, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, यः सर्वज्ञः स सर्ववित्'इत्यादिना सर्वज्ञं पुरुषविधं परब्रह्म, तदन्यादृशे मानाभावात्।

मुक्तोपसृप्यव्यपदेशाच्च (१/३/२) 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्, तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति (मु० ३/१/३) यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय, तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् (मु० ३/२/८) पुण्यपापनिबन्धनाऽचित्संसर्गप्रयुक्तनामरूपभाक्त्वं संसारः, मिथ्याज्ञानजन्या वासना वा संसारः, फलभोक्तृत्वं वा संसारः, तद्बन्धनरहितानां भगवच्छरणलब्धदिव्यचैतन्यमात्ररूपाणां मुक्तानां दिव्यपरमपुरुषः प्राप्तव्यतया निर्दिश्यते; तत्र मुक्ताः सर्वकामाऽशाना जायन्तेऽतो नित्यभेदः सिद्ध एव, सर्वं ब्रह्मसृष्ट्यनुगुणं मुक्तानामुपस्थितं भवति भगवद्राजकत्वात्। तत्र सार्वदिकतृप्तिलोकत्वेन सर्वैच्छिकमोदप्रमोदसंभृतपदार्थरूपानुरूपतावैभववत्त्वेन अपूर्णतायां असत्त्वेन लीलामात्रेच्छाप्रवृत्तिमत्त्वेन दुःखशोकोद्वेगदारिद्र्यकञ्जुषभिक्षुकत्वलोभाऽशनापिपासातृष्णालालसाऽऽशानिर्माल्यशैथिल्यौदासीन्यमोहभयचिन्ताभङ्गाऽऽहततानिरोधाऽशक्तिवैफल्यादिमायिकसांसारिकदोषाऽभावेन सर्वसिद्धैश्वर्यसामर्थ्यादिमत्त्वेन सर्वानन्दसुखमोदप्रमोदतृप्तिशान्तिविरमणरतिप्रीतिस्निग्धतामिश्रताऽऽकर्षणादिमात्रसाधनोपकरणसाध्यमूर्तरूपतादिमत्ताया एव सत्त्वेन परब्रह्मानन्दभोक्तृत्वं मुक्तानां शाश्वतिकमिति 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' 'स जक्षन् क्रीडन् रममाण आनन्दयाती'तिश्रुतिभिर्निरूपणात्। सुखदास्यत्वं सुखव्याप्तमिव आनन्दयुगलत्वम् आनन्दव्याप्यमिति शश्वतानन्दव्याप्यं स्वामिसेवकभावत्वं मोक्षीयमिति तात्पर्यम्।

'अवस्थितेरिति काशकृत्स्नः' (१/४/२२) परब्रह्मकृपया पूर्वसिद्धस्वरूपस्य साकारसूक्ष्मान्तर्यामिमूर्तिगर्भिभक्तात्मनोऽन्तर्यामिमूर्ति-

सममूर्तिकत्वेन भगवन्मूर्तिमत्स्वरूपतया समूर्तस्यैव समूर्तगर्भकस्याऽवस्थितेः काशकृत्स्नमतत्वात् जीवाख्यपरमात्मन एव विशिष्टरूपतया द्वयोः साकारत्वं शाश्वतिकसिद्धमिति सूक्ष्ममीक्षणीयम्।

नन्वात्माऽयं कर्मफलभोक्ता न क्वाऽप्याकारवानुक्तः, कथं तस्य परमाणुरूपस्याऽऽकारवत्त्वमिति चेन्न। परमाणुरूपः 'एषोऽणुरात्मा चेतसा वेदितव्य' इतिश्रुत्याऽणुरूपस्य चेतसा प्रत्यक्षात्मकवेदनकथनात् प्रत्यक्षं मानसमान्तःकरणिकं सर्वसम्मतम्, साक्षिकृतं त्वात्मनः प्रत्यक्षं सर्वसम्मतम्, यमराजकृतमात्मनां प्रत्यक्षं सर्वसम्मतम्, योगिकृतं परमात्मकृतं चात्मनां प्रत्यक्षं सर्वसम्मतम्, तथा च ज्ञानसुखादिमत्तया ग्रहणशक्तिरूपकरधारणशक्तिरूपपाददर्शनशक्तिरूपदृक्स्पार्शनशक्तिरूपत्वक्श्रवणशक्तिरूपकर्णादिशक्तिमत्तया सूक्ष्मदशापन्नसर्वशक्त्यात्मकाकृतिमत्तया गुणवत्तया प्रकाशमत्तया तस्याऽणुमूर्तिमत्त्वं सर्वेन्द्रियबीजानुस्यूततावत्त्वं बुद्ध्यहंवत्त्वं स्वच्छपदार्थरूपं सुरूपं साकारं रूपमात्मनः सुसम्पन्नमेव, विशेषतस्तु मूर्तिमद्भगवद्वासानुप्रवेशात् भगवत्स्पृष्टान्तर्गर्भभगवन्मूर्तिसममूर्तिमत्ताऽवश्यंभवनात् शरीरिणो मूर्तिमत्त्वे तदभिव्याप्तसूक्ष्मदिव्यप्रवाहितत्त्वात्मकपटलस्वरूपस्य समन्ततो लग्नस्य तनुस्वरूपस्य भगवत्सममूर्तिमत्त्वं सर्पत्वग्वदपि भगवच्छरीरात्मकत्वक्स्थानापन्नसुमूर्तत्वमवश्यं सुसम्पन्नं भगत्येवेति तात्पर्यम्।

'परिणामादिति' (१/४/२७) यस्य पृथिवी, आपः, अग्निः, अन्तरीक्षं, वायुः, द्यौः, आदित्यः, दिशः, चन्द्रतारकं, आकाशः, तमः, तेजः, सर्वाणि भूतानि, प्राणः, वाक्, चक्षुः, श्रोत्रं, मनः, त्वक्, विज्ञानं, रेतः, आत्मा, लोकाः, वेदाः, यज्ञाः, बुद्धिः, अहंकारः, चित्तम्, अव्यक्तम्, अक्षरं, मृत्युः, शरीरम्, सर्वशरीरतया शरीरमयः परमात्मा शरीरात्मतया स्वं परिणमय्य सर्वरूपाऽनुरूपो भवतीति सिद्धमर्थात् अन्यतरमूर्तत्वेऽमूर्तस्यापि तादात्म्यभावान्मूर्तत्वमिति स्थूलदशापन्नमूर्तशरीरानुयोगितदन्तर्यामिमूर्तत्वे तन्मध्यपात्यात्मतत्त्वस्याऽवश्यमूर्तत्वमपरिहार्यमेवेति साकारत्वमुभयतोऽपृथक्सिद्धतादात्म्याल्लभ्यते इति तात्पर्यम्। सर्वरूपानुरूपभवनसामर्थ्यमिदं लीलारूपमेवेति न सर्वभवनाकारपरिणामजाऽवयववत्ताविश्लेषादिदोषभाक्त्वम्, चेतनातिरिक्तपदार्थस्य स्थौल्यादावुपचयाऽपचययोगात्, नात्मतत्त्वे तादृशावयवोपचयादि, येन द्व्यणुकावयवात्मकसमवायिनाशे समवेतद्रव्यनाशापत्तिकल्पना युज्येतेति। ततः परिणामोऽयं न तात्त्विकान्यथाभावरूपः, किन्तु भगवद्भावानुरूपरूपतारूप

एवेति नाऽवयवविश्लेषाद्यापत्तिरिति तात्पर्यम् ।

तदनन्यत्वम् आरम्भणशब्दादिभ्यः (२/१/१५) वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं यथा तथा वाचाऽऽरम्भणं विकारो जगत् समष्टि शरीरनामधेयं शरीरिपरब्रह्मैव सत्यम्, सूक्ष्ममूर्तसाकारसतत्त्वपरब्रह्मपिण्डाद् स्थूलविशेषमूर्तविभिन्नाकारसजातीयविजातीयोभयविधसतत्त्वसर्वसाधारणप्रत्यक्षपरब्रह्मात्मकसर्वावयव - सुघटपिण्डोत्तमो भवतीति न सूक्ष्मपिण्डात् स्थूलपिण्डे तत्त्वाधिक्यं संकुचिताऽवस्थायाः प्रतिप्रयोगिन्याः विकसितावस्थायाः ऋते बीजाद् वृक्षवृक्षवत् स्थूलस्य सूक्ष्मे समाविष्टत्वात्, तस्मात् कार्यकारणाभिमतयोरनन्यत्वम्,-भिन्नताप्रयोजकसंसर्गादिशून्यत्वम्, उपचयाऽपचययोरालोचनमात्रविषयत्वात् अभ्रवत् स्वाप्नवद्वा. अत एव दृष्टिबन्धनाधायकत्वं साकारत्वं परमात्मनि तदनन्यशरीरात्मनि तदनन्यतत्त्वतन्वात्मनी सुपपन्नं सर्वसाकारत्वम् ।

अधिकं तु भेदनिर्देशात् (२/१/२२) स्वाधिकरणस्वशरीरशरीरिभावापन्नतत्त्वाऽनन्यत्वेऽपि एकशरीरशरीरिभावापन्नतत्त्वाऽतिरिक्तविजातीयशरीरशरीरिभावापन्नतत्त्वाऽनन्यस्य एकशरीरशरीरिभावापन्नतत्त्वानन्यत्वातिरिक्तत्वात् अधिकदेशवृत्तित्वात् व्याप्याऽभेदविरहात् विशिष्टान्तरभेदात्, यत्र यत्र परब्रह्मव्याप्तिस्तत्र तत्र मिथोव्याप्यभेदात् सर्वव्याप्यानामेकव्याप्यरूपानुरूपसरूपत्वात् सरूपत्वं समूर्तत्वं साकारत्वं चेत्युपपन्नम् ।

अश्मादिवच्च तदनुपपत्तिः (२/१/२३) अश्मादीनां गडुकाकारतामात्रं न करपादादिशक्तिमदाकाराकारित्वं, तद्वदात्मनो न गडुकाकारता, किन्तु परब्रह्माकाराकारता, अन्तर्यामिणः साकारस्य रूपानुरूपस्य गडुकाकारत्वमात्मनो निवारणार्थं स्वाकारत्वसमवद्योतयथार्थमेव कर्मफलप्रदातृत्वनिमित्तकाऽनुप्रवेशनमिति तात्पर्यम् ।

'मायामात्रं तु कात्स्न्येनाऽनभिव्यक्तस्वरूपत्वात् (३/२/३) मायाऽऽश्चर्यम्, स्वाप्नपदार्थानां स्वाप्नदृगनुभाव्यतयाऽऽश्चर्यरूपत्वम्, स्वाप्नदृगवानात्मा सर्वेन्द्रियान्तःकरणकलापो भुंक्ते रमते रौति स्वपीति आलिंगति पिबति शृणोति गायति गच्छति मनुते निश्चिनोति चिन्तयति तृप्यति आनन्दयातीति सर्वकलापशक्तिसम्पन्नः साकार आत्मा साकारपरमात्मानुदत्तसर्वशक्तिकः परमात्मसृष्टसर्वभोग्यभोगोपकरणभोक्तृत्वस्वत्वधनिको बहिरनभिव्यञ्जितक्रियाप्रकाण्डोऽन्तःप्रज्ञः स्वरूपसन् शक्तिसन् भोगसन् कर्मसहकृतभगवत्कृपानुपात्रीभूतो राजेव इन्द्र इव स्वामीव समाचारः स्वयमेव स्वीयसाकार-

त्वं स्वान्तर्याम्यनुदर्शितं निवेदयतीति। कामं कामं पुरुषो निर्मिमाणः' (क० २/५/८) अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता (बृ० ६/३/१०) इति कर्तृत्वं परमपुरुषस्य भोक्तृत्वं जीवात्मन आवेद्यते, यद्यपि कर्तृत्वं न भोक्तृत्वविरुद्धं, भोक्तृत्वकर्तृत्वयोः सामानाधिकरण्यस्यापि दर्शनात्, परमात्मनि भोक्तृत्वं व्यावर्तमानं भोक्तृत्वव्याप्यकर्मकर्तृत्वं तु व्यावर्तयति, तथा च कर्मकर्तृत्वं प्राक् तदानीं वाऽऽत्मनः समूर्तत्वं समासञ्जयति, मूर्तत्वं च विना मूर्ति नोपपद्यत इति परमात्मप्रयुक्तसमरूपानुरूपप्रतिसमरूपप्रसूतिकत्वम् आत्मनः सिद्ध्यत्येवेति, तात्पर्यम्।

अथाऽत्र कर्मफलदातृत्वं परमात्मनि यत् तन्न घटते, दानस्य स्वामित्वाऽधीनत्वात्, कर्म चेदात्मनि, आत्मस्वत्वं कर्मसु, यस्य स्वत्वं तद्दातुं शक्तः, नान्यः, कर्म परमात्मनि नास्ति, तत्फलमपि परमात्मनि नास्ति, परमात्मनः कर्मसु तत्फलेषु च स्वत्वाऽभावात् कथं स्वत्वविधुरं दातृत्वम्, परस्य परायत्तस्य तदन्यदातृत्वाऽन्याय्यत्वात्। इति चेदित्थम् कर्मस्वकर्त्रनुप्रविष्टत्वसम्बन्धेन सर्वात्मनि परमात्मनि, फलमपि स्वभोक्तृप्रविष्टत्वसम्बन्धेन परमात्मनि, नाऽयं सम्बन्धो वृत्तित्वाऽनियामकः, द्रव्यस्य संसर्गात्, गुणसंसर्गस्यापि वृत्तितानियामकत्वम्, घटरूपे कपालरूपसमवायवत्। शरीरे भोजनादिवत् आत्मनस्तत्कर्तृत्वं, आत्मनि शरीरे कर्मापि तदात्मनस्तत्कर्तृत्वं प्रेरयितृत्वरूपं फलमपि प्रेर्यत्वरूपं स्वत्ववत्, स्वत्वस्य स्वकीयत्वरूपत्वात्, जडे क्षेत्रसस्याभिषेचनार्थफलादौ चेतने स्वपत्न्यादौ स्वत्वं साक्षात्प्रेर्यत्वरूपं यथेष्टविनियोगार्हत्वरूपं वर्तत एव, तस्य दानमपि योग्यपात्रानुकूलं परमेशस्य स्वामिन इव नाऽनुपपन्नम्, यद्वा कृतकार्यानुगुणवेतनदानवत् फलदानमिदं न विरुद्ध्यते, स्वामित्वसापेक्षदानस्य शाश्वतस्वामित्वोपजीवकत्वमिति परमात्मनि फलदानं घटते, आत्मा तूपासनया भक्त्या शरणागत्या निष्कामभावनया स्वं कर्म तत्फलं सर्वमपि परमात्मनेऽर्पयति; तत्र भोक्त्रधिकारसापेक्षं दानं भोक्तृत्वभावविगमार्थम्, परमात्मन्यर्पितं तु प्रसन्नताफलार्थम्, फलस्य फलं मोक्षः सर्वानन्दभर इति। भक्तार्पितकर्मफलानां परमात्मनि लीलारसे समावेशः, भक्तार्पितानि कर्माणि फलानि च परमात्मा लीलया रसेन च क्षपयति, वह्निज्वालकतप्ताऽयोगोलकेऽर्पितवारि स्पर्शपूर्वमेव विलीयते दूरात् तथा परमात्मनि समर्पितं दूरादेव विलीयते 'साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी-ति'दर्शितत्वात्। वस्तुतस्तु सर्वपदार्थजातं साक्षात्परम्परया वा पर-

मात्मन्याश्रितं तदधीनं तत्परतन्त्रं तदुज्जाप्यं तदुत्पोष्यं तदुत्संहार्यं तन्मात्रसत्ताकं तद्वृत्ति तदंगभूतं तदात्मकमिति स्वत्वं सर्वविधं परमात्मनि, तदन्ये प्रकारादौ तु परमात्मस्वत्वव्याप्यं स्वत्वं, व्याप्यस्याऽनिवृत्त्या व्यापकाऽनिवृत्तेः परमात्मस्वत्वस्य ध्रौव्याद् दानमपि कर्मफलप्रदानत्वरूपम् अविरुद्धमिति विभावनीयम्।

मायात्वम् विचित्रार्थकरत्वम्, भगवद्वृत्तिप्रतिबन्धकत्वम्, अचेतनभगवच्छरीरत्वम्, चेतनभोग्यजातत्वम्, भोक्तृत्वनिरूपकत्वम्, जडत्वम्, सृष्ट्युपादानैकतनुत्वम्, चिदंशाऽनान्तरीयकत्वम्, प्रालेयाऽगौणभाक्त्वम्, मायेतिबुद्धिगम्यत्वम्, अमायेऽयथाऽनवच्छिन्नत्वम्, बन्धनकर्तुं यद्यत् तत्सर्वं मायाभिधेयमिति विचारणीयम्।

'फलमत उपपत्तेः (३/२/३७) सर्वक्रियासु समाराध्यस्तत्तदेवादिस्वरूपः परमात्मा यथारूपाऽऽराधना तथारूपाऽऽराधितः तावन्मात्रतथारूपफलं स्वकोशरूपेषु चेतनवर्गेषु तत्तदाराधनानुरूपं सञ्चिनोति, चेतना, परमात्मन्यस्तानि फलानि भोग्यार्थदर्शितानि भुंजते, ऐहिकं पारलौकिकं चापवर्गिकं वा तत्तत्पात्रकृताऽऽयाससत्ताकं तत्तत्पात्रबुभूषाविषयं तत्तत्पात्रक्षेपणीयमेव यथाक्षणं समाप्यते, लौकिकानि देहाद्याराधनरूपाणि अलौकिकानि वा भगवदाराधनारूपाणि देवतादिद्वाराधनारूपाणि वा विषयविहारयागदानहोमार्पणस्तुतिनमस्कारकीर्तनार्चनभक्तिनिष्कामकर्मादीनि तत्तद्विशिष्टाऽऽराधितात् परमपुरुषात् फलवन्ति स्वाऽर्जकफलाधायकानि अदृष्टद्वारकाणि विनिगमकानि भवन्तीति 'स वा एष महानज आत्मा अन्नादो वसुदानः' (बृ० ६/४/२४) 'एष ह्येव आनन्दयाति (तै० आ० ७/१) 'स एवैनं भूतिं गमयति (यजु० २-कां, १-प्र. १-प) इत्यादौ परमात्मैव वसुफलदाताऽऽनन्ददाता वाय्वादिस्थितः सन् भूतिदाता च वर्ण्यते, ततः सर्वफलप्रदत्वं विशिष्टस्य साकारस्य विशिष्टशिष्टसाकारायेति चोपपन्नम्।

'आनन्दादयः प्रधानस्य' (३/३/११) सर्वेषु प्रधानतया नियामकतयाऽवस्थितस्य परमात्मन आनन्दताप्रियताप्रसन्नतावरणताकृपालुताक्षमतासमतासमनीतिमत्तासाक्षितासुहृद्भावताऽनुग्रहवत्तासुशीलतासौमनस्यौदार्यगाम्भीर्यसौन्दर्यकल्याणकरत्वभक्तभक्ततापरमकारुण्यसौभाग्याऽपहतपाप्मत्वसत्यसंकल्पसत्यकामत्वनित्यतृप्तितृप्तित्वाद्यपरिमेयगुणैश्वर्यविभूतिसामर्थ्यशक्तिभूमताऽन्तर्यामितासर्वज्ञतासर्वाश्रयतासर्वाधारतासर्वापूरकतासर्वात्मकतासर्वान्वयितासर्वरूपाऽनुरूपतासर्वाऽपृथक्सिद्धतानियामकतापरब्रह्मतापराविद्यात्मतापराकाष्ठदि-

दिव्यतासुमूर्ततासर्वप्रत्यक्षदर्शिताप्रमाणनिरूपकतोत्तरोत्तरविकसिततानि-म्ननिम्नाऽधःसंकुचितताभहत्ताऽणुता ऽदृष्टदर्शितादिगुणादयः परमपुरुषे परमात्मनि साकारस्वरूपे वर्तन्ते, तत्तन्तुसन्तानकास्तत्तनुरूपेषु वर्तन्ते तद्योगात्तनूरूपाणामपि तद्वत् साकारत्वमिति ।

न स्थानतोऽपि परस्य उभयलिंगं सर्वत्र हि (३/२/११) यथा सर्वकल्याणगुणाकरत्वं तथा निरस्तनिखिलदोषत्वमपि परमात्मनि श्रुतिभिर्लिंग्यते, शरीरात्मकस्थानवत्त्वे स्थानकृतदोषाऽभावस्तस्मिन्, असत्त्वजडत्वाऽज्ञानित्वविकृतित्वाऽवयवह्रासतापरतन्त्रताव्याप्यताऽधीनताऽ योन्याभिभवाश्रयजननमिथुनवृत्तिताहेतुमत्ताऽनित्यताकालबाध्यताऽनेकतापराश्रितताल्यभावतादुःखिताशेषिते द्वेगितापश्चात्तापिता ऽ सुखितात्रिदोषवत्तामोहवत्ताऽभिनिवेशभयक्रोधलोभमत्सरतृष्णापिपासाक्षुज्जरापरिणतिशुष्कताविशीर्णताविये।गिताकरणाधीनतादेहपरवश्यता ऽन्येच्छाधीनताकुण्ठितताऽसिद्धिमत्ता ऽप्रकाशितातामसता ऽभिलाषविघातितापुण्यादिबन्धनवत्तावासनावत्तामायाऽधीनताऽकस्मात्तता ऽसत्तावत्तादृश्यताखण्डिततासंशयविकल्पादिमत्ताऽप्रत्यक्षदर्शिताऽल्पता ऽनिष्टवत्ताकारणाधीनताऽन्याऽधीनाऽऽपूरकतास्वभाववश्यतासंसर्गाधीनतामोदप्रमोदादिरहितता साधनाधीनताव्यापारपरवश्यतापराभाव्यताकालकवलितासृष्टिलिप्ततताविषमताविर्घृणतामूर्छाऽनीश्वरताऽनात्मताऽब्रह्मता ऽपरताऽऽश्रितताविमानिता ऽपुरुषार्थतातृतीयप्रकृतिमत्तादिनिरस्तनिखिलदोषत्वं, तथा च शुद्धबुद्धमुक्तस्वभावं परब्रह्म स्वानुप्रविष्टं स्वोपासकगतनिरस्तनिखिलदोषत्वम् आपादयत् स्वसमाकारं द्योतयतीति तात्पर्यम् ।

'आत्मेति तूपगच्छन्ति ग्राहयन्ति च (४/१/३) उपासितृा परब्रह्मस्वात्मत्वेन उपास्यम्, 'ऐतदात्म्यमिदं सर्वं' 'अकृत्स्नो ह्येष आत्मेत्येवोपासीत' प्रत्यगात्मनोऽप्यात्मत्वात् साकारमूर्तेरात्मत्वेन तदात्मकतयोपासितुरपि साकारत्वं तदन्तःस्थितरूपानुप्रतिरूपवत्त्वं तथात्वतया चोपासकत्वेन भवितव्यमिति, निराकृत्या साकृत्युपासनाया असंभवात् साकारेण निराकारोपासनाया गगनावलेह्यमानत्वात् द्वयोः समसमयोरुपास्योपासकभावस्तावदनेन प्रतिपादित इति तत्त्वम् ।

सम्पद्याऽऽविर्भावः स्वेन शब्दात् (४/४/१) 'एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरूपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते' (छा० ८/१२/२) स्वेन रूपेण साकारान्तर्याम्यन्तःप्रविष्टपरमात्मस्वरूपानुप्रतिरूपात्मकसाकारस्वरूपेण स्वात्मशक्तिसामर्थ्यादिकलापसहितेन दिव्यमुक्तरूपेण भगवत्सारूप्येण गुणाष्टकयुक्तेन सर्वसिद्धिसहितेन ब्रह्मसमानेन परब्रह्मप्रतिरूपरूपितेन स्वेन स्वात्मकचेतनमात्रसम्प-

त्प्राक्सिद्धमूर्त्या सर्वर्द्धिसर्वानन्दसम्पन्नो भवतीति भगवन्मूर्तिसमाऽऽविर्भावः स एव प्रोच्यते, 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'तिश्रुतेरत्रार्थे उपोद्बलकत्वात्। 'स एकधा भवति द्वेधा दशधा सहस्रधा भवतीति'श्रुतेः उभयार्थे चोपोद्बलकत्वात्। 'स जक्षन् क्रीडन् मोदमानः' इति श्रुतेः तत्त्रयार्थे उपोद्बलकत्वात्।

भोगमात्रसाम्यलिङ्गाच्च (४/४/२१) परमपुरुषभोगानां मुक्तभोगानां साम्यात् द्वयोः मूर्तिरूपतायाः साम्यं सर्वगुणशक्तिसामर्थ्यरूपसत्यसंकल्पादिसाम्यम्, 'ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्तते (छा० ८/१५/१) इत्युक्त्या उत्तरकालीनान्तररहितं भगवत्सारूप्यसार्ष्टिसायुज्यसालोक्यादि साम्यं भवतीति तात्पर्यात्। परब्रह्मणो जगद्व्यापारो लीलारसमात्रम्, मुक्तस्य परब्रह्मभोगमात्रं भगवदनुग्रहमात्रम् अनवधिकातिशयानन्दपरिपूर्णपरब्रह्माऽपरोक्षसाक्षात्कारानुभवमात्रम्, अभेदेनेव परब्रह्मयावद्रमणलीलाऽनुलीलामात्रमिति यावत्। तदेवं प्रतिपादितं श्रुतिसूत्रतात्पर्यैर्जीवात्मनः शाश्वतसाकारत्वम् परमात्मवदिति।

अथ श्रुतीनां पञ्चतत्त्वानुकूलः सिद्धान्तः—

वस्तुतः परब्रह्मणाऽक्षरब्रह्म सृष्टिदृष्ट्या प्रेरितं सत् सेवाभिलाषुकमुक्तम् मायया समायोजयत्, सूक्ष्मावस्थापन्ना मायाऽऽयोजनवती सती स्थौल्यं प्राप, मुक्तोऽपि महापुरुषो मायानुरूपरूपो भवन् सृष्टि विकारास्पदां प्रैरयत्, ततो जडचिदात्मकांऽकुरद्वारा सृष्ट्यग्रप्रसारेण सर्वमिदं जगत् सम्पन्नमिति, सृष्टिकारणसर्वबाध्यानामक्षरब्रह्मणि पर्यवसानात् त्रिविधकारणत्वम् अक्षरब्रह्मण्येव वेदान्ताः प्रतिपादयन्ति, उपनिषदां ब्रह्मसूत्राणां च ब्रह्मशब्देन सर्वशास्त्रार्थप्रवर्तनात्, मूर्ताऽमूर्तसगुणनिर्गुणसतत्त्वाऽतत्त्वादिव्यपदेशार्हमक्षरब्रह्मैव परब्रह्मणा श्रीहरिणा प्रतिपादितम्। ततोऽक्षरब्रह्मैव जडचेतनशरीरि सत् जगदुपादानं जगन्निमित्तं जगत्सहकारि च स्वशरीरभूतमायासंकल्पकालाख्यैर्भवतीति, अक्षरब्रह्म च स्वयं परब्रह्मधामरूपं परब्रह्मतेजोव्याप्यतेजःसंभृतं परब्रह्मण ऐश्वर्यं किरणं तेजः प्रकाशघनरूपं सेवकरूपं च साकारं चतुर्थं तत्त्वं परब्रह्मसंकल्पितसर्वकार्यकरं सर्वकार्यकारणात्मकं सार्वदिकं शाश्वतं विद्यमानं सर्वत्र व्यापकं विशिष्टं ब्रह्मैवेति सर्वकारणताविश्रान्तिरक्षरब्रह्मण्येव, अक्षरब्रह्मणः शरीरि परब्रह्म तु स्वशरीरविशिष्टं सत् कारणतास्पदं भवतीति, अन्ततः सर्वकारणताविश्रान्तिं सर्वशरीरिणि परमात्मनि समर्पयन्ति श्रुतयः। अक्षरब्रह्माऽप्रेरितं मूलपुरुषानधिष्ठितं प्रकृतितत्त्वं त्रिगुणं लयावस्थम् अकारणम् अनुपादानम् निर्व्यापारं



सूक्ष्मं सर्वचेतनजडसुषुप्तावस्थं साम्यावस्थानिर्विशेषं ब्रह्मशरीरं, सदैवा-

ऽग्रे आसीत्, परब्रह्मान्वितक्षरब्रह्मान्वितकारणकार्याऽव्यपदेश्यमपि स्वरूपसत् त्रिपुटीरूपमासीत्, तदेवाऽसदेवेदमग्र आसीत्–परब्रह्मान्विताऽक्षरब्रह्मान्विताऽङ्कुरावस्थानापन्नलीनभावात्मकमासीत्, मायाऽप्यक्षरब्रह्मैकप्रदेशे लीनीभवतीति वचनामृतश्रुतेः, आत्मैवेदमग्र आसीत्–परब्रह्मान्विताऽक्षरब्रह्मान्वितात्मचेतनतत्त्वगर्भकं जडं प्रकृतितत्त्वमासीदिति, तर्ह्यव्याकृतमासीदिति–नामरूपव्याकरणव्यपदेशानर्हमासीदिति, न सदासीन्नोऽसदासीत् तदानीं तम एव आसीदिति–प्रकाशप्रवृत्तिनिवृत्तिशून्यं विरामावस्थं परब्रह्मान्विताऽक्षरब्रह्मान्वितप्रकृतितत्त्वमासीदिति विराम एव प्रलयस्तम इति बोध्यम्, आकाश एवासीत् केवल–इत्यपि परब्रह्मान्विताऽक्षरब्रह्मात्मकाऽचिदाकाशान्विताऽव्यक्ततत्त्वमासीदिति बोधयति। एकमेवाऽद्वितीयमित्यपि नामरूपविभागरहितत्वादेकं व्याप्त्यभिथोविरुद्धधर्मशून्यमित्यर्थकम्, अद्वितीयमिति–तत्प्रेरकाऽक्षरब्रह्मविशिष्टपरब्रह्मात्मकद्वितीयेतरं तृतीयं तत्त्वं स्वतन्त्रं न प्रेरकत्वेनाऽपेक्षितं भवतीति, एवकारः परब्रह्माऽक्षरब्रह्मप्रकृतिपिण्डात्मकत्रिकदार्ढ्यसूचनार्थः, सत्यं ज्ञानमनन्तं ब्रह्मेति–परब्रह्मविशिष्टाऽक्षरब्रह्मणः सूक्ष्ममायाशरीरिणः सूक्ष्मचेतनशरीरिणश्च वास्तविकं सत्यत्वं नित्यत्वं ज्ञानत्वं–परब्रह्मान्विताऽक्षरब्रह्मणो ज्ञानत्वात् ज्ञानित्वाच्च तदधिष्ठानरूपप्रकृतेरपि सचेतनस्वभाववत्त्वमवच्छेद्यतासंसर्गेणोपपद्यते जडस्यापि शरीरस्य चेतनसम्बन्धेन चैतन्यवदिति सुस्पष्टं ज्ञानव्यवहार्यत्वं प्रकृतौ, अनन्तत्वं–सृष्टेः प्रवाहस्याऽनाद्यनन्तत्वाद् उपपद्यते, अनन्ताक्षरब्रह्मात्मकशरीरिवैशिष्ट्येनापि परमेशवैशिष्ट्येनापि संभवतीति निराबाधम् अनन्तत्वम्. ब्रह्मेति–अक्षरब्रह्मसम्बन्धात् स्वस्या अपि बृंहणत्वाच्च ब्रह्मत्वम्, स ऐक्षत बहु स्यां प्रजायेयेति–परब्रह्मेक्षणोत्तराऽक्षरब्रह्मेक्षणोत्तराऽनुप्रविष्टाऽक्षरब्रह्मविशिष्टप्रकृतिरूपशरीरोपादानकारणजन्यबहुप्रजारूपतायामभिप्रेतत्वेन प्रकृतिविशिष्टाऽक्षरब्रह्मण ईक्षणं परमेशानुप्रविष्टं बहुभवनरूपमुपपद्यते। प्रकृतेरक्षरब्रह्मयोगेन ब्रह्मरूपत्वात् ब्रह्मधर्मानुप्रविष्टत्वात् ब्रह्मैकक्रियाकरणत्वात् ब्रह्मशक्तिसशक्तत्वात् ब्रह्मसत्तासत्त्वात् ब्रह्माश्रितत्वात् ब्रह्मस्वरूपलीनभावप्राविर्भावात्मकचेष्टावत्त्वात् ब्रह्माऽपृथक्सिद्धप्रकारस्वरूपत्वात् ब्रह्मोतप्रोततत्त्वात् ब्रह्मतास्वरूपातिरिक्तगुणक्रियाव्यापाराद्यनभिव्यञ्जकत्वात् ब्रह्मस्वरूपान्तर्भावभावितत्वात् ब्रह्ममूर्तिकत्वात् ब्रह्मक्षेत्रत्वात् ब्रह्माऽपृथक्तादात्म्यात् ब्रह्मभूतिकत्वात् ब्रह्मगुणाधानत्वात् ब्रह्मस्थौल्यद्वारत्वात् ब्रह्मावगमलक्ष्यत्वात् ब्रह्मवैधुर्यानवग्रहात् अक्षरब्रह्मसमानाभिहाराच्च ब्रह्मत्वं प्रकृतेर्निराबाधम्, नित्यं विज्ञानम् आनन्दं ब्रह्मेत्यत्रापि उत्पत्तिध्वंसशून्यत्वान्नित्यत्वम् विशिष्ट-

ब्रह्मणो ज्ञानित्वात् अवच्छेद्यतया ज्ञानत्वं जनकतया वा चक्षुरादिवज् ज्ञानत्वं ज्ञानित्वं च, आनन्दितब्रह्मतादात्म्यप्रकारत्वात् आनन्दित्वम ब्रह्मात्मकप्रकृतेर्बोध्यम्। तस्य भासा सर्वमिदं विभातीत्यनेन सर्वतेजःप्रदत्वं सर्वप्रकाशकत्वम् अक्षरब्रह्मण एव परब्रह्मविशिष्टस्याऽभिहितम्, तेन जडचेतनमिश्रितसंसारस्य प्रकाशवत्त्वमपि अक्षरब्रह्माऽन्वयादेव बोध्यम्, सूर्याग्निचन्द्रतारकविद्युन्मणिप्रभृतिप्रकाशप्रदत्वमक्षरब्रह्मण एव। यतो वेमानि भूतानि जायन्ते–इत्यनेनापि परब्रह्माऽन्विताऽक्षरब्रह्मशरीरात्मकप्रकृतेरेव स्वलीनीभूतस्वस्वकर्मानुरूपजडचेतनशरीरादिमिथोविभिन्नरूपादिभूतानामुद्भवः पोषणं प्रतिनिवेशनं च संभवति। अतः प्रतिसर्गे जडानां सचेतनानां मूलप्रकृतौ लयः प्रकृतेः पुरुषे लीनीभावे पुरुषस्य व्यतिरेकित्वेन स्थितौ ब्रह्मण्येव प्रकृतेर्लीनीभावः सम्पद्यते, पूर्वं संयुक्तपुरुषस्य पश्चाद् वियोगे बाधाऽभावात्, प्रकृतेः सर्वसाधारणत्वात् सृष्ट्यन्तरे पुरुषान्तरयोगेन ब्रह्मात्मप्रेरितसृष्टिस्थित्यवस्थावत्त्वसंभवात्। अहं ब्रह्माऽस्मीत्यत्राऽहंकारग्राह्यसर्वजडतत्त्वावच्छिन्नात्माऽहं स्वशरीरि अक्षरब्रह्मरूपः परब्रह्मविशिष्टोऽस्मीति त्रिकुटीज्ञानं विवेकगर्भं ब्रह्मरूपापन्नोपासनं मोक्षसाधनं भवतीति। तत्त्वमसीत्यत्रापि प्रकृतिसमूहान्वितब्रह्मरूपस्त्वं, तत्–परब्रह्मान्विताऽक्षरात्मकोऽसीति शिष्यबोधनम्, अयमात्मा ब्रह्मेत्यत्रापि–अदःपदज्ञाप्यप्रकृतितत्त्वानुस्यूतचेतनात्मा ब्रह्मशरीररूपः परब्रह्मान्वितो ब्रह्मरूप इति बोधः। सर्वं खल्विदं ब्रह्म-त्यत्रापि–प्रकृतिरूपात्मकमिदं नामरूपापन्नस्थूलं यत् तदन्यच्च सूक्ष्मं त्रिगुणपर्यन्तं चेतनविशिष्टमपि, खलु–ध्रुवभावभाविताऽक्षरब्रह्मात्मकं परब्रह्मानुस्यूतम् अक्षरब्रह्मात्मकमेव न त्वक्षरब्रह्मविधुरमिति व्यापकाऽक्षरब्रह्मदृष्ट्या तदुक्तम्। निजात्मानं ब्रह्मरूपं देहत्रयविलक्षणम् विभाव्येति शिक्षाश्रुतिरपि नित्यजायमानषड्भावापन्नप्रकृतिगतस्वात्मरूपम् अक्षरब्रह्मान्वितं परब्रह्मान्वितरूपं स्थूलकर्मठदेहत्रयभावशून्यं समुपास्य परब्रह्मान्विताऽक्षरब्रह्मान्वितस्वात्मानन्दलाभात्मकदिव्यशरीरिब्रह्मपरब्रह्मसेवनापरस्वरूपात्मकमुक्तिं सम्पादयेदित्यर्थः। नेह नानास्ति किञ्चनेति नानात्वनिषेधो नाम परब्रह्माऽन्विताऽक्षरब्रह्मान्वितप्रकृतिसृष्ट्यतिरिक्ता, काचिदन्या स्वतन्त्रप्रकृतिसृष्टिपदार्था नाऽस्तीत्यर्थे तात्पर्यात् विशिष्टाक्षरब्रह्मातिरिक्तं किमपि नास्तीति बोधयति। ऐतदात्म्यमिदं सर्वमित्यत्रापि–इदं दृश्यमानप्राकृतविभागापन्नमपि अक्षरब्रह्मान्वितं सर्वं ऐतदात्म्यम्–परब्रह्मात्मकाऽक्षरब्रह्मात्मकं वर्तते इति बोध्यम्। एकविज्ञानेन सर्वं विज्ञातं भवतीत्यत्रापि–परब्रह्मान्विताऽक्षरब्रह्मान्वितजडचेतनात्मकैकपिण्डविज्ञाने सति सर्वपिण्डानां तथैव विज्ञानात् न ज्ञातव्य-

मवशिष्यते यत् त्रिकुटीव्यतिरिक्तं भवेदित्यर्थः। ज्ञाताऽत्र त्रिकुटीस्थात्मा मुमुक्षुः, ज्ञेयं–त्रिकुटचन्तरात्मतया व्यवस्थितं परब्रह्म, ज्ञानं–त्रिकुटीगतकर्मभोक्तृज्ञप्तिरूपम् आत्मप्रकाशः, ज्ञप्तिश्च–त्रिकुटीव्यापकपरब्रह्मबोधरूपा, ज्ञप्तौ प्रकाराणाम् अवच्छेद–तदवच्छेदकविधयाऽनुप्रवेशात् अनायासतस्तद्भानं ज्ञप्तौ संभवतीति, सुवर्णेतिशब्देन रूपत्वपिशंगरूपतादात्म्यपिण्डधर्मादिज्ञप्तिवत् अहमिति ब्रह्मेतिशब्देन जडतत्त्वप्रकृतिचेतनाऽक्षरब्रह्मपरब्रह्मपर्यन्तज्ञप्तिजननात्, श्रुतिवाक्यजन्यात्मबोधावगमे विशिष्टब्रह्माद्वैतभानावश्यकत्वेन जायमानत्वात् तथाविधोपासनया ब्रह्मस्थित्या परब्रह्मप्राप्तिर्जायते इति। आपूरकं तत्त्वम् उपादानं प्रकृतिः परब्रह्मान्वितब्रह्मविशिष्टा प्रकारिणीभूता कारणम्, भोगप्रदाने प्रयोजकं तत्त्वं कर्मात्मकं जीवात्मगतं परब्रह्मान्वितब्रह्मविशिष्टं सामानाधिकरण्येन आत्मनि स्थितं निमित्तकारणम्, संकल्पात्मककालतत्त्वस्य तत्र तत्र कार्ये प्राक् प्रयोजकतया स्थितेः कालात्मकं तत्त्वं संयोगादिना परब्रह्मान्विताऽक्षरब्रह्मविशिष्टं चेतनजडसंयुक्तं तत्र तत्र कार्ये सहकारिरूपं कारणं भवति, कालस्य कर्मणः प्रकृतेश्च परब्रह्मान्विताऽक्षरब्रह्मणि प्रकारतयाऽन्वितत्वेन प्रकारगतकारणत्वानि प्रकारिणि अक्षरब्रह्मणि तद्विशिष्टे परब्रह्मणि चोपपद्यन्ते, परब्रह्म विनाऽक्षरब्रह्मणोऽक्षरब्रह्म विना कालकर्मप्रकृतीनां सञ्चालनशक्त्यभावात् सर्वविधकारणत्वं परस्मिन् ब्रह्मणि अन्ततः सुविश्रास्यति। एवं सत्यपि न कार्यगतविकारास्पदत्वं नियामककारणस्वरूपे, नियाम्यकारणस्वरूपेऽवस्थावत्त्वमुपपद्यते, जडे च रूपान्तरापत्तिरूपविकारास्पदत्वं वर्तते इति, तत्तत्स्वतन्त्रभावानां नाऽन्वितविशेषे संक्रमणमिति परब्रह्माऽक्षरब्रह्मात्मप्रकृतीनां पिण्डीभूतानां न स्वस्व–धर्मसांकर्यं न वा विनिमयो न वा तत्तदापत्तिर्न वा तत्तत्स्वरूपाऽन्याहृशत्वापत्तिरिति वेदान्तवाक्यानि प्रतिपादयन्ति। वचनामृतश्रुतिभिः सतत्त्वा माया, जीवात्मानः, ईश्वरात्मानः, ब्रह्माऽक्षरधाम तन्मुक्ताः, अवतारा: परब्रह्म चेति, स्पष्टतया प्रतिपादितानि तत्त्वानि, उपनिषच्छ्रुतिभिरपि तत्तव पञ्चतत्त्वानि प्रतिपादितानि, तदनुगुणं श्रुतीनां विशिष्टब्रह्माद्वैतत्वे तात्पर्यम्, नैतावतैकप्रवर्णितविभिन्नार्थतात्पर्यकत्वम्, भ्रान्त्युद्भावनप्रेरकत्वम्, वाऽर्थभेदापत्त्या श्रुतीनां विगानकत्वम्, वा द्व्यर्थबोधकत्वेन उभयार्थेऽपि अप्रामाण्यकत्वम्। शांकररामानुजवल्लभनिम्बार्कमध्वशाक्तशैवपाशुपतादिभिन्नव्यक्तिवर्णितभिन्नार्थकत्वेऽपि तत्तद्दोषाऽप्रसक्तेः, एकव्यक्तिवर्णितार्थन्यूनतापरिग्राहकान्यव्यक्तिवर्णितार्थबोधाश्रयैकव्यक्तिगतपूर्वापरार्थानुगुण्यवैगुण्यस्वागतीकृतत्वेऽपि तत्तद्दोषाऽप्रसक्तेः, श्रुतीनां तात्पर्यज्ञत्वं विना

सर्वज्ञं सुदुष्करमिति यथाबुद्धि स्वान्तर्यामिप्रेरितशास्त्रन्यायादिसहकृत-परिष्कृतप्रज्ञाविषयार्थतात्पर्यानुसरणेन श्रुतिवैमत्यदोषाऽप्रसक्तेः। अतो जीवात्मा, ईश्वरात्मा, मायात्मा, ब्रह्मात्मा, परब्रह्मात्मेति, पञ्चतत्त्वानां प्रतिपादिकाः श्रुतयोऽत्र प्रदर्शनीयाः, तत्र जीवविशिष्टात्मा, ईश्वरविशिष्टात्मा, मायाविशिष्टात्मा, ब्रह्माऽक्षरविशिष्टात्मा, सर्वविधसर्वविशिष्टपरमात्मा, चेति पञ्चधाव्यवस्थितश्रुतीनां तात्पर्यम्।

अथ विशिष्टब्रह्माद्वैततत्त्वम्—

"न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति किन्त्वात्मनः कामाय सर्वं प्रियं भवति" इत्येवं प्रतिपादितेन स्वात्मकात्माऽपारोक्ष्येण येन केनाभिमतेन रूपेण व्यवस्थितो विदितोऽपि परिच्छिन्नो नैवं सर्वत्वाविनाभावतां भजन्नवशेषाऽशिष्टप्रियताभवनतां पारयितुं प्रभवेदिति व्यापकमेकं तत्त्वं सर्वात्मकं सर्वप्रियाऽनुभावकं सर्वाऽपृथक्सिद्धाऽनुस्यूतमपरिच्छिन्नं व्यतिरेकि सदप्यन्वयि चोभयथा वा यथासंभवतत्त्वात्मकमासञ्जनीयमिति तदर्थं यावन्तश्चार्षवादा प्रवर्तन्ते, अत्रार्थे श्रुतिर्मुख्यं प्रमाणमिति "सन्मूलाः सौम्येमाः प्रजाः", "यतो वेमानि भूतानि जायन्थे येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति", "तत्सृष्ट्वा तदेवाऽनुप्राविशत्" इत्यादिभिः सदेवाग्रे परतो मध्येऽपि च यदास्थेयं तत् किमपि किमिति नामरूपावच्छिन्नमित्यत्र यथाधीप्रसरं बहुभिर्बहुधा प्रतिपादितम्। एकमेवाऽद्वितीयं ब्रह्मेत्येवं नित्यविज्ञानात्मकब्रह्ममात्रवादिनां नामरूपविभागापादकेऽविद्यातत्त्वे समुपाधिरूपे पूर्वप्रसक्तेऽद्वैतहानिर्मायाया आत्मनां च नित्यत्व-बहुत्व-प्रतिपादकश्रुतिविरोधो दृश्यमानानां मिथ्यात्वे प्रत्यक्षविरोधश्चात्यन्तविजातीयसदसतोस्तादात्म्यानुपपत्तिश्चेत्याद्यस्वारस्यमभिमन्वानानामन्येषां क्षणिकविज्ञानात्मकं क्षणिकं सदिति मूलं सहोपलम्भनियमाभिस्पृष्टं व्यापकं सर्वात्मकं तत्त्वमेकमेवेति समभिमतम्। किन्तु तेषामपि प्रवाहिणां क्षणिकत्वेऽपि प्रवाहाणां चिरायित्वेऽनादित्वे नित्यत्वे वा त एवाऽऽत्मदशापन्ना व्यापकाः प्रवाहात्मकाः सर्वेषु समसंख्याका आपतिता इति तद्वद् यावत्प्रवाहगतप्रवाहोऽप्येक एव समापतित इति ब्रह्मदशापन्नः सः पूर्ववादिमतान्मात्राधिकः कश्चिद्विजयो देवान्तरग्रामश्च तदवस्थ एवेति तत्रास्वारस्यमनुभवतामन्येषां नित्याया मायाया एव प्रजामूलत्वं बद्धत्वं मुक्तत्वं व्यापकत्वं प्रकाशादिमत्त्वं चेति सत्कार्यात्मकत्वं धर्मलक्षणावस्थाभेदभिन्नायास्तस्या एव बहुधात्वमित्येवं सामञ्जस्येऽपि तदीयांशांशे दुःखमोहमात्रात्मके सर्वत्र प्रियतानुभवितृव्याहतेस्तादृशात्मतत्त्वमभिमन्तव्यं भवतीति तदैक्ये पूर्ववद्दोषदृष्टिस्तद्बहुत्वे मायालिप्तालिप्तत्वव्यवस्थाकृतसर्वार्थाद्

ब्रह्मतत्त्वमीश्वरतत्त्वं बह्वीश्वरमतं चाऽऽपतितं भवतीति तेन नियामकबहुत्वेन जगदव्यवस्था प्रसक्ता भवेदिति त्वत्तुष्टिमनुभवतामाचार्याणां शारीरकं कार्यमवस्थान्तरयोगेन सन्मूलकं सदायतनं सत्प्रतिष्ठमिति विशिष्टतत्त्ववादिनां नाऽऽविद्यको विरोधो न वा सान्तानिको रोधो न वेशानैक्यमूलकाऽव्यवस्थेति विशिष्टाद्वैतं श्रुतिस्मृतितर्कप्रमाणादिसर्वसह्यं सुसमञ्जसं तत्त्वमपृथक्सिद्धसूक्ष्मस्थूलचिदचिद्वस्तुकमेकमेवाऽद्वितीयं ब्रह्मेति निरवद्यं सम्मतम् ।

## जीवात्मानः

अथात्र जीवात्मानः, माया, ईश्वराः, ब्रह्म, परब्रह्मेति पञ्चतत्त्वानि स्वरूपतो भिन्नानि श्रुतिस्मृत्यादिभिः प्रतिपादितानि । तत्र जीवात्मानः—"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्", "सर्वे आत्मानः समर्पिताः", "अपरिमिता ध्रुवाः" इत्यादिश्रुतिस्मृतिसिद्धा जीवात्मानो बद्धात्मानोऽनन्ता आशिखादानखाग्रं ज्ञानशक्त्या देहेषु प्रविष्टा अजा नित्याः शाश्वता निरंशकाः स्वप्रकाशा अपरिमिता ध्रुवाः सनातना अचलाः स्वतोऽनवयवा अनादयो देहेन्द्रियाऽन्तःकरणादिभिन्नाश्चिद्रूपा ज्ञानघना इति सर्वैः प्रमाणीकृता भवन्तीति जीवतत्त्वं ज्ञानघनात्मकं सार्वदिकं व्यवस्थितम् । ज्ञानघनत्वमेषां तत्त्वान्तरताप्रयोजकम् ।

## माया

अथ माया—"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः", "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्", "इन्द्रो मायाभिः पुरुरूप ईयते", "गौरनाद्यन्तवती सा जनित्री भूतभाविनी सिताऽसिता च रक्ता च", "विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्" इत्यादिश्रुतिप्रतिपाद्या गुणमयी जडापि संसरिष्यमाणचिद्गर्भतया चिदात्मिका स्वाभिमानिदेवताधिष्ठिता विविधाश्चर्यकारिणी व्यक्ताव्यक्तस्वरूपानाद्यविद्याऽऽवृतजीवात्मनां देहधारणादिप्रादुर्भावार्थं केदाररूपा ध्रुवा परमात्मशक्तिरूपा ब्रह्मकिरणच्छायानिभा कार्यकारणात्मकस्थूलसूक्ष्मलक्षणसदसद्रूपा विविधाश्चर्यकारिणी नित्यतत्त्वरूपा भवतीत्यस्यास्तमोघनत्वमेव तत्त्वान्तरताप्रयोजकम् ।

## ईश्वराः

अथेश्वरा अपि—"तमीश्वराणां परमं महेश्वरम्", "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्", "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति", 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः", "प्रधानपुरुषेश्वराः", "यज्ञेन यज्ञमयजन्त देवाः (नित्यमुक्ताश्चेश्वराः) तानि धर्माणि

प्रथमानि (उत्कृष्टभागवतनिर्गुणधर्माणि) आसन् । ते ह नाकं (ब्रह्मपदात्मकं) महिमानः (मुक्तेश्वराः) सचन्त (श्रितवन्तः) यत्र (ब्रह्मधामनि) पूर्वे (अनादयो ब्रह्मपरब्रह्मसमानकालिनः) साध्याः सन्ति देवाः (नित्यदिव्यमुक्ता वसन्ति) ॥" इत्यादिश्रुतिस्मृतिसूत्रैः प्रतिपाद्यन्ते । एते दिव्यैश्वर्यधना ब्रह्मपदस्थपुरुषा नित्यपार्षदा अनन्ता विद्यन्ते । तथाव्याकृतसूत्रात्मविराडाख्येष्वध्यक्तमहदहङ्कारतन्मात्रेन्द्रियभूतादिसमुदायविशेषात्मकाण्डलक्षणादेहेषु ते व्यापका जगतामुत्पत्तिस्थितिलयाद्यभिज्ञताद्यैश्वर्यधनाः सृष्टयधिष्ठातारो ब्रह्मविष्णुमहेशहिरण्यगर्भभूमपुरुषमहाविष्णुरुद्रसंकर्षणानिरुद्धप्रद्युम्नप्रधानपुरुषप्रकृतिपुरुषमहत्त्वाद्यधिदेवताद्या अपि सर्वे ईश्वरा एव भवन्ति, तथैवेश्वरवत्कार्यकारिणश्चैतन्यधर्मिणो नित्यचमत्कारा नित्यगुणा नित्यविभूतयो नित्यभूमयो नित्यायुधानि नित्यशृङ्गाराणि चेतनात्मकानि समग्रैश्वर्यभूमिकाश्चेश्वराकृतय ईश्वरा इत्युच्यन्ते । एतेषामवस्थान्तरयोगादावपि नेश्वरत्वविमर्द इति भवत्येषामैश्वर्यधनत्वमेवेश्वरत्वप्रयोजकम् । ततस्तत्त्वान्तरमीश्वरतत्त्वम् । ननु मुक्तानां ब्रह्मत्वमस्तु कथमीश्वरत्वमिति चेन्न, निजात्मानं ब्रह्मरूपं विभाव्येति विधेर्ब्रह्मणो ब्रह्मरूपत्वविधाननैरर्थक्यत्वाद् ब्रह्मेतरेषां तद्विधेर्योग्यत्वाद् जीवभिन्नानां तेषामीश्वरत्वं युक्तमेव । तेषां निर्गुणैश्वर्यशालित्वं युज्यत एव । ननु तथापैश्वर्यज्ञानविभूत्यायुधादीनां जडानां कथमीश्वरत्वमिति चेन्न, तेषां चेतनरूपाणां तत्तदाकृतिभिर्व्यवस्थितानां नित्यज्ञानवच्चेतनानां चैतन्यस्वभावानामीश्वरत्वं सगुणेश्वरत्वं निर्गुणेश्वरत्वं वाप्यविरुद्धमेव । अत एव—"सुदर्शनांशाच्छत्रुघ्नः संजज्ञेऽमितविक्रमः", कैकेय्यां भरतो जज्ञे पाञ्चजन्यसमुद्भवः", "अनन्तांशेन संभूतो लक्ष्मणः परवीरहा" इत्यादिभिः शत्रुघ्नस्य सहस्रार्जुनस्य च विष्णुसुदर्शनचक्रावतारत्वादिपरकः पद्मपुराणे वेदव्यासलेखोऽपि संगच्छते । एवं भारत्यवतारः सरस्वती भगवत्प्रसन्नात्वको धर्मो भगवत्संकल्पात्मको महाकाल इत्यादिप्रकरणान्यपि संगच्छन्ते ।

## ब्रह्म

अथ ब्रह्म—"यदक्षरं वेदविदो वदन्ति", "तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्", "विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः", "अपहतपाप्मा ह्येष ब्रह्मलोकः", "यस्मिन् लोका निहिता लोकिनश्च तदेतदक्षरं ब्रह्म", "लक्ष्यन्तेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः । तदाहुरक्षरं ब्रह्म", "ता वां वास्तून्युष्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि ॥"

"ब्रह्मज्योतिः सनातनम्", "यस्य भासा सर्वमिदं विभाति", "यद्-गत्वा न निवर्तन्ते तद्धाम परमं मम", "विरजो ह्येष ब्रह्मलोकः", "यद्विपश्यन्ति मुनयो गुणापाये समाहिताः" इत्यादिश्रुतिस्मृतिबोधितं स्वरूपतः स्वभावतश्चैकरूपत्वेन सत्यमक्षरणत्वेनाऽक्षरमजडत्वेनासंकुचितज्ञानत्वेन ज्ञानं जीवमायेश्वराणां व्यापकं प्रेरकं चान्तर्निहितं साक्षितया स्थितं परमाधारं सृष्टिप्राविर्भावाऽवनतिरोभावभूमिरूपं देशादिपरिच्छेदरहितं निरवयवं प्रकाशवन्तं ब्रह्मलोकात्मकधामरूपेण वर्तमानं भूमरूपममूर्तं ब्रह्मापि लीलाधृतदिव्याकृतिरूपेण परब्रह्मसेवास्थं मूर्तं नित्यमविकारि मायाया व्यक्तावस्थापादकं परब्रह्माधिष्ठितत्वाद् बृहत्त्वाच्च ब्रह्मेति तत्पर्यान्तरं सर्वदा व्यवस्थितम्।

केनोपनिषदि वाङ्मनश्चक्षुरादीनामभिद्योतकं व्यापकं चाक्षरं ब्रह्मैव, अग्निवाय्विन्द्रादौ बलाधायकमपि चोक्तम्।

कठोपनिषदि-"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्" इत्यनेनाक्षरं ब्रह्मैव प्रतिपादितम्। अग्रेऽपि—"यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि" इत्यत्राऽक्षरब्रह्मलोकस्य पदशब्देन कथितत्वात्। ततश्च—"एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्। एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्॥", "एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते", "यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्" इत्यादिभिरक्षरं ब्रह्मैव प्रतिपादितम्। अग्रेऽपि—"अस्पर्शमशब्दम्" इत्यादिना ब्रह्मज्ञानोत्तरं "मेधावी ब्रह्मलोके महीयते", "तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते", "तस्मिन् लोकाः निहिताः सर्वे" इत्यादिभिरक्षरामृतपदप्राप्तिरुक्ता। एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च" इत्यनेनाक्षरं ब्रह्म व्यापकमुक्तम्। "न तत्र सूर्यो भाति", "तस्य भासा सर्वमिदं विभाति" इत्यादिभिरक्षरं ब्रह्मैव सुप्रकाशमानं प्रदर्शितम्। एवं तत्र "अत्र ब्रह्म समश्नुते" इत्यनेनाक्षरब्रह्मानुभवोऽभिहित इति।

प्रश्नोपनिषदि च—"सुकेशा भारद्वाजादयो हैते ब्रह्मपरा ब्रह्मनिष्ठाः परब्रह्मान्वेषमाणाः पिप्पलादमुपसन्नाः" इत्यनेनाक्षरब्रह्मपराणां तेषां परब्रह्मान्वेषणपरत्वप्रतिपादनेन ब्रह्मणः परब्रह्मणोऽतिरिक्तता प्रतिपादिता। "तेषामसौ ब्रह्मलोको येषु सत्यं प्रतिष्ठितम्" इति ब्रह्मलोकपदेनाक्षरं पदं प्रतिपादितम्। "यजमानमहरहर्ब्रह्म गमयति" इत्यनेनाप्यक्षरं ब्रह्म प्रतिपादितम्। "एष हि द्रष्टा स्प्रष्टा विज्ञानात्मा पुरुषः स परेऽक्षरे आत्मनि सम्प्रतिष्ठते" इत्यनेन जीवात्मनोऽक्षरे ब्रह्मणि प्रतिष्ठानं प्रतिपादितम्। "परमेवाक्षरं प्रतिप-

ध्यते यो ह शुभ्रमक्षरं वेदयते" इत्यनेनाक्षरब्रह्मणो वेदनेनाक्षरपद-प्राप्तिरभिहिता। "एतद्वै सत्यकाम परं चाऽपरं च ब्रह्म यदोङ्कारः" इत्यनेनापरं ब्रह्माऽक्षरं ब्रह्म, परं ब्रह्म पुरुषोत्तम इति प्रतिपादितम्। "स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते" इत्यनेन जीवात्परमक्षरं ततः परं पुरुषं पुरुषोत्तममीक्षते इत्यभिहितम्।

मुण्डकोपनिषदि—"परायया तदक्षरमधिगम्यते", "तथाऽक्षरात् संभवतीह विश्वम्", "यः सर्वज्ञः स सर्वविद् यस्य ज्ञानमयं तपः। तस्मादेतद् ब्रह्म नाम रूपं च जायते॥" इत्यादिभिः सर्वज्ञात्परमात्मनोऽक्षरं ब्रह्म नाम रूपं च स्थौल्यमापद्यत इत्यभिहितम्। "येनाक्षरं पुरुषं वेद", "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः॥" इत्यनेन मायादिभ्यः परं यद् ब्रह्माऽक्षरं तत्परो दिव्यः पुरुषः परमात्मा वर्णितः। "यदर्चिमदणुभ्योऽणु यस्मिँल्लोका निहिता लोकिनश्च तदेतदक्षरं ब्रह्म" इत्यनेनाऽक्षरं सृष्ट्याधारं वर्णितम्। "यः सर्वज्ञः सर्वविद् यस्यैष महिमा भुवि। दिव्ये ब्रह्मपुरे ह्येष व्योम्नि आत्मा प्रतिष्ठितः॥" इत्यनेन परमात्मनोऽक्षरब्रह्मणि प्रावस्थितिरुक्ता। "तस्य भासा सर्वमिदं विभाति", "ब्रह्मैवेदं विश्वं वरिष्ठम्" इत्यादिभिरक्षरं प्रकाशक प्रकाशघनं विश्वशरीरकं चाभिहितम्। "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते", "समाने वृक्षे पुरुषो निमग्नः", "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्" इत्यादिभिरात्मनः साक्षिणमाश्रितस्य मोहत्यागोत्तरं दिव्यनेत्रस्य पुरुषोत्तमदर्शनजन्याऽपहतपाप्मत्वादिरूपाऽक्षरब्रह्मसाम्यता परब्रह्माऽवाप्तिश्चाऽभिहिता। "स वेदैतत् परमं ब्रह्म धाम", "उपासते पुरुषं ये" इत्यादिभिर्ब्रह्मधामज्ञानवान् यस्तस्य पुरुषोत्तमोपासनायां विवर्धमानायां तत्र पुरुषोत्तमफलप्राप्तिः प्रतिपाद्यते। "यमेव एष वृणुते तेन लभ्यः" इत्यनेन श्रीपुरुषोत्तमकृपया पुरुषोत्तमः प्राप्यते, तदानीं "एतैरुपायैर्यतते यः स विशते ब्रह्मधाम" इति ब्रह्मलोकप्राप्तिर्दर्शिता। "ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे", परात्परं पुरुषमुपैति दिव्यम्", "ब्रह्मवेद ब्रह्मैव भवति" इत्यादिभिः पुरुषोत्तमोपासनया ब्रह्मभावावाप्तिः प्रदर्शिता।

ऐतरेयोपनिषदि—"आत्मा वा इदमेक एवाऽग्र आसीत्", "स ईक्षत लोकान्नु सृजा इति", "स इमान् लोकानसृजत", "स एतमेव पुरुषं ब्रह्म ततमपश्यत्" इत्यादिभिः श्रीपुरुषोत्तमेनैकेन

प्रेरितं ब्रह्माऽक्षरं व्यापकं प्रतिपाद्यते।

भृगुवल्ल्युपनिषदि—"यतो वेमानि भूतानि जायन्ते तद् ब्रह्म", "आनन्दो ब्रह्मेति व्यजानात्" इत्यादिभिरक्षरब्रह्मणि कारणताऽऽनन्दात्मकता च दर्शिता।

बृहदारण्यके—'स अकामयत द्वितीयो मे आत्मा जायेतेति", "आत्मैवेदमग्र आसीत् पुरुषविधः", "एकाकी न रमते स द्वितीयमैच्छत्" इत्यादिभिः श्रीपुरुषोत्तमं निरूप्य, ततः—"ब्रह्म वा इदमग्र आसीत्", "ब्रह्म एतद्धि सर्वाणि रूपाणि बिभर्ति" इत्यादिभिरक्षरब्रह्मणः सर्वरूपाणि शरीराणि प्रतिपादितानि। ततश्च "द्वे वाव ब्रह्मणो रूपे मूर्तं चैवाऽमूर्तं च" इति श्रुत्याक्षरब्रह्मणो धामरूपता मूर्तिरूपता च प्रतिपादिता। तत्र ब्रह्मण्यक्षरे "सर्वे एते आत्मानः समर्पिताः" इत्यनेन सर्वेषां जीवेश्वरमायादीनां निलयनात्मकसमर्पणं दर्शितम्, तथैव—"कस्मिन्नु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति, कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गि माऽतिप्राक्षीः" इत्यादिभिः सर्वलोकानामक्षरे ब्रह्मण्योतप्रोततां प्रदर्श्य ब्रह्मलोकानामोतप्रोततां च परब्रह्मणि विद्यमानाम प्रश्नविषयिणीं कर्तुमुमना अत्यन्तिमं प्रश्नं मुनिर्निषेधितवानित्यनेन ब्रह्मैव वाग्विषयम्, परब्रह्म तु वाचामगोचरमिति व्यतिरेकिता परब्रह्मणो दर्शिता। "यः पृथिव्यां तिष्ठन्" इत्यारभ्याधिभूताधिदैवाध्यात्मान्तर्यामिस्वरूपम् "एष त आत्माऽन्तर्याम्यमृतः" इत्यन्तेन परमेशमभिधाय परमेशस्याक्षरेऽप्यन्तर्यामितां शरीरितां प्रोच्य "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च"; "तद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" इत्यादिभिरक्षरं ब्रह्मैवोतप्रोताश्रयमिति व्यापकतापि परमेशस्येवाक्षरब्रह्मणोऽपि तदाश्रिततत्त्वेषु प्रदर्श्यते। ततः "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिभिरक्षरब्रह्मण एव सूर्यादौ प्रशासनं विधारणं व्यापकत्वं च प्रवर्ण्यते, "वेद वाऽहं तं पुरुषं सर्वस्याऽऽत्मनः परायणम्" इत्यनेन च सर्वस्य आत्मत्वेनाक्षरब्रह्माभिधाय तस्याक्षरब्रह्मणोऽपि परायणं परब्रह्मेति, "तं त्वौपनिषदं पुरुषं पृच्छामि" इत्यनेन च पुरुषोत्तम एव प्रश्नविषयो दर्शितः, "विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्", "वाग्वै परमं ब्रह्म", "प्राणो वै परमं ब्रह्म", "आत्मा वै अस्य ज्योतिर्भवति", "पुरुषः प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद" इत्यादिभिर्जीवात्मपरिष्वक्ताऽक्षरब्रह्मात्मकज्योतिर्घनप्राज्ञविदः परायणं परब्रह्म प्राप्यतया प्रतिपादि-

तम्। "अद्वैतो भवत्येष ब्रह्मलोकः" "अस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति", "स एको ब्रह्मलोक आनन्दः", "एष परम आनन्द एष ब्रह्मलोकः" इत्यादिभिः श्रीपुरुषोत्तमस्याऽऽनन्दघनता तद्धाम्नोऽक्षरब्रह्मणस्तदानन्दाऽऽनन्दिता च दर्शिता। "ब्रह्मैव सन् ब्रह्माऽप्येति", "अत्र ब्रह्म समश्नुते", "वैद्युतान् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति तेषु ब्रह्मलोकेषु परावतो वसन्ति तेषां न पुनरावृत्तिः" इत्यादिभिर्ब्रह्मलोकप्राप्तिर्ब्रह्मविदः प्रोक्ता, यत्र परावतः परमैश्वर्यवन्त ईश्वरा मुक्ता वसन्तीति।

छान्दोग्ये—"माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत्" इत्यनेनाऽक्षरं ब्रह्म प्रस्तुतम्, अग्रे 'अक्षरमुद्गीथः' इत्यक्षरेण सहैकीकरणात्। तथाग्रे—"यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अभया भवन्ति" इत्यनेनाक्षरब्रह्मलोके प्रवेशेन देवानां मुक्तानाममृतत्वं प्रतिपादितम्। अग्रे—"य एषोऽन्तरक्षिणि पुरुषो दृश्यते तद् ब्रह्म" इत्यनेनाक्षरब्रह्मप्रकाशो वर्णितः। "सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्योज्यायानाकाशः परायणम्" इत्यनेनाऽक्षरब्रह्मलोकात्मकाकाशो भूतानामुद्भवादिस्थानं परस्य ब्रह्मणोऽयनं चेति वर्णितः। "ब्रह्मसंस्थोऽमृतत्वमेति", "तावानस्य महिमा ततो ज्यायाँश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥" "यद्वैतद् ब्रह्म", "तदेतत्पूर्णमप्रवर्ति" इत्यादिभिः प्रतिपादितेऽक्षरे ब्रह्मणि ज्यायान् पुरुषः पुरुषोत्तमोऽक्षरब्रह्मतो भिन्नतया वर्णितः। "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इत्यनेन सर्वकारणं व्यापकमक्षरं ब्रह्म वर्णितम्। "मनोमयः प्राणशरीरः", "अन्तर्हृदये एतद् ब्रह्मैतमितःप्रेत्याऽभिसंभविताऽस्मि", "तदेतद्ब्रह्म चतुष्पात्", "ब्रह्मणस्ते पादं ब्रवाणि", "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म", "आदित्ये चन्द्रमसि विद्युति पुरुषो दृश्यते", "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इत्यादिभिरीश्वरा अमानवा आतिवाहिका मुक्तिप्रस्थितानामक्षरब्रह्मलोकप्रापकास्तत्त्वान्तरतया दर्शिताः। "सदेव सौम्येदमग्र आसीदेकमेवाऽद्वितीयम्", "तदैक्षत बहु स्यां प्रजायेय", "सेयं देवतैक्षत हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि", "सता सौम्य तदा सम्पन्नो भवति स्वमपीतो भवति", "सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः", "तेजः परस्यां देवतायाम्", "स एषोऽणिमा ऐतदात्म्यमिदं सर्वं

तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्यादिभिः सत्यं सद् यद् ब्रह्म तस्मिन् गत्वा रसवल्लवणवन्नदीवच्चाऽपृथग्भावआत्मनो मुक्तसंज्ञस्य प्रतिपादितः। एवं नामवाङ्मनःसंकल्पचित्तध्यानविज्ञानबलान्नजलतेजोवाय्वाकाशस्मरणाऽऽशाप्राणादीनामक्षरब्रह्मरूपतां कथयित्वा "यो वै भूमा तत्सुखं नाऽल्पे सुखमस्ति", "यो वै भूमा तदमृतम्" इत्यादिभिरप्यक्षरब्रह्मणो व्यापकत्वं दर्शितम्। "स एवाऽधस्तात् स उपरिष्टात् स पुरस्तात् स दक्षिणतः स उत्तरतः" इत्यादिनाऽक्षरब्रह्मैव व्यापकं प्रतिपादितम्। "आत्मन इदं सर्वम्" इत्यनेन सर्वस्याऽक्षरतः प्रादुर्भावमुपपाद्य "स एकधा भवति त्रेधा भवति पञ्चधा" इत्यादिनाऽक्षरब्रह्मणो बहुधात्वं प्रतिपादितम्। "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" इत्यनेन दहरो जीवात्मा तत्राकाशोऽक्षरं ब्रह्म तस्मिन् यदन्तस्तत्परं ब्रह्मेति प्रतिपाद्यते। "ब्रह्मपुरे सर्वं समाहितम्", "सत्यं ब्रह्मपुरस्मिन् कामाः समाहिताः" इत्यनेनाऽक्षरं सर्वाधारं सर्वकामाश्रयं प्रतिपाद्य, ततः "एष आत्मा अपहतपाप्मा" इत्यादिना ब्रह्म च परब्रह्म चेत्युभयमष्टगुणवत् प्रतिपादितम्। "एवमेवेमाः सर्वाःप्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकम्", "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते। एष आत्मा तद् ब्रह्म तत् सत्यम्" इत्यादिभिर्मुक्तात्मा परंज्योतिरक्षरं ब्रह्म प्राप्य स्वेन परमात्मरूपेणाऽभिनिष्पन्नो भवतीति प्रतिपादितम्। "अपहतपाप्मा ह्येष ब्रह्मलोकः", "सकृद्विभातो ह्येष ब्रह्मलोकः", "एतं ब्रह्मलोकं ब्रह्मचर्येण विन्दन्ति", "तयोर्ध्वमायन्नमृतत्वमेति", "कृतात्मा ब्रह्मलोकमभिसंभवामि", "स खल्वेवं वर्तयन् ब्रह्मलोकमभिसंपद्यते, न च पुनरावर्तते" इत्यादिभिरक्षरब्रह्मलोकाऽवाप्तिरक्षरं ब्रह्म परब्रह्मतो भिन्नमप्यपृथक्सिद्धतनुरूपं व्यापकं प्रतिपादितम्।

## परब्रह्म

अथ परब्रह्म—'अथाऽतो ब्रह्मजिज्ञासा' इत्यत्र ब्रह्मशरीरकं परब्रह्म प्रस्तुतम्। 'आनन्दमयोऽभ्यासात्' इत्यनेनाऽऽनन्दघनत्वं परब्रह्मणः प्रोक्तम्। 'आनन्दमात्रकरपादमुखोदरादिः' इत्यनेन साकाराऽऽनन्दघनता प्रतिपादिता। 'यः सर्वज्ञः सर्ववित्', 'यो वेत्ति युगपत् सर्वं प्रत्यक्षेण सदा स्वतः', 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः', 'स त आत्माऽन्तर्याम्यमृतः', 'यः स्वभक्त्या रमते स मे सर्वस्वम्', 'ज्ञः का-

लकालो गुणी', 'प्रधानक्षेत्रज्ञपतिर्गुणेशः', 'सर्वस्य वशी सर्वस्येशानः' 'शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते। मैत्रेय भगवच्छब्दः सर्वकारणकारणे॥', 'परमात्मा स सर्वेषामाधारः पुरुषोत्तमः' (वि० पु०), 'आत्मात्मा चाऽक्षरात्मा च' इति (स्कन्दपु०), 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः (गीता), 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः', 'सर्वतो व्याप्त्या विष्णुः स', 'अनश्नन्नन्यो अभिचाकशीति', 'तावानस्य महिमाऽतो ज्यायाँश्च पुरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्याऽमृतं दिवि॥', 'ये ब्रह्मलोके तमात्मानमुपासते', छान्दोग्ये—'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्यादिश्रुतिस्मृतिसूत्राद्यैः श्रीपुरुषोत्तमोऽक्षरब्रह्मलोके निवसमानो दिव्यमूर्तिरुपास्यतया वर्णितः। 'भूतानि विष्णोः सुरपूजितानि दुर्दर्शलिङ्गानि महाद्भुतानि। रक्षन्ति तद्भक्तिमतः परेभ्यो मत्तश्च मर्त्यानथ सर्वतश्च॥' इति भागवते भूतपदेन मुक्तेश्वरा उक्ताः, 'अंशवो ये प्रकाशन्ते ममैते केशसंज्ञिताः' इति महाभारतेंऽशपदेन 'यत्र पूर्वे साध्याः सन्ति देवाः' इत्यत्र पूर्वसाध्यदेवशब्दैर्मुक्तेश्वरा अनादयो मुक्ता उक्ताः, 'सिसृक्षाऽथाऽभवत्तस्य ब्रह्माण्डानांयदा तदा। सकलाऽऽविर्बभूवादौ महामाया ततो हि सा॥', 'तां कालशक्तिमादाय वासुदेवोऽक्षरात्मना। सिसृक्षयैक्ष त यदा सा चुक्षोभ तदैव हि॥' इति स्कान्दे परमेश्वरेण कालशक्तियुक्ता माया प्रकटीकृता, सा परब्रह्मणा कालशक्त्याऽक्षरब्रह्मयुक्तया क्षोभार्थमीक्षितेति सर्वत्राऽक्षरब्रह्मजीवेश्वरचेतनमिश्रितेति ब्रह्मविशिष्टा प्रतिपाद्यते।

सामान्यतः सिद्धमपि विशेषतः सिद्धिविषयं कर्तव्यं भवतीति प्रोक्त-श्रुतिस्मृत्यादिभिर्बद्धं यज्जीवतत्त्वं बन्धनात्मकमायातत्त्वं तदनयोरधिष्ठातृदेवतासाक्षिमुक्तैश्वर्याऽऽयुधांऽशाद्यात्मकेश्वरतत्त्वं चेति त्रयं सर्वदाऽक्षरब्रह्मणा ओतं च प्रोतं च भवतीति स्थूलसूक्ष्मचिदचिद्विशिष्टमक्षरब्रह्मैव परब्रह्मणः शरीररूपं जगज्जन्मादिकारणरूपं सर्वथा प्रतिपादितम्। श्रीहरिः श्रीपुरुषोत्तमो व्यतिरेकतया स्वतः स्वराट् परब्रह्म स्वेऽक्षरे धाम्नि विराजते। स च पुरुषाकारदिव्याऽक्षरात्मना शरीरेण ब्रह्मणा मुक्तैरैश्वर्यैरायुधैः सिद्धिभिर्भूषणैर्गुणैः शक्त्यादिभिरीशैश्च सेव्यते, तानि सर्वाणि परब्रह्मशरीराणि ब्रह्मपदवाच्यानि, एवमेतच्छ्रुतिस्मृतिदर्शनादिषु निरूपितं भवतीति। तादृशब्रह्मात्मकपुरुषविशिष्टा च महामाया सृष्ट्यपूर्वमूर्तिरीशजीवादिभि-

गभूमिरिति भवति, माया ब्रह्मशरीरं ब्रह्मभोग्या जीवेश्वराधिष्ठिता जीवेश्वरभोग्या चेति स्थूलसूक्ष्मावस्थजीवेशमायाविशिष्टं ब्रह्मैवेति भवतीति विशिष्टब्रह्म परब्रह्मशरीरमेवेति विशिष्टब्रह्माद्वैतमिति परिष्कृतं यथावस्थिततत्त्वानुसारि मतं सर्वाऽविरुद्धं विशिष्टाद्वैतस्थानं कथं नाऽधिरोहेत्? अत्र च परब्रह्मशरीरे व्यापके ब्रह्मण्येव सर्वथा सर्वमतानुगतकारणतावैविध्यसंघटनं परब्रह्मणस्तदस्पर्शनं चेत्यादिवादानां सुसंगतिः सम्पद्यत इति विशिष्टं यदक्षरं ब्रह्म तत्राऽद्वैतं परं ब्रह्मेति विशिष्टब्रह्माऽद्वैतमेव मतं सुनिष्पन्नं स्थितिपदं लभते। यथाऽऽत्मनां स्थूलसूक्ष्मकारणानीश्वराणां विराट्सूत्रात्माऽव्याकृतानि शरीराणि तद्वत् परब्रह्मणः पृथिव्यादितत्त्वगर्भमाया स्थूलसूक्ष्मभावात्मिका जडशरीरम्। तस्यां चेतना जीवेश्वराः स्थूलसूक्ष्मदशापन्नाश्चेतनशरीरम्, मायायामनुस्यूतं चैतन्यापादकं द्वितीयमिदमान्तरं परब्रह्मणः शरीरम्। तदेवं जीवेश्वरादिचेतनवृन्देऽन्तः प्रविश्य व्यापकं तेजोमयं व्यष्टिसमष्टिप्रकारं प्रकाशघनम् अक्षरब्रह्मात्मकमान्तराऽङ्गैकरसं तृतीयं शरीरम्। इत्येवं जडशरीरान्तःप्रविष्टचेतनशरीराऽन्तःप्रविष्टब्रह्मशरीराऽन्तःप्रविष्टः परब्रह्मपरमात्मा शरीरीति जडविशिष्टचेतनविशिष्टब्रह्मवैशिष्टं परं ब्रह्मेति विशिष्टब्रह्माद्वैतं कार्यकारणात्मकं 'सर्वं खल्विदं ब्रह्म नेह नानाऽस्ति किञ्चन' इत्यादिवेदान्तैर्वर्णितं सुवचं भवतीति शम्॥ सा० षु० २०१७'१'१ व० २॥

वचनामृततरंग १२७ श्रुतिः 'सच्चिदानन्दरूपं यद् ब्रह्म निर्गुणमक्षरम्, अंगप्रकाशस्तत्त्वस्य धाम चेत्युक्तमस्ति हि॥ ११॥ कोटिकोट्यर्कवत् स्वांगतेजोव्याप्यतया स च, ज्योतीरूप इति प्रोक्तो दुर्लक्ष्यांगत्वतस्तथा॥ १३॥ निराधारं न तेजः स्यादिति सर्वत्र दृश्यते, तदंगकान्तितेजोऽतो यद् ब्रह्मेत्युच्यतेऽक्षरम्॥ १४॥ वचनामृतश्रुतिः प्रथमे एकविंशे—'एकान्तिको भक्तो देहं त्यक्त्वा मायाभावेभ्यो मुक्तो भूत्वाऽर्चिमार्गेण भगवतोऽक्षरधाम प्राप्नोति, तस्याऽक्षरस्य द्वे स्वरूपे स्तः, एकं तु निराकारमेकरसं चैतन्यं विद्यते, तदेव चिदाकाशं ब्रह्ममहोलं च कथ्यते, तदेवाऽक्षरं द्वितीयेन रूपेण पुरुषोत्तमनारायणस्य सेवायां वर्तते, तद् अक्षरधाम प्राप्तोऽपि भक्तस्तस्याऽक्षरस्य साधर्म्यं प्राप्नोति, अथ च भगवतोऽखण्डसेवायां तिष्ठति।' तस्मिन्नक्षरधामनि श्रीकृष्णपुरुषोत्तमनारायणः सदा विराजमानोऽस्ति, तस्मिन्नक्षरेऽक्षरसाधर्म्यापन्ना अनन्तकोटिमुक्ता निवसन्ति, ते सर्वे पुरुषोत्तमस्य दास्ये वर्तन्ते। स पुरुषोत्तमनारायणः सर्वेषां स्वाम्यस्ति, अनन्तकोटिब्रह्माण्डानां राजाधिराजोऽस्ति, अतो-

ऽस्माभिस्तेषामक्षररूपमुक्तानां पंक्तौ प्रवेशितव्यम्, अक्षरधाम्नि गत्वाऽखण्डभगवत्सेवायां समीपे स्थातव्यमिति ॥ मध्ये द्वाचत्वारिंशे वचनामृते श्रुतौ—भगवतो यदक्षरं धाम तस्य द्वे रूपे स्तः, एकं सगुणरूपम्, द्वितीयं निर्गुणरूपम्, अथ पुरुषोत्तमनारायणस्तु सगुणोऽपि न निर्गुणोऽपि न वर्णयितव्यः, सगुणनिर्गुणभावस्त्वक्षरे एवाऽस्ति, तदक्षरं निर्गुणरूपेण त्वणुतोऽप्यतिसूक्ष्मस्वरूपेणाऽस्ति, अथ सगुणस्वरूपेण तु यावन्तो महान्तः पदार्थास्तेभ्यः सर्वेभ्योऽप्यतिशयेन महत्तमं विद्यते, तस्याऽक्षरस्यैकैकस्मिन् रोम्णि अणुवत् अनन्तकोटिब्रह्माण्डानि उड्डयन्ति, तानि ब्रह्माण्डान्यक्षरे न लघुभावं यान्ति किन्तु तान्यष्टावरणसमेतान्यपि अक्षरस्यातिशयमहत्तमतायाः सादृश्येऽतिशयितलघूनि दृश्यन्ते । प्रथमस्य त्रिषष्टितमे वचनामृते श्रुतौ—ईदृशा अनन्तकोटयो ये विराट्पुरुषास्तेषां स्वामी यः परपुरुषोत्तमो भगवान् तस्य धाम यदक्षरं तस्मिन्ननन्तकोटिब्रह्माण्डानि एकैकरोम्णि अणुवद् उड्डयन्ते विचरन्ति च, एतादृशं तस्य भगवतो धामाऽस्ति,⋯भगवतो यदक्षरधाम तत्तु अत्यन्तमहदस्ति,⋯प्रधानपुरुषयोः कारणं मूलप्रकृतिः ब्रह्म च विद्येते, एतेषां सर्वेषां कारणम् अक्षरब्रह्माऽस्ति, तदक्षरम् पुरुषोत्तमभगवतो धामाऽस्ति, अस्याऽक्षरस्य संकोचविकासावस्थे न भवतः, तत् सदैकरूपेण वर्तते, तदक्षरं मूर्तिमदस्ति, तस्याऽति महद् रूपमस्ति, अतः कस्याऽपि दृष्ट्याम् अक्षरस्य रूपं नाऽऽयाति,⋯अक्षरधामाऽपि मूर्तिमदस्ति, तस्मिन्नक्षरधाम्नि परपुरुषोत्तमो भगवान् सदा विराजमानः सन्नपि स्वान्तर्यामिशक्त्याऽक्षरधामाऽनन्तकोटिब्रह्माण्डतदीश्वरादावन्वयतया वर्तते, अक्षरधामनि स्वसाधर्म्यापन्नाऽनन्तकोटिमुक्ता भगवत्सेवायां वर्तन्ते । प्रथमे पञ्चचत्वारिंशे वचनामृते श्रुतौ–'अथाऽन्तर्यामिरूपेण सर्वत्र पूर्णं सच्चिदानन्दं यद् ब्रह्म तत्त सुमूर्तेः पुरुषोत्तमभगवतस्तेजोऽस्ति,⋯सच्चिदानन्दं यद् ब्रह्म तत्तु निराकारं विद्यते, अथ यः पुरुषोत्तमो भगवान् स तु साकारो विद्यते, अथ च सर्वत्र पूर्णं यत् सच्चिदानन्दं ब्रह्म तत् पुरुषोत्तमभगवतस्तेजो विद्यते,⋯एवम् अन्तर्यामिरूपेण जीवेष्वीश्वरेषु च व्यापकं यत् पुरुषोत्तमभगवतो ब्रह्मरूपं तेजस्तत्तु निराकारं विद्यते यद्यपि, तथापि जीवेभ्य ईश्वरेभ्यः सर्वेभ्यस्तेषां कर्मानुसारेण यथायोग्यतया कर्मफलानि दातुं नियन्तृ विद्यते, तथा साकारमिव नियन्तृक्रियां करोति, अतः स्वतेजोऽपि साकारनिभं ज्ञातव्यम् ।

श्रीपुरुषोत्तमपरब्रह्मणोऽक्षरब्रह्मात्मकस्वतेजोद्वारा व्यापकत्वे

मूर्तिमत एकदेशस्थत्वेऽपि सर्वदेशस्थत्वे वचनामृतश्रुतयः—

प्रथमे षट्चत्वारिंशत्तमे–ब्रह्मसाक्षीरूपो यः कोटिकोटिसूर्यसमप्रकाशः स तु पुरुषोत्तमभगवतो मूर्तेः प्रकाशो विद्यते····ऐकान्तिकसन्तस्तु भगवतो मूर्तिम् अक्षरातीतां विदन्ति, तथा मूर्तिमान् यः पुरुषोत्तमो भगवाँस्तं तु ब्रह्मरूपा येऽनन्तकोटिमुक्ता अक्षरधाम च, एतेषां सर्वेषाम् आत्मरूपं विदन्तीति। प्रथमे दशमे–तद्वत् यः पुरुषोत्तमो भगवान् स तु ब्रह्मरूपा या स्वाऽन्तर्यामिशक्तिस्तद्द्वारा सर्वेषु व्यापकोऽस्ति एवमपि मूर्तिमान् सन् सर्वेभ्यो व्यतिरिक्तोऽस्ति,अथ यद् ब्रह्माऽस्ति तत्तु पुरुषोत्तमभगवतः किरणमस्ति,भगवत्स्वरूपनिश्चयवतो भगवदक्षरधामप्राप्त्यात्मकफलं भवतीति ।। मध्ये तृतीये–अथ ब्रह्मज्ञानस्य पद्धतौ त्वेवं बोद्धव्यं यत्'–यद्धि ब्रह्म तत्तु निर्विकारं निरंशं चास्तीति तत् विकारं न प्राप्नुयात्, तथा तस्यांऽशा अपि न भवेयुः, अथ तद्ब्रह्म सर्वरूपं वर्ण्यते तत्तु अनया रीत्या बोध्यम्,यत्, तद्ब्रह्म प्रकृतिपुरुषादिसर्वेषां कारणम् आधारं सर्वेषु अन्तर्यामिशक्तिद्वारा व्यापकं च वर्तते, यच्चकारणमाधारं व्यापकं च भवेत् तद् व्याप्यकार्यात् पृथङ् न वर्ततेति कारणश्रुत्या ब्रह्म सर्वरूपं वर्णितम्, न तु तद् ब्रह्म विकारमाप्य चराचरजीवरूपं संभूतमिति, एतस्माद् ब्रह्मणस्तु परब्रह्म पुरुषोत्तमनारायणो व्यतिरिक्तोऽस्ति एतस्य ब्रह्मणोऽपि कारणमाधारः प्रेरकश्चास्ति,इत्येवं ज्ञात्वा स्वजीवात्मनस्तेन ब्रह्मणा सहैक्यभावं कृत्वा परब्रह्मणः स्वामिसेवकभावेनोपासनां कुर्यात्, एवं ज्ञातुर्ब्रह्मज्ञानं परमपदप्राप्तेर्निर्विघ्नोपायोऽस्तीति ।। मध्ये विंशतितमे वचनामृते श्रुतौ–जीवस्य यदा समाधिराविर्भवति तदेन्द्रियाऽन्तःकरणद्रष्टृत्वं विहाय मायापरं यद् ब्रह्म तत्समानः स जीवश्चैतद्रूपो, भवति····अथ साक्षि यद् ब्रह्म तत्तु मायाजन्यचतुर्विंशतितत्त्वात्मकब्रह्माण्डे प्रविश्य तच्चैतन्यमयं करोति, तथा तस्मै सर्वक्रियाकरणसामर्थ्यमर्पयति, तस्य ब्रह्मण एतादृशः स्वभावोऽस्ति यत् काष्ठपाषाणसमजडवस्तुष्वपि प्रविशति तदा तानि चलनकम्पनस्वभावानि भवन्ति,-तेन ब्रह्मणा समाधिद्वारा तुल्यत्वं यदा प्राप्नुयाज्जीवस्तदा सोऽपि ब्रह्मरूपो वर्ण्यते,तस्य ज्ञानस्य विकासो जायत इति । मध्येत्रिंशत्तमे वचनामृते–प्रकृतिपुरुषात्परं शुद्धं चैतन्यं यद् ब्रह्म तदेव सत्यं यो जानाति तद् ब्रह्मैव स्वस्य स्वरूपं मनुते,तद्ब्रह्मरूपो भूत्वा परब्रह्मणः श्रीकृष्णभगवतो भजनं कुर्यात् ।। मध्ये एकत्रिंशे वचनामृते–अक्षरातीतपुरुषोत्तमो वासुदेवभगवान् महापुरुषरूपेण महामायायां वीर्यमासिञ्चति, स पुरुषोऽक्षरात्मको मुक्तोऽस्ति,तद् ब्रह्मेति कथ्यते,····जीवो यदा जानाति मम स्वरूपं तु मायाया मुक्तं मायापरं यद्ब्रह्म तदस्ति, एवं निरन्तरं मननं

कुर्वन् ब्रह्मसंगं करोति तदा ब्रह्मगुणास्तस्मिन् जीवे समायान्ति,....निर-न्तरं स्वप्रकाशकस्य ब्रह्मणो मननद्वारा संगकर्तुर्मायासम्बन्धो विलीयते। अक्षरात्मकपुरुषा ब्रह्मरूपा अपाराः सन्ति, एवं पुरुषोत्तमः, पुरुषः, ईश्वरः, जीवः,माया चेतिपञ्चभेदा अनादयः सन्ति, अत्र पुरुषपदेन एकवचनान्त-मक्षरं ब्रह्म पुरुषोत्तमापेक्षया पुरुष इत्युक्तम्। अक्षरात्मकपुरुषा इतिब-हुवचनेन ब्रह्मसमा मुक्ता उक्ताः, ब्रह्मत्वेन चतुर्थतत्त्वे समावेशः कृतः।। मध्ये पञ्चाशत्तमे वचनामृते-एकरसपरिपूर्णं यद् ब्रह्मस्वरूपं तस्मिन् मया ममात्मा लीनीकृतोऽस्ति अथ च तत् तेजोमयं यदक्षरं ब्रह्म तस्मिन् मूर्तिमान् यः पुरुषोत्तमो भगवान् तथा तस्य भगवतो ये भक्तास्तेष्वख-ण्डिता प्रीतिः सुयोजिताऽस्ति।। मध्ये त्रयोदशे वचनामृते-तद् यद् एक-रसं तेजः, तद् आत्मेति प्रोच्यते, ब्रह्मेति प्रोच्यते अक्षरधामेति प्रोच्यते,-तस्मिन् प्रकाशे या भगवतो मूर्तिः, सा आत्मनस्तत्त्वं प्रोच्यते,परब्रह्म प्रोच्यते, पुरुषोत्तमः प्रोच्यते,सः अक्षरधामाधिपतिः, अक्षरातीतः कैव-ल्यमूर्तिः प्रोच्यते।। लोयाग्रामस्य चतुर्दशे वचनामृते-सर्वेभ्यः पर एको महान् तेजःसमूहो वर्तते स तेजःसमूहोऽधःसमन्ततः सीमप्रमाणरहितो-ऽनन्तो वर्तते, तत्तेजःसमूहमध्यमभागे महत् सिंहासनं विद्यते तदुपरि दिव्यमूर्तिः श्रीनारायणः पुरुषोत्तमो भगवान् विराजते सिंहासनस्य स-मन्ततोऽनन्तकोटिमुक्ता निषण्णा नारायण दर्शनं कुर्वन्ति।। प्रथमे स-प्तमे वचनामृते-स्वगोलोकधाम्नि यद् ब्रह्मज्योतिस्तस्मिन् विराजते भगवान् व्यतिरेकस्वरूपः।। लोयाग्रामस्य सप्तदशे वचनामृते-यस्य भगवतः शक्तिः कालो माया पुरुषोऽक्षरश्चेति।....अथाऽक्षरं त्वीदृशम-स्ति अक्षरसम्बन्धिसुखमपीदृशमस्ति,....ब्रह्मलोकसम्बन्धिसुखमपीदृशमस्ति।। पंचालायाः सप्तमेवचनामृते-धामयत् स्वस्य स्वरूपं तद्द्वारा नाशितं मायिकसर्गरूपं कपटं येन तदीदृशं भगवतः परमं सत्यस्वरूपमस्ति, तत् आत्यन्तिकप्रलयस्याऽन्तेऽपि अक्षरधाम्नि यादृशं भगवतः स्वरूपम् अन-न्तैश्वर्यतेजोभिर्युक्तमस्ति।। पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान्।। प्रथमे सप्तमे वचनामृते-मायायां मायाकार्येषु चाऽनन्तकोटिब्रह्माण्डेषु व्यापकत्वेन रूपेण यदक्षरब्रह्मणो निर्वचनं स तस्याऽन्वयभावः, एतेभ्यः सर्वेभ्योव्यतिरेकत्वेन यदक्षरब्रह्मणो निर्वचनं स तस्य व्यतिरेकभावः। ....स्वस्य गोलोकधाम्नि यद् ब्रह्मज्योतिस्तस्मिन् वर्तते इति कथनं स भगवतो व्यतिरेकभावः।। पञ्चालायाः प्रथमे वचनामृते-अथ यदक्षरं ब्रह्मास्ति तत्तु तस्य भगवतो निवासस्य धामाऽस्ति,....अतो भगवतो धाम्नः सुखस्याऽतिशयितत्वं बुद्धिमतोऽवबोधविषयं भवति,....भगवतोऽ-क्षरधाम्नः सुखमत्यधिकं वर्तते,....भगवतो धाम्नः सुखं विचारयामस्तदा

सर्वाणि यान्यनित्यानि सुखानि तेभ्य औदासीन्यं जायते ।। मध्ये त्रयोदशे वचनामृते–कारियाण्या अष्टमे–निर्गुणत्वं सगुणत्वं तु तस्या मूर्तेरलौकिकमैश्वर्यमस्ति ।। प्रथमे चतुःषष्टितमे–आत्माऽक्षरं चोभयं पुरुषोत्तमस्य शरीरम्,व्याप्यम् अधीनं परतन्त्रं चेति ।। पंचालायाः प्रथमे यदक्षरब्रह्मास्ति तत्तु तस्य भगवतो निवासाय धामाऽस्ति ।। कारियाण्या दशमे–ब्रह्मसमस्तथाऽक्षरसमोऽपि भवेत् किन्तु पुरुषोत्तमनाराणणसमो भवितुं न कश्चित्समर्थः, ।। प्रथमे एकपञ्चाशत्तमे–महापुरुषोऽपि भगवतो धाम यदक्षरं तस्यैकदेशात् समुत्तिष्ठतेअक्षरात्परोऽक्षरातीतः पुरुषोत्तमो भगवान वर्तते ।। सारंगपुरस्य सप्तदशेअक्षरधाम्नि निवसन्तोऽक्षरमुक्तास्तत्समा अधिकोपासनावन्तो भक्ता गरुडसमाः ।। प्रथमे चतुःषष्टितमेनिराकारं द्रष्ट आत्मा भगवन्निर्गुणस्वरूपम् । साकारं दृश्यम् अक्षरं ब्रह्म आत्मना दृश्यमिति । साकारं यदक्षरं ब्रह्म,तत्कारणं तदाधारं तद्व्यापकं तन्नियन्तृ तद्द्रष्टृ तदात्मरूपं भगवत्तेजोरूपं निराकारं ब्रह्मज्योतिराख्यं ब्रह्मपुरम् अमृतधाम् परमपदम् अपारम्ब्रह्म चिद्आकाशंम् अक्षरधाम भगवत्प्रकाशरूपं सर्वाधारं समन्ततासीमतारहितम् औपनिषदो ब्रह्मलोक उक्तः ।। 'ब्रह्म चिदाकाशः, ब्रह्ममहोलः सच्चिदानन्दम्,ब्रह्मपुरम्सर्वाधारम्,तेजःसमूहः,महातेजः,शक्तिः,कान्तिः,अक्षरधाम,परमपदम्,किरणम्,अक्षरब्रह्म,ब्रह्मज्योतिः,एकरसतेजः,चिद्घनंतेजः,प्रकाशरूपम्,धाम,तेजोमण्डलंतेजोमयम्,गुणातीतम्,चैतन्यतेजोराशिः,दिव्यधाम,निर्गुणधाम,चैतन्यमयम्,भगवत्प्रकाशः,एतानि अक्षरब्रह्मनामानि कथितानि । वचनामृतेषु निराकारं साकारं चाऽक्षरब्रह्म यथाप्रकरणं दर्शितम् । तत्र साकारस्वरूपाणि प्रोक्तानि निर्दिश्यन्ते–'पं० ७ मे–श्रीहरेरन्वयतया व्याप्यं साक्षरमक्षरब्रह्म प्र०११–स्वं ब्रह्मरूपं मत्वा प्र०२१तदेवाऽक्षरम् अन्वयरूपेण पुरुषोत्तमसेवायां वर्तते । प्र०१२अक्षरपुरुषरूपेण । प्र०३३भगवान् अक्षररूपेण वर्तते । प्र०४१भगवान् अक्षरसन्मुखं पश्यति । पुरुषोत्तमोऽक्षरे प्रविश्य । अक्षरेऽस्ति, अक्षरेऽन्तर्यामितया विद्यते । प्र०६३–अक्षरधाम मूर्तिमदस्ति,अत्यन्तं महदस्ति, । प्र०६४–पुरुषोत्तमभगवतः शरीरम् आत्मा अक्षरं च स्तः । प्र०७२–भगवान् अक्षरब्रह्मण आत्माऽस्ति ।। सा०५–यस्मिन् पुरुषोत्तमो भगवान् वसति एतदक्षरस्य व्यतिरेकस्वरूपं साकारम् वर्तते । का०८–अक्षरस्यात्मा पुरुषोत्तमः, अक्षरं भगवतः शरीरम् । का०१०ब्रह्मणाऽक्षरेण समाना भवेयुः । लो०४तत्समो भवितुम् अक्षरपर्यन्तः कोपि समर्थो नास्ति । लो०७–अक्षरादपि चोत्तमः । लो०१०–अक्षरस्यापि आत्माऽस्ति । लो०१३–अक्षरमपि नैव कथ्यते भगवान् । लो०१५–अक्षररूपेण । इदमक्षरमस्ति । लो०१७–अक्षरं पुरुषो-

त्समशक्तिः । लो–१८अक्षरस्य भाव आगच्छेत् । प्र०२१–अक्षरस्य साधर्म्यम् । प्र० ३१–अक्षरातीतो भगवान् । प्र० ३३–अक्षररूपेण वर्तते । प्र० ४०–अक्षरब्रह्मणः साधर्म्यम् । ब्रह्मरूपो भवेत् । प्र० ४१–अक्षरसन्मुखं पश्यति । अक्षरे प्रविश्य । यादृशोऽक्षरेऽस्ति । अक्षरेऽन्तर्याम्यस्ति ।। प्र०४२गुणातीतदिव्यमूर्तिः, गुणातीताःब्रह्मतनुः । प्र०४५.–आत्मानं ब्रह्मरूपं मत्वा । प्र०५६–ज्ञानी ब्रह्मरूपेण वर्तते । प्र०६३–प्रकृतिपुरुषाऽक्षरा मूर्तिमन्तः सन्ति । तदक्षरं मूर्तिमदतिमहत्तमस्ति । अक्षरे प्रविश्याऽक्षररूपो भवति । प्र०६४–पुरुषोत्तमभगवतः शरीरमात्माऽक्षरं च वर्तते । भगवान् स्वान्तर्यामिशक्त्याऽऽत्मसु अक्षरे च व्याप्नोति । आत्माऽक्षरयोः प्रेरकः । परात्परादक्षरादपि परः । ब्रह्मभावं प्राप्तः । प्र० ६६–ब्रह्मरूपा अनन्तकोटिमुक्ताः, अक्षरधाम चेत्येतेषामात्मानं जानन्ति । प्र० ७१–ब्रह्मरूपा अनन्तकोटिमुक्ताः । प्र० ७१ चैतन्यमूर्तयः । स्वस्याऽक्षरधाम चैतन्यमूर्तिपार्षदाः । भगवत्स्वरूपम् अक्षरधामसहितं पृथिव्यां बोद्धव्यम् । प्र० ७२–क्षराऽक्षराभ्यां परः पुरुषोत्तमः । अक्षरब्रह्मण आत्मा । क्षराऽक्षरे स्वशक्त्या धारयति, क्षराऽक्षराभ्यां पृथगस्ति । प्र० ७३–स्वयं ब्रह्मरूपो भवन् वर्तेत । ब्रह्म ततः परं परब्रह्म । ब्रह्मस्वरूपात् । ब्रह्मदर्शनम् । प्र० ७७ ब्रह्मरूपो भूत्वा, ब्रह्मरूपः स्वजीवात्मा । प्र० ७८ अक्षरातीतः । सारं० ५–अक्षरब्रह्माऽन्वयभावेन कीदृक् । तद् अक्षरस्य व्यतिरेकस्वरूपमस्ति, अक्षरहृदये साक्षितया वर्तते, अक्षरात्परोऽक्षरातीतः । सा० ६ ब्रह्मपरब्रह्मणोर्भेदं पृथक् संवर्णयेत् । सा० १२, आत्मानं ब्रह्मरूपं मनुते, ब्रह्मणि परब्रह्माऽखण्डितो विराजते । सा० १४ भागवतीतनुः । का० ५ भगवान् अक्षरधाम्नि मूर्तिमान् सन् स्वान्तर्यामिशक्त्या जीवेषु व्याप्य स्थितः, अथ मूर्तिमानिव क्रियां करोति, अतः साक्षिणमपि मूर्तिमन्तं जानीयात् । का० ८–अक्षरस्याऽप्यात्माऽस्ति । का० १० अक्षरसदृशा अपि भवेयुः । ब्रह्म (पुरुषा मुक्ताः) तत्सदृशा भवेयुः । लो० १ ब्रह्मरूपेण वर्तेत । अनन्तकोटयो येऽक्षररूपमुक्ताः । लो० २–ब्रह्मरूपा भक्ताः, भक्तरूपभक्तोऽस्मि । तत्समो भवितुमक्षरपर्यन्तः कोऽपि समर्थो न भवति । लो० ७–ब्रह्मस्वरूपं प्राप्तः, ब्रह्मरूपः सन्, ब्रह्मरूपो भूत्वा परब्रह्मभक्तिम् । लो० ८–आत्मा ब्रह्म अलिंगोऽस्मि । लो० १०, परमेश्वरः सर्वात्मा यद् ब्रह्म (व्यापकं) तस्य साकारस्वरूपं यत् तस्याप्यात्मेत्यर्थः । अक्षरस्याप्यात्माऽस्ति । लो० १२–निर्लेपं ब्रह्मरूपम् । धामरूपमक्षरम् । लो० १३–अक्षरादिकमुक्तान् । अक्षरमपि नोच्येत भगवानिति । लो० १४ क्षराक्षरयोः परः पुरुषोत्तमः । लो० १९ अक्षररूपेण वर्तते, अक्षरम्, इदम्, अक्षरम्,

पृथग् दृश्यते। लो० १७–यस्य शक्तिरक्षरमस्ति, अक्षरमीदृशम्, अक्षरसुखमीदृशम्। ले० १८–अक्षरातीतः, ब्रह्मरूपा भवन्ति। पं० २–अक्षरमखण्डमस्ति, शुद्धब्रह्मरूपं मत्वा। म० ८–स्वस्वरूपं यद् ब्रह्म। म० १० भागवते साकारं ब्रह्म प्रतिपाद्यते, ब्रह्म तु पुरुषोत्तमभगवतः किरणम्। म० १३–आत्मनस्तत्त्वम्, आत्माऽक्षरम्। अक्षरधाम्नः पतिः। म० १५–सतां स्वरूपं निर्गुणं ब्रह्माऽस्ति–मायागुणशून्यं साकाराऽक्षरब्रह्मसममस्तीत्यर्थः। म० ४६–शुकसमो ब्रह्मरूपो भूत्वा–साकाराक्षरब्रह्मसमो भूत्वेत्यर्थः। म० ४८–ब्रह्मवेत्ता–अक्षरब्रह्मपरब्रह्मवेत्ता साधुजनः। म० ५१–ब्रह्मरूपेण–साकारब्रह्मसमरूपेणेत्यर्थः। म० ५७–आत्मरूपेण–केवलाऽक्षरब्रह्मसमरूपेणेत्यर्थः। म० ६२ स्वात्मनो ब्रह्मरूपेण, ब्रह्मणि परब्रह्मणो दर्शनं जायते। ब्रह्म–अक्षरब्रह्ममूर्तिमत्। म० ६३–भगवद्भक्ता ब्रह्मात्मकाऽक्षरसममूर्तयः। म० ६४ अक्षरधाम व्यतिरेकरूपेण प्रकृतिपुरुषाभ्यां परम्–साकारम् बोध्यम्। म० ६६ शुकदेवो ब्रह्मरूपोऽक्षरब्रह्मसमो बभूवेत्यर्थः। म० ६७–ब्रह्मरूपो भूत्वा–साकाराऽक्षरब्रह्मसमो भूत्वा धाम प्रयाति। व० ११ ब्रह्मरूपाः सत्पुरुषाः–अक्षरब्रह्मसमाः साधुजना इत्यर्थः। अम० २ ब्रह्मरूपो भूत्वा–साकाराऽक्षरब्रह्मसमो भूत्वेत्यर्थः। अन्त्य० ३ ब्रह्मरूपः स्यात्–अक्षरब्रह्मसमो भवेत्। ब्रह्मभूतः–अक्षरब्रह्मसमः। अन्त्य–१० ब्रह्मरूपो भूत्वा–अक्षरब्रह्मसमसाकारो भूत्वा धाम यातीत्यर्थः। अन्त्य० २२–भगवद्बुद्ध्यनुसाराकारः सम्पद्यते। अन्त्य० २६–ब्रह्मास्मि, ब्रह्मभावाहन्ता, ब्रह्मरूपसमञ्जणितः, साकाराऽक्षरब्रह्मसमतेत्यर्थः। अन्त्य० २८–भगवद्धाम्नः सुखाग्रे–साकारनिराकारोभयविधधामसुखाग्रे इत्यर्थः। ग० म० १८–अहं ब्रह्मास्मि–साकाराऽक्षरसमोऽस्मि। ब्रह्मस्वरूपाः स्मःअक्षरब्रह्ममूर्ताः स्मः। ब्रह्मस्वरूपाः–साकाराक्षरब्रह्मस्वरूपा इत्यर्थः। म० २०–मायापरं ब्रह्म–अक्षरं साकारम्. तत्समाश्रितन्यमूर्तयो भवन्ति। म० ३०–तद् ब्रह्म स्वस्वरूपं मन्वीत, ब्रह्मरूपो भूत्वा परब्रह्मभजनं कुर्यात्। अक्षरात्मकाः पुरुषा ब्रह्मरूपाः साकाराः। म० ३३–जीवो मायां तीर्त्वा ब्रह्मरूपः साकारो भवति। म० ४२–सगुणं साकारम् अक्षरं ब्रह्म, यद्रोमणि ब्रह्माण्डान्युड्डयन्ते। म० ४३–गुणातीतो भूत्वाऽक्षरसमो भूत्वेत्यर्थः। अन्त० ३१–अक्षररूपा अनन्तकोटिमुक्ताः। गुणातीतं यत् साकारमक्षरं धाम। अन्त्य० ३६–ब्रह्मज्योतिर्मध्ये साकारमूर्तिरक्षरं ब्रह्म दृश्येत, ब्रह्मदर्शनमेष्टव्यम्। अन्त्य–३७–भगवत्समाकारो भक्तः पुरुषः॥ इत्येवं बहुशाऽक्षरब्रह्मणः साकारस्वरूपं दर्शितम्।

अथाऽक्षरब्रह्मणो निराकारस्वप्रकतेजोधाम्नरूपस्वरूपम्:—

उपोद्घाते–गोलोकमध्ये–तेजोमयकिरणात्मकाऽक्षरधाममध्ये भगवतोऽक्षरधाम सुमूर्तमस्ति, तदेव द्वितीयेन रूपेण प्रकाशमानं दिव्यम् अत्यन्तश्वेतं सच्चिदानन्दरूपं ब्रह्मपुरम् अमृतधाम परमपदम् अनन्ताऽपारं ब्रह्म चिदाकाशम् प्रोच्यते। अक्षरधाम्नि (तेजोमये) श्रीकृष्णभगवान् पुरुषोत्तमो वासुदेवो नारायणः परमात्मा ब्रह्म परब्रह्मेश्वरः परमेश्वरो विष्णुः क्षराऽक्षरपरः सर्वज्ञः सर्वकर्ता सर्वनियन्ता सर्वान्तर्यामी सर्वकारणकारणं निर्गुणः स्वप्रकाशः स्वतन्त्रो ब्रह्मरूपाऽनन्तमुक्तोपास्यो जगज्जन्मादिलीलः प्रकृतिपुरुषकालप्रधानपुरुषमहत्तत्त्वादिस्वशक्तिप्रेरको राजाधिराजः किशोरमूर्तिः श्यामसुन्दरो दिव्यवस्त्राभूषणः कमलदलनयनो राधालक्ष्म्यादिपूजितः सुदर्शनाद्यायुधो नन्दसुनन्दश्रीदामादिसेवितोऽप्रमेयप्रकाशोऽनन्तकल्याणगुणो धर्मज्ञानवैराग्यैश्वर्याणिमादिसिद्धिसेवितो मूर्तिमद्वेदवन्दितो वासुदेवादिव्यूहकेशवादिमूर्तिवाराहाद्यवतारधर्ता श्रीकृष्णपुरुषोत्तमो भगवानस्ति। अत्र नामरूपान्तरोदितं सर्वमक्षरधाममण्डलं बोध्यम्, न तु अक्षरधामातिरिक्तपौराणिकोक्तधामादिसम्बद्धमिति तात्पर्यम्। चैत्रजन्यत्वाच्छ्रीकृष्णः, पुरुषेषूत्तमः पुरुषोत्तमः, अन्वयितया वसनाद् वासुदेवः, नारासु अयनान्नारायणः, पर आत्मा परमात्मा, बृहतोऽपि परः परब्रह्म, बृहत्वाद् ब्रह्म, सर्वेष्टाभीष्ट ईश्वरः, ईश्वरेषु परमः परमेश्वरः, व्यापकत्वाद् विष्णुरिति, षड्भगवत्त्वाद् भगवानिति। निराकारे स्वमूर्तिजन्ये तेजस्यक्षरब्रह्मण्यपि स्वप्राविर्भाव्यसत्ताकतया व्यापकत्वं तदापूरकत्वात् तदपृथक्सिद्धतादात्म्यविकसितत्वं तदधीनत्वात् तत्प्रकारत्वं तत्प्रयोज्यत्वात् तत्कार्यत्वं तद्भासात्मकत्वात् तदन्तस्तादात्म्यं तन्मूर्तिमूलकप्रसरणशीलत्वात् तन्मूर्तिरूपान्वितत्वं तन्मूर्तिप्रतिकृतिप्रवाहान्वितत्वात् तदन्तर्यामिकत्वं तत्परतन्त्रत्वात् तच्छरीरकत्वं तन्मूर्तिसत्ताकत्वात् शाश्वतनित्यत्वं शरीरिपरब्रह्मप्रसार्यत्वात् सीमवर्जितप्रसारणवत्त्वाद् अनन्तत्वं परब्रह्ममूलकसर्वतत्त्वसंसृष्टत्वात् सर्वसंभृतत्वात् परिपूर्णत्वम्, क्वाऽप्यसत्त्वाऽनुपलब्धेः केवलान्वयित्वम्, सार्वज्ञ्यज्ञप्तिचित्त्वैश्वर्यसिद्धिचैतन्यसाक्षात्स्फुरणध्यानप्रकाशप्रभाऽऽलोकाऽऽलोचनविषयताज्ञाततावैशदतोन्मेषताप्रतिभादर्शकताभानवत्तामेधाविमर्शानुभवसाक्षात्काराऽपरोक्षतादिगततत्त्वापादकताशक्तिमत्तया सूक्ष्मस्थूलानुस्यूतत्वम्, सर्वात्मकत्वं चेति निराकाराक्षरब्रह्मणो बोध्यम्। तत्र वचनामृतश्रुतयः—

प्र० १ भगवद्धाम, ब्रह्म, ब्रह्ममहोलः। प्र० ३–भगवद्धामप्राप्तिः। प्र० ७–ब्रह्मज्योतिः, व्यापकमक्षरब्रह्म, सच्चिदानन्दमक्षरब्रह्म, गोलोके ब्रह्मज्योतिरक्षरब्रह्म। प्र० ८ स्वकीयं धाम। प्र० ९ स्वीयं धाम।

प्र० १२ तेजोमयं भगवद्धाम, स्वधाम। प्र० १८-धाम। प्र० २१-अक्षरधाम, निराकारश्चैकरसचैतन्यं चिदाकाशो। ब्रह्ममहोलोऽक्षरधाम चेति। प्र० २४ एकरसचैतन्यं भासते, तस्मिन् भगवन्मूर्तिर्भासते, क्वचिदेकलः प्रकाश एव दृश्यते। प्र० ३९-ब्रह्मगः (परब्रह्मगः) प्रतिपादनम्। जीवेश्वरमायानामाधारं ब्रह्म-अक्षरब्रह्म, ब्रह्मरूपेण दृश्यते, ब्रह्मनिरूपणं कुर्यात्, एकब्रह्मण एवेति निराकारमेतद् तन्मतेनाभिमतम्। श्रीहरिमतेनाभिमतं परब्रह्मैव। प्र० ४१-अक्षरातीतः साकारमक्षरब्रह्माऽवलोकयति, ततः निराकाराऽक्षरधामभूमेः पुरुषः प्रकटो भवति, पुरुषोत्तमः साकारे निराकारे चाक्षरे प्रविश्य पुरुषे प्रविशति, सोऽन्तर्यामी यथाऽक्षरे तथा पुरुषेऽपि प्रकृतावपि न्यूनभावो वर्तते। प्र० ४२-ब्रह्मैव सभरभृतमस्ति, साकारे निराकारे च ब्रह्मस्वरूपे निर्विकल्पस्थितिमान् वदति-एकम् ब्रह्मं नास्ति गुणातीतं निर्गुणं चाक्षरं धाम। (गोपिकाः गुणातीताऽक्षरब्रह्मतमदिव्याकृतयोऽभवन्निति साकारतुलनोक्ता) अभयपदं निराकारं प्राप्नुयात्। गुणातीतपदम् निराकारम् (गुणातीतकैवल्यदिव्यमूर्तिः साकारः श्रीहरिरुक्त,) प्र० ४३-भववल्लोके निवसितव्यम्। प्र० ४५-अत्र स्वात्मनो ब्रह्मरूपमाननं-साकाराऽक्षररूपमाननमुक्तम्। महातेजोमयमूर्तिः पुरुषोत्तमः इत्यत्र तेजोमयत्वं निराकाराक्षरब्रह्मत्वम्। अन्तर्यामि सर्वत्र परिपूर्णं सच्चिदानन्दं ब्रह्म तु भगवन्मूर्तेस्तेज एव। सच्चिदानन्दं ब्रह्म निराकारम्, जीवेश्वरादिषु व्यापकमन्तर्यामि ब्रह्मरूपतेजो निराकारम्। तथापि जीवेश्वराणां कर्मफलदानसमर्थं साकारवन्नियन्तृ अतस्तत् साकारमिवबोध्यम्। अनेन विशिष्टब्रह्माद्वैतत्वं प्रतिपादितम् सर्वकर्मफलप्रदातृ विशिष्टं तेजोरूपमक्षरब्रह्म तन्नियन्तृक्रियावत्त्वं साकाराऽक्षरे ब्रह्मणि, इति निराकारसाकारोभयविधब्रह्म जीवेश्वरमायाविशिष्टब्रह्म, तत्राद्वैतं परब्रह्मेति साम्प्रप्रदायिकैरवश्यमेतत् पञ्चचत्वारिंशद्वचनामृतं चिन्तनीयम्। प्र० ४६-सर्वाधारं चिदाकाशं प्रोक्तम्, सर्वाधार आकाशो निर्विकारी वानादिः स ब्रह्म चिदाकाशः प्रोच्यते, अत्रा।काशे प्रकृतिपुरुषौ संकोचविकासावस्थां लभेते, प्रकृतितत्कार्येषु पुरुषस्याऽन्वयिव्यतिरेकित्वमस्ति, पुरुषो द्वारमित्यत्राऽभिप्रायः। सर्वाधारस्य चिदाकाशस्याऽन्वयिव्यतिरेकित्वं पुरुषमद्वारीकृत्य नास्तिः पुरुषद्वारैवाऽस्ति इत्यभिप्रायः, पञ्चचत्वारिंशे कथितश्रुत्यैकार्थ्यात्, सर्ववेदान्तवाक्यानां बलवत्तया व्यापकब्रह्मणोऽन्तर्यामित्वध्रौव्यात्, पुरुषस्य विना ब्रह्म व्यापकतासामर्थ्याऽभावात्। ब्रह्माण्डबहिरन्तः सर्वत्र चिदाकाशः सर्वाधार आकाशो व्यापकोऽस्ति, चिदाकाशाकारब्रह्मविर्बहिरविद्योक्ता, चिदाकाशोऽतिप्रकाशमान् अनादिरविनाशी

लीनभाववर्जितश्चास्ते, तदिदं परिपूर्णम् अक्षरं ब्रह्म ति ।। प्र० ४८-भगवतो धाम । महापुरुषोऽपि भगवद्धामाऽक्षरस्यैकप्रदेशादुद्भवति, अतोऽक्षरदृष्ट्याऽक्षरधामैव व्यापकमेकमस्ति, महापुरुषादयो न सन्ति, अक्षरात् व्यापकात् साकाराच्च परः अक्षरातीतो भगवानस्ति, भगवन्निश्चयो भगवद्दर्शनं भगवन्मयदिव्येन्द्रियान्तःकरणैर्जायते न तु मायिकैरिति, तत्त्वानामपि भगवत्कृपाकटाक्षात् 'यमेवैष वृणुते तेन लभ्यः' 'विवृणुते तनूं स्वाम्' इत्येवमक्षररूपतामापन्नानां साक्षाद्विषयो भवति भगवानिति वरणार्थं यत्नः कर्तव्यः । स्वसम्बन्धिगतदृढप्रसंगाधिकप्रसंगपात्रसाधुजनकृतमोक्ष (धामप्राप्ति) द्वारोद्घाटनलाभाश्रयजीवमवनतेत्यर्थः । प्र० ५६-ज्ञानी तु साकारब्रह्मरूपेण वर्तते, परमपदम् अक्षरधाम प्राप्नोति, भगवान् ब्रह्ममहोलस्यपतिः । भक्तो ब्रह्ममहोले निवसति । प्र० ५९-अयं भगवान् ब्रह्ममहोलो गोलोकः श्वेतद्वीपः इत्यादिसर्वधामाधिपतिः, प्र० ६०-गोलोकवैकुण्ठब्रह्ममहोलाधिपतिः । भगवद्धामनि नैवाऽगमिष्यत् । ब्रह्मलोके-सत्यलोके रंक्ष्यति । प्र० ६३-स्वीयकान्त्या, तत्राऽक्षरधामनि । यत्र प्रत्यक्षभगवानस्ति तत्रैव परमधामाऽस्ति, इदं साकारनिराकारोभयपरम् । ब्रह्मपुरस्य प्राप्तिमानस्मि, निराकारमुक्तः । पुरुषोत्तमस्य धामाऽक्षरं यस्यैकैकरोम्णि अनन्तकोटिब्रह्माण्डानि अणुवद् उड्डयन्ते ईदृशं भगवतो धामाऽस्ति, अत्र साकारं महत्तमं निराकारं च व्यापकमुभयं ज्ञापितम् । तत्र धामनि निराकारे पुरुषोत्तमो नित्यं विराजते, तत्राऽनन्ता दिव्यसामग्र्यः सन्ति, प्रकृतिपुरुषादिभ्योऽक्षरं महत्तमं सूक्ष्मतमं चास्ति, अक्षरादयः साम्प्रतम् मूर्तिमत्यः साकाराः सन्ति । अक्षरधाम सर्वापेक्षातिमहत्तमं वर्तते, अक्षरस्य महत्तायास्तुलनायां गणनायां वा किमपि नायाति, प्रधानपुरुषकारणिकाया मूलप्रकृतेरपि कारणम् अक्षरं ब्रह्माऽस्ति धामरूपमस्ति, सदैकरूपमस्ति, तत्र संकोचविकासावस्थे न स्तः, तदक्षरं मूर्तिमान् (द्वितीयेन रूपेण विराजते) अतिमहत्तममस्ति, अक्षरधामापि मूर्तिमानस्ति, पुरुषोत्तमः स्वान्तर्यामिशक्त्याऽक्षरधाम्नि ब्रह्माण्डेषु ईश्वरेषु चाऽन्वयिभावेन निवसति, अक्षरसधर्माणो मूर्तिमन्तोऽनन्तमुक्ताः भगवत्सेवायां वर्तन्ते, भगवान् अक्षरे समूर्तेऽमूर्ते च प्रविश्याऽक्षररूपो भवति, सर्वतत्त्वेषु प्रविशति सर्वतत्त्वरूपो भवति, एवं तात्त्विकतया परमेशं जानीयात्, अक्षरधाम्नि निमज्ज्य यत्रेच्छा तत्राविर्भूतो दृश्यते । अत्र विशिष्टब्रह्माऽद्वैतत्वं तत्त्वं त्रिषष्टितमेऽपि विज्ञेयम् । अवश्यं सुधीभिर्विभावनीयम् ।। प्र० ६४-पुरुषोत्तमभगवतः शरीरम्, आत्मा-अक्षरभिन्नाः सर्वे आत्मानः, तत्रापि तेजोमयम्, अक्षरंधाम आत्मोच्यते, साकारम् अक्षरम् अक्षरमुच्यते,

द्ध्याऽप्यक्षरं विकाररहितं हेयोपाधिरहितम्, मायातः परम्, पुरुषोत्तमस्याग्रे व्याप्यमधीनमसमर्थं च शरीररूपं तेजः साकारं चोभयम्। भगवान् स्वान्तर्यामिशक्त्या तेजःस्वरूपात्मनि अक्षरे मूर्तिमति चाऽक्षरे व्यापकोऽस्ति, आत्मनोऽक्षरस्य च प्रेरकोऽस्ति नियन्ताऽस्ति परात्परं यदक्षरं ततोऽपि परोऽस्ति, अक्षरब्रह्मभावापन्नात्मस्वरूपैर्मुक्ताः पुरुषोत्तमसेवायां वर्तन्ते। निराकारब्रह्मोपासकस्तु मूलपुरुषतेजसि ब्रह्मसुषुप्त्याख्ये लीयते। न त्वक्षरतेजसि लीनता, द्रष्टारो ये सर्वे आत्मानः-निराकारं तेजः, साकारब्रह्म, मुक्ताः, प्रकृतिपुरुषादयश्चेतनाः। तेषां व्याप्या दृश्याश्च ये देहाः मायिकाकृतिरूपाः सत्त्वा देहाः, एवं तेजसो व्याप्यो देहः प्रकृतिपुरुषश्चेतनः, तद्व्याप्यो देहः प्रधानपुरुषश्चेतनः, एवं तत्तद्व्याप्याश्चेतनास्तद्व्याप्या जडाश्च। एतेषु सर्वेषु समष्टिरूपेषु पुरुषोत्तमः स्वान्तर्यामिशक्त्या तेजःशक्त्या आत्मभावेन शरीरिभावेन वर्तते, एतादृशः सर्वेषामात्मा-शरीरी यः पुरुषोत्तमो भगवान् यदा रूपवद् यद्यद् दृश्यं महत्तत्त्वाद्यात्मकं व्यक्तं तदात्मतया तच्छरीरितया यदा शास्त्रेषु कथितस्तदा महत्तत्त्वादिदृश्यस्थः परमात्माऽपि आश्रयाश्रय्यभिन्नविवक्षया दृश्यः प्रतिपादितो भवेत्, अथ च यदा पुरुषो मुक्तास्तेजोऽक्षरं साकाराऽक्षरं प्रभृति यद्यत् स्वस्वव्याप्यद्रष्टृ तत्तद्द्रष्टृगताऽऽत्मभावेन शरीरिभावेन पुरुषोत्तमः प्रतिपादितो भवेत् तदा सरूपे सरूपवत् अरूपे तेजसि अरूप इत्यपि सः शरीरी प्रतिपादितो भवेत् निराकारे निराकारः कथितो भवेत् परन्तु वस्तुतः रूपवद् दृश्यं महत्तत्त्वादिकम् अरूपं च आत्मा चेतना निराकारं तेज आदि च, तत्सर्वेभ्यः पुरुषोत्तमस्तु पृथक् मूर्तिमान् वर्तते, प्राकृताकाररहितः दृश्यानामात्मा द्रष्टॄणामप्यात्मा शरीरी वर्तते, अथ आत्मा यत्तेजः अक्षरं च धाम एतेषां सर्वेषां प्रेरकः स्वतन्त्रो नियन्ता सकलैश्वर्यसम्पन्नः परात्परं यदक्षरं तस्मादपि परोऽस्ति॥ प्र० ६५-य आकाशः सर्वाधारः स नित्य उत्पत्तिलयरहितः तेजोरूपमक्षरधाम उक्तः। प्र० ६६-तत्तेजो मूर्तेरस्ति, ब्रह्मसत्तारूपः कोटिसूर्यसमप्रकाशोऽस्ति, सः पुरुषोत्तमभगवतो मूर्तेः प्रकाशोऽस्ति, श्रीकृष्णरथाश्वा मायापरदिव्यचैतन्यात्मका बभूवुः, मायापरं यद् ब्रह्म तत्पर्यन्तं न प्राप्नुयुः, पुरुषोत्तमभगवन्तं ब्रह्मरूपसाकाराऽनन्तकोटिमुक्तानाम् उभयविधस्य अक्षरब्रह्मणश्चात्मानं विदन्ति, अक्षरातीतमूर्तिः। अक्षरम् उभयविधम्। प्र० ६७-भगवतो धाम, भगवतो धाम्नि स्थित्युत्तरम्। प्र० ६९ भगवतो गोलोकः ब्रह्मपुरं चेत्यादियामानि। प्र० ७०-भगवद्धाम्नः प्राप्तिर्भवेत्।

प्र० ७१–तेजोमयं यत् स्वस्याऽक्षरधाम। ब्रह्मरूपा अनन्तकोटिमुक्ताः–साकारस्वरूपा इति। तत्त्वानि चांगीकृतानि सर्वाणि ब्रह्मरूपाणि विद्यन्ते, अवतारेषु तत्त्वानि ब्रह्मेति, न मायिकानि, अत्र तत्त्वानि साकारब्रह्मतुल्यानि। निराकारं यदक्षरब्रह्म, ब्रह्मपुरम्, अक्षरादिकधामानि पश्यामः, ब्रह्मपुरादिकधाम्नां तथा ब्रह्मस्वरूपस्य दर्शनलालसासत्त्वम्, तानि ब्रह्मपुरगोलोकादिकधामानि, अत्र धाम निराकार, दर्शनविषयं साकारमिति। अक्षरधाम, धाम, निराकारं बोध्यम्। प्र० ७२ चरित्राणि सङ्गीय परमपदं प्राप्नुवन्ति। अक्षरं शक्त्या धारयति, शक्तिः प्रकाशः। प्र० ७३–अनन्तकोटिब्रह्माण्डानामाधाररूपाऽक्षरात्परः, ब्रह्मप्रकाशं वीक्ष्य ब्रह्मण्यधिकतां मन्येत। प्र० ७४ भगवान् अक्षरातीतोऽस्ति–साकारनिराकारोभयातीतः, ब्रह्मपुरधामनिवासिनः, अक्षरातीतस्य–उभयविधाऽक्षरपरस्य, परमेश्वरो यत्र विराजते तत्र सर्वाणि धामानि समूर्तानि अमूर्तानि च सन्ति॥ अन्त्ला० १ अक्षरधाम–निराकारं तेजः। जयत० ४–निर्गुणधाम–तेजोमयम्। जयत० ५–अक्षरधाम–तेजोमयम्। सा० १–ब्रह्मपुरादीनां सर्वेषां स्वामी, भगवतोऽक्षरं धाम, एतन्निराकारं प्रोक्तम्। सा० ४ परमेश्वरधाम्नोऽग्रे, भगवद्धाम प्राप्नुयुः। सा० ५–अक्षरब्रह्मणोऽन्वयिता व्यतिरेकिता चेत्युभयविधमपि ग्राह्यं न विरुद्धम्, प्रकृतिपुरुषादिप्रेरकं तेजोमयम् अक्षरस्याऽन्वयिस्वरूपम्। सा० ६–अक्षरब्रह्मात्मको नादस्तेजोमयः, ब्रह्मण उभयविधस्य, परब्रह्मणश्च पृथग्भावं कथयेत् या सा परावाणी। सा० १०, ब्रह्मपुरादिकभगवद्धामानि, आत्मदृष्टिमान्–स्वसाक्षिब्रह्मपरब्रह्मदृष्टिमान्। भगवद्धामानि नाणुमात्रदूराणि। सा० ११–भगवतोऽक्षरधाम–तेजोमयम् भगवद्धामतुलनायां नारकाणि, गुणातीतं यद् भगवतोऽक्षरधाम, भगवत्कृपापात्रस्याऽऽत्यन्तिकमोक्षप्राप्तिः,–तेजोमयधाम्नि सेवाकृत्मूर्तिमन्युक्तताप्राप्तिरित्यर्थः। सा० १२–आत्मानं ब्रह्मरूपं मत्वा–साकाराऽक्षररूपं मत्वा, तस्मिन् परब्रह्मणोऽखण्डवासः। सा० १४–भगवतो धाम प्राप्य। अक्षरधामतोऽपि मुक्ता देहं गृह्णन्ति, जडं चैतन्यं–साकारं निराकारं वोभयं वा भवेत्। भागवत्या तन्वा भगवतो धामाऽऽप्नुवन्ति। सा० १७–अक्षरब्रह्ममयतेजसि अक्षरधामनि निवसन्तो येऽक्षरमुक्ताः, महत्तेजोराशिः। का० १–आत्मनिष्ठावान् केवलब्रह्मसत्तां तेजोरूपतां स्वसत्तां विन्दते। का० ५–साक्षिज्ञातृत्वप्रयोज्यं जीवे ज्ञातृत्वं, अन्तर्यामिशक्त्या जीवेषु व्याप्तः परमात्मा मूर्तिमान् इव क्रियाकर्ताऽत एव साक्षिस्वरूपः स मूर्तिमान् वर्तते, तत्सर्वनियन्तृत्वात् तद्वशत्वात् जीवोऽपि मूर्तिमा-

निव शरीरिवत् शरीरमिति सर्वमपि समूर्तं परब्रह्मणः समूर्तत्वादित्येतदपि न्याय्यमालोचनीयम्। का० २ कर्मणि कर्माऽभावात् क्रियावत्त्वात्मकमूर्तत्वाऽभावादमूर्तत्वं कर्मणः, किन्तु फलं पुण्यं पापं तदद्दृष्टम्, तत्फलं च सुखं दुःखं, तज्जनकं कर्मलभ्यं शरीरादिकं मूर्तमिति फलस्य मूर्तत्वमभिहितम्। का० ६-महाराजस्त्वाकाशसमनिर्लेपः, आकाशेऽत्र चिदाकाशात्मकतेजः। का० ७-परमपदमाप्नुवन्ति। प्रकृतिपुरुषावपि अक्षरब्रह्मतेजसि अदृश्यौ भवतः, एकलं सच्चिदानन्दतेजोऽवशिष्यते। अक्षरधाम्नि भगवन्मूर्तेःसाक्षात्कारकर्ता सिद्धदशावान् बोध्यः। अत्र तेजोऽभिहितम्। का० ८-अत्र निर्गुणसगुणयोर्विमर्शोऽपेक्ष्यते-मायिकगुणरहिता ये मुक्तास्तेजःसाकारब्रह्मपरमात्मानः सर्वेऽपि निर्गुणा इत्यौपनिषदसिद्धान्तः, दिव्याऽनन्तगुणसहिता ये मुक्तास्तेजोऽक्षरब्रह्मपरमात्मानस्ते सगुणा इत्यौपनिषदसिद्धान्तः। परब्रह्मणि शरीरिणि कारणावस्थे सर्वविधशरीरनिष्ठनामरूपविभागार्हतालीनीकरणताप्रयोजकसत्यसंकल्पतात्मकैश्वर्यं भगवद्गुणात्मकं मायिकगुणाद्यनपेक्षं निर्गुणमित्युदाहार्यम्। एवं स्वविशेषणात्मकनामरूपविभागानापन्नजडचेतनात्मकसर्वशरीरगतनामरूपविभागार्हताऽऽपादकताप्रयोजकसत्यकामतात्मकसत्यफलवत्तासम्पादकैश्वर्यं भगवद्गुणात्मकं जीवादिकर्ममायागुणादिसापेक्षं स्वीयमलौकिकमैश्वर्यं सगुणमित्युदाहार्यम्। अक्षरस्याऽप्यात्मा परमात्मा न निर्गुणः, दिव्यानन्तगुणवत्त्वात्। न गुण्यते न विकास्यते यत् तत्तु निर्गुणत्वं कारणत्वात्मकं पारिभाषिकं निर्गुणत्वं संगमनीयम्। एवं गुण्यते विकास्यते तत् गुणं सविकासमित्यपि कार्यावस्थाङ्कुरदशात आरभ्य पारिभाषिकं संगमनीयं सगुणत्वमिति॥ भूम्नो निर्गुणब्रह्मधाम कार्यात्मकगुणावरणरहितं ऐश्वर्यशालीश्वरान्वितसात्त्विकादिभावसम्पन्नमेवेति तदपि पारिभाषिकं निर्गुणं ब्रह्म धाम-चेति बोध्यम्। औपनिषदसिद्धान्तस्तु भूमशब्देन परब्रह्म तस्य निर्गुणब्रह्मधाम तेजोमयमक्षरधामेति समञ्जसम्। का० १०, ब्रह्मलोकः-सत्यलोक उक्तः। ब्रह्म-तेजः, अक्षरं-साकारधाम, तत्समा अपि भवेयुः। लो-१-अनन्तकोट्योऽक्षररूपमुक्ताः साकारा यत्र वर्तन्ते तद् ब्रह्मपुरधाम, ब्रह्मपुरादिनामानि। लो० २-ब्रह्मरूपा भक्ताः, अहं ब्रह्मस्वरूपो भक्तोऽस्मि, अत्र ब्रह्मरूपत्वम्-अक्षरसममूर्तत्वम्, ब्रह्मस्वरूपत्वम्-तेजोरूपाऽक्षरसमनिर्लेपत्वम् मन्तव्यम्। लो० ३-ब्रह्ममहोले समीयते, अन्येषु धामसु नाऽन्तिकोऽवतिष्ठेत। तेजोरूपं धामाभिहितम्। लो० ४-स्वस्याऽक्षरधामनि, स्वाऽक्षरधाम्नि एकत्र निवसन्ति सन् अनन्तरूपै-

दृश्यते। लो० ७ ब्रह्मस्वरूपतां प्राप्तः, ब्रह्मरूपः सन्, ब्रह्मरूपो भूत्वा, अत्रोभयविधमपि ब्रह्म घटते, साधर्म्यबलात्। व्यापिका चैतन्यप्रकृतिः, ननु का सा, यदि सर्वचेतनान्यतमा, व्यापकत्वं व्याहन्येत, यदि तत्तच्छरीरव्यापकत्वं, तत्तु परिच्छिन्नत्वमेव, व्यापकत्वाऽशक्तेः, यदि तेजोमयं धाम, धामनि शरीरशरीरिपुत्तलवत्त्वापत्तिः, जीवत्वानुपपत्तिश्च, जीवयत्यन्तर्यामिद्यावत्येति। चेत्, अप्रजडभिन्नचेतनानामसंग्रहः, किं तर्हि, इदम्-उपादानताभिमतं यद् यत् तत्तत्प्रतियोगिकभेदकूटाश्रयत्वम् बोध्यम्। प्रत्येकचेतने घटते। अथाऽन्नमयब्रह्मादि तु ब्रह्मयोगि ब्रह्मदृग्विषयम्। अहं ब्रह्माऽस्मीत्यपि ज्ञानीयविषयतामात्रम्। लो० ९-ब्रह्मपुरम्-तेजः, अत्र लीला-रमणमात्रम्, लो० १०-परमेश्वरः सर्वात्मतेजोब्रह्मणोऽप्यात्माऽन्तर्यामी, साकाराऽक्षरस्यापि मुक्तानामप्यात्माऽन्तर्यामी। मायाऽत्राऽन्तःकरणात्मिकी, वैचित्र्यार्थसंभृतत्वात्। लो० ११ तेषु निराकारस्य ब्रह्मणो भावना ग्राह्या, समग्रं जगत् ब्रह्म-तेजोमयं दिव्यमिति भावनीयम्। ब्रह्मपुरम्-तेजोमयं धामेति। लो० १२-ब्रह्मता, ब्रह्मरूपं, धामरूपाऽक्षरे, ब्रह्म आकाशवत् सर्वत्रास्ति, निराकारं तेजोरूपं कथितम्। आकाशो जड उक्तः। लो० १३-अक्षरधामनिः, अक्षरे, अक्षरधाम विना धर्तुं समर्थः, एकमेवाऽद्वितीयं ब्रह्मेत्यादिना तेजः प्रोक्तम्। श्रुतौ परब्रह्माऽभिप्रायकम्। लो० १४-अक्षरधामनि, एको महाँस्तेजोराशिः सीमरहितोऽनन्तस्तेजःसमूहो दृश्यते। क्षराक्षरयोः परः पुरुषोत्तमः उभयमक्षरं वेदितव्यम्। लो० १५-अक्षररूपेण निवसति-निराकारमुक्तम्। लो० १७-अक्षरमीदृशम्, अक्षरसम्बन्धिसुखम्-उभयमक्षरं, धाम विशेषतः, सुखप्रयोगात्। लो० १८-धामनि, ब्रह्मपुरधाम्नः, अक्षरधाम दृष्टम्, भगवतो धामनि, तेजः प्रोक्तम्। पं० १ यदक्षरब्रह्मास्ति, तत्तु भगवन्निवासधाम, भगवद्धामसुखातिशायिता, गोलोकापेक्षया भगवदक्षरधामातिशायितसुखवत्ता, भगवद्धामसुखविमर्शः, भगवद्धाम्नि भगवत्सुखमत्यधिकम्, भगवद्धाम्नि तन्मध्ये प्रगन्तव्यम्। पं० २-आत्यन्तिकप्रलयेऽक्षरधामनि, तेजोव्याप्तभगवन्मूर्तिर्ध्यातव्या। पं० ४ स्वस्याऽक्षरधामनि, भगवद्धामोपमा, भगवद्धामनिवसितभगवद्भक्ताः, उपमेयं भगवद्धाम भवेत्, अक्षरधाम्नि निवसन्ति, स्वस्य धाम्नि विराजमानः। पं० ७-धाम्ना-स्वस्वरूपेण। अक्षरधामनि यादृक् निजस्वरूपम्, अक्षरधाम्नि दिव्यभोग्यभोक्तारः, अक्षरधामगतं यादृशम्, तेजः प्रोक्तम्। पुरुषोत्तमः प्रकृतिपुरुषादिषु स्वप्रकाशं प्रकटयति। म० ३-महतीपदवीप्राप्त्युपा-

यः, महती पदवी ब्रह्मलोकः। ब्रह्म-तेजः, प्रकृतिपुरुषरूपेण प्रविश्य भवति, ब्रह्मज्ञाने निराकारविषये उपासना-साकारोपासना स्वब्रह्म-भावेनोपास्यातिरिक्तत्वाभावात् खण्ड्यते। अभयपदम्-ब्रह्मधाम, ब्रह्मधाम निर्विकारं निरंशं चापि, ब्रह्मतेजः प्रकृतिपुरुषादिसर्वेषामाधारमन्तर्यामिशक्तिद्वारकव्यापकतावत्, एतद्ब्रह्मकारणं व्यतिरेकी पुरुषोत्तमः प्रेरक आधारश्च। साकारपरब्रह्माऽक्षरज्ञानम् तेजोऽक्षर-धामज्ञानम्, सर्वात्मान्तर्यामी विशिष्टब्रह्माद्वैतज्ञानं परमपदात्मकाऽ-क्षरधामप्राप्तेर्निर्विघ्नमार्गोऽस्ति। म० ४-अतिमहतीं पदवीमाप्नुयात्-ब्रह्मधाम, तत्र वा मुक्ततामाप्नुयात्। म० ८-परमपदम्,-तेजोमयं धाम। यद्वा साक्षात् भगवत्प्राप्तिः-भगवानेव परमं पदम्-प्राप्यमिष्टं विश्रान्तिस्थानमिति। निजस्य स्वरूपं यद् ब्रह्म-साकारब्रह्मसमानता, निराकारतेजःसमनिर्लेपता वा, तत्र परब्रह्म साक्षात् दृश्येत। म० १०-भगवते साकारब्रह्मणः प्रतिपादनम्-साकारपुरुषोत्तमस्य प्रति-पादनम्। श्रीहरिः तेजोमयब्रह्मरूपस्वान्तर्यामिशक्त्या व्यापकोऽस्ति, शक्तिसंसर्गेण शक्तिमतो वृत्तितायाः अविरोधात्। ब्रह्माऽक्षरं साकारं पुरुषोत्तमस्य किरणं सुमूर्तं विद्यते। किरणत्वम्-दीप्तिमच्छरीरत्वं पारिभाषिकम्। भगवन्मूर्तितेजःकिरणात्मकाऽक्षरधाम्नः साकाररूप-त्वेन किरणस्य पिण्डीभूतस्य किरणमित्यभिधानम्। भगवतोऽक्षर-धामरूपफलमाप्यते, भगवतोऽक्षरं धाम, भगवतो धाम्नि यत् सुखं विद्यते, भगवतः स्वरूपं-मूर्तिः आकाशवत्-चिदाकाशसमा निर्लिप्ता-ऽस्ति, भक्तिः परमपदं विद्यते-प्रापके प्राप्योपचारात्। म० ११-ब्रह्मलोकः-सत्यलोकाभिप्रायेण। गुणातीतं भगवतो धाम। शुभक-र्माणि भक्त्यात्मकानि भूत्वा मोक्षार्थानि-अक्षरधामप्रापकाणि भव-न्ति। म० १२-तद् एकरसं तेजः, आत्मा ब्रह्म अक्षरधाम कथ्यते, तत्प्रकाशे या मूर्तिः सा आत्मनोऽक्षरधाम्नस्तत्त्वं-शरीरि परब्रह्म पुरुषोत्तमः कथ्यतेऽक्षरधामाधिपतिः। अक्षरे धाम्नि सा मूर्तिः प्रभासते। परमपदम्-धाम प्राप्नुवन्ति। तत्र तेजसि या मूर्तिः सो-ऽयं प्रत्यक्षमहाराजः, अक्षररूपतेजसि वर्तमानां तां मूर्तिं महाराजः साक्षात्पश्यति। भागवतीतन्वा-मुक्तदेहेन श्रीहरिसरूपेण दिव्यरूपेण पुरुषोत्तमस्यैव वार्ताऽस्ति कर्तव्या। अत्र तत्त्वत्वं-तत्पदस्य बुद्धिस्थ-प्रकारावच्छिन्ने शक्तत्वात् विशेषणानि जडचेतनानि तत्पदग्राह्याणि, तत्र भावतयाऽस्तित्वतया शरीरिरूपेण, न तु धर्मरूपेण वर्तमानत्वं, अतोऽक्षरस्य अक्षरधाम्नो मुक्तानां प्रकृतिपुरुषादीनां च तत्त्वम् आत्मा, आत्मात्मकतेजसोऽपि तत्त्वं पुरुषोत्तम इति बोध्यम्। म०

१५-साधुजनस्वरूपमपि निर्गुणब्रह्मैवास्ति,-मायागुणरहितं साक्षाराऽक्षरसमं बोध्यमिति। म० १७-योगी परमपदमाप्नोति, परमपदं-धाम। भववत्स्वरूपं चैतन्यमयं जानाति-यस्तस्याऽवबोधः सम्यग्। चैतन्यमयं-मयट् प्राचुर्यार्थकः, चैतन्यं चेतनधर्मपरम्, सर्वज्ञताधर्मे प्राचुर्यम्-विशेषज्ञानत्वे सति सामान्यज्ञानत्वम्, विशेषत्वं सामान्यत्वं च व्याप्त्यावद्धं, तथा च नित्यं विज्ञानमानन्दं ब्रह्म, सर्वज्ञः स सर्वविदिति व्याप्त्या समानाधिकरणाऽऽक्षेपात् परब्रह्मैव चैतन्यमयपदबोध्यमिति॥ अथ भगवत्स्वरूपं तत्त्वसहितं तत्त्वरहितं वा यो जानाति स पापवान्, तदन्यथाज्ञानवान् पुण्यवानिति। अत्रेदं चिन्त्यम्-भगवता स्वीकृतम्-अत्रत्यं भगवत्स्वरूपं मायिकतत्त्वरहितं केवलचैतन्यमयं यज्ज्ञातव्यं तदेवाऽवबोधनं सम्यग्। पुनश्चोक्तं-परमेश्वरस्वरूपे मायिकसहितेऽपि मायिकतत्त्वानामेको दोषो न स्पृशति भगवत्स्वरूपं, ततः सतत्त्वे को बाधः, अतत्त्वे को निर्बाधः। अतः सतत्त्वम् वाऽतत्त्वम् उभयथापि दिव्यमेव सत्यं ज्ञानमनन्तात्मकं भगवत् स्वरूपम्। तत्त्वानि दिव्यानि भवन्तीति। तथा च सतत्त्वे मायिकतत्त्वदोषावृतत्वं चेत्कल्प्यते तत्पापम्-भगवतः अप्रसन्नता। अतत्त्वे-निराकारं निर्गुणं निःशक्तिकम् असमर्थं चेत्यादि चेत् कल्प्यते, तर्हि तत्त्वाधीनतात्मककुतर्कः पापम्-भगवतः अप्रसन्नता, भगवतो धाम्नि या मूर्तिः सैवेयमिति दिव्यतानिश्चये भगवतः प्रसन्नता, तद् अपापम्-भागत्यागाऽभावनिश्चयः, भागः-तत्त्वानां शरीरम्, त्यागः-दिव्यतादिवर्जितता, तत्स्थानं भगवन्मूर्तिर्नेति। सतत्त्वो न वेति संशयसमारोपो भक्तस्य न रोचते, शास्त्रैस्तादृशसंशयनिरासात्। शाश्वतैकस्वरूपः परमात्मा बहुरूपधरोऽपि तावन्मात्राऽन्यूनाऽनतिरिक्ततत्त्वस्वरूपसमरूपान्तरदर्शनः, मुक्तस्वरूपं धाम्नि बहुरूपधरमपि नाऽणुन्यूनं नाण्वधिकम्, अतः समपरिमाणं समपरिणामं च, भगवानपि तथा, प्रकृतिरूपशरीरादिकं तु रूपान्तराऽवाप्तौ अणुमात्रविश्लेषेऽवयवपारतन्त्र्ये विषमपरिमाणं-विषमपरिणामं च सम्पद्यते, तथा चाऽणुमात्रविश्लेषे द्रव्यान्तरोत्पत्तिरिति आत्ममात्रतत्त्वात्मकानां स्वस्वरूपे तादृशविषमताविरहात् रूपान्तरविनिमयेऽपि नित्यत्वम्, द्रव्यान्तरताप्रसक्तेरसत्त्वात्। एतन्मतं सुमतमिति। म० ४६-भगवद्धाम्नि निवासो भवेत्, भगवद्धामनि। म० ४९-अभयपदम्-धामरूपम्। म० ५०-एकरसपरिपूर्णं ब्रह्मस्वरूपम्, तेजोमयमक्षरधाम, म० ५१-आत्मसत्तारूपेण-ब्रह्मरूपेण, तेजोरूपेण। म० ५७-आत्मरूपेण वर्तितव्यम्-केवलब्रह्म भूत्वा मायावरणरहिततया वर्तितव्यम्। म०

६४-स्त्राक्षरधामरूपं यत् धिष्ण्यं, अक्षरधामाश्रित्याऽनन्तकोटिब्रह्माण्डान्युद्भवन्ते, भगवतो यदक्षरधामाऽस्ति, अन्वयरूपेण तेजःस्वरूपं सर्वेष्वस्ति, अक्षरधाम, धामनि, अक्षरधाम्नि निवसन्तः, अक्षरधाम्न्येव सन्ति, श्रीकृष्णभगवतो यदक्षरधाम। म० ६६-भगवतो धामनि, चैतन्यप्रकृतिः भक्तात्मा स्वयं भगवत्समरूपोऽभिनिष्पद्यते, तत्राऽक्षरधाम्नि निवसति। अत्रापि भगवद्वरणं कल्याणदम्, साधनानां तु भगवत्प्रसन्नतापादकत्वम् प्रोक्तम्। भगवदिच्छा सारूप्ये प्रयोजिका, सारूप्यं समपरिमाणं नित्यत्वनिराबाधम्। म० ६४-ब्रह्माण्डानि वसन्त्येवेत्यनेन सृष्टिप्रवाहाऽविरामोऽभिहितः, तथा कारणावस्था कार्यावस्था च 'पादोऽस्य विश्वा भूतानि' 'त्रिपादस्याऽमृतं दिवि' इत्यादिना सर्गस्थितिका परब्रह्मणि तदानीमेव कर्तुं तदानीमेवाऽकर्तुं तदानीमेवाऽन्यथाकर्तुं चेति समर्थता सर्वेन्यायान् प्रबाध्य समुपपन्ना, उपनिषदामपि ईक्षणादिकं यत्र सूक्ष्मता तत्र स्थूलतापादनपरं, यत्र स्थूलता तत्र सूक्ष्मताऽऽपादनपरमिति तादृक् सामर्थ्यं समन्वेयम्। म० १८-यन्निराकारं ब्रह्म तेजस्तज्जीवात्मनि स्थितं जीवरूपमुच्यते' मायापरं निर्गुणब्रह्म, ब्रह्मणि उभयविधे जन्ममरणे प्राप्ते स्याताम्। म० २०-मायापरं यद् ब्रह्म उभयविधं तत्समाश्चैतन्या जायन्ते- साक्षि यद् ब्रह्म व्यापकं तद् ब्रह्माण्डे प्रविश्य ब्रह्माण्डं चेतनावत्करोति, तस्य ब्रह्मणस्तथाविधः स्वभावो यत्तत्प्रसंगेन प्रसंगी जीवोऽपि ब्रह्मरूपो द्वेधाऽपि ब्रह्मसमो जायते। साकारसेवकत्वं निर्लेपकिरणत्वं चेत्युभयभावः। म० २२-भगवतो धामाऽस्ति, भगवद्धाम्नि निवासः कर्तव्योऽस्ति। म० २३-भगवतो धाम प्राप्नोति। अत्रोक्तं भगवन्मूर्तिरूपश्चिन्तामणिर्धर्तव्य एव, तेन धामप्राप्तिर्भवेदिति। अथ मनोविचारः-मनो जीवस्य किरणविशेषं ज्ञानशक्तिविभागविशेषम्, एवमेव बुद्धिर्ज्ञानविशेषः, अहंज्ञानविशेषः, चिन्तनं ज्ञानविशेषः, श्रवणस्पर्शनदर्शनरसनघ्राणनशक्तयोऽपि ज्ञानविशेषाः प्रकाशरञ्जनविरामा अपि ज्ञानावस्थाविशेषाः प्रवृत्तिनिवृत्तिजीवनवृत्तिरूपा अपि प्रयत्नाः इच्छासुखदुःखमोहद्वेषपुण्याऽपुण्यभावनासंस्काराद्या अपि चेतनगताश्चैतन्या एवेति नात्मातिरिक्तद्रव्योद्भवतत्त्वानि तानीति समीचीनं विचारणमिदम्। अथ शब्दस्पर्शरूपरसगन्धाद्योऽपि सत्यात्मनि जायन्ते पिण्डे आत्मोत्थाने पिण्डोत्थानं ब्रह्माण्डोत्थानं च, विद्युद्वह्निसूर्यचन्द्रध्रुवसमुद्राऽवनिसमीरणादितत्त्वानां स्वस्वकार्यस्वाभाव्यमन्तर्गतान्तर्यामितत्त्वप्रयोज्यं 'भीषाऽस्माद्वातः पवते' इत्यादिना वर्णितम्, तत्स्थौल्यमपि ब्रह्मसत्ताकं स्थू-

लावस्थब्रह्मरूपमेवेति मायात्मकं वैचित्र्यमपि भगवल्लीलात्मकं तत्त्वं ततो तत्त्वान्तरं परब्रह्मातिरिक्तं विशिष्टब्रह्माद्वैतातिरिक्तं नेति सर्वमपि परमात्मकिरणात्मकमिति सप्रकाशं किरणमात्मतत्त्वं चेतनचैतन्यम्, अप्रकाशं गुप्तप्रकाशम् अनाविर्भूतप्रभाक रश्मिरूपं छायारूपं मायात्मकं तत्त्वमिति परब्रह्मशरीरं जडचेतनात्मकमुभयम्, स्वल्पचेतनं जडमिति व्यवहार्यं पृथिव्या अपि कम्पसंभवात् सचेतनेव सा जलानां समुद्राणां चोत्पातसंभवात् सचेतना जलक्षुद्रा अनलानामरण्यदाहादिब्रह्माण्डदाहादिसंभवात् सचेतनास्ते वायूनामपि धारणतोत्पातवत्त्वादिसंभवात् सचेतना वायवः प्राणा अपीति, किं वहुना पाषाणा अपि सजीवाः खनिस्था वर्धन्ते पृथिवीसम्बद्धाः, विवराणि प्रयूर्यन्ते कालान्तरेणेति निर्जीवं तत्त्वं नास्तीति तत्तद्व्याप्यात्मव्यापकात्मप्रविष्टं सर्वमपि वस्तुजातं, महाकालोऽपि भगवत्संकल्पात्मको जनयति वर्धयति परिणमयति विलीनयति रूपान्तरमापादयतीति अक्षरधामतेजोवत् सर्वत्रान्वितचैतन्यमिवापादयतीति किमु नाम तत्त्वमवशिष्यते विना विशिष्टब्रह्माऽद्वैतमिति। मनो न जीवचैतन्याद् भिन्नं गुणा न ब्रह्मचैतन्याद्भिन्ना सर्वं न परब्रह्मचैतन्याद्भिन्नमिति सर्वविशिष्टब्रह्माऽद्वैतमिति सिद्धान्तः सार्वभौमः। म० २४-भगवतो यदक्षरधाम, तत्र निराकारे धाम्नि भगवन्मूर्तिस्तथा मुक्ताः साकाराः। म० २५-भगवतो यद् ब्रह्मपुरधाम निर्वासनिको भूत्वा तत्र धाम्नि गमिष्यति। म० २८-भगवद्धाम्नि सन्ति, भगवद्धामतः। म० ३०-प्रकृतिपुरुषात्परं यच्छुद्धचैतन्यब्रह्म, तदेव सत्यं जानीयात्। तत् द्वितीयं यत् साकारं ब्रह्म तद्रूपं निराकारब्रह्मसमं वा स्वात्मानं निर्लेपं जानीयात्। उभयविधब्रह्मरूपो भूत्वा परब्रह्मणो भजनं कुर्यात्। ब्रह्मतोऽधःसृष्टौ यत् प्रकृतिकार्यं तन्नाशयोगि जानीयात्। म० ३१-अक्षरातीतः-उभयविधाऽक्षरातीतः पुरुषोत्तमो महापुरुषविशिष्टः सन् महामायायां वीर्यं सिञ्चति, महापुरुषः अक्षरधामस्थः अक्षरंतेजः आत्मा यस्य सः तादृशो मुक्तः ब्रह्मविशिष्टोऽस्ति, अक्षरब्रह्मणो द्विविधस्यापि गुणा जीवे आयान्ति, तद् ब्रह्माऽस्ति, स्वप्रकाशकं यत् तेजोब्रह्म तस्य मननद्वारा संगं कुर्यात्, वैराजपुरुषोऽपि मायां त्यक्त्वा साकारब्रह्मरूपो भवति। वैराजद्वारा वासुदेवप्रवेशेनाऽवतारा भवन्ति। अथ महापुरुषस्तु निरन्नो निरशनो मुक्तः साकारब्रह्मसरूपो मायायां प्रेरणायाः कारणं तथा स्वयं ब्रह्मणः-साकारनिराकाराऽक्षरब्रह्मणः सुखैः परब्रह्मसुखैश्च सुखी वर्तते। शास्त्रेषु पुरुषोऽयं मायानियन्ता समुत्कलात्मकः पुरुषोत्त-

संकर्षणः । एतादृशा अक्षरतेजआत्मा येषां ते तथाविधा ब्रह्मतुल्यपुरुषाः साकारमुक्ता असंख्याः वासुदेवपरमात्मोपासकाः सन्ति । वासुदेवो-ऽत्र वसनात् दिव्यत्वात् व्यापकत्वात् पुरुषोत्तम एव । अमृतधामवासि-वासुदेवः श्वेतद्वीपवासिवासुदेवश्च नारदपञ्चरात्रे पुराणे च कथितस्त-योर्भेदो नाऽयं महाभागवतः प्रतिपादितः ।। अत्र राधापतिः रमापतिः शास्त्रेषूक्तौ, परब्रह्मापि श्रीहरिः राधारमापतिः सत्संगिजीवने उक्तः । राधारमाख्या यदि मूल प्रकृतिः तर्हि तत्पतिः तत्पुरुषः राधारमाख्या यदि सत्यसंकल्पशक्तिज्ञानशक्तिसार्वज्ञ्यरूपाऽऽख्यस्तदा, प्रकृतिश्च स्वेच्छा-मायाशक्तिस्तदा तत्पतिः श्रीहरिः परब्रह्म पुरुषोत्तम एव ग्राह्यः । राधा च चिच्छक्तिः रमा चाऽऽनन्दशक्तिस्तदा तत्पतिरोक्तिपदं परब्रह्म वेदितव्यम् । राधागोपीपतिस्तु श्रीकृष्णः । रमापार्षदानीपतिस्तु नारायणः । तावुभौ पुरुषोत्तमौ ब्रह्मवैवर्ते पाद्मे च प्रतिपादितौ ।। अत्र पुरुषोत्तमः परब्रह्म । पुरुषः-साकारं निराकारम् अक्षरब्रह्म, तद्धामस्थाः सर्वे मुक्ताः । ईश्वरः-प्रकृतिपुरुषावरा ब्रह्मविष्णुमहेशपर्यन्ताः । जीवा ब्रह्माण्डवर्तिप्राणधनाः । माया-मूलप्रकृतिप्रभृतिविविधतत्त्वात्मकानि । पञ्चतत्त्वान्यनादीनि । म० ३३-जीवो मायां तीर्त्वाऽक्षरब्रह्मरूपो भ-वेत्, भगवतोऽक्षरधाम । म० ३५-भगवतो धाम प्रयान्ति, भगवद्धामा-ऽऽश्रयं प्राप्नुवन्ति । म० ३६-मायायाः त्रिगुणात्मिकायाः कार्ये स्नेहो-ऽपि मायिकतत्त्वेषु चेत् स मायात्मकः, भगवन्तं विस्मृत्य शरीरेषु स्नेहश्चेत् सा माया इत्यभिप्रायः, भगवति प्रवेशः-आकर्षणं स्नेहकृतं सा न माया, भगवत्सम्बन्धशून्यस्नेहो माया । म० ३९-चैतन्यरूपं तेजोमयं भगवतोऽक्षरधामाऽस्ति । उपनिषत्सु-तेजोमयं धाम, ब्रह्म, ज्योतिः-स्वरूपं, ज्ञानरूपं, तत्त्वं, सूक्ष्मं, निरञ्जनं, क्षेत्रज्ञं, सर्वकारणं, इत्याद्युक्तं । परब्रह्म च-पुरुषोत्तमो वासुदेवो विष्णुर्नारायणो निर्गुणश्चे-त्याद्युक्तः । परमपदम्-व्यापकाऽक्षरधाम । म० ४२-अक्षरस्य धाम्नो द्वौ प्रकारौ । एकः सगुणभावः, अन्यो निर्गुणभावः । अक्षरं न निर्गुणं किन्तु दिव्यगुणयुक्तं सगुणमेव । तथा च निर्गुणभावः पारिभाषिकः, युज्यतेऽवस्थाभिः स्थौल्यमाप्यते तत् सगुणं, तद्भिन्नं निर्गुणमिति, स्थूल-तामापन्नम् अणोरप्यणुरूपं सूक्ष्मम् अक्षरम् निर्गुणमिति अणूत्तमावस्थ-मिति यावत् । सगुणं स्थूलावस्थापन्नम् अतिशायितमहत्, यस्यैकैकरोम्णि अनन्तकोटिब्रह्माण्डान्यणुवत् तिष्ठन्तीति तादृशम्, अथवैतावन्मात्रं न सगुणम्, मध्यस्थितावव्याप्तेः, किन्तु अणूत्तमावस्थातिरिक्तावस्थावत्त्वं सगुणमिति परिभाषितव्यम्, दिव्यगुणयुक्तेऽपि सगुणत्वम् । अथ तेजो-रूपधामन्यपि सगुणत्वम्, प्रकाशस्य शुक्लरूपपदार्थसंयोगादिमत्तया स-

गुणत्वात्, अक्षरब्रह्म, अक्षरधाम, अक्षरम्, अक्षरधामनि, अक्षरधाम्नि वसानः सन् प्रकाशयति प्रकाशते च, स्वयमक्षरधाम्नि विराजते, पुरुषोत्तममूर्तिस्थलमक्षरधाममध्यबिन्दुरूपम्। म० ४३-प्रीतिः परब्रह्मणो ब्रह्मणश्च गुणत्वात् ब्रह्मरूपिणी प्रोक्ता, गुणातीतो भूत्वा-धामसमो भूत्वा प्रीतिं कुर्यात् सा प्रीतिर्ब्रह्मरूपा। म० ४५-परमपदं यदक्षरधामलोकस्तत्प्राप्तिलभ्यसुखसमसुखं भुनक्ति। व० १ ब्रह्मपुरधामनि कीदृशं भगवत्स्वरूपं भवेदिति। व० २-स्वस्याऽक्षरधामनि, विद्युदग्निसमाः साधनभक्तिदशापन्ना एकान्तिकाः साधवः। वडवानलसमाः सिद्धभक्तिदशापन्नाः साध्यभक्तिमन्तः परमैकान्तिकाः साधवः, त एतेऽक्षरब्रह्मसारूप्यस्वरूपयोग्यतावन्तो बोध्याः। व० ७-अनन्तवारं ब्रह्मणि लीनो भवतीत्यत्र ब्रह्मपदेन श्रीहरेरेकान्तिका हरिभक्ता ग्राह्यास्तद्गृहे जन्मैव मुहुर्ब्रह्मणि लीनभावो बोध्यः। स्वस्यैकरसतेजोमये धाम्नि श्रीहरिर्व्यतिरेकः स्वतन्त्रोऽनन्वितोऽपि विराजते, यत्र भगवन्निवासस्तानि तत्त्वान्यपि जडानि यद्यपि ब्रह्मतां यान्ति दिव्यतां लभन्ते, जडमपि चेतनयोगाच्चेतनं भवति तर्हि भगवद्योगे तु किं वक्तव्यं जडस्य चैतन्ये। व० ९-चिदाकाशस्य प्रकाशः। निर्गुणं मायागुणाऽनाविलं दिव्यगुणाढ्यं सुखम्। चिदाकाशमध्ये। व० ११-पर्वतस्य देहेऽपि हिमालयवत् नवलक्षाद्रिवत् भगवद्योगे मुक्तत्वं जायते, ततस्तत्र पर्वतेऽन्याऽऽत्मा प्रविशति, इन्द्रधिष्ण्ये इन्द्राः परिवर्तन्ते तथा तीर्थादौ जडेऽपि तदध्यात्मदेवताः परब्रह्मसम्बन्धात् परिवर्तन्ते। ब्रह्मस्वरूपाः-साकाराऽक्षरसमस्वरूपाः सन्तः। व० १२-अक्षरधामनि, परमपदमाप्स्यन्ति, परमपदाऽधिकारि भवति। प्रकाशमानेऽक्षरधाम्नि। तेजोधाम प्रोक्तम्। व० १३-ब्रह्म-अक्षरब्रह्म साकारम् एकदेशस्थम्, पुरुषोत्तमोऽक्षरातीतोऽप्येकदेशस्थः श्रीकृष्णनारायणो भगवान्, स स्वान्तर्यामिशक्त्या तेजोद्वारेण साक्षिरूपेण च सर्वदेशस्थो विद्यते, निराकारं ब्रह्म यथा व्यापकं तथा परमात्माऽरूपः सन् व्यापकः स्वरूपतः इति तु न, शक्तिद्वारा व्यापकः, जडचेतनसर्वप्रकारेषु प्रकारी शरीरी ज्ञानैश्वर्यतेजःप्रभृति शक्तिद्वारा व्यापकः। अक्षरधाम्नि प्रकाशे। सूर्यः प्रकाशद्वारा व्यापको द्रष्टा च, परब्रह्म प्रकाशात्मकब्रह्मद्वारा ज्ञानद्वारा अन्तःप्रविष्टाऽनन्तरूपद्वारा व्यापकः प्रत्यक्षदर्शी च, सर्वविधाऽस्तित्वजनित्ववर्धनत्वपरिणमनत्वापक्षीणत्वविलीनत्वादिस्वभावाः परमेश्वरेण स्वगताः शरीरेषु निहितास्तद्वत्तया व्यापकः, स्थूलसूक्ष्मावस्थाऽऽधानकतया व्यापकः, रूपानुरूपत्वतया व्यापकः, सर्वगतप्रियतया व्यापकः, सर्वात्मतया व्यापकः, यत्र तादात्म्येन परब्रह्म तत्र विशेष्यतासंसर्गेण सर्वमितिस्वाधिकरणेऽपि स्वे व्या-

पक्षः, यत्र पदार्थतासंसर्गेण तादात्म्यसंसर्गेण विशेषणं तत्र स्वसत्ताधीनसत्ताकत्वसम्बन्धेन परब्रह्मेति व्यापकत्वम्। स्वसंकल्पविषयतासम्बन्धेन सर्वत्र परब्रह्मान्वितत्वं व्यापकत्वम्। नित्यप्रत्यक्षदृष्टिविषयतया सर्वत्र व्यापकत्वम्, स्वातिरिक्तसर्वविधसर्वतत्त्वसञ्चालकत्वं व्यापकत्वम्। ऐतदात्म्यमिदं सर्वं, सर्वभूतान्तरात्मा,–इत्येवं व्यापकत्वं श्रुत्या प्रतिपादितम्। व० १८ गोलोकाऽऽपेक्षया व्यापकं गोलोकेऽन्तर्बहिश्च वर्तमानं, मध्यस्योभयार्थकत्वात्, गोलोकमध्येऽक्षरधामनि श्रीकृष्णो भगवान् विराजते, तेजोरूपेऽक्षरधामनि अनादिश्रीकृष्णनारायणो विराजते। व० १९–भगवतो धाम्नो यत्सुखमस्ति, ब्रह्मलोकस्येत्यर्थः। ब्रह्मलोकं–सत्यलोकं प्राप्नुयात्। अम० २ अक्षरधाम। ब्रह्मरूपो निर्लेपो भूत्वा। प्रकृतिपर्यन्तं सर्वं ब्रह्मप्रकाशे–ब्रह्मलोके लीनं भवति। ब्रह्मरूपः–साकारब्रह्म दृशो भूत्वेत्यप्यर्थः। अम० ३ आत्मरूपो भूत्वा–ब्रह्मलोकसमनिर्लेपो चेतनस्वरूपावस्थानो भूत्वेत्यर्थः। अन्त्य० २–परमपदं मोक्षः कथ्यते-ब्रह्मलोकसंज्ञा। अन्त्य० ३–ब्रह्मसत्तामात्रम्, सत्तामात्रं तिष्ठते, व्यापकाक्षरधामसत्ताधीनस्वात्मनिष्ठसत्तामात्रमित्यर्थः। अन्त्य० ४ जीवे परमात्मा साक्षिरूपः साकारो जीवात्मानं साकारीकृत्य तिष्ठतीति। अन्त्य० ५–भगवतो धाम्नि, ब्रह्मपुरधाम्नि, धाम्नः–ब्रह्मलोकस्य प्राप्तिः। अन्त्य० ६–भगवतो ब्रह्मपुरधाम, भगवतो धामनि, भगवतो धामैव प्राप्नुयात्, भगवद्धाम्नि, भगवद्धाम। अन्त्य० ७–ब्रह्मपुरधाम्नि। अन्त्य० ९–अवबोधभावे यदक्षरधाम, तत्र भगवान् विराजते, भगवद्धाम्नो गोपुरः। अत्राऽऽत्मधाम्नो भगवत्प्राप्त्यात्मकाऽऽविर्भावपूर्वं सिद्धदशया निदिध्यासनात्मकगोपुरद्वारा साक्षात्कारात्मकःप्रवेशो ब्रह्मपरब्रह्मोभयविषयकोऽपीति तात्पर्यम्। अ० १० जीवमायेश्वरब्रह्मपरब्रह्माण्यनादीनि शाश्वतानि आद्यक्षणाऽन्तिमक्षणसम्बन्धरहितानि, नित्यप्राप्तिशीलानीत्यर्थः। पञ्चपिण्डात्मकविशिष्टब्रह्माद्वैततत्त्वशाश्वतिकतेति बोध्यम्॥ अन्त्य० १२ वृन्दलसमदेहभाक्त्वम् आत्मन औपचारिकमहद्विनष्टियोगित्वमिति तदर्थः। अन्त्य० १३–वयं बहुवारं सत्संगतो बहिः प्रव्रजितुमौदासीन्यमाश्रितवन्तः। ननु भगवतः किं नाम औदासीन्यम्, तथा सति सृष्टिसंहारः, अथ मानुषचारित्रं परकृतानुकृतिरूपं साधुधर्मरूपम्, साधूपदेशार्थफलकम्, भगवतोऽपि भक्तातिरिक्ते औदासीन्यम्, अरुचिके प्रसह्य रुचिवत्। इति। अ० १४–परमपदं–ब्रह्मलोकमाप्नुयात्। अन्त्य० २१–अक्षरधाम प्राप्नुयात्। सर्वपरं दिव्यमक्षरधाम, मायापरं दिव्यधाम, श्रीकृष्णभगवतो धाम्नि, पुरुषोत्तमस्य धाम प्राप्नोति। इति ब्रह्मलोक उक्तः। अथ भागवतो धर्म एकान्तिको धर्मो

भक्तिरूप एव बलीयान् । वेदमार्गाश्रितधर्मस्तु निर्जितो ब्रह्मलोकाऽऽ-पादकः, वर्णाश्रमधर्मो भागवतधर्माऽपेक्षयाऽतिगौणो सात्त्विकस्वर्गाऽऽ-पादक इति क्षयो च । अस्माकं जीवस्येदृशः सहजस्वभावः, अत्र भग-वता जीवस्येत्युक्तं, सर्ववस्तुकाद्यन्तर्यामिब्रह्मरूपेणेति चाक्षरात्मक-ज्ञानभावाभिप्रायेण जीवपदप्रयोगः, कल्पितभेदे षष्ठी सर्वजडानां सचेतनजीवभिन्नरूपेण जीवत्वं विलक्षणं स्वरूपपरं निराबाधम् । अन्त्य० २७-भगवान् सर्वजीवानां जीवनमित्युक्तेः । अन्त्य० २२ भगवद्धाम प्रयान्ति, भगवदिच्छया सेवानुकूलसाकारता विकसति, भक्तस्य य ईदृशः सेवावकाशस्तदनुकूलसाकारभावापन्नस्य सेवासम्पादनमिति । अ० २४-अक्षरधाम्नि, भगवतो धाम्नि । अन्त्य० २७-भगवति सर्वविषयसुखान्ये-कक्षणावच्छेदेनाऽनुभूयन्ते, सिद्धभक्तस्य यथासंख्याकाऽवधानिपात्रता तथासंख्यासुखाशनवत्ता । अनन्तधा भूत्वा मूर्तिमतं समन्ततः सर्ववि-धानन्दं समकालेऽनुभुङ्क्ते, पार्श्वे सखा भूत्वा अन्तर्मुखो भूत्वा पृष्ठे दासो भूत्वाऽधो दासो भूत्वा सम्मुखे दर्शको भूत्वाऽवकाशे श्रोता भूत्वा तनु-रूपः स्प्रष्टा भूत्वा घ्राणरूपो रसयिता भूत्वा ओतप्रोतधर्मरूपो ज्ञाता भूत्वा यथावेदं नन्दो भूत्वा यथाकामं प्रेमवान् भूत्वा यथाभोगं भोजको भूत्वा यथाऽऽराध्यं रमणो भूत्वा यथाहर्षं हर्षको भूत्वा यथाऽऽह्लादं ह्लादितो भूत्वा यथारूपमनुरूपो भूत्वा सर्वानन्दान् समश्नुते इति । अन्त्य० ३०-एकमेव तत्तेजोराशिर्ब्रह्मलोक इति । अन्त्य० ३१-तेजःस-मूहः, ब्रह्मरूपं तेजोमयं भगवद्धाम, गुणातीतमक्षरधाम । तत्र पुरुषोत्त-मभगवतः आकृतिः-स्वयं दिव्यमूर्तिः, क्षरात् अक्षरादुभयविधात्परः । उभयविधाऽक्षरसमा अनन्तकोटिमुक्ताः । धामस्था या मूर्तिः एवा श्रीकृष्णस्य या मूर्तिस्तयोराधिक्येन साहश्यम्-अभेदोपमा, स तु एक एव तत्समानः नान्यसमान इति, सूर्यसदृशः सूर्य एवेति भेदनिरासे एकधर्मे विकल्पं कृत्वा सूर्यत्वं सूर्यत्वमेवेति । प्राकट्यमेतत्स्थलीयम्, प्राकट्यं भेदोत्कल्पने प्रयोजकम्, धाममूर्त्या एतन्मूर्तेरैक्यमिति प्रविशेषणत्यागे ऐक्यदृश्यमिति तदर्थः । अक्षरब्रह्मलोकस्य धाम्नो या तत्स्थिता मूर्तिः सा गुणातीता दिव्या । अन्त्य० ३७-भगवत्सदृशस्तु भगवानेवैको नेतरः कश्चिदप्युक्तेः । अन्त्य० ३२-तेजोमयं यत् स्वस्याऽक्षरधाम । अन्त्य० ३३-तेजोमण्डलमध्यस्थे । अन्त्य० ३५-स्वस्याऽक्षरधामब्रह्मलोके विरा-जते । अन्त्य० ३६-ब्रह्मज्योतिःसमूहमध्ये साकारमूर्तिर्ब्रह्म अक्षरब्रह्म-परब्रह्म च दृश्येत । ब्रह्मणो दिदृक्षा कर्तव्या । आत्मा-निराकारात्मा । उपासनां विनाऽऽत्मा तदन्तर्यामि साक्षिब्रह्म ततोऽक्षरब्रह्मलोकोऽक्षरं परब्रह्म चेति साकारा दृश्यन्ते । यथारूपं दृश्यन्ते इत्यभिप्रायः । अ-

अन्य० ३७–भगवद्धामस्थभगवत्तुल्यभक्ताकारो विलसन्ति, तथापि स मु-
क्तः मुक्त एव न तु स्वामी, स्वधामगतैकदेशस्थोऽपि भगवान् सर्वत्रा-
ऽन्वयितया तिष्ठतीति व्यापकत्वमन्तर्यामितया बोध्यम्। अन्य० ३८–
भगवतोऽक्षरधामलोके, क्षरधामस्थभगवान् पुरुषसमाकारः, अस्मत्स-
माकारः सलिङ्गादिरिति साकार उपासनीय इत्यभिप्रायः। दिव्य एव
न तु अस्मद्धर्माधिक इति। अन्य० ३९–स्वधामनि उभयविधे यत्सु-
ख।–इत्यादिवचनामृतश्रुतिषु तेजोमयो ब्रह्मलोकोऽक्षरधामादिनामभि-
रभिहितः। अथ तेजो नहि तेजस्विनः प्रेरकं भवति, सर्वेषां तेजसां
तेजस्विन एव प्रेरकाः, परमेश्वरस्य तेजस्तु सर्वेषाम् अन्तर्यामि प्रेरकं
व्यापकम् अन्तःप्रविश्य तेजःप्रदम्, एतद्धि परमेश्वरतेजसि वैलक्षण्यम्,
परमेश्वरे तु तदप्यप्रेरकम्, एतदंशे साम्यम्। अक्षरं ब्रह्म परमेश्वरते-
जःपिण्डरूपम्, अत एव तेजोमयमूर्तिरक्षरम्, परमेश्वरतेजोऽक्षरम्, सा-
कारेऽक्षरे परमेश्वरतेजसः प्रभावः, परमेश्वरप्रभावात्, ततस्तेजोऽक्षर-
धाम तत् साकाराऽक्षरधामसत्तासाधरम्, व्यापकमक्षरं धाम परमेश्व-
रस्य समप्रकाशरूपम्, साकारमक्षरधाम परमेश्वरस्य प्रकाशघनरूपम्,
उभयरूपमनादि परमेश्वरसन्निधिमत्, समप्रसारकम्, एवं चेत् निराकारं
तेजः कथं साकारस्य प्रेरकं व्यापकम् अन्तर्यामीति युक्तं भवेत्॥ एत-
दप्यन्तःशासितृप्रेर्यं सत् अन्तर्यमनप्रकारकलाकुशलं न त्वन्तर्नियमनशासि-
तृविधुरं, तत एव स्वधत् ब्रह्मरूपता मुक्तेश्वरजीवानामपि द्वेधाऽर्थात्
सध्रीचीनीकृता, निर्लेपता सेवकता चेति, भोक्तृता ब्रह्मता चेति, ली-
लानुस्यूतता तन्मयसांशगृहीतावात्म्यवत्ता चेति, तत्सरूपता परब्रह्मांगता
चेति, ओतप्रोताऽपृथक्सिद्धविशिष्टब्रह्माद्वैतताऽऽनन्दघनजीवनता चेति॥
"प्रोक्तोऽपवर्गोऽत्र च हेतुवृन्दं विवेक उत्कृष्टतमोऽपि तत्त्वम्। स्वरूपतः
सर्वविधं स्थितिश्च विशिष्टभेदाऽपि यथाविधं तत्॥ १॥ शाश्वतसु-
साकारमपि प्रशस्तं हरिर्निदानं श्रुतिवाक्यबोध्यम्। नासहशिव्यापकता-
तनूताऽभिप्रायनानाश्रुतिसारलिङ्गम्॥ २॥ सर्वाधिबोधो गुरुसत्स्वरूपं
ब्रह्मात्मको भागवतो वृषोऽपि। श्रौतो निदेशोऽक्षरलोक एते विशिष्ट-
भावाः कथिता हरौ च॥ ३॥ समस्तमेतद्धि हरौ समर्पितं ह्युपास-
नार्थं सननीकृतं मया। विशिष्टवैशद्यमिदं ततः परं स्वरूपवैशद्यमथा-
पि चिन्त्यते॥ ४॥

॥ इति विशिष्टवैशद्याख्यः प्रथमो भागः॥

# श्रुतितात्पर्यनिर्णयः

## द्वितीयभागः

ॐ

॥ परब्रह्म ॥

प्रधाने परिशुद्धात्मनि अक्षरे च ब्रह्मशब्दप्रयोगात् तद्व्यावृत्तये परब्रह्मेत्युक्तिः, स्वरूपतो गुणतश्च यस्मिन्ननवधि बृहत्त्वं स एव परब्रह्म, स च–आनन्दपिण्डो मूर्तिः, निरवधिकानन्दमूर्तितत्त्वं, तत्र श्रुतिः–अन्योऽन्तर आत्मा आनन्दमयः' 'को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्' 'सैषाऽऽनन्दस्य मीमांसा भवति' 'आनन्दमयोऽभ्यासात्'–अतो विज्ञानमयाज्जीवादन्य एव परमात्मा आनन्दमयः' 'चेन्न प्राचुर्यात्' 'मयटः प्राचुर्यार्थत्वात्'। तत्प्रचुरत्वं हि तत्प्रभूतत्वम्, आनन्दस्याऽल्पत्वं निवर्तयति, मानुषाद्यानन्दानामल्पत्वम्, परब्रह्मात्मकानन्दस्य प्रभूतपराकाष्ठत्वम्, अतश्चानन्दमयो परब्रह्म ज्ञानस्वरूपजीवादन्यः। 'एष ह्येव आनन्दयाति, आनन्दयितत्वाज्जीवादानन्दयिता परमात्मा आनन्दमयोऽन्यः परब्रह्म, 'रसो वै सः रसं एवाऽयं लब्ध्वा आनन्दीभवति, विज्ञानमानन्दं ब्रह्म, आनन्दं ब्रह्मणो विद्वान्, आनन्दो ब्रह्म, आनन्दमयमात्मानमुपसंहृत्येति, स एको ब्रह्मण आनन्दः, एष ह्येवाऽऽनन्दयाति, इत्येवं परब्रह्म मूर्तिस्वरूप एव श्रीहरिर्दिव्योऽक्षरधामस्थ आनन्दमात्रकरपादमुखोदरादिः साकार एव नित्यसाकारः उपासनाविषयः। एकान्तलीलारसतो निर्वृत्तः, निर्वृत्तिरानन्दपर्यायः, स्वरूपम् आनन्द एवाऽस्याऽनवधिकमहानन्दसागरस्य, अनवधिकानन्दमयमखिलकल्याणगुणाकरमप्राकृतदिव्यमङ्गलविग्रहं परब्रह्माऽनुचिन्तनीयम्, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इति स्वयमानन्दस्वरूपं सर्वजगत्कारणं परमात्मनः स्वरूपम्। आनन्दघन आनन्दस्वरूप इत्येतत्। शर्करारसात्मकनालीकेरफलैकतत्त्ववत् आनन्दस्वरूपैकतत्त्वमूर्तिः परब्रह्मोपासनीयम्। एतन्मूलस्वरूपं, धर्मि गुणि विशेष्यं विशिष्टमद्वैतमुच्यते, सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म, विज्ञानघन एवाऽयमानन्दमयः, प्रज्ञानं ब्रह्म, आनन्दात्मकं द्रव्यं परमात्मा, आनन्दद्रव्ये मूर्तिरूपे परमात्मनि ज्ञानं सार्वज्ञ्यम् आनन्दाऽपृथक्सिद्धद्रव्यगुणतया वर्तते, आनन्दघनतत्त्वस्य परमात्मनो ज्ञानघनतत्त्वात्मकजीवात्मभ्यः पृथक्पदार्थत्वम् आनन्दपदप्रवृत्तिनिमित्तत्वम्, अत एव तत्त्वान्तरत्वम्, ज्ञानघनप्रवृत्तिनिमित्तत्वं तु जीवात्मत्वमिति पृथक्त्वम्, परमात्मनः

सार्वज्ञ्ये आनन्दव्याप्तिः, सार्वज्ञ्यं व्याप्यम् आनन्दो व्यापकः, समनियतत्वेऽपि गुणे सार्वज्ञ्ये ज्ञानात्माऽऽनन्दाधिततापृथक्सिद्धा, द्वयोर्नित्यत्वात्, ज्ञानस्य गुणतयोपयोगात्, आनन्दस्य गुणितया स्थिरत्वात्, आनन्दे स्वतरत्वं ज्ञाने सविषयकत्वम् अवच्छेदकतया भासते, आनन्दो ज्ञानम् आनन्दस्य ज्ञानं विशिष्टानन्दस्य ज्ञानमिति विधानामपरिहार्यत्वात्, सत्यं ज्ञानमनन्तं ब्रह्म, यः सर्वज्ञः स सर्ववित्, विज्ञातारमरे केन विजानीयात्, स्वाभाविकी ज्ञानबलक्रिया च, इत्येवं ज्ञानगुणे आनन्दात्मकज्ञानव्याप्तेर्निर्दिष्टत्वात्, 'शर्करा' पृथिव्यपि मिष्टरसव्यापिका मिश्रोपदेनोच्यते, मिष्टताया ग्रहणार्थं कंकरग्राह्यता, मिष्टरसाऽपृथक्सिद्धिसंरक्षिणी शर्करा, ज्ञानसिद्धयपृथक्सिद्धिरक्षकं परब्रह्मानन्दस्वरूपम्, आनन्दः स्वसंवेद्यः स्वतोवेद्यः स्वात्मकज्ञानस्वरूपतया स्वतःप्रकाशश्च, यथाऽक्षरब्रह्मादिव्यावृत्त्यर्थं परपदं–परब्रह्मेति, अन्यरूपादिव्यावृत्त्यर्थं स्वपदेति स्वरूपमिति, नीलधूमे नीलपदस्य श्वेतधूमव्यावृत्त्यर्थकतावत् स्वपदस्य सार्थकत्वेन न व्यर्थविशेषणताघटितत्वम्, रूपं रूपं प्रतिरूपो बभूवेति परमात्मभिन्नतत्त्वानां रूपपदेनाऽभिधानात् तत्र तत्र प्रतिरूपपदेन स्वरूपाभिधानाच्च, परब्रह्मण एकतत्त्वस्य स्वरूपात्मकस्यैव साकारमूर्तदिव्यरूपादिभिर्बोधनात्, स्वरूपेण नित्यमूर्ते बोधात् रूपेणापि तस्या बोधात्, स्वरूपेणाऽहमितिसमुल्लेखश्चेतनानाम्, ज्ञातृमूर्तस्वरूपस्यैतदुल्लेखत्वात्, स्वरूपस्य भासमानत्वं चेतनानां प्रत्यक्त्वम्, सुमूर्तपरमात्मनः सर्वत्र सत्त्वेन प्रतिरूपरूपिताऽवर्जनीयान्तसारूप्यस्य सर्वचेतनवर्गस्य सुमूर्तत्वमन्तःप्रविष्टसमूर्ताधीनस्य नित्यसिद्धत्वात्, एवं शरीररूपव्यावृत्त्यर्थं शरीरिरूपसंग्रहार्थं स्वपदं परमात्मपरमेव, तेन स्वरूपं परमात्ममूर्तिरितिसिद्धेकतत्त्वपरकम्, एवं च परब्रह्मब्रह्मेश्वरजीवात्मानश्चेतनाः प्रत्यक्तत्त्वात्मकाःअन्तःस्थितस्वरूपरूपितरूपा एवेति रूपात्मकचेतनवर्गान्तःप्रविष्टान्वयव्यतिरेकिदिव्यमूर्तिपरब्रह्मबोधार्थमेव स्वपदं विशिष्टशरीरिपर्यवसन्नं केवलरूपपदप्रयोगाऽनावश्यकतादर्शकं सद्भगवन्मूर्त्यर्थकरूपं स्वरूपवाच्येऽचरितार्थयति, परमात्मा तनुगुणस्वभावैश्वर्यशक्तिविशिष्टः स्वप्रकाशो नित्यस्वप्रकाशः, अचेतनं जडं तु तत्त्वं न स्वप्रकाशं स्वप्रकाशप्रकाश्यत्वात्, रूपं यत्तत्प्राहुरव्यक्तमाद्य मित्यत्र रूपपदेन स्वरूपकथनात्, 'पश्य मे पार्थ रूपाणि'त्यत्र रूपपदेन वेषान्तरदर्शनप्रदस्वरूपस्यैव कथनात्, एकस्वरूपस्याऽसंख्यस्वरूपात्मकदर्शनस्वाभाव्यात्, स्वरूपानन्दद्रव्यस्य 'आनन्दो ब्रह्मे'तिव्यजानात्, आनन्दोऽजरोऽमृतः, विज्ञानघन एव आनन्दमयः, अनन्तज्ञानानन्दैकस्वरूपः, आनन्दस्वरूपः परमात्मा सर्वत्राऽस्ति, परात्समपि स्वस्मिन्नपि स्वयमास्ते:,

अणोरणीयान् महतो महीयानिति श्रुतेः, अतस्त्रिविधपरिच्छेदरहितत्वम्, नाऽव्याप्यत्वं नाऽव्यापकत्वम् सार्वदिकनित्यव्याप्तेः, तादात्म्यव्याप्तिमत्त्वाच्च स्वरूपरूपसंश्लेषकल्पनाऽनावश्यकता, आकाशादिदेशोर्नित्यसंश्लेषवत्कल्पनेऽपि विशेष्यैकतत्त्वे स्वरूपरूपोभयसंश्लेषात्मकसंसर्गभेदिनताषत्तेर्दुर्निवार्यत्वात्, विशेषगौणाऽऽभिमतत्वे तु रूपस्य मूर्तत्वे विशेष्यस्याऽमूर्तत्वापत्तेर्दुरुत्सार्यत्वात्, नित्यज्ञानानन्दाद्यसाधारणस्वरूपस्य 'यत्र पूर्वे साध्याः सन्ति देवा' इति नित्याऽनादिमुक्तानां 'त्रिपादस्याऽमृतं दिवि' स्थितानां समव्याप्तानां व्यावृत्त्यभावेन सर्वनियामकत्वाऽन्तर्यामित्वरूपरूपप्रतिरूपकत्वादीनामेव व्यावर्तकतयाऽङ्गीकार्यतौचित्यात्, श्रुतिसूत्रादिभिः सर्वनियामकत्वस्यैवाधिकत्वेन निर्देशात्। जीवाद्याः परमेशस्यैव चेतयन्ते, य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमयति, नियन्तृरूपेण स्थितः, परत्वं नियामकत्वम्, स्वेतरसमस्तनियामकत्वम्, एतेन तत्, नियामकत्वं शाश्वतं स्वरूपगतं तत्समानाधिकरणाः कल्याणगुणा अपि स्वरूपगुणाः शाश्वताः सर्वोत्कृष्टा एव, सर्वेषामनुत्कृष्टत्वात् नैकस्मिन्नपरस्योत्कर्षसम्पादकत्वम्, अनावश्यकत्वात्, अनुत्कर्षाणां स्वरूपगुणानामुत्कर्षसम्पादकगुणानामुत्कृष्टत्वसिद्ध्यामूर्तिगुणोत्कृष्टत्वं स्वरूपगुणाऽनुत्कृष्टत्वमित्यापत्तेर्वैपरीत्यसिद्धेर्वेदान्तानामनिष्टार्थपरत्वापत्त्याऽग्राह्यत्वप्रसक्तेः, तथा च स्वरूपस्यैव मूर्तिरूपगुणाभिन्नस्य सर्वगुणाधारतया शाश्वतगुणाभिन्नतया च समस्तकल्याणगुणाकरत्वस्य वेदान्तैः प्रतिपाद्यत्वसंगतेः, उत्कर्षाऽनुत्कर्षकल्पनायाः स्वरूपे तथापत्त्या स्वरूपनिम्नत्वदोषोत्पादकत्वे समस्तहेयदोषाविरहितत्वस्य हानावुभयलिङ्गताया अपि विरोधापत्तेः, उभयलिङ्गत्वं दिव्यगुणसहितत्वं हेयदोषात्मकदुर्गुणरहितत्वम्, उत्कर्षाधायके नियामके उत्कर्षाधारे नियाम्यत्वात्मकदुर्गुणस्य परमात्मनि तत्स्वरूपगुणे हेयरहितत्वक्षतेरुभयलिङ्गत्वहानेः, समस्तदिव्यगुणसहितत्वं प्राकृतहेयगुणरहितत्वं चेत्युभयलिङ्गत्वं तु संकुचितम्, समस्तपराकाष्ठापन्नदिव्यगुणसहितत्वम्, ऊनत्वापादकनिम्नदशापन्नाऽपूर्णगुणमात्राकालादिदुर्गुणरहितत्वं चोभयलिङ्गत्वमत्र सुवचम्, अत एवाऽस्मदादिदेहेन्द्रियान्तःकरणाद्यधीनालोचनविमर्शादिमत्त्वं सामर्थ्यनिम्नतापादकत्वं न परमात्मनि, आभूषणादिसमर्पितसुहृश्यत्वं न परमात्मनि, निम्नत्वापत्तेः, किन्तु मूर्तिगुणस्वभावैश्वर्यशक्त्यादीनां भगवदीयतयैव तत्त्वशुशोभत्वमिति स्वतन्त्रसर्वोत्कृष्टत्वं स्वात्मकैकतत्त्वात्मकसमस्तस्वगुणगुणिपिण्डमूर्तिस्वरूपत्वमिति समस्तपराकाष्ठापन्नकल्याणगुणाकरत्वं निम्नदशापन्नदुर्गुणत्वाद्यनाकरत्वमिति विशेष्यस्वरूपमुभयलिङ्गमिति सूक्ष्ममीक्षणीयम्। भगवन्मूर्तौ सर्वत्र सर्वविषयसुखलब्धेरुत्-

त्वात् विभिन्नरद्वण्यां ऽखिलोत्कृष्टगुणानां चमत्कारबलनियमनवीर्य-
तेजोज्ञानानन्दकारुण्यसौशील्यवात्सल्यौदार्यसौलभ्यसौहार्दाऽऽर्जवमा-
र्दवधैर्यशौर्यस्थैर्यमाधुर्यगाम्भीर्यचातुर्यसाम्यदाक्षिण्यशरण्यक्षमाशुचि-
त्वकृतज्ञत्वपराक्रमसमाराध्यत्वसर्वैककारणत्वसाकारत्वपरिपूर्णत्वसर्वश-
क्तिमत्त्वौज्ज्वल्यलावण्यसौन्दर्यसौगन्ध्यसौकुमार्ययौवनाऽनवधिकामर-
सवत्त्वाऽऽकल्याणादिसमस्ताऽसंख्यगुणानां सदोत्कृष्टानां परमात्मनि
स्वरूपे सत्त्वान्मूर्तिस्वरूपरूपाश्लेषादिकल्पनानौचित्यात् । आनन्दमूर्ति-
स्वरूपे परमात्मनि षाड्गुण्यस्य तत्सहनियताऽसंख्यगुणानां च शा-
श्वतिकोत्कृष्टानां रूपगुणोद्भावितोत्कर्षाऽनपेक्षाद् रूपाऽनपेक्षणात्,
रूपाभिमतस्य स्वरूपेण निर्वाहाच्च । आनन्दस्वरूपे सार्वदिकयावद्विषय-
कप्रकाशकस्वप्रकाशगुणविशेषज्ञानवत्त्वम्, अघटितघटनासामर्थ्या-
त्मकशक्तिगुणवत्त्वम्, अनन्तसृष्टिसर्जनधारणाद्यपरिश्रमात्मकबलव-
त्त्वम्, स्वान्यसर्वनियमनसामर्थ्यात्मकैश्वर्यगुणवत्त्वम्, अनन्तजीवेश-
मायाब्रह्मसृष्ट्यपूरकाऽशैथिल्यात्मकवीर्यगुणवत्त्वम्, स्वेतरसमस्तते-
जःप्रदाऽपराभूतदिव्यतेजोगुणवत्त्वम् षाड्गुण्यं मूर्तिस्वरूपे परमात्म-
नि, एवं परदुःखनिवारणेच्छात्मककारुण्यस्य, निष्कपटसंश्लेषात्मक-
सौशील्यस्य गुणबुद्ध्या दोषदर्शनात्मकवात्सल्यस्य, दानाऽतृप्ततात्मकौ-
दार्यस्य, कृपासाध्यलभ्यसौलभ्यस्य, हितचिन्तनात्मकसौहार्दस्य, अ-
कौटिल्यात्मकाऽऽर्जवस्य, कोमलभावात्मकमार्दवस्य, अभग्नप्रतिज्ञात्म-
कधैर्यस्य, परबलप्रवेशसामर्थ्यात्मकशौर्यस्य, रक्षणस्वभावात्मकस्थैर्य-
स्य, पीयूषस्वभावात्मकमाधुर्यस्य, अज्ञाभ्याऽतलतात्मकगाम्भीर्यस्य,
निपुणतात्मकचातुर्यस्य, समसम्भालनात्मकसाम्यस्य, शीघ्रकारिनिपु-
णतात्मकदाक्षिण्यस्य, आश्रयदातृत्वात्मकशरण्यस्य, तितिक्षात्मकक्ष-
मापनस्य, स्वतःशुद्धिरूपशुचित्वस्य, सर्वकृतिकार्यसमज्ञनिरूपककृतज्ञत्व-
स्य, निराकरणसामर्थ्यात्मकपराक्रमस्य, ब्रह्मधामाऽऽत्मकप्रकाशरूपौ-
ज्ज्वल्यगुणस्य, सर्वांशसुघटनात्मकसौन्दर्यस्य, सार्वभौमाऽऽस्वादा-
त्मकलावण्यस्य, समस्तमूर्तिगतशाश्वतसुपुष्टिरूपयौवनस्य, यावद्विध-
सौरभात्मकसौगन्ध्यस्य, मृदुस्निग्धनवनीतसमसुपेशलात्मकसौकुमा-
र्यस्य, च गुणव्रातस्योत्कृष्टतयैव स्वरूपमूर्तावेवस्थानात् स्वरूपगुणज्ञा-
नशक्त्यादीनाम् रूपगुणौज्ज्वल्यादीनां पृथग्विभागाऽनावश्यकत्वात्,
स्वरूपे सत्त्वेन तत्तत्प्रवृत्तिनिमित्तस्य भेदेन निर्वाहात्, स्वरूपद्रव्य-
स्याऽऽनन्दस्य स्वरूपगुणानां ज्ञानशक्त्यादिनामिव रूपात्मकदिव्यश-
रीरगुणानामौज्ज्वल्यादीनाम् आनन्दमूर्तिदिव्याकारपरमपुरुषे शाश्व-
ततया सत्त्वेन स्वरूपरूपकल्पनाऽनावश्यकत्वात्, स्वेनाऽऽत्मद्रव्यस्य

रूपेण सम्बन्धिद्रव्यस्य गुणगुणिभेदवद्भेदस्य स्वीकाराऽनावश्यकत्वात्, 'अन्तस्तद्धर्मोपदेशादि'तिसूत्रेणापि सूर्यादिदेवाऽन्तर्वर्तिनः 'रूपं रूपं प्रतिरूपो बभूवे'त्यादिना प्रतिदर्शितस्य प्रतिरूपस्य धामगतस्वरूपस्यैव हिरण्मयस्वरूपस्य सर्वकल्याणकारिगुणाश्रयस्य कल्याणकरस्य सुमूर्तात्मकस्वरूपस्यैव, सर्वत्र स्वरूपसत्तया वर्तमानत्वेन, सूर्येऽपि दिव्यमूर्तस्वरूपस्य परमात्मनः प्रतिपादनात्, सर्वावताराणां वेषान्तरोपलक्षितस्वरूपात्मकस्यैव प्रोक्तत्वेन रूपपदेनातिरिक्तग्रहणाऽनावश्यकत्वात्, 'समस्ताःशक्तयश्चैता नृप यत्र प्रतिष्ठिताः। तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्वपुः' इति पाराशरेऽपि यत्र-स्वरूपे समस्ताः शक्तयः तद् रूपं-स्वरूपमेव, हरेर्वपुः-हर्यात्मकानन्दमूर्तिः, विश्वस्मिन् यानि मायारूपाणि तेभ्यो विरूपं विलक्षणं विशिष्टं रूपम्=आनन्दमूर्तिस्वरूपम्, इति तदर्थत्वात्, वेषान्तरपरिचायकतामात्रस्य रूपस्य प्रयोगेऽपि स्वरूपस्यैव प्रतिपाद्यत्वात् 'श्रीहरिवाक्येन प्रबलेन, व० म० १३-स्थेन 'परे ब्रह्मणि यः प्रोक्तो भगवान् दिव्यविग्रहः, सोऽहमेव भवाम्यत्र स्थितो दिव्यनराकृतिः'। (सत्संगिजीवने प्रथमप्रकरणे ४ अध्याये च-'स हि नारायणः स्वामी धाम्नः स्वादक्षरात्परात्। आविर्बभूव भूलोके त्वाकृतिः श्रेयसे नृणामि' इत्यनेनापि स्वरूपमूर्तेरेवाऽऽविर्भावकथनात्, न तु देहान्तरात्मकरूपान्तरताऽवतरणे सिद्ध्यति। तदन्यभाष्यवृत्त्यादीनां स्वरूपाऽपरत्वव्याख्यानानां सर्वथा बाधात्, वचनामृते 'स्वयमक्षरमध्यस्थो जलमध्ये निमज्ज्यैव यथेष्टं स एवाऽन्यस्थलादौ निःसरतीतिवत् सर्वस्थाऽक्षरनिमज्जनोत्तरब्रह्माण्डादिस्थलीनिःसरणमात्रस्य स्वेनैव स्वरूपमूर्तेरेव प्रतिपादनात्, धामस्थस्वरूपमूर्तेरत्रत्यभवद्दर्शनगोचरमूर्तेरणुमात्रभेदो नास्तीति धामस्थस्वरूपमूर्तेरेवाऽत्रत्यमूर्तिस्वरूपस्य प्रतिपादनात् रूपात्मकमूर्त्यात्मकदेहान्तरकल्पनाया अनवकाशात्, प्रच्छन्नमायिकानां निराकारब्रह्मणो मायात्मकसगुणब्रह्मताया निरसनप्रयासकर्तुर्भाष्यकारस्य दिव्यरूपताप्रतिपादनानुसरणात् स्वरूपात्मकसर्वात्मकपरब्रह्मसिद्धान्तेऽत्र रूपपदग्राह्यदेहान्तरग्रहणानुधावनानौचित्यात्। रूप्यते विशेषप्रवेशतया यत्तु तद् रूपमित्यभिप्राये तु अर्चात्मकं रूपं प्रतिष्ठितमूर्त्यादि, आवेशांऽशकलादि चेतनद्वयाधिष्ठिततन्वादि, मानसकल्पितं च ध्यानाहार्दि, ब्रह्माण्डार्थं विराडादि, कण्टकनिष्कासनार्थं कण्टकमिव पाद्कौशिकं बालकादि, त्वभिवर्णितं तद्विद्भिः, एतानि सरूपाविष्टरूपाणि भिन्नानि दिव्ययोगाद् दिव्यानि मायिकान्यप्यमायिकानि सेवार्थोपयोगिकानि, उपासनार्थं सरूपमेव

प्रतिरूपात्मकं तज्ज्ञप्तिधुरन्धरैरभिमतमिति न रूपस्य बह्वादरतया शास्त्रविद्भिः, व्यासेन सूत्रेऽत्र रूपाऽनुपादानात्, 'द्युभ्वाद्यायतनं स्वशब्दात्' 'मुक्तोपसृप्यव्यपदेशाच्च' 'भूमा सम्प्रसादाद् अध्युपदेशात्' 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' 'अनुकृतेस्तस्य च' 'लोकवत्तु लीलाकैवल्यम्' इत्यादिसूत्रेषु आनन्दमूर्तिरब्रह्मणः स्वस्य मुक्तप्राप्यस्य सर्वेत्रान्वितसुमूर्तव्यवस्थितस्य प्राप्तसारूप्यमुक्तसेव्यस्य स्वानुरूपस्वरूपात्मकाविर्भूतमुक्तध्येयस्य निजसंकल्पितरचनाऽनुप्रविष्टाऽसंख्यस्वरूपस्य प्रतिपादनतात्पर्यात्, रूपस्य पृथक्तयाऽनिर्देशात्, प्रत्युत 'अरूपवदेव हि तत्प्रधानत्वात्' इत्यनेन देवादिरूपवत्पृथग्रूपवत्तानिराकरणात्, सम्पद्याऽऽविर्भावः स्वेनशब्दात्' 'आतिवाहिकास्तु तल्लिङ्गात्' 'मुक्तः प्रतिज्ञानात्' 'आत्मा प्रकरणात्' 'अविभागेन दृष्टत्वात्' 'चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः' 'जगद्व्यापारवर्जं प्रकरणाद् असन्निहितत्वाच्च' 'भोगमात्रसाम्यलिङ्गाच्च' इत्यादिसूत्रेषु आत्मनां मुक्तववस्थायां परमात्मस्वरूपसमस्वरूपस्य आतिवाहिकमुक्तानामपि भगवत्समस्वरूपस्य अणुमात्रातिमात्रभेदविरूपताशून्यस्वरूपस्य चेतनमात्रस्य मुक्तात्मकज्ञानघनमूर्तिस्वरूपस्य सुपृथस्पृष्टसर्वानन्दसममोगमूर्तिस्वरूपस्य च प्रतिपादनात् रूपस्याऽनावश्यकस्य पृथक्तया सफलताया अप्रतिपादनाच्च स्वरूपरूपाधिकरणप्रकरणमुपन्यस्य क्वाप्यविभागाच्च वेदान्तानां सूत्राणां च स्वरूपाद् रूपतनूनां विशेषप्रतिपादने प्रवृत्त्यदर्शनाच्च, न रूपावलम्बनं स्वरूपात्पृथगिति सूक्ष्ममीक्षणीयम् । अथ स्वं रूपम् आनन्दस्तादात्म्यमत्र, स्वकीयं रूपं चेद्, अतादात्म्यं सम्बन्धान्तरम्, तत्तु सारूप्यं मुक्तादीनाम्, न तत्र रूपं तदात्मकं वेषान्तरात्मकं वेद्यते, अतादात्म्येन स्वत्वाभावात्, अतो भगवत्स्वरूपान्न रूपान्तरं पृथग्वेद्यं सिद्ध्यतीति स्वरूपमेव समञ्जसम् । श्रीस्वामिनारायणभगवता–'अक्षरधाम्नि स्त्रीपुरुषभावाः सविकारा आकारा न विद्यन्ते' इत्यभिहितत्वात् भगवत्सारूप्यस्यात्युत्कृष्टाकृतिमूर्तिकमुक्तानां चात्यतीष्टतमत्वात् राधालक्ष्म्यादिदासीरूपदर्शकवाक्यानां प्रबलवाक्येन बाधात्, न पुंस्त्रीरूपा द्वेधा मुक्तिरपीति, एवं सति नपुंसकमुक्त्या किमपराद्धम्, तस्मात् परमपुरुषाकारा मुक्तिरेव, सेवा चेत् दासीरूपेणापि, संसारेण किमपराद्धम्, अकामसेवा चेत् नार्यनङ्गीकारेण किमपराद्धम्, विरूपेन्द्रियसापेक्षाकृतिद्वयाऽविनाभावसेवा चेत् रत्यादिना अनङ्गादिना किमपराद्धम्, अदिव्यदिव्यत्वभेदश्चेत् विपरीतत्वेन किमपराद्धम्, निर्दुःखत्वेन श्रैष्ठ्यं चेत् जडमुक्त्या किमपराद्धम्, तस्माद् ब्रह्मलोके परब्रह्मस्वरूपसारू-

प्यमेवैकधेति सर्वं सुसम्पन्नम्। रूपस्य स्वरूपात्मकत्वादेव रूपमूर्त्या-
कृत्याकारशरीरदेहवपुर्विग्रहतन्वादिशब्दार्थोऽपि स्वरूपमात्रमेवेति ज्ञे-
यः, तत्रैव दिव्याऽप्राकृताऽमायिकशुद्धैकात्मानन्दस्वरूपादिव्यवहार-
योगात्, स्वरूपेणैव स्वेनैकदेशस्थोऽपि सर्वदेशस्थो विद्यते परमात्मा,
यथा स्वरूपतो जलमेव परमाणुशीतसूक्ष्मनीहारमेघाऽभ्रवृष्टिवारि-
सरित्समुद्रवाष्पहिमद्व्यणुकाण्वादिरूपाद्यं विभिन्नव्यवहारास्पदं तथा
स्वरूपसच्चानन्दमूर्तिः परमात्मैव व्यापको व्याप्यो यावत्स्थ एकस्थ
इति व्यपदेशार्हः, एकतत्त्वात्मकस्यैव तत्त्वात्, एकदेशस्थत्वेऽपि
सर्वत्रस्थत्वाऽव्यालोपात् सर्वत्रस्थत्वैकत्रस्थत्वयोस्तथाविधानन्तसाम-
र्थ्यशक्तिमतः सत्यसंकल्पस्य स्वरूपमूर्तिमहानन्दपरमात्मनः परदृश्य-
शक्तिविकासमात्रोपयोगादेवैकदेशस्थत्वस्य ज्ञापनात् अप्राकृताऽसा-
धारणदिव्यसाकारमूर्तिस्वरूपानन्दस्यैव सर्वत्र सर्वप्राप्यत्वादेव सेव्य-
त्वलाभात् साकारान्तरविलक्षणविग्रहरूपसिद्धेरनावश्यकत्वात्, आ-
नन्दपिण्डमूर्तिस्वरूपे सर्वप्रकाशसत्त्वात् धामब्रह्मणोऽपि मूर्तेः प्रका-
शरूपत्वात् भगवत्स्वरूपाऽनुस्वरूपात्मकसेवकाऽक्षरब्रह्मणो निरूप-
णाच्च स्वेन परमात्मनैव रूपात्मकविलक्षणविग्रहवत्त्वानङ्गीकारात्,
आनन्दस्वरूपमूर्तौ परमात्मन्येव व्यापके प्रतिप्रतिस्वरूपे सर्वरूपर-
सगन्धस्पर्शादिसत्त्वप्रतिपादनेन वास्तविकभेदावस्कन्दितस्वरूपरूप-
योरंगीकाराऽनावश्यकत्वात्, श्रीस्वामिनारायणपरमात्मना स्वरूपे-
णात्र स्थितेन वचनामृतेषु स्वसाकारस्वरूपमेकमेव सर्वत्र प्रतिपादि-
तम्, न द्वे–रूपे स्वरूपं चेति, कल्पितरूपस्य कल्पनाधीनाऽऽविर्भा-
ववत्त्वे तिरोभावसापेक्षत्वेन परिवर्तने शाश्वतिकैकमूर्तिप्रतिपादकश्रु-
तिविरोधात्, संकल्पितरूपे सौन्दर्ये करचरणाद्यवयवसौन्दर्यप्रयो-
ज्ये नित्यशाश्वतसौन्दर्यविरोधापत्तेः, अत एव आनन्दमूर्तिस्वरूपपु-
रुषाकारपरमात्मनो नित्यत्वे न रूपार्थकपरिणामादिदोषप्रसक्तिः, न
वा द्रव्यान्तरापेक्षितत्वे परायत्ततापत्तिरसंभवोऽपि च, अत एव
नात्र रूपार्थं कल्पितजडशुद्धसत्त्वविभूतिस्वीकारानुधावनाऽऽवश्यक-
ता, श्रीस्वामिनारायणभगवता शुद्धसत्त्वविभूत्यनङ्गीकारात्, शुद्ध-
सत्त्वविभूत्यात्मकनिजपुरुषाकारमूर्त्यनङ्गीकारात्, शुद्धसत्त्वनित्यवि-
भूतिपराप्रकृतिचैतन्यप्रकृत्यादिव्यवहाराणां कल्पनानुधावनव्यर्थत्वा-
त्, तादृशाऽप्राकृतद्रव्योद्भावितहस्तपादाद्यवयवविरूपात्मकपरमात्मश-
रीरघट्टनायास्तादृशमुक्तशरीरघट्टनायाश्च स्वीकारस्य मूर्तिस्वरूपवि-
रोधिकल्पनामात्रत्वात्, संसारस्य मायोपादानकत्वेन आनन्दस्वरू-

पोपादानकत्वापत्तिभिया विलक्षणजडाऽप्राकृतविभूतिसमुद्भूतभग-

तन्मुक्तविग्रहवत्तास्वीकाराऽनौचित्यात्, भगवत्तन्मुक्तादिस्वरूपमूर्तिगतेन्द्रियप्राणान्तःकरणादिशक्तिसामर्थ्यानामेव स्वरूपभूतौ सत्त्वेन तेषां नित्यविभूत्यात्मकत्वाङ्गीकाराऽनावश्यकत्वात्, भूषणायुधस्थानादीनां चेतनावतारत्वेनाऽत्रापि लोके स्वीकृतत्वात् चेतनात्मकमुक्तानां भगवत्सेवनार्थं तथाविधवेषान्तरस्वरूपमूर्तीनां स्वीकारसामञ्जस्येन जडविभूतिस्वीकाराऽनौचित्यात्, स्वरूपसन्मुक्ता एव तत्तद्वेषान्तरात्मकाः सेवन्ते इति एतस्मिन्भावे मुक्तसेवातात्पर्यात्, वस्तुतस्तु अपरिवर्तनशील नित्यैकस्वरूपात्मकाऽऽनन्दमूर्तिकलतयावच्छेभात्मकैकतत्त्वान्तर्गतपुरुषाकारवेषाभूषणाद्यपृथक्सिद्धानन्दतत्त्वात्मकत्वेनैव वेषाद्यर्थं न तादृशविभूतिस्वीकारापेक्षा, चेतनतत्त्वस्यैव तत्सर्वात्मकत्वात्, नित्यत्वात् अप्राप्तिपूर्वकप्राप्तिमत्त्वाभावात्, हृदयगतश्रीवत्सतन्तुरहितहारादीनां मूर्त्यात्मकचिन्हत्वेन वर्णनात्, पृथक्त्वे तु मुक्तानां भूषादिस्वरूपत्वेन निर्वाहात्, नित्यविभूतेः कल्पनामात्रविकल्पविषयत्वेन स्वरूपतोऽसिद्ध्या प्राकृतात्मदेहाद्यर्थं लीलाविभूतेरपि विकल्पविषयतामात्रत्वम्, स्वच्छप्राकृतदेहैर्निर्वाहात्, अतोऽपरिच्छिन्नत्वमपि उपरित एकाया अधस्ताद् अपराया इत्यपि ससीमकत्वेन सपरिच्छेदजनितायाः अपरिच्छेद्यत्वं स्वरूपव्याहतमेव नश्यति, न सिद्ध्यति प्रत्युत वस्तुशून्यत्वं सिद्ध्यति, विकल्पवृत्तेस्तथात्वात्, परमात्मव्यूहाऽवतारादीनां जडविभूतिदेहवत्त्वेन निर्वाहार्थं जडाधीनतापत्तौ तन्निवृत्त्यर्थं दिव्यपदप्रयोगकौशल्यानुधावनं तु जडे दिव्यत्वमित्यभिमत्या सर्वशक्तिमच्चेतनमूर्तिदिव्यत्वानुधावने का विषूचिकाऽवरुध्यति?, सर्वपदवाक्यप्रमाणप्रसिद्धाऽक्षरब्रह्मात्मकैकस्य भगवन्मूर्तिः कालस्य महाव्यापकस्योभयदिक्परिच्छिन्नतारहितस्य सर्वस्वरूपात्मकभवनचेतनधाम्नः स्तरूपस्थिरस्य सर्वेवस्त्वात्मकभवनशीलस्य स्वरूपसतो भगवच्छ्रीस्वामिनारायणपरमात्मना स्वीयवाक्यैर्निरूपितस्य विभूतिस्थानापन्नत्वेन चतुर्थतत्त्वस्य दिव्यसर्वात्मकत्वस्वीकारे को नाम अनभिनिवेशः काल्पनिकानाम्'। शाश्वतश्रुतिसिद्धस्य अक्षरधाम्नस्तत्त्वेऽभिप्रेते विभूत्यनुधावने को नाम रसः काल्पनिकभूतभूतिमिष्टान्नास्वादनानुधावताम्?, भगवता श्रीस्वामिनारायणपरमात्मना स्ववचनामृतेषु स्वस्य दिव्यविभूतिविग्रहे वास इति नैव निवेदितम्, स्वस्याऽक्षरधाम्न एवाऽक्षराऽमृतसर्वसामर्थ्यशक्तिगुणाभिरामतेजोमयशीतलशान्तस्वरूपतादिस्थित्या वर्णनात्, 'त्रिपादस्यामृतं दिवि त्रिपादूर्ध्वमुदैत्पुरुषः, पादोऽस्येहाऽभवत्पुनः' इत्यनेन त्रिभागी ब्रह्मलोकोऽक्षरधामतत्त्वमुक्ततत्त्वपुरुषोत्त-

मतत्त्वान्वितस्ततोऽवशिष्ट एकभाग एव मायिकसृष्टिसमन्वित इति तत एव प्राकृतिकविकृतिसृष्टिसर्जनात्, प्रकृतिलये ब्रह्मधामगमनप्राप्त्यादिकथनात्, विभूतिप्राप्त्यादेरकथनाच्च, गूढतरापत्तिस्तु नित्यविभूतिकृतविग्रहवत्त्वे रूपे सति आनन्दज्ञानघनात्मकस्याऽविग्रहवत्त्वस्य. व्यापकस्य निराकारस्याऽर्थात् स्फोटत्वे स्वयमेव समापततीति तु नैव निवारिता प्रच्छादितैव सर्वथा सेयं महामारी कथं न निष्कास्यते ?, श्रीहरिणा तु स्वमूर्तिप्रकाशात्मकाऽक्षरब्रह्मणो व्यापकतया वर्णितत्वेन तत्र शरीरितया स्वरूपमूर्तिमत्तया स्थितत्वेन च 'महतो महीयान्' स्वरूपेण स्वीकृतत्वेन महामारी निष्कासितैवेति चतुर्थभेदस्य स्वरूपद्वयव्यवस्थयेति। परमात्मनो नित्यतृप्तस्य स्वभोगार्थं रूपात्मकव्यतिरिक्तजडविभूतिजन्यदेहकल्पनायाः परमात्मत्वव्याहतित्वपर्यवसानेन तदस्वीकारात्, परमात्मनो नित्यतृप्ताऽऽनन्दघनमूर्तिस्वरूपतयाऽतृप्त्यभावेन भोगानन्दज्ञप्त्यानन्दादिलब्ध्यसंभवेन लीलानन्दादेरपि स्वार्थमस्थानात्, मुक्तानां तु तदुपासनासेवापरिचरणादिद्वारकाऽऽनन्दसातत्यमिति मुक्तानामपि नित्यज्ञानघनमूर्तीनामानन्दभरपूरतायाः शाश्वतिकत्वेन तदर्थं जडविभूतिदेहकल्पनाया वैयर्थ्यात्, नित्यानन्दघनमूर्त्यात्मकवेषान्तरावस्थितश्रीहरेरत्रापि भक्तानामुपासनासिद्धेर्जडविभूतिलीलाविभूतिप्रभृतितत्त्वानां देहग्राहकत्वकल्पनानामपि निष्प्रयोजनकत्वात्, ततश्च स्वरूपरूपभेदप्रतिपादकाऽऽर्याणां परमात्मनो निम्नदशापन्नानामस्माकमिव पराधीनभोगाद्यापत्तिपराभवाऽऽक्रन्दनावतारितत्वदोषदूषितत्वापत्तेः सेवास्वार्थार्थं स्वामिनिम्नतापादकत्वापत्तेश्च, प्रच्छन्नाऽभक्तत्वख्यापनतास्फोटस्यास्कन्दितत्वेन अतिस्निग्धवत्सलबालजनन्या अतिबलेनाऽर्भकस्य हृदयास्थिमर्दनातिमर्दितभावनिधनपर्यवसानितावत् भगवतोऽपि तथापादकत्वतत्त्वात्मकस्वरूपहननापत्तेरवर्ज्यत्वात्। आनन्द आत्मा, ज्ञानं गुणः, विभूतिर्देहः, तत्र भोगः; आनन्दगुणा अन्ये, देहगुणा अन्ये, एतेषां समुदायः परमात्मा भोक्ता भोग्यश्चेत्येवं विवेचयताऽनुजेन स्वाग्रज एकतत्त्वात्मको विशीर्णीकृत इत्ययं दोषो नाऽज्ञायि, निराकारस्य मायाऽविद्याग्रहणे साकारतायाः निरासार्थम् आनन्दघनस्वरूपस्य दिव्यविभूतिजन्यदेहवत्त्वस्य साकारत्वस्य स्वीकरणप्रयासः, स च दिव्यसाकारमूर्तिस्वरूपैकतत्त्वस्य श्रीहरेरक्षरधामात्मकचतुर्थतत्त्वभेदाङ्गीकारादेव विभूतिग्रहणप्रयासो दुर्निरस्त एवेति स्वेष्टदेवाभिप्रायोऽनुसरणीयः, अनुजस्य सिद्धान्तापेक्षयाऽग्रजस्य सिद्धान्तस्य ध्रौव्यात्, विशिष्टाद्वैतसिद्धान्तमात्रग्राह्यत्वाकावपि विशिष्टाद्वैतं ब्रह्म-

ति सगुणनिर्गुणैश्वर्यात्मकब्रह्मणश्चतुर्थभेदस्य स्वेनैव श्रीमुखेनोक्तत्वात् ब्रह्मद्वारैव मुक्तानुयुक्तमायिकसृष्टेः सर्जनोपदेशात् विशिष्टं ब्रह्मैव सर्वत्र व्यापकं धामात्मकमिति स्वेनैवोक्तत्वात् विशिष्टब्रह्माऽद्वैतत्वस्य स्वस्याभिप्रेतत्वात् अनुजानां लक्षसिद्धान्तानामपि अग्रजस्यैकसिद्धान्तेन पराहतत्वात् ॥ अस्याऽक्षरधामस्थितस्य परब्रह्मणः श्रीस्वामिनारायणपरमात्मन एव योगे धारणादिगोचरत्वेन साध्यतया सांख्ये ज्ञेयत्वेन साध्यतया न्यायवैशेषिकयोरनुमेयत्वादिना साध्यस्वरूपतया मीमांसयोः साक्षात्कारगोचरसाध्यस्वरूपतया निर्गुणकर्माऽर्पणाधिकरणसाध्यस्वरूपतया मुक्तानां पुराणेषूपास्यतया प्राप्यतया साध्यस्वरूपतया निर्दिष्टत्वमवसेयम् । अथाऽत्र परमात्मनि श्रीस्वामिनारायणे परस्मिन् ब्रह्मणि संयमयत्नवता भाव्यमित्याह स्वयं वचनामृतेषु, यथाहि–ग० प्र–१९ 'भगवत्स्वरूपस्य धारणां न परित्यजेत्' । ग० प्र० २१ एतद्देहं निजस्य स्वरूपं न मन्येत भिन्नं मन्येत' । 'ग० प्र० २६ 'एकस्य भगवतः स्वरूपे एव रसो ज्ञायेत, भगवतः स्वरूपं विनाऽन्यत्र रसो ज्ञायेत चेत् सा महती क्षतिः' 'एकस्मिन् भगवत्स्वरूपे एव लुभ्येत' 'भगवन्मूर्तिर्द्दश्येत' 'केवलभगवत्स्वरूपे प्रीतिः वर्तेत' 'भगवत्स्वरूपे एव रसिका प्रीतिरस्ति' । ग० प्र० ५२–भगवत्स्वरूपं समविजानीयात्' 'सांख्यशास्त्रेण भगवत्स्वरूपं जानीयात् चेत्' 'योगशास्त्रेण भगवत्स्वरूपं जानीयाच्चेत्' 'वेदान्तशास्त्रेण भगवत्स्वरूपं जानीयाच्चेत्' 'पंचरात्रशास्त्रेण भगवत्स्वरूपं जानीयाच्चेत्' 'पंचरात्रेण जानीयाच्चेद् मनुष्यभाव एकदेशस्थभावश्च ज्ञायेते'ति दूषणं रूपात्मकशरीरवत्त्वे भवेत्' 'उपासनावान् रूपशरीरवन्तं भगवन्तं मन्यते स' दंभिभक्तः' । ग० प्र० ७२–'समाधिस्थित्यनन्तरं ब्रह्मणः स्वरूपसकाशाद् देहे कयाचिदपि रीत्याऽऽगमनं नैव जायते' । का० ४–'भगवानक्षरधाम्नि मूर्तिमान् सन् स्वान्तर्यामिशक्त्या जीवेषु व्यापको मूर्तिमानिव क्रियाकर्ता चेति' । लो० १९–जीवस्य स्वरूपं येन यादृग् दृष्टं, यादृग् जीवोऽस्ति तादृग् यथार्थो ज्ञायते' । लो० १८–'भगवतः कीदृग् रूपमस्ति (स्वरूपमस्ति) ? तत् कथयामि–भगवाँस्तु सच्चिदानन्दरूपोऽस्ति, तेजोमयमूर्तिरस्ति, यस्यैकैकरोम्णि कोटिकोटिसूर्यसमप्रकाशोऽस्ति, कोटिकामदेवानां लज्जाकरो भगवान् सुरूपोऽस्तीति, नियन्ताऽन्तर्यामी सुखस्वरूपोऽस्ति, एतादृशं भगवत्स्वरूपमस्यि, तत्स्वरूपं सदा द्विभुजमस्ति, क्वचित् स्वेच्छया चतुर्भुजमष्टभुजं सहस्रभुजमपि दृश्यते, स एव भगवान् मत्स्यकच्छवराहादिरामकृष्णादिरूपाणि तद्योग्यकार्यार्थं धारयति सोऽपि निजं यन्मूल-

रूपं तत्परिहाय तानवताराच धारयति' इत्यादौ स्वरूपात्मकरूपप्रयोगः सुखस्वरूपमूलकथनात्, एतादृशं भगवत्स्वरूपमस्तीति कथनाच्च' 'मुक्ता दिव्याब्रह्मरूपा भवन्ती,ति कथितम्, न तु विभूतिरूपा भवन्तीति। पं० १ 'दिव्यमूर्तिः प्रकाशमयः सुखरूप (आनन्दात्मको) भगवान्' 'भगवतः सुखे (आनन्दात्मके) दृष्टिर्भवेयाति'। अत्र रूपस्य सुखं नोक्तम्। पं० २-श्रुतिशास्त्रेण कथितं यद् भगवत्स्वरूपं तस्याऽनुभवात्मकयथार्थज्ञानवत्त्वे सत्येव मोक्षो भवतीति'। पं० ३-'निजं क्षेत्रज्ञं चैतन्यरूपं मत्वा भगवति स्नेहभक्तिं कुर्यादि'त्यत्रात्मनः स्वरूपं रूपपदेनाभिहितम्। पं० ४-मनुष्यस्वरूपस्य भगवतो वर्णनं तथा मूलदिव्यस्वरूपस्य वर्णनं शास्त्रेषु कृतम्' अत्र स्वरूपसमानाधिकरणरूपस्य स्वरूपपरत्वमेव, अतः 'भगवतः सनातनमनादि दिव्यं मूलरूपं निजाक्षरधामस्थमिति' रूपं स्वरूपपरमेव, 'ऐश्वर्यसंकोचं कृत्वा, दिव्यभावसंकोचं कृत्वेत्यादिनापि'-स्वरूपस्त एवाऽऽविर्भावज्ञापनात्। पं० ६-'प्रत्यक्षश्रीकृष्णस्वरूपेऽचलमतिः' इत्युक्तम्। पं० ७ 'भगवतः परमं सत्यस्वरूपम्, भगवतः स्वरूपमनन्तैश्वर्ययुक्तम्, एनामेव भगवन्मूर्तिं सच्चिदानन्दमयीं जानाति, एवं भगवतः स्वरूपं तत्त्वविधया जानाति, 'अरूपं भगवत्स्वरूपं कल्पयति, साकारदिव्यस्वरूपमेवाऽऽसीत्, एवं रीत्या सर्वकारणसदादिव्यसाकारप्रत्यक्षपुरुषोत्तमनारायणमूर्तौ शर्करारसमूर्ताविव त्यागभागौ न जानीयात्, मर्मज्ञातारस्तु भगवतः स्वरूपं यथाविधमक्षरधाम्नि वर्तते तथाविधमेव पृथिव्यां भगवतो मनुष्यस्वरूपं वर्तते, न तु तत्स्वरूपेऽत्र स्वरूपे च लेशमात्रमपि विभेदं जानन्ति, इत्येतदेव सतत्त्वभगवज्ज्ञानम्, एवमेव प्रत्यक्षभगवत्स्वरूपस्य दृढोपासनावतः भगवत्स्वरूपे संशयो न भवेत्, एवंरीत्या श्रीजीमहाराजेन स्वभक्तजनशिक्षार्थं स्वस्य स्वरूपस्याऽनन्यनिष्ठाया वार्ता कृता, श्रुत्वा तां परमहंसा हरिभक्ताश्च श्रीजीमहाराजस्य तस्य स्वरूपस्य तथैव विशेषतो दृढतां चक्रुरिति'। म० १-क्षेत्रज्ञस्थं भगवन्तं दृष्ट्वा भगवत्स्वरूपेऽतिशयवृत्तिर्लग्नाऽभवत्'। पदार्थेभ्यो वृत्तीर्वियोजयित्वा भगवतः स्वरूपे रक्षयेत्, तेन भगवत्स्वरूपे एव वृत्तिस्तिष्ठेत्, भगवत्स्वरूपस्य माहात्म्यमतिशयं जानीयात्, भगवत्स्वरूपे तु सर्वाणि सुखानि सहैकत्र वर्तन्ते, एतादृशं भगवत्स्वरूपमाहात्म्यदार्ढ्यं कुर्यात्, एनां वार्तां दृढां कुर्यात्' अत्र आनन्दमूर्तिस्वरूपसुखस्यैवोक्तत्वात्। म० ४-भगवत्स्वरूपनिश्चये न्यूनता, भगवत्स्वरूपमाहात्म्यं भवेत्, भगवत्स्वरूपमहिमविद एव भगवदखण्डचिन्तनं भवति। म० ८-भगवतः स्वरूपं

निर्गुणम्, भगवत्स्वरूपस्य सम्बन्धः, इन्द्रियवृत्तयो भगवत्स्वरूपे होतव्याः। म० ९–भगवत्स्वरूपस्य द्रोहो न भवेत्, भगवन्मूर्तेर्बलमतिशयं रक्षणीयम्, सर्वोपरिसदादिव्यसाकारमूर्तिसर्वावताराऽवतारिभगवत्स्वरूपं मम प्राप्तम्, भगवत्स्वरूपस्य पक्वा निष्ठा, भगवत्स्वरूपं सदा दिव्यसाकारमूर्तिसर्वावतारकारणं ज्ञातव्यं, यद्येवं न जानीयात्, निराकारं जानीयाद् अन्यावतारसमं जानीयात् तर्हि द्रोहो भवेत्। अर्जुनस्य भगवत्स्वरूपस्य बलं, बुद्धिमतां भगवत्स्वरूपस्य बलम्, भगवत्स्वरूपबलप्रतापेन रक्षा, भगवत्स्वरूपबलाधिकतावान् एकान्तिकः, भगवत्स्वरूपनिष्ठा पक्वा, भगवत्स्वरूपबली पक्वसत्संगी भगवत्स्वरूपमहिमानं जानीयात्, सारेषु चातिशयसाररूपेयं वार्ता,। म० १०-भगवतः स्वरूपम् भक्तिहीनस्य निराकारं ज्ञायते, अपि तु भगवतः स्वरूपं निराकारं नास्ति, अध्यात्माऽऽधिभूताऽऽधिदैवाधारं भगवत्स्वरूपम्, स्वरूपेण तु विराडादिभ्यः पृथक्, एतदाश्रयार्हं स्वरूपम्, पुरुषोत्तमो भगवान् ब्रह्मात्मकान्तर्यामिशक्तिद्वारा सर्वव्यापकः, मूर्तिमाँश्च सर्वेभ्योऽतिरिक्तः, ब्रह्म तु पुरुषोत्तमभगवतः किरणम्, स्वयं भगवाँस्तु सदा साकारमूर्तिः, भगवत्स्वरूपनिश्चयात्मकगर्भवतो भगवदक्षरधामात्मकफलप्राप्तिर्भवतीति'। भगवत्स्वरूपे प्रीतिसमुद्भावकं विशेषकारणं किम् ?, भगवत्स्वरूपम् आकाशवन्निर्लेपम् कर्तृ सद् अकर्तृ च'। म० १३–हृदयाकाशे व्याप्ततेजसि भगवन्मूर्तिः अतिप्रकाशमयी घनश्यामाऽतितेजस्विनी द्विभुजा द्विचरणा मनोहराऽतिसौम्या किशोरी विद्यते, मूर्तेरमितो मुक्तमण्डलानि निषण्णानि, सन्ति, वयं तत्र निषण्णा वदामो भवतोऽपि तत्रैव (ब्रह्मलोके) निषण्णान् पश्यामि, तत् स्वरूपं यस्याऽवगतं भवेत् तस्य क्वाप्यासक्तिर्न भवेत्, तत् स्वरूपं तु भवन्तोऽपि पश्यन्ति, तत्तेज आत्माऽक्षरधाम ब्रह्मोच्यते, भगवन्मूर्तिः आत्मनां तत्त्वं परब्रह्म पुरुषोत्तम उच्यते, एवंविधया भगवत्स्वरूपज्ञातुः क्वापि विषयप्रीतिर्न भवेत्, एतादृशं भगवत्स्वरूपं दृढतया ज्ञेयम्, भगवत्स्वरूपदृढतां विना क्षतिर्न पूर्येत, एतादृशीभगवत्स्वरूपसम्बन्धिनी वार्ता शास्त्रेष्वपि स्वमत्या न समज्ञायते, प्रकटसत्पुरुषमुखेनैव समज्ञायते, यथार्थं भगवत्स्वरूपं विज्ञातम्,। म० १४–भगवत्स्वरूपे तदात्मकतां प्राप्तः, भगवत्स्वरूपस्य निश्चयः, भगवत्स्वरूपज्ञानम्,। म० १६–भगवन्मूर्तिनिष्ठा, हृदि भगवत्स्वरूपस्थितिः, भगवत्स्वरूपनिष्ठा दृढा कर्तव्येति, मूर्तिः स्वरूपम् अभिन्नमुक्तम्। म० १७–भगवत्स्वरूपं केवलचैतन्यमयम्, भगवत्स्वरूपं तत्त्वसहितं मायिकं जानाति स पापी, तत्त्वरहितं निराकारमात्रं जानाति स पापी, भक्तस्य तु भगवति भागत्यागप्रसंगो नास्ति, निर्विकल्पस्थितिकस्य भगवत्स्वरूपे किमप्युत्थानं न

स्यात्, एवं यो भगवत्स्वरूपं जानीयात्, भगवत्स्वरूपे कोऽपि घाटो न भवेत्, पुरुषोत्तमस्वरूपे स्थितप्रज्ञो बोध्यः, एवं पुरुषोत्तमस्वरूपदृढ-निष्ठावतस्तदूर्ध्वं किमप्यन्यत् बोद्धव्यं नावशिष्यते। म० २०-समाधि-निष्ठस्य मायापरा स्थितिर्भगवत्स्वरूपस्य दृढसम्बन्धो मायापरब्रह्मसम-जीवचैतन्यो भगवत्स्वरूपसम्बन्धश्च भवति। म० २४-भगवत्स्वरूपेऽ-खण्डिता वृत्तिः रक्षणीया, भगवतोऽक्षरे धाम्नि स्थिता भगवन्मूर्तिः। म० ३३-एकभगवत्स्वरूपस्यैव चिन्तनं वर्तते'। म० ३५-भगवत्स्वरू-पस्योपासना कर्तव्या, भगवन्मूर्तेरुपासना, इति स्वरूपमूर्त्योरैक्योक्तत्वा-त्। म० ३६-भगवत्स्वरूपेऽखण्डवृत्तिस्तिष्ठेत्। म० ३९-शास्त्ररहस्यम्-यः ब्रह्मज्योतिःस्वरूपज्ञानरूपतत्त्वसूक्ष्मनिरञ्जनक्षेत्रज्ञसर्वकारणपरब्रह्म-पुरुषोत्तमवासुदेवविष्णुनारायणनिर्गुणनामभिः परोक्षतयाऽभिहितः, तस्य जन्मकर्ममूर्तयः सर्वं दिव्यस्वरूपं सर्वोपरीति। म० ४२ अक्षरधाम्नि वर्तमान एव सत्यसंकल्पो (स्वरूपसन्) भगवान् ब्रह्माण्डेषु यादृशानि रूपाणि (स्वरूपाणि) प्रकाशयितव्यानि तानि प्रकाशयत्येव'। अत्र सत्यसंकल्पस्य स्वरूपलक्षणत्वेन प्रकाशपदप्रयोगेण च तद्बलेन रूपपदस्य स्वरूपार्थः, पुरुषोत्तममूर्तिस्थलमेवाऽक्षरधाममध्यमित्यपि परिच्छिन्नभा-वरहितत्वं ज्ञापयति तेन परिच्छिन्नविभूतेरनावश्यकताऽपि सूचिता। म० ४८-वन्दे सहजानन्दरसरूपमि'ति (आनन्दस्वरूपमूर्तिम्) यस्य चिन्तनं भगवत्स्वरूपस्य भवतीति तस्य कृतार्थता दर्शिता'। म० ४९-भगवत्स्वरूपस्य दर्शनकर्तारः अभयपदं प्राप्य भगवत्पार्षदा भवन्तीति स्वरूपसाकारता दर्शिता। म० ५०-तेजोमयेऽक्षरब्रह्मणि मूर्तिमत्पुरुषो-त्तमभगवताऽखण्डप्रीतिर्योजिताऽस्ति'। म० ५५-भगवत्स्वरूपस्यैव चि-न्तनं कुर्यात'। म० ६१-भगवत्स्वरूपस्य निश्चयः। म० ६४ भगवान्-श्रीकृष्णपुरुषोत्तमो राजाधिराजोऽखण्डमूर्तिरस्ति, सोऽक्षरे वर्तमान एव यत्र दर्शनदानं घटते तत्र दर्शनं ददाति' इत्यनेन स्वरूपानन्दमूर्तिरेव दर्शिता। म० ६७-सुखस्वरूपः (आनन्दस्वरूपः) भगवान्, भक्तस्यापि भगवत्समाना सुन्दरता कथिता। वृ० १ ब्रह्मपुरे श्वेतद्वीपे वैकुण्ठे कीदृशं भगवत्स्वरूपं भवेत् कदा तस्य दर्शनं भवेत्'। वृ० २ सांख्ययो-गवेदान्तनारदपंचरात्रादिभिः भगवत्स्वरूपज्ञानानन्दस्य प्रतिपादनं कृ-तम्, न तु दिव्यविभूतिरूपस्येति। वृ० ४ हृदि साक्षिरूपमूर्तौ भग-वत्स्वरूपे वृत्तिं रक्षयेत्। वृ-७ भगवत्स्वरूपस्याऽन्वयव्यतिरेकभाव उक्तः। वृ० ८ भगवत्स्वरूपे वृत्तिं रक्षयेत् लीनोभवेत्। वृ० ९ समाधौ क्षणमात्रं भगवत्स्वरूपे स्थितिर्भवेत् तेन भगवत्स्वरूपसम्बन्धिनिर्गुणसुखं पारेसाहस्राऽब्दानि भुक्तमिति ज्ञायेत। वृ० १२ अक्षरधाम्नि श्रीपुरु-

षोत्तमो भगवान् सदा दिव्यमूर्तिर्विराजते, भगवत्स्वरूपस्य परिपूर्णनिश्चयो भवेत्। वृ० १३-भगवान् एकदेशो सन् सर्वदेश्यस्ति, आकाशवद् अरूपः सन् न व्यापकः, किन्तु सदा मूर्तिमान् भगवान् अनन्तब्रह्माण्डेषु भासते सा व्यापकता स्वेच्छाद्वारा बोध्या। म० १४-भगवत्स्वरूपे चित्तं निविशति। वृ-१७ भगवन्मूर्तौ कल्याणकारिगुणाः वृ-१८ स्वयं सदा द्विभुजः, उपनिषत्सांख्ययोगपञ्चरात्रैर्भगवतो द्विभुजस्वरूपस्यैव वर्णनं कृतम्, तत्परोक्षं भगवत्स्वरूपम्। भगवतो द्विभुजस्वरूपे उपासनाभेदा न कर्तव्याः,। श्रीन० १ तत्स्वरूपमतिशयमहदपि न दृश्यते, वटपत्रशायिबालस्वरूपम्। ग० अ० १ भगवन्मूर्तिः। ग० अ० ४ जीवात्मविशेषसत्तया ज्ञातृतया मांसचक्रे सामान्यसत्तया ज्ञानतया देहे व्याप्तः,। स भगवन्मूर्तौ प्रविश्य जलीयकरकाशिलादिवत् वह्नेरत्नप्रसुवर्णपिण्डवत् सुमूर्तश्चेतनतत्त्वमात्रस्वरूपः भगवत्सारूप्यवान् भवतीति मुक्तौ न विभूतिरूपपदार्थाऽङ्गीकारापेक्षेति। ग० अ० ७ भगवद्भक्तो भगवद्धामनि मूर्तिमान् सन् भगवत्सेवायां वर्तते। ग० अ० २२ जीवात्मा न पुरुषो न स्त्री किन्तु सत्तामात्रचैतन्यः, तस्य भगवद्धामनि भगवद्रुच्यनुसारेण आकारो भवति, तेन वा सेवाऽवकाशानुसारेण आकारो धार्यते, इत्युक्तेः विभूतिदेहापेक्षा नास्ति, चैतन्यप्रकृतेः ज्ञानज्ञानितत्त्वस्यैव साकारपिण्डतालाभात्। ग० अ० २७-शब्दस्पर्शरूपरसगन्धादिसुखानि भगवत्पुरुषोत्तमस्य सुखमयमूर्तिदिव्यमूर्तेरेकस्थले वर्तन्ते, अलौकिकसुख(आनन्द)मयभगवन्दिव्यमूर्तौ योक्तव्यम्। ग० अ० २८ भगवत्स्वरूपं सर्वसुखमयमूर्ति जानीयात्'। ग० अ० ३० एकचैतन्यतेजोराशिमध्यस्थपुरुषोत्तमभगवन्मूर्तिर्विराजते। ग० अ० ३१-ब्रह्मरूपतेजोमयाऽक्षरधामनि स्थितायाः पुरुषोत्तमभगवदाकृतेः अवतारान् धारयति, धामस्थमूर्तवितन्मूर्तावधिकसादृश्यं वर्तते। प्रत्यक्षभगवन्मूर्तौ धामस्थमूर्तौ भेदो न ज्ञायेत तादात्म्यं ज्ञायेत तद्ध्यानकर्तुः मूर्तिद्वयगुणातता भासेत, एवं श्रीहरिणा स्वस्य पुरुषोत्तमस्वरूपस्य निरूपणं कृतम्। ग० अ० ३२-भगवान् स्वीयतेजोमयाऽक्षरधामनि सदा साकारमूर्तिः सर्वकारणं सर्वनियन्ताऽन्तर्यामिराजाधिराजो विराजते, सोऽलौकिकदिव्यसुखमयमूर्तिरस्ति। ग० अ० ३५-भगवन्तं निराकारं न जानीयात् सदा साकारं जानीयात्। ग० अ० ३६-पुरुषोत्तमभगवन्तं ब्रह्मज्योतिःसमूहेऽनादिसाकारमूर्तिं तस्यैव सर्वानवतारांश्च जानीयात्। भगवन्मूर्त्युपासनाध्यानादि आत्मब्रह्मदर्शनसाधनम्। ग० अ० ३७-भगवत्स्वरूपज्ञानं कथयामि-भगवत्स्वरूपे कालस्य सामर्थ्यं नास्ति, भगवत्साधर्म्यमाप्ता भगवद्धामगता मुक्ता अपि भगवदाकारसमाकाराः,

एतादृशं निर्गुणं भगवत्स्वरूपमस्ति, स भगवान् धामैकदेशस्थोऽप्यन्वये-नाऽनेकब्रह्माण्डस्थोऽन्तर्यामी कर्मफलप्रदाता जीवजीवनो वर्तते भगवत्स्व-रूपं जीवरूपं च भिन्नविधमस्ति, भगवत्स्वरूपसुखानुभवो न विस्मर्यते। ग० अ० ३८-अक्षरधाम्नि भगवतः पार्षदानां मुक्तानां चाकाराः सत्या दिव्या अतिशयप्रकाशयुक्ता द्विभुजाः सच्चिदानन्दा विद्यन्ते। मुक्तपुरु-षैर्दिव्यनानोपचारैः (मुक्तात्मकैः) सेवितो वर्तते भगवान् (सेवार्थं मुक्ता अनेकाकारान् धारयन्तिः (ग० अ० २२) कुत्रचिद्वचनामृते विभूतिपदं दत्तमपि स्मृद्धिस्वरूपधरा मुक्ता एव विभूतयो बोध्याः, न ब्रह्मलोके एतत्पृथिवीवत् विभूतिपृथिवीकल्पनोचिता, सर्वत्र स्व-रूपानन्दस्य सुमूर्तत्वप्रयोगैर्विभूतिमूर्त्याकारकल्पनाया निरस्तत्वात्। वारांगनायाः सुधर्मिणीकन्याया अपि प्रसह्य वारांगनाकरणत्ववत् पण्डितप्रखरस्यापि गतानुगतिकजडशरीरादिस्वीकृतिरूपाशंसतासमैव। विशेषविज्ञस्य सम्प्रदायसंशोधकत्वेन परम्परायत्तत्वाऽव्याहतत्वात्। स्वरूपसत्तारूपसत्त्वये सापेक्षगुणानां ज्ञानेच्छायत्नादिवदएकाधिकरणक-त्वेनैव निर्वाहे प्रयोज्यप्रयोजकभावेन ज्ञानादिसौन्दर्यादिगुणानां स्वरूप-रूपात्मकव्यधिकरणत्वे स्वीकृत्यनावश्यकत्वात् साकारैकतत्त्वे चोभयेषां सामञ्जस्यात्, आभरणाऽऽयुधादीनां राधिकावंशीवत् मुक्तात्मकत्वेन चेतनानां तेषां पृथग्गुणादिवद्वर्णनाऽनावश्यकत्वात्, स्वरूपात्मकस्यैव रूपपदेनोक्तत्वात् ग्रहणाच्च वर्णाऽसंभवशंकासमाधानादिविलासव्यर्थत्वा-त्, परमेश्वरस्य स्वमूर्तौ तात्त्विकभेदे संसारित्वेऽवैशिष्ट्येण उत्कृष्टताप्र-तिपादनार्थं दिव्यत्वप्रयोगमात्रस्य काल्पनिकत्वात् स्वरूपशून्यत्वात् व-स्तुशून्यत्वाच्चाऽग्राह्यत्वम्। 'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना' इत्यत्र ज्ञानानन्दमूर्तिस्वरूपेण मया जगद्व्याप्तमिति स्वरूपमूर्तेरेव स्वीकारात्, आनन्दस्वरूपमूर्तौ परमात्मनि सौशील्यवात्सल्यसौन्दर्यादि-समस्तसमावेशेन दिव्यात्मविग्रहयोः शरीरिशरीरभिन्नताभावनानौचि-त्यात्, देहदर्शिसंसारिणः परमात्मनि स्ववद्दर्शनादिप्रयुक्तसिद्धान्तयोज-नाऽनौचित्यात्, रूपं रूपं प्रतिरूपो बभूवेति स्वरूपव्याप्तेः सर्वत्र घटि-तत्वेन मूर्तिशरीरिभेदसाधनानुधावनस्य निष्फलत्वात्, एतस्याऽऽनन्दस्य मात्रामुपजीवन्तीति परमात्मानन्दात्मकमूर्तेरुपास्यस्य मुक्तभोग्यत्वेन मु-क्तेभ्यो स्वानन्दभोगदानार्थं स्वानन्दमूर्तिस्वरूपस्यैव साक्षाद्विषयतयोप-पत्तेः स्वामिसेवकयोश्चेतनात्मतत्त्वयोर्विभूतिदेहात्मकशरीरद्वारकपराधी-नभोगाऽनावश्यकत्वात्, शरीरद्वारकभोगस्याऽऽनन्दभोगस्याऽतिशयत्वा-धायकत्वेऽनतिशयत्वप्राप्त्यात्सकदूषणस्याऽपरिहार्यत्वात्, अन्याधीनाऽति-शयत्वमिति स्वरूपभोगे निरतिशयत्वहानिः, स्वरूपानन्दभोगेऽतिशयत्वे

विग्रहभागेऽनतिशयत्वमिति तद्वत्त्वे भोक्तृणामुपेक्षाबुद्धेः सविग्रहस्योपासनाहान्यापत्तिः, संसारवद्व्यवहारे मुमुक्ष्वनवधेयत्वापत्तेर्मोक्षवाक्यानां निष्प्रवर्तकत्वे तादृग्वक्तरि सत्यकामसत्यसंकल्पत्वयथार्थवक्तृत्वसर्वज्ञत्वादिहान्यापत्तिरपरिहार्यैव, भूतसंघातजडानामनानन्दत्ववत् विभूतिसंघातानामनानन्दस्य ध्रौव्यादेवाऽनानन्दसानन्दयोर्योगेऽर्थाद्विकृतिरूपा तृतीया गतिरर्धानन्दत्वात्मिकाऽर्धाऽनानन्दात्मिकेति असुखात्मिका भावरूपा काचिदापतति, साऽस्माकं विग्रहवत्त्वे यादृगभिधानवाच्या तत्रापि तथैव वाच्या स्याद् अन्यवाचकानुपलम्भात्, तथा चाऽप्रसन्नतात्मकं प्रसन्नताविरोधितत्त्वं यत् स्वीक्रियते तत् प्रतिकूलवेदनीयतया सिद्धं प्रसह्य स्वसत्त्वेऽस्माकमिव स्थितिं साधयेदिति न मोक्षगन्धशंकापि समुपतिष्ठेत्, स्वात्मकानन्दाद्युपव्यञ्जकत्वस्य शरीरलक्षणत्वे सुयोग्ये निर्दोषे तदन्यलक्षणानामत्यनावश्यकत्वात्, स्वात्मकतत्त्वे स्वमूर्तौ स्वीयसम्बद्धे च तादृशे तथा व्यवहारात्, स्वरूपेणैव सर्वनिर्वाहे रूपात्मकदेहसिद्धिप्रयासस्य श्रीहर्यभिप्रायविरोधित्वात्, किञ्चाऽक्षरब्रह्ममुक्तादिशरीरित्वेनैव भोगदानप्रतिदाननिर्वाहे जडद्वारस्य रक्षणेऽन्यथाव्यापारस्याऽनावश्यकत्वात्, स्वेनैवाऽम्बरगतौ सामर्थ्ये विमानावलम्बनस्याऽनावश्यकत्वमिव पृथग्देहानावश्यकत्वात्, स्वरूपानन्दातिशायकत्वे विग्रहस्याऽऽनन्दशून्यस्य ग्रहणाऽपेक्षया सानन्दस्य स्वान्वितस्याऽक्षरब्रह्ममुक्तस्याऽनादेः शाश्वतस्ववरितस्य स्वोतप्रोतसच्चिदानन्दात्मकस्वविग्रहस्य विधाने श्रैष्ठ्यात् तत एव विभूतिविग्रहात्मकस्य कनिष्ठस्याश्रयणस्य निष्फलत्वात्, मुक्तानामपि ज्ञानघनमूर्तीनां जडविभूतिविग्रहाऽनावश्यकत्वात्, साक्षात्परमात्ममूर्त्याश्रयाऽपृथक्सिद्धतादात्म्येन सर्वानन्दलब्धेः स्वस्यैव भोग्यभोक्तृत्वे जडविग्रहस्य निष्प्रयोजनत्वात्। स्वरूपमूर्त्या यावन्निर्वाहे रूपस्य निरर्थकत्वेन स्वयंबाधितत्वात् बाधे सप्रमाणहेतुत्वात्, स्वरूपस्यैव सर्वनिर्वाहकत्वेऽन्वयव्यतिरेकित्वव्याप्त्या सर्वश्रुतीनाम अविरोधात्, स्वरूपस्यैव सर्वशुभाश्रयत्वेन द्वारस्य शुभाश्रयताया अनावश्यकत्वेन निरर्थकत्वात्, स्वरूपतो विभुत्वे स्वरूपात्मकविग्रहतोऽपि विभुत्वं त्वविभुत्वशंकानिवृत्त्यर्थमेव न तु पृथग्विभुत्वसिद्धिप्रदर्शनार्थम्, आनन्दस्य ज्ञानस्य च विलक्षणविषयतया विभुत्वं घटते एव, प्रतिरूपत्वेन प्रतिरूपाणां विभुत्वं चापि भवत्येव न तु प्रातिस्विकधर्मेण प्रतिरूपस्यैकस्य सर्वत्र विभुत्वं स्वाश्रये व्यापकत्वात्मकविभुत्वं तु भवत्येवेति त्रेधा व्यापकत्वं जडविग्रहमन्तराऽपि भवत्येव, अनुजस्याऽसार्वज्ञ्येन तत्कल्पितानामश्रद्धेयत्वात्, तर्काऽप्रतिष्ठानात्, मुक्तैः परमात्मानन्दस्यभोग्यत्वेन ग्राह्यत्वेन वार्तयत्वेनाऽऽकर्षितत्वेन च शरीरल-

क्षणस्य मुक्तं प्रति परमात्मानन्दे 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते'ति परस्परभोग्येऽपि चानिर्व्याप्तेः स्वस्य स्वाऽभोग्यत्वेऽव्याप्तेश्चाऽतिव्याप्त्याऽव्याप्तोभयत्वावच्छेदेनाऽसंभवेोद्भावकत्वेन आधेयविधेयशेषत्वादिशरीरलक्षणस्याऽप्रामाणिकत्वात्, उभयत्रावच्छेदेनाऽसंभवे त्रित्वावच्छेदेन तु सुतराम् असंभव इति तादृक्शरीरलक्षणाऽनभ्युगतत्वात्, स्वरूपरूपभेदोद्भावने एव भिन्नतद्गुणादिसमन्वयानुधावनव्यापारस्य नूतनकल्पितोपाधिसमन्वयादिव्यर्थपरिश्रमात्, विपथगतिकस्य सुपथानयनार्थं निरासनप्रयासस्य तु सार्थक्यात्, ज्ञानानन्दस्वरूपात्मकस्य वेदान्तैर्निरूपितत्वादेव सुमूर्तत्वस्यापि सुतरां तस्य निरूपितत्वमिति अविग्रहस्याऽनिरूपितत्वाभिमतिस्तु श्रुत्यदत्तदृष्टिकस्य भवेत्, सच्चिदानन्दघनमूर्तिस्वरूपे सर्वविधनिरूपणात् सर्वनित्याऽनित्यज्ञप्तिधाराणां तत्रैव विरामात् निरूपणार्थं विग्रहवत्त्वमित्यस्याऽप्यनैकान्तिकत्वात्, श्रीहर्याज्ञापितनित्यानन्दमुनिगोपालानन्दमुनिशुकानन्दमुनिशतानन्दमुनिप्रभृति - कृतसंस्कृतग्रन्थानाम् अनुजाऽनुजैर्विपरिवर्तितानाम् श्रीहर्यभिप्रायाऽन्यथोपलम्भतया वास्तविकप्रामाण्यच्यावितत्वमित्यपि लिखितमुद्रितप्रतिकृतिलेखमेलनेन विज्ञायत एव स्फुटम् । चलनादेः कृत्यनुयोगित्वेनाऽऽनन्दमूर्तिगतगुणक्रियादिसर्वाऽऽध्येयसमन्वयेन सर्वविशेषणविशेषितत्वेन विशेष्ये यावदुपयोगियोगसम्भवेन कल्पितकमठानस्याऽस्थानत्वात्, आनन्दस्वरूपमूर्तेरेव व्यापकत्वे सत्येकदेशस्थत्वे सत्यनेकदेशस्थत्वस्य सामर्थ्यादेव सिद्धेः शंकासमाधानानुधावनानुपातिविग्रहवत्त्वस्य प्रयासमात्रभारकत्वात्, शिक्षापत्र्यां क्वापि अचेतनविभूतिमयविग्रहवत्ताया अकथनात्, सत्यज्ञानानन्दरूपस्य दिव्यमूर्त्या विराजमानस्य विभूतिविग्रहवत्त्वस्याऽकथनात्, सच्चिदानन्दस्वरूपमूर्तेरेव सर्वविशेषणवत्त्वेन पृथग्विग्रहकल्पनानौचित्यात्, सच्चिदानन्दमूर्तिश्रीहरेरेवान्तर्यामित्वसुमूर्तत्वोभयसध्रीचीनत्वेन पृथग्विग्रहवत्त्वेऽनास्थात्वात्, अक्षरद्वाराऽन्तर्यामित्वसुमूर्तत्वादिनिर्वाहस्तु स्वीयस्वतन्त्राऽन्तर्यामित्वसुमूर्तत्वाऽनुविधायितयैव बोध्यः, 'अक्षरमपि लीनं कृत्वा स्वराट् विराजते' इति वचनामृतेऽभिहितत्वात्, पुरुषोत्तमस्याऽवतारा पुरुषोत्तमादेवाविर्भवन्तीति सच्चिदानन्दस्वरूपमूर्तिसुमूर्तितवेषान्तरा एवाऽवतारास्ततो विचित्राऽचेतनविग्रहादवतारकल्पनं नोचितमिति, 'स च तेषु स्वभक्तेषु दिदृक्षा यस्य यादृशी । येषां स्यात् तादृशं तेभ्यो दर्शनं स्वं ददाति हि' इत्यनेनापि सच्चिदानन्दस्वरूपमूर्तित एव दर्शनदानकथनात् अचेतनविग्रहतो दर्शनदानाऽसंमतत्वात्, गुणा ऐश्वर्याणि चमत्काराः शक्तयश्चिन्हानि तिला रोमाणि भूषा केशा अंगुल्यादि उपकरणानि सर्वेऽपि दिव्याः सच्चिदानन्दचेतन-

मुक्ता मूर्तौ वसन्ति, 'शरा नानाविधाश्चापि धनुरायतमुत्तमम्। तथाऽऽयुधाश्च ते सर्वे ययुः पुरुषविग्रहाः' इति रामायणोत्तरकाण्डे दिव्यमुक्तमूर्तिरूपताकथनात्, 'निषेव्यमाणं च सुदर्शनाद्यैर्निजायुधैर्मूर्तिधरैरनेकैः' (भा० स्कं-६-८)। 'सुदर्शनादिभिः स्वाऽस्त्रैर्मूर्तिमद्भिरुपासितः (स० प्र० २-अ० ३) एवं दिव्या मुक्ता मूर्तय उक्ताः,। अथ भक्ता प्राकृतं देहं परित्यज्य भगवतो धाम्नि चैतन्यमूर्तय एव आविर्भूत्वा भगवतः सान्निध्ये उपवर्तन्ते (व० प्र० ३७)। 'ब्रह्मभावम् उपगतेन स्वात्मना भगवत्सेवायां वर्तनं जायते। (व० प्र० ६४)। 'मायिकत्रिदेहसम्बन्धविगमे सति जीवात्मा केवलचैतन्यसत्तामात्रं वर्तते, ततो जीवात्मनोऽस्य भूम्याद्यष्टप्रकृतिभिन्ना या जीवभूता चैतन्यप्रकृतिस्तस्याः स्वरूपसत्या एव भगवदिच्छया देहो बध्यते (आविर्भवति) अस्यैव श्लोकः 'कृष्णेच्छयाऽथ दिव्योऽस्य पराप्रकृतितो मुने। आविर्भवति देहो वै तेन संयुज्यते च सः' इत्यनेन आत्मा स्वस्वरूपाविर्भूतसुमूर्तियोगः सम्पद्यते इतिनिवेद्यते (व० म० ६६)। 'पश्चाद् देहं त्यक्त्वा वियुक्तो भवति तदा तस्मै भक्ताय भागवतीतनूम् प्रददाति, तया भागवतीतन्वा भगवतो धाम्नि तिष्ठति,' अत्रापि भागवतीतनूः चेतनस्वरूपाविर्भावमूर्तिरूपा बोध्या, भगवदिच्छया भवति सा, (सा० व० १३)। 'प्रकाशमयो दिव्यदेहो जायते,' अत्रापि चेतनात्मा ब्रह्मप्रकाशचेतनस्वरूपमूर्त्यात्मसाकारः सम्पद्यते इत्यर्थः। (लो० व० १५)। 'स भक्तो यदा देहं त्यक्त्वा भगवद्धाम याति तदा तदा रूपं सामर्थ्यं च भक्तस्य भगवत्समानं सम्पद्यते' अत्रापि चेतनात्मस्वरूपमूर्त्याविर्भावो बोध्यः, रूपस्य स्वरूपपरत्वात्। (म० व० ६७)। 'भजनकर्ता जीवात्मा न पुरुषो न स्त्री, किन्तु सत्तामात्रचैतन्यम्, स देहं त्यक्त्वा धाम याति तदा भगवतो रुच्यनुसारस्तस्य देहः सम्पद्यते' इत्यत्रापि चेतनात्मस्वरूपमूर्त्याविर्भावो बोध्यः (व० अं० २२)। 'भगवत्पार्षदमुक्तानां ये ये आकारास्ते ते सर्वे सत्या दिव्या अतिशयप्रकाशवन्तश्च पुरुषवत् द्विभुजा वर्तन्ते' अत्रापि आत्मचैतन्यस्वरूपाविर्भूतमूर्तिद्विभुजताविबोध्यम् (व० अं० ३८)। 'भगवदिच्छया ब्रह्ममयदेहम् अवाप्नोती'त्यत्रापि चेतनात्मस्वरूपाविर्भूतमूर्तिर्बोध्या (व० प्र० १) अचेतनविभूतिद्रव्यकदेहप्राप्तिरूपार्थो प्रबलवाक्याऽननुगुणो बाध्यते,-प्रबलवाक्यानि 'अस्माल्लोकात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते,' 'आविर्भूतस्तु स्वेन शब्दात्', 'भगवद्धामनि चैतन्यस्यैव मूर्तिर्भूत्वा' (इत्यादौ स्वेनशब्दश्चेतनात्मपर एव, चैतन्यस्यंवेत्येवकारश्चेतनात्मभिन्नस्य निषेधकः, अष्टप्रकृतिभिन्ना प्रकृतिः-'अपरेयमितस्त्व-

न्यां विद्धि प्रकृतिं मे पराम्। जीवभूतां महाबाहो ययेदं धार्यते जगत्' इति जीवात्मचेतनभूतपराप्रकृतिः स्वयं देहात्मनाऽभिसम्पद्यते इत्यर्थात्, एतेषां प्रबलानां वाक्यानामेव सन्निधौ निर्बला अचेतनदेहस्त्रीपुंदेहसर्वविधसुसारात्मकसमृद्ध्याद्यनुधावनस्याऽनुचितत्वात्। अत एव 'दिव्यां तनुं ब्रह्मरूपां प्राप्य' हित्वैमं भौतिकं देहं दिव्यदेहेन सर्वथा' 'अप्राकृतशरीरा ये मुक्तास्ते तु निजेच्छया। आविर्भवन्ति' 'त्यक्त्वा भौतिकानिह देहान् लब्ध्वा दिव्यतनूः' 'दिव्यं भागवताभिधम्। देहं स लब्ध्वा' इत्यादौ सत्संगिजीवनेऽपि चेतनात्मस्वरूपमूर्तिनिष्पन्नतापरायणताचबोधस्य प्रामाण्यात्, शिक्षापत्र्यां राधालक्ष्म्यादीनाम् 'सकलसिद्धिमयी राधा, सर्वसमाश्रयणीयत्वोपकारकसौशील्यश्रीरत्र विवक्षिता, भक्तजनसमधिका प्रीतिरुक्ता भवति, इति भाष्ये उक्तम्, टिप्पण्याम् अयमत्र ध्वन्यर्थः–राधाशब्देन संकल्पशक्तिर्ध्वन्यते, या परमात्मनः संकल्परूपता, श्रीशब्देन ज्ञानशक्तिर्ध्वन्यते, या सर्वज्ञत्वलक्षणा, वृन्दावनविहारमित्यनेन मायाशक्तिर्ध्वन्यते, या जगदुदपादिलीलोपकरणभूता, कृष्णशब्देन–आनन्दघनो ध्वन्यते, स च जगत्कारणभूतः, तथा च–कारणत्वौपयिकसर्वज्ञत्वसत्यसंकल्पत्वविशिष्टं सृष्ट्यादिलीलोपकरणभूतप्रकृत्युपलक्षितं स्वयम् आनन्दस्वरूपं सर्वकारणकारणं परमात्मनः स्वस्य स्वरूपं हृदि चिन्तये इत्यर्थकरणात्,। किञ्च–राधालक्ष्मीदासीदासपुरुषाणां चेद् विग्रहवत्त्वं सेन्द्रियान्तःकरणाऽवयवादिमत्त्वं भोगभोग्योपकरणादिमत्त्वं सर्वसाधनवत्त्वं प्रतिपाद्यते तर्हि तत्र कामभोगादिमत्त्वमेवाऽवशिष्यते अन्यभोगानां तु स्वीकरणमेव, वल्लभास्तु तत्र सर्वनरनारीरूपसत्त्वे कामं तु मन्यन्ते भवतः का लज्जा तत्र ?, सर्वसाधने सत्यपि नपुंसकत्वानुधावनमात्रत्वैमत्यम् ?, श्रीस्वामिनारायणस्य परब्रह्मणो जयाललितादिपतित्वे ग्रन्थे च राधालक्ष्मीस्वरूपेण लेखनेऽसंकोचे कामरतिलेखने कथं संकोच इति ?, सोऽयं संकोच एव हार्दिकसाक्षितया निवेदयति यन्मुक्तौ न नरनारीदेहाद्याचारः, केवलनिर्दुःखत्वनिर्विकारित्वमात्रसाधनप्रयासस्तु तुषवैलक्षण्यसम्पादक इति, ये ये वाक्याप्तपुरुषास्ते ते भोगाभिरतिरुचिकास्तथैव पुष्टिम् प्रचक्रिरे, अत एव तादृशभोगयुक्तानि धामानि उत्कृष्टस्वर्गाण्येव न तु ब्रह्मलोको मुक्तानां चेतनमात्राणां स्वस्वरूपाविर्भावरूपाणां भगवन्मात्रानन्दभुजाम् अचेतनविग्रहवत्ताया असंभवात्, तथाविधप्राच्यप्रतिप्राचीनाऽर्वाचीनवाक्याऽरण्यानां सर्वथा मुक्तिघटितार्थपरत्वेन स्वीकार्यत्वात् मुक्त्ययोग्ये सृष्टिसंसारिसमभोगाद्यर्थे चेत् अग्राह्यत्वात्, यद्वेश्वरसृष्टिपरवर्णनात् तत्र मुक्त्यारोपादेव परापथगामित्वस्य स्फुटत्वात् आत्यन्तिकीमुक्त्यभिलाषुकाणां

तत्राऽनादरात्। अथ वैकुण्ठे लक्ष्मीनारायणस्य गार्हस्थ्ये गोलोके राधाकृष्णस्य गार्हस्थ्ये ब्रह्मलोकेऽपि राधालक्ष्मीपरमात्मनो जयाललितापरब्रह्मणो गार्हस्थ्येऽन्यधामसु सर्वेषु तथैव व्यवहारगार्हस्थ्ये गोपगोपीपार्षदपार्षदानीनां सत्त्वे च त्यागाश्रमस्य सन्यासाश्रमस्यैव वैकल्यापत्तेः, अथ मुक्तानामपि मानसीस्थितिर्न शीलव्रता वर्तेत नारीसंसर्गे तर्हि अन्येषां का कथेति मुक्तावपि मुक्तानां तद्वत्तापत्तिभयम्, संसारलोकस्य मुक्तिलोकस्य च स्त्रीपुंवत्त्वेऽदिव्यदिव्यत्वमन्तरा को नामाऽन्यो विशेषो भवेत्! अतो 'श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे' इत्यादिमन्त्रैस्तु विश्वरूपसमष्टिव्यष्टिसमर्पणाभिप्रायेण तथा वर्णनं क्रियते इत्येवं समन्वयानुसरणौचित्यात्, अथ नारीगन्धाऽसहत्वादेवाऽत्र शीलव्रतसम्प्रदायस्थापनेन ब्रह्मलोकादौ केवलपुरुषाकारसच्चिदानन्दस्वरूपमूर्त्यात्मकत्वुक्तेः श्रीहरेः स्वेष्टत्वादेव दम्पतीभावस्य तत्र कल्पनानौचित्यात्। दम्पतीभावार्थं तु व्यासवचनानि पुराणेषु गोलोकादिनिरूपकाणि भवन्ति तानि यथा—

गर्गसंहितायां गिरिखण्डे ३, अध्याये नवमे–श्लोकाः ३ तः,–
"श्रीनारद उवाच–गोलोकोत्पत्तिवृत्तान्तं शृणु राजन् महामते। ३। परिपूर्णतमः साक्षाच्छ्रीकृष्णो भगवान्प्रभुः। ४। प्रत्यग्धामा स्वयंज्योतीरममाणो निरन्तरम्। ५। स्वधाम्नि ब्रह्मसाकारमिच्छया व्यरवीकरत्। प्रथमं चाऽभवच्छेषो विश्वश्वेतो बृहद्वपुः। ७। तदुत्संगे महालोको गोलोको लोकवन्दितः। ८। पुनः पादाब्जसंभूता गंगा त्रिपथगामिनी। ९। पुनर्वामांसतस्तस्य कृष्णाऽभूत् सरिताम्वरा। १०। श्रीरासमण्डलं दिव्यं गुल्फाभ्यां श्रीहरेः प्रभोः। ११। सभाप्रांगणवीथीभिर्मण्डपैः परिवेष्टितः। जातो निकुंजो जंघाभ्यां श्रीकृष्णस्य महात्मनः। १३। वृन्दावनं च जानुभ्यां राजन् सर्ववनोत्तमम्। लीलासरोवरः साक्षादूरुभ्यां परमात्मनः। १४। कटिदेशात्स्वर्णभूमिर्दिव्यरत्नाखचित्प्रभा। उदरे रोमराजिभ्यो माधव्यो विस्तृता लताः। १५। श्रीनाभिपंकजात् तस्य पंकजानि सहस्रशः। १७। त्रिवलीप्रान्ततो वायुर्मन्दगामयति शीतलः। जत्रुदेशाच्छुभा जाता मथुरा द्वारका पुरी। १८। भुजाभ्यां श्रीहरेर्जाताः श्रीदामाद्यष्टपार्षदाः। नन्दाश्च मणिबन्धाभ्यामुपनन्दाः कराग्रतः। १९। श्रीकृष्णबाहुमूलाभ्यां सर्वे वै वृषभानवः। कृष्णरोमसमुद्भूताः सर्वे रोमगणा नृप। २०। श्रीकृष्णमनसो गावो वृषा धर्मधुरन्धराः। बुद्धेर्यवसगुल्मानि बभूवुर्मैथिलेश्वर। २१। तद्वामांसात्समुद्भूतं गौरं तेजः स्फुरत्प्रभम्। लीला श्रीर्भूश्च विरजा तस्माज्जाता हरेः प्रियाः। २२। ली

लावती प्रिया तस्य तां राधां तु विदुः परे। श्रीराधाया भुजाभ्यां तु विशाखा ललिता सखी। २३। सहचर्यस्तथा गोप्यो राधारोमोद्भवा नृप। एवं गोलोकरचनां चकार मधुसूदनः। २४। विधाय सर्वं निजलोकमित्थं श्रीराधया तत्र रराज राजन्। २५। श्रीराधा-उवाच-यदि रासे प्रसन्नोऽसि मम प्रेम्णा जगत्पते। तदाऽहं प्रार्थनां त्वां तु करोमि मनसि स्थिताम्। २९। रहःस्थलं त्वं कुरु तन्मनोज्ञं मनोरथोऽयं मम देवदेव। ३१। तदैव कृष्णहृदयाद् गोपीव्यूहस्य पश्यतः। निर्गतं सकलं तेजोऽनुरागस्यैव चांकुरम्। ३३। गोवर्धनाख्यं तत् प्राहुः शतशृंगं तथाऽपरे। ३९। संवीक्ष्य तं गिरिवरं प्रसन्ना भगवत्प्रिया। तस्मिन् रहःस्थले राजन् रराज हरिणा सह। ४२। सोऽयं गिरिवरः साक्षाच्छ्रीकृष्णेन प्रणोदितः। ४३। पुल (अग)-स्त्येन समानीतो भारते व्रजमण्डले। ४५। इत्येवं गोलोकोत्पत्तिर्लिखिता, अतो न गोलोको ब्रह्मलोकः। किञ्च-बृहन्नारदीये पुरुषोत्तममासमाहात्म्ये-गोलोकस्य परिमाणं सीम लिखितम्, मलमासो ब्रह्मणा सह वैकुण्ठं जगाम, वैकुण्ठस्थनारायणेन सह गोलोकं जगाम-विष्णुरुवाच-'वत्साऽऽगच्छ मया सार्धं गोलोकं योगिदुर्लभम् । ५। ९। इत्युक्त्वा तं करे कृत्वा गोलोकं गतवान् हरिः। १७। ज्योतिः स्वरूपं प्रलये पुराऽऽसीत् केवलं मुने। १८। त्रिकोटियोजनायामो विस्तीर्णो मण्डलाकृतिः। तेजःस्वरूपःसुमहद्रत्नभूमिमयः परः। २१। ईशेन विधृतो यो हि चान्तरीक्षस्थितो वरः। २२। तदधो दक्षिणे सव्ये पञ्चाश कोटिविस्तरात्। वैकुण्ठः शिवलोकश्च तत्समः सुमनोहरः। २४। कोटियोजनविस्तीर्णो वैकुण्ठो मण्डलाकृतिः। २५। लसत्पीतपटा रम्या यत्र तिष्ठन्ति वैष्णवाः। २५। शंखचक्रगदापद्मश्रिया जुष्टचतुर्भुजाः। स्त्रियो लक्ष्मीसमाः सर्वाः कूजन्नूपुरमेखलाः। २६। सव्येन शिवलोकश्च कोटियोजनविस्तृतः। २७। गोपिकावृन्दमध्यस्थं रत्नसिंहासनासनम् अ०। ६। ७। एवं गोलोकवैकुण्ठयोर्वर्णनात्।

ब्रह्मवैवर्तपुराणे प्रथमखण्डे द्वितीयाध्याये गोलोकरचनाया वर्णनम्-'ज्योतिःसमूहं प्रलये पुराऽऽसीत् केवलं द्विज। ४। ज्योतिरभ्यन्तरे लोकत्रयमेव मनोहरम्। ५। तेषामुपरि गोलोकं नित्यमीश्वरवद् द्विज। त्रिकोटियोजनायामविस्तीर्णं मण्डलाकृति। ६। तेजःस्वरूपं सुमहद्रत्नभूमिमयं परम्। ७। योगेन धृतमीशेन चान्तरीक्षस्थितं वरम्। ८। लये कृष्णयुतं सृष्टौ गोपगोपीभिरावृतम्। ९। तदधो दक्षिणे सव्ये पञ्चाशत्कोटियोजनान्। वैकुण्ठं शिवलोकं तु

तत्समं सुमनोहरम् । १० । कोटियोजनविस्तीर्णं वैकुण्ठं मण्डलाकृति । लये शून्यं च सृष्टौ च लक्ष्मीनारायणान्वितम् । ११ । चतुर्भुजैः पार्षदैश्च जरामृत्य्वादिवर्जितम् । सव्ये च शिवलोकं च कोटियोजनविस्तृतम् । १२ । लये शून्यं च सृष्टौ च सपार्षदशिवान्वितम् । १३ । भगवान् एक एव सः । दिग्भिश्च नभसा सार्धं शून्यं विश्वं ददर्श ह । २७ । दृष्ट्वा शून्यमयं विश्वं गोलोकं च भयंकरम् । निर्जन्तु निर्जलं घोरं निर्वातं तमसा वृतम् (अ० ३-१) । वृक्षशैलसमुद्रादिविहीनं विकृताकृतम् । निर्मुक्तिकं च निर्धातु निःसस्यं निस्तृणं द्विज । २ । आलोच्य मनसा सर्वमेक एवाऽसहायवान् । स्वेच्छया सृष्टुमारेभे सृष्टिं स्वेच्छामयः प्रभुः । ३ । आविर्बभूवुः सर्गादौ पुंसो दक्षिणपार्श्वतः । भवकारणरूपाश्च मूर्तिमन्तस्त्रयो गुणाः । आविर्बभूव तत्पश्चात् स्वयं नारायणः प्रभुः । श्यामो युवा पीतवासा वनमाली चतुर्भुजः । ६ । शंखचक्रगदापद्मधरः स्मेरमुखाम्बुजः । रत्नभूषणभूषाढ्यः शार्ङ्गी कौस्तुभभूषणः । ७ । श्रीवत्सवक्षाः श्रीवासः श्रीनिधिः श्रीविभावनः । शारदेन्दुप्रभामृष्टमुखेन्दुसुमनोहरः । कामदेवप्रभामृष्टरूपलावण्यसुन्दरः । श्रीकृष्णपुरतः स्थित्वा तुष्टाव तं पुटाञ्जलिः । ९ । आविर्बभूव तत्पश्चादात्मनो वामपार्श्वतः । शुद्धस्फटिकसंकाशः पञ्चवक्त्रो दिगम्बरः । १८ । श्रीकृष्णपुरतः स्थित्वा तुष्टाव तं पुटाञ्जलिः । २३ । आविर्बभूव तत्पश्चात्कृष्णस्य नाभिपङ्कजात् । ३० । स्रष्टा विधाता कर्ता च । ३२ । ज्ञाता वेदप्रसूपतिः । ३३ । श्रीकृष्णपुरतः स्थित्वा तुष्टाव तं पुटाञ्जलिः । ३४ । आविर्बभूव तत्पश्चाद् वक्षसः परमात्मनः । ४१ । धर्मज्ञानयुतो धर्मो धर्मिष्ठो धर्मदोऽभवत् । ४३ । आविर्बभूव कन्यैका धर्मस्य वामपार्श्वतः । मूर्तिर्मूर्तिमती साक्षाद् द्वितीया कमलालया । ५३ । आविर्बभूव तत्पश्चान्मुखतः परमात्मनः । एका देवी शुक्लवर्णा वीणापुस्तकधारिणी । ५४ । आविर्बभूव मनसः कृष्णस्य परमात्मनः । एका देवी गौरवर्णा । ६५ । राजलक्ष्मीश्च राजसु । ६६ । आविर्बभूव तत्पश्चाद्बुद्धेश्च परमात्मनः सर्वाधिष्ठातृदेवी सा मूलप्रकृतिरीश्वरी । ७० । आत्मनः शक्तिरूपा सा जगतां जननी परा । ७४ । आविर्बभूव तत्पश्चात् कृष्णस्य रसनाग्रतः । अ० ४ । १ । बिभ्रती जपमालां च सा सावित्री प्रकीर्तिता । २ । आविर्बभूव तत्पश्चात्कृष्णस्य परमात्मनः । मनसाच्च पुमानेकः । ६ । पञ्चबाणो धनुर्धरः । १० । रतिश्च । १३ । वरुणः । १८ । स्वाहा । १९ । वरुणानी । २० । प्राणः । २१ । वायवी । २२ । विराट् । २४ । स एव षोडशांशोऽपि कृष्णस्य परमात्मनः । महाविष्णुः

स विज्ञेयः सर्वाधारः सनातनः । २६ । शौनक उवाच-गोगोपगोप्यो गोलोके किं नित्याः ? किं नु कल्पिताः ? (अ० ५-१) । सौतिरुवाच-सर्वादिसृष्टौ ताः क्लृप्ताः प्रलये प्रलये स्थिताः । २ । सर्वादिसृष्टौ क्लृप्तौ च नारायणमहेश्वरौ । प्रलये प्रलये व्यक्तौ स्थितौ तौ प्रकृतिश्च सा । ३ । अतः परं तु गोलोके गोलोकेशो महान्प्रभुः । एतान् सृष्ट्वा जगामाऽऽशु सुरम्यं रासमण्डलम् । १८ । आविर्बभूव कन्यैका कृष्णस्य वामपार्श्वतः । धावित्वा पुष्पमानीय ददावर्घ्यं प्रभोः पदे । २५ । रासे संभूय गोलोके सा दधाव हरेः पुरः । तेन राधा समाख्याता । २६ । प्राणेभ्योऽपि गरीयसी । २७ । तस्याश्च लोमकूपेभ्यः सद्यो गोपांगनागणः । आविर्बभूव रूपेण वेषेणैव च तत्समः । ४० । कृष्णस्य लोमकूपेभ्यः सद्यो गोपगणो मुने । आविर्बभूव रूपेण वेषेणैव च तत्समः । ४२ । कृष्णलोमकूपेभ्यो गोगणः । ४४ । एतेन महासृष्ट्यादौ परमात्मना गोलोकं वैकुण्ठं सर्जिते । राधाऽपि सर्जिता । लक्ष्मीः सर्जिता । तदेतत्सर्वम् तेजोमयेऽक्षरे ब्रह्मणि ब्रह्मलोके नास्ति किन्तु नूतने सृष्टे गोलोकादाविति स्पष्टोक्तत्वात् ।

अथ-ब्रह्मवैवर्तपुराणे प्रकृतिखण्डे द्वितीयेऽध्याये प्रोक्ता सृष्टिः-'स कृष्णः सर्वसृष्ट्यादौ सिसृक्षुस्त्वेक एव च । २८ । स्वेच्छामयः स्वेच्छया च द्विधारूपो बभूव ह । स्त्रीरूपा वामभागांशाद् दक्षिणांशः पुमान् स्मृतः । २९ । अथ कालान्तरे साच द्विधारूपा बभूव ह । वामाऽर्धाऽगा कमला सा, दक्षिणाऽर्धा तु राधिका । ५६ । एतस्मिन्नन्तरे कृष्णो द्विधारूपो बभूव ह । दक्षिणार्धो द्विभुजः स्याद् वामार्धश्च चतुर्भुजः । ५७ । एवं लक्ष्मीं सम्प्रददौ तुष्टो नारायणाय वै । संजगाम च वैकुण्ठं ताभ्यां सर्वं जगत्पतिः । ५९ ।

अथ ब्रह्मवैवर्तपुराणे ब्रह्मखण्डे सप्तदशेऽध्याये-'ऊर्ध्वं च सर्वब्रह्माण्डाद् वैकुण्ठं सत्यमीरितम् । तस्मादूर्ध्वं च गोलोकः पञ्चाशत्कोटियोजनम् । ६२ । चतुर्भुजश्च वैकुण्ठे लक्ष्मीकान्तः सनातनः । ६३ । गोलोके द्विभुजः कृष्णो राधाकान्तः सनातनः । ६४ ।

अथ ब्रह्मवैवर्तपुराणे खण्डे चतुर्थे अध्याये चतुर्थे-हरिः प्राह-गोलोकं यात यूयं (देवा !) यामि पश्चाच्छ्रिया सह । ६७ । तत्राऽहं द्विभुजः कृष्णो गोपीभी राधया सह । अत्राऽहं कमलायुक्तः सुनन्दादिभिरावृतः । ६९ । प्रणम्य देवताः सर्वा जग्मुर्गोलोकमद्भुतम् । ऊर्ध्वं वैकुण्ठतो गम्यं पञ्चाशत्कोटियोजनम् । वायुना धार्यमाणं च निर्मितं स्वेच्छया विभोः । ७४ । ततः प्रदक्षिणीकृत्य कि-

यद् दूरं यमुर्मुदा। पुरतो गच्छतां तेषां पश्चाद् भूतस्तदाश्रमः। १६५। गोलोकं निखिलं दृष्ट्वा। १६८। ददृशुः शून्यमेव च। १६९। वाय्वाधारं च गोलोकं सद्रत्नमयमद्भुतम्। ईश्वरेच्छादिनिर्माणं राधिकाऽऽज्ञानुबन्धनात्। १७०। ब्रह्माण्डाद् वहिरूर्ध्वं च नास्ति लोकस्तदूर्ध्वकः। ऊर्ध्वं शून्यमयं सर्वं तदन्ता सृष्टिरेव च। १८८॥ गोलोकं निखिलं दृष्ट्वा देवास्ते हृष्टमानसाः। पुनराजग्मु राधायाः प्रधानद्वार एव च॥ अ० ५-१) तत्र तेजसि चार्वङ्गीं ददृशू राधिकाभिधाम्। अ० ६-७। इत्यादौ सृष्टिसीम्नि गोलोकस्थितिकथनाद् ब्रह्मलोके न एष प्रसंगः।

ब्रह्मवैवर्तपुराणे चतुर्थखण्डे पूर्वार्धे, त्रयोदशाऽध्याये प्रोक्तम्-सर्वं निष्पादनं कृत्वा गोलोकं राधया सह। १३६। गमिष्यत्येव गोलोकं नाथोऽयं जगतां पतिः। नारायणश्च वैकुण्ठं गमिता स त्वया सह। १३७। पुनः संस्थितिरत्रैव गोलोके मे त्वया (राधया) सह। २५७।

पद्मपुराणे उत्तरखण्डे अध्याये २५७—

१ वैकुण्ठः परो लोकः, २ विष्णुलोको ह्यनुत्तमः॥ ४३॥
३ श्वेतद्वीपस्वरूपं तु, ४-क्षीरसागर उत्तमः ॥ ४४॥

ब्रह्माण्डपुराणे पू० भा० अ० पा० २ अ० २१—

ऊर्ध्वोत्तरम् ऋषिभ्यस्तु ध्रुवो यत्र स वै स्मृतः। १७५। एतद्विष्णुपदं दिव्यं तृतीयं व्योमभास्वरम्। यत्र गत्वा न शोचन्ति तद्विष्णोः परमं पदम्। १७६।

पाद्मे उत्तरखण्डे-१ तेजोवृतौ वैकुण्ठं, २ वासुदेवस्य परवैकुण्ठम्, ३ श्वेतद्वीपं वैकुण्ठम्, ४-क्षीरसागरे वैकुण्ठम्।

भागवते-५-ध्रुववैकुण्ठम्॥ ब्रह्मवैवर्ते-६-गोलोकस्याऽधो वैकुण्ठम्।

कूर्मपुराणे अध्याये २—

तदा श्रीरभवद् देवी कमलायतलोचना। ७। नारायणी महामाया मूलप्रकृतिरव्यया। ९। १२।

एतत्सर्वं भगवता मायाप्रकृतिमधिष्ठाय निर्मितं, ततो भिन्नमक्षरधामेति, 'तद्यथा—

शिवपुराणे उमाखण्डे पञ्चमे, अध्याये ५०, पार्वती उवाच-अविनाशि परं धाम मायातीतं परात्परम्। श्रुतयो वर्णयन्ते मत् तद् रूपं तु ममैव हि। ३७। सगुणं निर्गुणं चेति मद्रूपं द्विविधं मतम्। मायाशवलितं चैकं द्वितीयं तदनाश्रितम्। ३८। एतेन मा-

याधामात्मके विग्रहा विभूतिविग्रहा ज्ञायन्ते, अक्षरे धाम्नि न,।

अथ ब्रह्मवैवर्ते प्रकृतिखण्डे द्वितीये-नारद उवाच-गणेशजननी दुर्गा राधा लक्ष्मीः सरस्वती। सावित्री वै सृष्टिविधौ प्रकृतिः पञ्चधा स्मृता। १। १। सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्तिता। ५। त्रिगुणात्मस्वरूपा या प्रकृतिस्तेन चोच्यते। ७। योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव सः। पुमांश्च दक्षिणाऽर्धांगो वामांगः प्रकृतिः स्मृतः। ९॥ यथाऽऽत्मा च यथाशक्तिर्यथाऽग्नौ दाहिका स्मृता। १०। अत एव हि योगीन्द्रः स्त्रीपुंभेदं न मन्यते। ११। स्वेच्छामयस्येच्छया श्रीकृष्णस्य सिसृक्षया। साऽऽविर्बभूव सहसा मूलप्रकृतिरीश्वरी। १२। तदाज्ञया पञ्चविधा सृष्टिकर्मणि भेदतः। दुर्गा नारायणी। १४। सरस्वती। ३१। सावित्री। ४१। पञ्चमी देवी सा राधा। ५९। एवं श्रीकृष्णांशशक्तिरूपायाः सृष्ट्यादौ सर्जनादेव शाश्वतब्रह्मलोके तदभावात्।

विश्वेषां गोकुलं नित्यं नित्यो गोलोक एव च। १। ५। तदेकदेशो वैकुण्ठो लम्बभागः स नित्यकः। तथैव प्रकृतिर्नित्या ब्रह्मलीना सनातनी (२/६) ऐश्वर्यवचनः शक्र च तिः पराक्रमवाचकः। तत्स्वरूपा तयोर्दात्री या सा शक्तिः प्रकीर्तिता। १। १०। समृद्धिबुद्धिसम्पत्तियशसां वचनो भगः। तेन शक्तिर्भगवती भगरूपा च सा सदा। ११। तया युक्तः सदाऽऽत्मा च भगवांस्तेन कथ्यते। स च स्वेच्छामयः कृष्णः साकारश्च निराकृतिः। १२। तेजोरूपं निराकारं ध्यायन्ते योगिनः सदा। वदन्ति ते परंब्रह्म परमात्मानमीश्वरम्। १३। अदृश्यं सर्वद्रष्टारं सर्वज्ञं सर्वकारणम्। सर्वदं सर्वरूपान्तमरूपं सर्वपोषकम्। १४। वैष्णवास्तं न मन्यन्ते तद्भक्ताः सूक्ष्मदर्शिनः। वदन्ति कस्य तेजस्ते इति तेजस्विनं विना। १५। तेजोमण्डलमध्यस्थं ब्रह्मतेजस्विनं परम्। स्वेच्छामयं सर्वरूपं सर्वकारणकारणम्। १६। अतीव सुन्दरं रूपं बिभ्रतं सुमनोहरम्। किशोरवयसं शान्तं सर्वकान्तं परात्परम्। १७। स चात्मा परमं ब्रह्म कृष्ण इत्यभिधीयते। २४। कृषिस्तद्भक्तिवचनो नश्च तद्दास्यकारकः। भक्तिदास्यप्रदाता यः स कृष्णः परिकीर्तितः। २५। कृषिश्च सर्ववचनो नकारो बीजवाचकः। सर्वबीजं परंब्रह्म कृष्ण इत्यभिधीयते। २६। स कृष्णः सर्वसृष्ट्यादौ सिसृक्षुस्त्वेक एव च। २८। स्वेच्छामयः स्वेच्छया च द्विधारूपो बभूव ह। स्त्रीरूपा वामभागांशाद् दक्षिणांशः पुमान् स्मृतः। २९। अत्र सर्वत्र सृष्टिप्रारंभे राधादिनिरूपणात् ब्रह्मलोके परमात्मनि तदसत्त्वात् वैष्णवानां निराका-

रस्याऽमान्यत्वात् शाश्वतसाकारस्वरूपमूर्तिश्रीहरेः राधारमाजयाललितालक्ष्म्यादिसृष्टिपूर्वमपि सत्त्वात् ब्रह्मलोके श्रीहरेर्मुक्तानां च चेतनात्मकैकतत्स्वमूर्तिभिन्ना विभूतिविग्रहा एव न सन्तीति स्फुटप्रतिपादनात्, सच्चिदानन्दस्य परब्रह्मणो ब्रह्मणो नित्यमुक्तानां गतमुक्तानां च विभूतिविग्रहवत्त्वस्य ब्रह्मलोके कथंचिदप्यसत्त्वात् स्वरूपरूपभेदादेस्तु जन्यनिर्मितगोलोकवैकुण्ठादौ पुराणेषु व्यासेन कथनात् विभूतिविग्रहवत्ताविपथगामिदथाऽनुसरणाऽनौचित्यात्, अनुजादिभिरपि कल्पितवैकुण्ठादिगतविग्रहाणां यावत् सृष्टिस्थितिस्थायिनां गौणानां मुख्यमोक्षपदास्पदतया ग्रहणेन तादृशोन्यूनतायाः परिहातुं युक्तत्वात्, त्रिपाद्विभूतीनां ब्रह्मलोके शून्यत्वं गोलोकवैकुण्ठयोस्तु ऊर्ध्वे शून्यान्ताऽलब्धतया परावृत्तनारायणविष्णुभ्यां ब्रह्मणा मलमासेन च ब्रह्मलोकस्य गोलोकादपि दूरे निश्चयतया कथनात् गोलोकस्योत्पत्तेः कथनाच्च पूर्वीयविशिष्टाद्वैतीयवैकुण्ठगोलोकाद्यभिमतविषयविभूतिविग्रहवत्त्वादिकं श्रीस्वामिनारायणसम्प्रदाये कथंचिदप्यमान्यत्वात्। वैकुण्ठस्याऽन्ते शून्ये पर्यवसानात् तथाविधवैकुण्ठाऽनभिमतब्रह्मलोकस्यैव श्रीस्वामिनारायणसम्प्रदाये ग्राह्यत्वात्।

किञ्च–पद्मपुराणे–त्रिपाद्विभूतिर्नित्या स्याद् अनित्यं पादमैश्वरम्। ११। प्रधानपरमव्योम्नोऽन्तरे विरजानदी, तस्याः परे पारे त्रिपाद्भूतम् अक्षरब्रह्मणः पदम्। (६-२५५-५९)। तद्विष्णोः परमं पदम्, तद्धाम परमं हरेः, यत्र गावो भूरिशृंगा आसते। ७०। यत्र साध्याः सन्ति देवाः, यत्प्राप्य न निवर्तन्ते, अक्षरं परमं धाम वैकुण्ठं शाश्वतं पदम् (६-२५५-७९)। वैकुण्ठं परमो लोको, विष्णुलोको ह्यनुत्तमः। श्वेतद्वीपस्वरूपं तु क्षीरसागर उत्तमः। एवं चतुर्धा व्यूहस्तु सम्यगुक्तो महर्षिभिः। जलावरणमध्ये तु वैकुण्ठं कारणं शुभम्, (६-२५७-४३, ४४, ४५)।

१ रम्यं तद्वैष्णवं लोकं नेतरेषां कथञ्चन। इत्येवं प्रथमो व्यूहः कथितस्ते वरानने। ५-२५७-८०।

२ द्वितीयं वैष्णवं लोकं शृणु वक्ष्यामि सुव्रते। योऽयं नित्य इतिख्यातो लोकाग्र्यो वैष्णवः स्मृतः। ८१। स लोको विपुलः पुण्यः शुद्ध आत्ममयः शुभः। ८२।

३ तृतीयं तु परं व्यूहं शृणु वक्ष्यामि पार्वति। तोयाब्धेरुत्तरं कूलं श्वेतद्वीपमिहोच्यते। १२०।

४ अतः परं प्रवक्ष्यामि चतुर्थं व्यूहमुत्तमम्। दिवौकसां रक्षणार्थं दुग्धाब्धौ परमेश्वरः। १५६। तस्मिन्ननन्तपर्यंके शेतेऽसौ

विस्तृते शुभे । १५८ ।

इत्येतैः श्लोकैः स्फुटं ज्ञायते ब्रह्मलोकस्तन्मुक्ताः परमेश्वरश्च नित्यशाश्वतसच्चिदानन्दस्वरूपमूर्तय एव, न तु प्राविर्भावितगोलोक-वैकुण्ठादिविभूतिविग्रहवन्त इति श्रीस्वामिनारायणसम्प्रदाये केनचिद् अचेतनविभूतिविग्रहवत्त्वं नारीरूपमुक्तवत्त्वं मण्डितमपि खण्डितमेव तद् बोध्यम् ।

किञ्च-श्रीगोपालानन्दस्वामिश्रीनित्यानन्दस्वामिश्रीमुक्तानन्दस्वामिश्रीशतानन्दस्वामिश्रीशुकानन्दस्वामिप्रभृतिश्रीस्वामिनारायणसम्प्रदायसमुत्पन्नमहामहाधुरन्धरपण्डितानां स्वहस्तलिखितग्रन्थानां लिप्यादौ परिवर्तनं दृश्यत एवेति तदनुचितचरित्रायितं सर्वथा श्रीस्वामिनारायणाश्रितैर्नादरणीयम् । सृष्टिसंवृत्तगोलोकवैकुण्ठविग्रहवत्त्वपाणिदानीसत्त्वादिमुक्तिमत्त्वरसिकानां विकासनविभूत्या अलम् ।

किञ्च भागवतेऽष्टमस्कन्धे-पञ्चमे रैवते मनौ शुभ्रस्य विकुण्ठायां वैकुण्ठो भगवान् अभवत्, येन वैकुण्ठो लोकः कल्पितः-'वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः ।

रमया प्रार्थ्यमानेन देव्या तत्प्रियकाम्यया (८-५-५) इत्यप्युक्तत्वात् वैकुण्ठमुक्तेरनादरणीयत्वात् ।

किञ्च-कूर्मपुराणे द्वितीयेऽध्याये—

तदा श्रीरभवद् देवी कमलायतलोचना । ७ । नारायणी महामाया मूलप्रकृतिरव्यया । ९ । १२ । 'तथोक्तोऽहं श्रियं देवीमब्रवं प्रहसन्निव । देवीदमखिलं विश्वं सदेवासुरमानुषम् । १२ । मोहयित्वा ममादेशात् संसारे विनिपातय' ॥ 'ज्ञानयोगरतान् दान्तान् ब्रह्मिष्ठान् ब्रह्मवादिनः । १३ । अक्रोधनान् सत्यपरान् दूरतः परिवर्जय । १४ । ईश्वराराधनरतान् मन्नियोगान्न मोहय । २० । इति भक्तानां सुतरां मुक्तानां दिव्यदेवीदर्शनाऽनौचित्यव्यञ्जनात् ।

किञ्च-कूर्मपूराणे अध्याये प्रथमे ऐश्वर्यमेव विभूतिपदेन प्रोक्तं न तु द्रव्यविभूतिरूपम्, यथाभगवानुवाच-परात्परतरं तत्त्वं परब्रह्मैकमव्ययम् । ९३ । यथानित्यानन्दमयं ज्योतिरक्षरं तमसः परम् । ऐश्वर्यं तस्य यन् नित्यं विभूतिरिति गीयते । ९४ । कार्यं जगदथाऽव्यक्तं कारणं शुद्धमक्षरम् । अहं हि सर्वभूतानामन्तर्यामीश्वरः पुरः । ९५ । सर्गस्थित्यन्तकर्तृत्वं प्रवृत्तिर्मम गीयते । ९६ । इत्येवं ब्रह्मलोके अचेतनद्रव्यविभूतेः कल्पनाया एवाऽनावश्यकत्वात्, स्त्रीपुरुषाद्याकृतिमयदिव्यरसिकभक्तौ श्रीस्वामिनारायणपरमात्मनोऽरुचित्वात् द्विचरणोपासनया एवोक्तत्वेन चतुश्चरणोपासनाया

सर्वथाऽस्वीकृतत्वात् । 'तव लाडकोजाईनालब्रह्मभट्टविग्रहो नास्ति सच्चिदानन्दात्मस्वरूपाऽसीति समाधिगतार्थे समुपदेशात् । स्वमूर्तौ मातृभागशुक्तार्थं तपःप्रयत्नवत्ताया दर्शितत्वात्, जगत्पक्षपात्यालोकताया निर्मूलीकरणत्वाऽऽग्रहात्, राधालक्ष्म्यादिविशिष्टयुगलोपासनाया अनभिमतत्वात्, वचनामृतेषु भगवन्मूर्तेरेव सर्वावधया स्वायत्तीकरणताया उपदेशाभ्यासात्, प्रसंगे वर्णितत्वेऽपि स्वैकान्तिकभावेनैव प्रबलनताया निरूपणात्, अक्षरे धाम्नि मुक्तमण्डलानामेवाऽवस्थितिवर्णनात् मुक्तानिकामण्डललेशस्याप्यकथनात्, शिक्षापत्र्यामपि परब्रह्मस्थसहायनिरूपकोत्तरमेकलस्यैव ज्ञेयत्वेन पश्चवाक्यतया प्रबलबोधनात् । सदेव सौम्येदमग्र आसीदेकमेवाऽद्वितीयं ब्रह्मेतिमहाप्रबलसिद्धान्तास्तदन्यसिद्धान्तानां तत्राऽनावश्यकत्वेन सर्वथाऽनङ्गीकरणत्वादिति सर्वं सूपपन्नम् ।

अथ त्रिपाद्विभूतिमहानारायणोपनिषदि—उक्तोऽर्चिमार्गो विस्तारात् । तत्र । पुरा परब्रह्मस्वरूपज्ञानेन महान्तः सर्वे ब्रह्मभावं गताः, परब्रह्म साकारम् तदुपासका मुक्ताः साकाराः, तदुपासकम् अक्षरं ब्रह्म साकारम्, नित्यसाकारम्, निरुपाधिकसाकारम्, जीवात्मा ज्ञानघनसाकारः, ईश्वरात्मा ऐश्वर्यघनसाकारः, मुक्तदशायां परमेश्वरसमज्ञानघनस्वरूपमूर्तिः ऐश्वर्यघनस्वरूपमूर्तिः प्रकाशघनस्वरूपमूर्तिश्च, एते नित्यसाकाराः, उपासनया मुक्तिं गतास्तेऽन्तर्यामिसाकाराऽन्तःसाकारानुस्वरूपसाकारास्तत्र समीपवर्तिपरब्रह्मानन्दस्वरूपमूर्तिसाकाराऽभिमुखसाकाराः, जडे चेतने सर्वत्राऽन्तःप्रविष्टस्य नित्यसाकारत्वेन अणोरणुसाकारता महतो महत्साकारतेति साकारतैव सर्वेषाम्, ज्ञानप्राधान्येनात्र ज्ञानसाकारः, ऐश्वर्यप्राधान्येन ईश्वरसाकारः, मुक्तौ प्रकाशप्राधान्येन प्रकाशसाकारः, आनन्दघनप्राधान्येन आनन्दसाकारः, प्रकाशसाकारं ब्रह्म आनन्दसाकारानुसाकारम्, मुक्तसाकारमपि आनन्दसाकारानुसाकारम्, आनन्दसाकारं परब्रह्म आनन्दमात्रस्वरूपं चिदानन्दस्वरूपम् एकदेशस्थं प्रत्येकदेशस्थं प्रत्येकपदार्थस्थं प्रत्येकव्यापकं प्रत्येकसमस्तव्यापकं यावत्तत्त्वपदार्थवस्तुसद्व्यापकं सर्वत्र केवलान्वयिव्यापकं सर्वत्रस्थं सर्वनिजसाकारं सर्वशरीरशेषविशेषणाऽऽश्रिततत्त्वानि साकारं कुर्वन्नसाकारं, ब्रह्मापि तेजोधामापि केवलान्वय्यपि सदपि तत् परब्रह्मसाकारमनुकुर्वत् साकारम् निराकारोपचारमात्रमपि साकारं सर्वात्मकर्मफलप्रदत्वनिर्वाहकं सर्वसाक्षित्वनिर्वाहकं सर्वप्रकाशतानिर्वाहकं सत् सूक्ष्मातिसूक्ष्ममपि साकारं कुर्वत् स्वानुप्रविष्टसाकारपरब्रह्माऽनुसाकारमनुस्वरूपसाकारं सत् व्याप्यं साकारं कुर्वत् साकारमिति न किमपि निराकारं केवलं निराकारमेव साकारपरब्रह्मविधुरम् अपि तु साकारपर-

ब्रह्मसधुरमेव परब्रह्मानुकारिताकारं साकारमिति पञ्चभेदा अनाद्यः साकारा एव, सत्त्वप्रकाशात्मकमायायाः साकारत्वात्, चित्प्रकाशात्मकाऽऽत्मादीनां साकारत्वात् आनन्दप्रकाशात्मकपरब्रह्मादीनां साकारत्वाच्च ।

अथ पृथिव्यादिभूतानि तद्देवाश्च साकाराः, इन्द्रियाणि वृत्तिस्वरूपाणि तद्देवाश्च साकाराः, अन्तःकरणानि वृत्तिद्वारात्मकाश्रयाणि तद्देवाश्च साकारा, शब्दादयो ज्ञानादयश्च बद्धयन्तेऽतस्तेऽपि साकारास्तदन्तःप्रविष्टानन्दघनपरब्रह्मसाकारभावात्, पुण्यम् अपुण्यं स्वर्गादिप्रदं प्रसन्नतात्मको धर्म आत्माद्विगत आत्मना सह परलोकं यातीति प्रतिबद्धधर्मोऽपि स साकार एव, कर्म सुखं चेत्याद्यपि आनन्दघनप्रकाशघनज्ञानघनैश्वर्यघनतमोघनादौ यथासंभवं योग्यस्थितिकम् अयोग्यव्यावृत्तं सत् सुमूर्तिकं साकारमेव व्यावृत्तिपराभूतत्वात्, तथाच सिद्धं सर्वतत्त्वानां साकारत्वम्, कारुवर्येच्छागताकृतिर्बुद्धिवलितकर्मक्लृप्तिविशेषात्मतया चारुतरा घटलीलाघाटे घटनात्मिकोद्भवति, एवं कर्तुरकर्तुरन्यथाकर्तुः नित्यशाश्वतानन्दस्वरूपसाकारमूर्तिपरमात्मसार्वज्ञ्याभिलाषकृत्यादिगताकृतयो विशिष्टदिव्यचिच्छक्तिक्रियाशक्तीच्छाशक्तिसंवलितक्लृप्तिविशेषात्मकघटनास्वरूपाकृतयो विद्योतन्ते चेत्येवं सर्वं तत्त्वं साकारमिति ।

अथ द्रव्यप्रवाहा गुणप्रवाहाः कर्मप्रवाहा धर्मप्रवाहा अवस्थाप्रवाहाः प्रयत्नप्रवाहाः संस्कारप्रवाहाः चित्प्रवाहा आनन्दप्रवाहा आकर्षणशक्त्यादिप्रवाहाः परिवर्तनप्रवाहा रूपप्रवाहा भावाऽभावप्रवाहा अर्थप्रवाहा भावनावासनादिप्रवाहा लक्षणप्रवाहा गौणमुख्यप्रवाहाः संसर्गप्रवाहाः क्रमानुपूर्वीप्रवाहाः क्षणादिप्रवाहाः स्थितिप्रवाहा लयप्रवाहाः सर्वेऽपि यथाकथंचित्परस्परसापेक्षा एवेति शाश्वतप्रवाहाः सर्वे शाश्वतसाकारपरब्रह्मान्विताः शाश्वतसाकारा एवेति तत्त्वानां साकारत्वम्, साकारात् साकारोत्पन्नानाम् अपूर्वसाकारभावमापन्नानां तत्रापि चेतनसंसृष्टानाम् उपासनाक्लृप्तसाकारप्रवाहानुवहनत्वेन निकृष्टोपासकानामधोगत्यातिवाहिकसाकारकुदेवतावशवर्तितयाऽधोग्रच्यगतिमत्त्वम् अनिष्टभोगसृष्ट्यनुनिगडितत्वमिव उत्कृष्टोपासकानामूर्ध्वगत्यातिवाहिकसाकारसद्देवतावशवर्तितयोर्ध्वोर्ध्वगतिमत्त्वम् बहिष्टसद्भोगसृष्ट्यनुविधायिसुमूर्तिकसंरोधितत्वमिति साकृत्यनुभावकता सध्रीचीनैव सर्वत्र, अथ संसारिचेतनस्य मुक्तिचेतनताभिगतिकस्योत्तरोत्तरचैतन्यानन्दाविर्भावांशाधिकृतस्येत्थं स्वरूपरूपणं सम्पद्यते—, तत्र

चिदानन्दघनस्वरूपमूर्तिपरब्रह्म सूक्ष्मतमं सदा नित्यशाश्वतसा-

कारं पुरुषाकारं सर्वांगसम्पूर्णम्, तद्व्याप्यं तदन्तर्व्याप्तिकम् अक्षरं ब्रह्म साकारं साक्ष्यन्तर्यामि च चिदानन्दप्रकाशघनं सूक्ष्मम्, तद्व्याप्यं तदन्तर्व्याप्तिकम् आत्मब्रह्म साकारं साक्ष्यन्तर्नियाम्यं चैतन्यघनं चाणुस्वरूपम् अन्तःप्रविष्टविशिष्टस्वरूपाऽनुकारितस्वरूपाकारमूर्तं धर्मज्ञानवैराग्यभक्त्युपासनासततसमुत्तारिताऽपुण्याऽज्ञानरागरूक्षत्वकाऽऽलीनीतोभयतनुकाऽऽविर्भूतविवेकज्ञप्तियथार्थप्रमातनुकं स्वात्मकचिच्चैतन्यवारिधिसन्निधानं द्रष्टृस्वस्वरूपाऽवस्थानसम्प्रज्ञातसमाधिसंलग्नाऽसम्प्रज्ञातांशानुमग्नं सत् समाप्ताधिकारसूक्ष्मतनुविरामं विमुच्य कर्मठदृश्यभवनम् भागवतधर्मकृपाप्रसन्नताप्रेरिताऽऽगताऽऽतिवाहिकदिव्यदेवतासहानुसृतिकं विवेकतनुकं यात्यूर्ध्वमूर्ध्वम्, ब्रह्मरन्ध्रात्मकाऽर्चिमार्गमभिनिर्गतस्य कोशपादसमाप्तिः ।

अथ लीलेशपादः—लीलाविभूत्यात्मके प्राकृतलोके आमूलप्रकृतेः आभूमिपर्यन्तम् सर्वं राज्यात्मकं तत्तधिष्ठातृभोग्यजातं धिष्ण्याधीनम् ईशते ये ते ईश्वराः ऐश्वर्यात्मकस्वरूपाः सच्चिदानन्दा भोगमात्रपर्यवसाना बहुलतया प्रपद्यन्ते, ते पुण्यप्रलापाः, सकामसत्संगाः, सगुणरागाः, सदाचारसमाचाराः, सर्वसिद्धिसन्तृप्ताः, किञ्चिदान्तरस्वादाः, मनोमात्रविलसितसंस्कारसमुद्भावितविचित्रवैभवदर्शनवृत्तयेः वर्तन्ते, भगवत्कृपया तदतिक्रमितोपार्जनोऽयं चन्द्रसूर्यविद्युदादिकिरणमार्गमवलम्बमानश्चन्द्रलोकं सूर्यलोकं ध्रुवलोकं ब्रह्मविष्णुमहेशाधिष्ठितदिव्यसत्यलोकं लोकालोकोर्ध्वं तेजआवरणस्थवैकुण्ठलोकं च विमानगजगरुडादिना वा सर्वदर्शनोद्भाविताऽधिकाधिकभगवन्माहात्म्यज्ञाननिधिरयम् अष्टावरणधामानि वैराजधाम महाविष्णुधाम भूमधाम तत्त्वधामानि प्रधानपुरुषधाम प्रकृतिपुरुषधाम महाकैलासं शबलब्रह्मधाम केवलब्रह्म वासुदेवधाम महावैकुण्ठं गोलोकं च पश्यन्नतीत्य तानि ब्रह्मलोक प्रवेशाभिमुखो भवति, नैतेषु कुत्रचिदपि सारं मत्वाऽऽस्कन्दनमादरयति, अनास्कन्दनविवेकबलमाहात्म्यज्ञानवत्त्वात्, तथैव सुसाधनसम्पादितत्वात्, प्रस्थानपूर्वमेवाऽनेन सच्छास्त्ररहस्यपरिशीलनसहकृतसन्तजनसेवाशीर्वादप्रसन्नतात्मकोत्कृष्टसुकृतोदयलभ्यदिव्यसत्संगानुविधायिमहाविवेकिनो दुरिताऽसंस्पृष्टस्यातिनैर्मल्येन दिव्यसिद्धिबलेन बन्धवियुक्तस्य निर्विघ्नितस्य सर्वश्रेयोनिधानस्य सद्गुरुसंप्रकाशितात्यतितस्वविज्ञानसंभृतस्याऽऽजीवनंभगवत्कथाश्रवणमनननिदिध्यासनपूजनादिपरायणस्य विवृद्धमहाश्रद्धस्य विगलितलिंगशरीरग्रन्थिबीजस्य निवृत्तभगवदितरकामस्य प्रसञ्जितहृदयपुण्डरीकचक्रगतनिजान्तःपरमात्मस्वरूपदर्शनस्य पराकाष्ठापन्नप्रेमभक्तिकस्य भगवन्मात्ररतिकस्याऽत एवाऽर्थादन्यविरक्तस्य षट्भावापन्नसा-

वैद्यकल्पचैतन्यविज्ञानस्य जीवनमात्राऽवशेषमुक्तस्य परमात्ममूर्तिगतस-र्वदर्शनतृप्तस्य परमोपासकनिजीकृतात्मचैतन्यमूर्तिकस्य सर्वशक्तिसाम-र्थ्यैश्वर्यगुणाद्याविर्भूताकृतिकमुमूर्षुमुक्तस्याऽस्य सर्वप्रातिभज्ञप्तिकस्य दि-व्यातिदिव्यगोचरचित्सम्पत्तिकस्य स्वात्मपरमात्मस्वरूपानन्दमहासागर-सहभोगसमृद्धिकस्य सर्वसाधितसमाधिकस्य कृतसर्वेश्वरलीलाविभूतीय-त्तापरिमाणस्य प्रश्वभिप्रस्थानातुरस्य भगवत्पार्षदागमनाभित्वरस्य स्वे-ष्टदेवमात्रमन्त्रार्थमिश्रितस्वचैतन्यस्य एतल्लोकसमुत्थस्य दिव्यमुक्तपार्ष-दादिसमाकारितस्य समस्ताऽसाधारणमुक्तचिन्हचिन्हितस्य समस्ताऽसा-धारणदिव्यभूषणविभूषितस्य पार्श्वद्वयस्थिताऽनेकपुण्यलोकप्रजाभिः तत्र-त्यैः पुण्यपुरुषैर्दिव्याधिपतिभिश्चाऽभिसत्कृतस्य सूर्यस्थं हिरण्मयपुरुषं ध्रुवस्थं कीलकविष्णुं महर्जनतपोलोकदिव्याधिभगवत्स्वरूपाणि सत्य-लोकस्थानि ब्रह्मविष्णुमहेशधामानि अष्टावरणेश्वरधामानि पश्यन् तत्र-त्यैः पूजितः सन् तदुपरिस्थेश्वरमहामहासत्त्वसम्पत्तिलीलाविभूतीश्वर-वैराजादिलोकान् अभिसञ्चरति, । विराट्शरीररोमकूपस्थैकब्रह्माण्डं भित्वाऽग्रगतिमानयं शतमुखसहस्रमुखलक्षमुखादिब्रह्मणांब्रह्माण्डानां भ-गवत्कृपया तत्तदातिवाहिकेश्वरदेवतादिभिरुपदर्शिताः समृद्धीरवलोकयन् महाविष्णुवैकुण्ठं महालक्ष्मीमहाविष्णुतन्महापार्षदानीश्वरमहेश्वरमहाम-हासदीश्वरेश्वराणीभवनोद्यानलीलाविभूतिसंभृतमनन्ताश्चर्यभृतं शुद्धसत्त्व-समस्तोपकरणादिमयं परितो विलोक्य तत्रत्यार्पितपूजनसत्कारः ततो भूमपुरुषस्य भूम्न्या महापरेश्वर्या सेवितोऽनन्तभूमानुचरपुंस्त्रीसम्पत्ति-समृद्धिमहोत्समहारामदिव्यवनवसन्तादि समवलोकयन् तत्तत्पुरुषसत्कृत्या-दिकृतसम्मानोऽव्याकृताभिधधामात्मकभूममहावैकुण्ठमभितो विलोक्य, ततो महालक्ष्मीवैकुण्ठं महाभूम्नीवैकुण्ठं तुलसीवैकुण्ठं यावतां ब्रह्म-विद्यानां वैकुण्ठानि सतीनां वैकुण्ठानि नारायणीनां नारायणानां च वैकुण्ठानि सहस्रशीर्षाऽयुतलक्षादिशीर्षनारायणानां लीलाविभूतिवैकु-ण्ठानि शेषनारायणानां वैकुण्ठानि श्रीभूलीलादीनां वैकुण्ठानि रमाप-द्मापद्मिनीभार्गवीमाधवीलक्ष्मीकमलाहरिण्यादीनां स्वतन्त्रसत्ताकवैकु-ण्ठानि तत्तदातिवाहिकप्रदर्शितानि समवलोकयन् तत्प्रदत्तार्चनानि सम-ङ्गीकुर्वन् प्रधानपुरुषवैकुण्ठं प्रकृतिपुरुषवैकुण्ठं प्रकृतितत्त्ववैकुण्ठानि सिद्धिवैकुण्ठान्यैश्वर्यवैकुण्ठानि च समवलोक्य अचेतनदिव्यविभूतिधामा-भियास्यन् स्वातिवाहिकमुक्तानुनयमानोऽग्रे प्रयाति, एवं निर्गतस्य ली-लेशपादसमाप्तिः ।

ततोऽक्षरब्रह्मलोकसीम्नि समवस्थितानि अचेतनदिव्यभूमिका-



व्याप्तचतुर्व्यूहवैकुण्ठानि विभववैकुण्ठानि बहुविधाऽवतारवैकुण्ठानि क-

लांऽशाऽवेशरूपादिवैकुण्ठानि विभिन्नोर्ध्वोर्ध्वाऽतिप्राचीनसृष्टिपतिब्रह्मपुरुषाणां विभिन्नानि वैकुण्ठधामानि असंख्यावताराणां धामानि केशवादीनां धामानि अनन्तगोलोकधामानि तत्तत्परमेश्वराणां स्वरूपरूपाणि सच्चिदानन्दसमृद्धचाश्चर्याणि राधाजयाललिताद्यसंख्यभगवतीनां गोलोकानि गोपगोपीनां भगवतां विभिन्नाकृतिधारिणाम् अचेतनदिव्यविभूतिमयलोकभोगसाधनदम्पतीपरिवारविमानयानोद्यानसरित्वनाऽवनिमहाद्रिरत्नमणिविभूषणमहोलशालासखीदासभक्तभक्तानीविलासविभूतिसम्पत्तिरवलोकयन् तत्तद्भगवत्सत्कृतः सन्नक्षरब्रह्मलोकाभिव्यञ्जकतेजोघनस्तरस्थब्रह्मह्रदेऽभिस्नातः सन् केवलसच्चिदानन्दचेतनतत्त्वात्मकः सर्वसामर्थ्यशक्तिमयदिव्यस्वरूपकल्पतामनुविलोकयन् परब्रह्ममूर्तौ प्रविश्य परब्रह्मस्वरूपानुस्वरूपैश्वर्यगुणसार्वज्ञ्यसौन्दर्यादिसमभिव्याप्तः सच्चित्प्रकाशानन्दघनमूर्तिको ब्रह्मस्वरूपः परब्रह्मस्वरूपो निष्पद्य सुसम्पद्य मुक्तानां महामुक्तानामनादिमुक्तानाम् मण्डलानि तत्रत्ययावद्विधवसतीरवलोकनाय ब्रह्मलोकेऽग्रेऽभिसरन् प्रयाति, एवं प्रयातस्य महाविभूतिपादसमाप्तिः।

ततोऽक्षरधामगतानां सर्वदर्शनमुक्तानाम् अप्राकृतदर्शनमुक्तानां निजोर्ध्वदर्शनमुक्तानां मूर्तिमात्रदर्शनमुक्तानां सच्चिदानन्दस्वरूपमात्रमूर्तिकानां मण्डलानि प्रत्येकमुक्तमूर्तिकानां मण्डलानि समूहितमुक्तमूर्तिकानां मण्डलानि मूर्तिप्रविष्टमूर्तिकानां मण्डलानि अनादिमुक्तानां मण्डलानि सादिमुक्तानां मण्डलानि आगम्यमानानां मुक्तानां मण्डलानि तेषां स्वागतसत्कारादिसमुत्सवारंभान् सेवापरायणविविधस्वरूपात्मकमुक्तानां मण्डलानि भगवदसंख्यमहोत्सवपरायणानां मुक्तानां मण्डलानि वेषाभूषणचिह्नोपकरणादिस्वरूपाणां मुक्तानां मण्डलानि तन्निवासब्रह्मप्रकाशस्तरभूमिकाऽऽयतनादीनि रंगरहोलब्रह्ममहोलसेवाप्रासादसिंहासनादीनि च विलोकयन् विचरन् परब्रह्मश्रीहरिमूर्तिमात्राऽवलम्बनो भगवदाज्ञयाऽक्षरब्रह्मधाम्नि यत्र निर्दिष्टस्तत्र निवसति सारूप्यभावापन्न इति ब्रह्मेशपादः समाप्तः। त्रिभागो ब्रह्मेशपादः, एकभागो लीलेशपादः, मायासृष्टिरेकभागे, त्रिभागे ब्रह्मलोकः, 'पादोऽस्य विश्वाभूतानि त्रिपादस्याऽमृतं दिवि,' त्रिपादूर्ध्वमुदैत् पुरुषः, पादोऽस्येहाऽभवत्पुनः, ततो विश्वं व्यक्रामत्। इत्यनेन केवलान्वयिनोऽक्षरब्रह्मणः सर्वसत्त्वमावेद्यते, मायालोकोब्रह्मणश्चतुर्थांशः, ब्रह्मलोको ब्रह्मणस्त्र्यंशाः, मायासृष्टिर्मायिकी लीलाविभूतिः, अवतारादिधामसृष्टिर्दिव्यमहाविभूतिः, ब्रह्मलोकस्तु सच्चिदानन्दचेतनस्वरूपसुमूर्तिमुक्तमुक्तेशब्रह्मेशसंप्रपूरित इति, जीवलोका ब्रह्माण्डानि, ईशलोका ईश्वराण्डानि, मायालोकास्तत्त्वाण्डानि, ब्रह्मलोको भगवद्धामानि। एताः सर्वा वसतयः परब्रह्मनि-

यस्याः, परब्रह्मव्याप्याऽक्षरब्रह्मव्याप्याः, जडचेतनयावत्सूक्ष्मस्थूलवसतिव्यापकम् अक्षरं ब्रह्म, अक्षरब्रह्मव्यापकं परब्रह्म, ततो वसतिविशिष्टं ब्रह्म, ब्रह्मविशिष्टं परब्रह्म एकम्, तदेतद्विशिष्टब्रह्माद्वैतम्, व्याससूत्राणां श्रुतानां शास्त्राणामाचार्याणां सत्पुरुषाणां ज्ञानिनां भागवतानां विवेकिनां तत्त्वचिन्तकानां समन्वयितॄणां दिव्यदृशां च व्याख्यातॄणामुपदेशकानां शास्तॄणां च भवत्यैकमत्यं व्यापकत्वं ब्रह्मण इति, तच्च ब्रह्म परब्रह्मणा श्रीस्वामिनारायणेन स्वव्याप्यं स्वाधीनं स्वाधेयं तनुस्वरूपं स्वमूर्तेरलौकिकैश्वर्यात्मकम् अन्वयव्यतिरेकभावास्पदं स्वमूर्तितेजोरूपं साकारनिराकारोभयात्मकं कर्मफलदानसमर्थं चेतनवत्कार्यकर्तृ प्रकाशघनचेतनसर्वज्ञस्वरूपं सच्चिदानन्दप्रकाशतत्त्वात्मकं चेति सर्वत्र प्रतिपादितं घटिताऽघटितघटनासहं तल्लक्ष्यीकृत्य वेदान्ताः प्रवर्तन्ते इति वेदान्तिनः, ब्रह्माऽधिकृत्य सृष्ट्यसृष्टिघटनाः प्रवर्तन्ते इति ब्रह्मार्थिनः, उपासनासेवाद्यधिकृत्य मुक्तयः प्रवर्तन्ते इति परब्रह्मार्थिनः, धर्मधार्मिकरक्षा भगवन्तमधिकृत्य प्रवर्तन्ते इत्यवतारार्थिनः, स्नेहहावभावसेवा अर्चामधिकृत्य प्रवर्तन्ते इति मूर्त्यर्थिनः, ध्यानसमाधिः आत्मानमधिकृत्य प्रवर्तते इति अन्तरात्मवादिनः, कर्मफललब्धयः साक्षिणमधिकृत्य प्रवर्तन्ते इति चान्तर्याम्यर्थिनः, शासनं शास्तारमधिकृत्य प्रवर्तते इति नियामकवादिनः, अन्तो नास्तिकता कुतर्कमधिकृत्य प्रवर्तते इति अनास्थावादिनः, फलं श्रद्धामाश्रित्य प्रवर्तते इति आस्तिक्यवादिनः, लाभः सत्यश्रमेण प्रवर्तते इति ऋतोद्योगिनः, एवमेव प्रवर्तनानिवर्तनाविधिनिषेधादय आत्मचेतनालम्बनाः केनचित्सर्वज्ञेन क्लृप्ता इति शास्त्रमपि तत्परं सत्यं सफलं स्वागतीकर्तव्यमिति सर्वं सुसमीचीनम् ।

अथ हरिवाक्यसुधासिन्धौ परमप्राप्यस्य श्रीहरेरानन्दमूर्तेर्वेषान्तर उक्तो न तु रूपान्तरम्, 'वेषान्तरं धृतवतो नटस्येवाऽस्य सर्वथा । स्वरूपभेदो नास्त्येव ज्ञेयमित्थं मनीषिभिः ।। नटो वेषान्तरमिव लोकान् दर्शयते प्रभुः ।। यादृशं तु भवेत् कार्यं स धृत्वा तादृवं वपुः । तद्विधाय पुनः स्वेन रूपेणाऽऽस्ते विहाय तत्, एवं वेषो न रूपं वा विग्रहः, किन्तु स्वरूपस्वरूपस्यैवाऽतदाकृतिदर्शनम्, परमेशस्य सर्वविधघटनाकारदर्शकसमर्थस्वरूपत्वेन तदर्थं रूपात्मकविग्रहात्मकोपाध्यग्रहणात्. अथ सौभर्यादीनां तु स्वरूपपरिवर्तनसामर्थ्याऽभावः, स्वशरीरे पुष्टियौवनमात्रशक्तिवर्धकतपोविशेषमात्रबलवत्त्वस्य दर्शनात्, जन्मौषधिमन्त्रतपःसमाधिजसिद्धीनां योगशास्त्रेणाऽप्यभिहितत्वात्, एवं सौभरेः सहस्रशरीरान्तरधारणदर्शनं चापि 'अस्मितामात्र'योगसिद्धया तद्वर्णनं, न तु

पृथिव्यादेः शरीरान्तरग्रहणसामर्थ्यम्, सौभरेः स्वरूपमात्रशरीरान्तरधारणाऽसामर्थ्यात्। वेदान्तरस्य तु नटस्य स्वाप्नस्य भूतस्य देवस्येन्द्रजालिकस्याऽन्याकारदर्शनबीजप्रयोगस्य दिव्यत्वस्य यमदूतस्य च स्वरूपाकारान्तरदर्शनमात्रसामर्थ्यात्, परमेश्वरस्य मुक्तानां च चेतनानां स्वरूपाणां सुतरामाकृत्यन्तरदर्शनसामर्थ्यसिद्धेः, एतत्सामर्थ्यमूलकमेव देहाकारान्तरधारणसामर्थ्यं गौणं स्यात्, तच्चोक्तं पातञ्जलव्यासभाष्ये-असमर्थानां ज्ञानेच्छाकृतयो विषयाकारानुसारेण विपरिणमन्ते, योगिनां तु ज्ञानेच्छाप्रयत्नानुसारेण विषयाकारा विपरिणमन्ते, क्रियाकलाभिस्तु सर्वेषां साधनसामग्र्या मृत्पिण्डादिभ्यो घटाद्याकाराः परिवर्तन्ते, गोधूमपिष्टात् पोलिकापूरिकामोदकाद्याकारवत्। अथ जडं द्रव्यं ज्ञानं द्रव्यं चेतयत्यपि कालेनान्याकारान्तरं भ्रान्तिः प्रमात्वं प्रमा भ्रान्तित्वं भावोऽभावतां च लभते, नाऽत्र चेतनप्रयोज्यताऽस्ति, तर्हि रूपान्तरावश्यकत्वे न किमपि साधनं सध्रीचीनम्, अतः स्वरूपपरतैव मूर्तिविन्यासस्य, न रूपपरता भिन्नविग्रहवत्तापरता, श्रीस्वामिनारायणभगवतः स्वस्य दिव्यविभूतिविग्रहवत्ताग्रहणाऽनभिप्रेतत्वात्। पञ्चालस्य चतुर्थे वचनामृतेऽपि स्वरूपसन् सूर्य एव यथापात्रं कुन्तासमं सत्राजित्समं मानवं पात्रं तदग्रे प्रकाशसंकोचं कृत्वा स्वरूपसन्नेव समागतो न तु पृथिव्यादिभौतिकदेहात्मकरूपान्तरेण, एवमेव भगवान् स्वैश्वर्याणि संकोचयित्वा मानवसमः स्वरूपसन्नेव मानवसमो भूत्वा मानवाकारो भूत्वा स्वदर्शनं ददाति, स्वरूपसन्नेव स्वयं स्वधाम्नि विराजितोऽस्ति, मनुष्यभावदशायां दिव्यभावसंकोचं कृत्वैव स्वरूपसन् समायाति, तत्र स्वदिव्यभावस्य प्रच्छन्नता कार्येति स्वदृष्टिर्वर्तते' इत्येवं स्वरूपसत आकारान्तरं भावान्तरं च तत्र प्रतिपादितम्, उभयम् एकं न जानीयादिति वाक्ये भेदापादकरूपस्य निषेधादेव स्वरूपैक्यस्य प्रतिपादनात्, किञ्च 'भूतावेशन्यायेन यत्राऽऽवेशस्तत्र स्वयं तु स्वरूपसन्नेव प्रविष्टो भवतीति निर्गमने सति स्वरूपस्यैव निर्गम इति क्वचित् सचेतनान्तरशरीराऽवस्थानशेषता क्वचित्तु सचेतनस्वरूपसन्निर्गमस्तदा तु देहत्यागादिव्यवहार इति सामञ्जस्ये परमेश्वरस्यैव स्वरूपसत्सच्चिदानन्दसाकारमूर्तिमत्त्वस्यैव युक्तत्वम्, एवं च सति तत्र वचनामृते यदुक्तं संशयो न स्यादिति तदपि स्वरूपसत्त्वमात्रनिश्चये भिन्नविग्रहवत्त्वसंयोजने 'स्वरूपसन्न वा' भिन्नविग्रहवन्न वे'ति मिथ्याऽनेकधर्मोपपत्तेः संशयाधायकत्वात् स्यादेव विभूतिविग्रहवत्तावादिनः संशयः, न तु स्वरूपसन्दिव्यमूर्तिवादिनः, असाधारणधर्मवत्त्वे निश्चिते प्रमाया एव वर्तनात्। विप्रतिपत्तिवाक्यानामपि सन्देहोत्पादकत्वेन क्वचित् स्वरूपस्य क्व-

विद् रूपस्य विग्रहवाक्यत्वे तदुभयतात्पर्याऽनवगन्तॄणां स्यादेव संशयाप्रातः, तदर्थं भगवानाह—स्वरूपसम्मन्मूर्त्याकारादि अद्रुद्धता मा पतन्तु संशयजाले इति । श्रुतिनामपि स्वरूपसति सुमूर्तौ परब्रह्मणि तात्पर्यात् व्यासस्य तत्सम्बन्धयितुर्न सन्दिग्धत्वम्, तत्सूत्रव्याख्यातॄणामेव सन्दिग्धत्वं निराकारे साकारे स्वरूपसदाकारे विभूत्याकारे भेदेऽभेदे द्विरूपे एकरूपे च सन्देहपर्वतानां प्रसह्यासमापतनात् । अथ मूलप्रकृतौ राधायां च 'वीर्यमाधत्त वीर्यवानि'त्यादिवचनानां शैथिल्यपरिहरणमात्रार्थत्वं स्वरूपे सति प्रविष्टे परमात्मनि घटते, अन्यथा तु स्खलनप्रवाहसातत्ये वियोगाभाव प्रवाहरिक्तत्वे शैथिल्यं चेति दोषापत्तेः, तदर्थकदिव्यविभूतिविग्रहवत्तायाः परमात्मनि राधिकादिषु च कल्पनाया एव कल्पकानाम् अपूर्णविस्त्वमावेदयतीति, दोषाणां च दोषत्वपरिहरणार्थं सर्वमपि निर्गुणमित्यनुसरणमपि दोषाऽसत्त्वसम्पत्त्या एव निरस्तं सत् सद्गुणमात्रसम्पत्त्या स्वरूपसत्यपरमात्मानन्दमूर्तिव्यवस्थापनं सर्वथोचितमिति विद्वद्धुरन्धरैरीक्षणीयम् । किञ्च षोडशसाहस्रपत्नीभिः कृते षोडशसाहस्रादिमूर्तिकः परमात्मा नवलक्षयोगिप्राप्यनवलक्षमूर्तिकः श्रीस्वामिनारायणः परमात्मा स्वरूपसन्नेव व्यवर्तत तथा समर्थत्वात्, मिथिलायां श्रुतदेवमिथिलेशभवनयोः समकालं स्वरूपसन्नेव परमात्मा अक्षयपिप्पलानग्रामयोर्द्विस्वरूपात्मकः स्वामिनारायणपरमात्मैव जगामोवास चेत्यपि सूपपन्नम्, नहि तत्र पृथिव्यादिभिस्तत्त्वान्तरशरीरग्रहणं विभूतिशरीरग्रहणं वा वर्तते, स्वरूपसत एव तथाखेलनात्, गोपालबालवत्सादीनाम् आकृतिदर्शनमपि स्वस्वरूपसत एवाकारदर्शनं कारितं दाक्षिणात्यसंघस्य रूपरामस्य च साभ्रमत्याम् अरण्ये च चौरेभ्योऽन्धकाराच्च रक्षणार्थं स्वरूपसतोऽश्ववाराणामाकाराणां मठाश्रमयतिसाधुप्रदीपकुक्कुरादिरूपाणां च संप्रदर्शनप्रदातुः श्रीस्वामिनारायणपरमात्मनः स्वरूपसत इव घटनात् पार्थिवादितत्त्वाऽग्रहात् दिव्यविभूतिविग्रहवत्ताया प्राकृतिकभौतिकविग्रहवत्तायाः सर्वथाऽनावश्यकत्वात् । किञ्च—अवयवाऽशैथिल्यं नित्यत्वमङ्गीकुर्वता निरवयवेष्वण्वात्मसु अवयवानामसत्त्वेन तच्छैथिल्यस्याऽप्रसिद्धेरेवाऽसम्भवितलक्षणस्य सुतरामस्वीकार्यत्वात्, प्रागभावध्वंसाऽप्रतियोगित्वस्यैव नित्यत्वे तु प्रागभावे ध्वंसे चाऽव्याप्तेः प्रत्येकलक्षणत्वेऽननुगमात् निरवयवत्वमेव नित्यत्वमिति तत्राऽव्याप्तेरेवाऽनित्यत्वसिद्धौ तादृशाऽनित्यविग्रहवत्त्वे श्रुतिस्मृत्यादिव्याकोपात् एकतत्त्वात्मकनित्यस्वरूपानन्दात्मकमूर्तिमत्त्वे नित्यत्वसंगतेः, सच्चिदानन्दमूर्तौ संयुक्तावयवानाम् असमवायिकारणसंयोगस्याऽप्राप्तिपूर्वकप्राप्त्यात्मकसंयोगस्य वाऽसत्त्वेन तादृशावयवनत्वाभावात् दिव्यविभूति-

विग्रहे तु विभूतेरंशानां नवीनतुक्ताद्यवयवानामप्राप्तिपूर्वकप्राप्तिमत्त्वेन रूपसिद्धौ अनित्यत्वापरोदुष्परिहायत्वात्परमात्मन्यपि तथापत्तेर्ध्रौव्यात् । योगैश्वर्याऽद्भुततात्मकत्वेन नित्यत्वसमाधाने स्वरूपात्मकाऽऽनन्दमूर्तावेव तत्स्वीकरणे सर्वसिद्धान्ताभिप्रायध्रौव्ये विभूतिविग्रहवत्ताया निरर्थकत्वमेव । अथाऽऽविर्भावति रोभावात्मकोत्पत्तिनाशाङ्गीकारेऽपि आविर्भावे पुनराविर्भावान्तरमित्याद्यनवस्थापातेऽभिमताऽसिद्धिः, अनाविर्भावपक्षे नित्यत्वाऽसिद्धिः, स्वरूपसत आविर्भावस्य तादात्म्येन स्वीकारे तु स्वरूपसदानन्दमूर्तेरेव साकारत्वे नित्यत्वे किं प्रतिरक्षिणो व्याहतमिति तदेव स्वरूपसत्सच्चिदानन्दं परंब्रह्म साकारमिति सुमूर्तमिति सध्रीचीनः पन्थाः । अथ अवताराऽवतारिसमानतायां स्वरूपसतः सुमूर्तपरमात्मनो वेषान्तरदर्शनमात्राधायकत्वेन संकुचितभावस्वरूपत्वेन न तत्राऽभेदे किञ्चिद् बाधकम्, भेदे तु भवत्यावेशादिविग्रहेऽभेदताबाधकम् आत्माद्यधिष्ठिततत्त्वान्तरमितिलाद्यवताराणामंशकलाऽऽवेशादितया महाभारते पुराणादौ प्रसिद्धवर्णनात् 'कलांशांशादय' इतिप्रयोगात्, 'षष्ठांश' इतिप्रयोगात् तदन्तर्वर्ति स्वरूपसत्परमात्मभिन्नचेतनात्माधिष्ठिततत्त्वादिरूपधृगवतारत्वे विग्रहे विग्रहात्मनि च भेदस्य केनाऽप्यह्नवन्वाऽशक्यत्वात्, सन्ति चाऽवतारा देवादीनां ब्रह्मविष्णुमहेशानां वैराजपुरुषाणां भूमपुरुषाणां महाविष्णूनां प्रधानपुरुषाणां व्यूहानां श्रीणां विभूषाणामायुधानां गुणानां मुक्तानां ब्रह्मणः परब्रह्मणश्चेति, तत्र केचन प्रविष्टात्मविग्रहाः वैकुण्ठादिगतदिव्यविभूतिविग्रहाः स्वरूपमात्रविग्रहाश्चेति वा, अक्षरधामतो ये जायन्ते ते स्वरूपानन्दप्रकाशमूर्तिकाः, वैकुण्ठगोलोकाऽमृताऽव्याकृतश्रीपुरादिधामतो ये येऽवतरन्ति ते स्वरूपान्वितविभूतिविग्रहाः, ये चेश्वराश्चाऽवतरन्ति ते प्राकृतविग्रहाः देवादयोऽपि तथा भवन्त्येव–महाभारतपुराणादिप्रमाणानि प्रदेयान्यत्र–येन अवताराऽवतार्यैक्याऽनैक्यव्यासभगवत्प्रमाणैरेवाऽवबोधितं भविष्यति—

'वायुपुराणे १ अध्याये–कंसस्य चापि दौरात्म्यमेकान्तेन समुद्भवः । वसुदेवस्य देवक्यां विष्णोर्जन्म प्रजापतेः (१४८) । (वा० पु० अ० ५)–रजो ब्रह्मा तमो ह्यग्निः सत्त्वं विष्णुरजायत' (१५) । ब्रह्मा नारायणाख्यः सः···भूमेरुद्धरणं प्रति । ३, ८, । वाराहरूपमस्मरत्, प्रविवेश रसातलम् । (११, १५,) । 'विष्णुस्त्रिभुवनेश्वरः । भविष्यतीह नाम्ना तु वाराहो नाम विश्रुतः (अ०–२३/१०३) 'प्रथमे श्वेतो व्यासः, द्वितीये सत्यः' (११५, ११८) 'तृतीये द्वापरे व्यासस्तु

भार्गवः' (१२३)। 'चतुर्थे द्वापरे व्यासोऽऽङ्गिराः स्मृतः (१२६)। 'पञ्चमे द्वापरे व्यासस्तु सविता' (१२९)। 'षष्ठे परिवर्ते मृत्युर्व्यासः' (१३३)। सप्तमे परिवर्ते व्यासः शतक्रतुः' (१३६) 'अष्टमे वसिष्ठः' (१४०) नवमे सारस्वतः' (१४३)। 'दशमे त्रिधामा' (१४७) 'एकादशे तिष्ठद्व्यासः' (१५१) 'द्वादशे शततेजा (१५४)। 'त्रयोदशे धर्मो व्यासः' (१५८)। 'चतुर्दशे सुरक्षो व्यासः' (१६२)। 'पञ्चदशे आरुणिर्व्यासः' [(१६६)। षोडशे सञ्जयो व्यासः' (१७१)। 'सप्तदशे कृतञ्जयः' (१७४) 'अष्टादशे ऋतञ्जयो व्यासः' (१८१)। 'नवदशे भरद्वाजो व्यासः' (१८५) 'विंशे वाचःश्रवाः' (१८९)। 'एकविंशे वाचस्पतिर्व्यासः' (१९४) 'द्वाविंशे शुक्लायनो व्यासः' (१९८) त्रयोविंशे तृणबिन्दुर्व्यासः' (२०३)। 'चतुर्विंशे ऋक्षो व्यासः' (२०६)। 'पञ्चविंशे वसिष्ठो व्यासः' (२०८) 'षड्विंशे पराशरः' (२१२)। 'सप्तविंशे जातूकर्ण्यः' (२१४)। 'अष्टाविंशे विष्णुर्द्वैपायनः' (२१७)। 'तदा षष्ठेन चांशेन कृष्णः पुरुषसत्तमः। वसुदेवाद् यदुश्रेष्ठो वासुदेवो भविष्यति। २१८। (वायुपु० अ० २४-'नारायणमुखोद्गीर्णः फणासहस्रपरिलितः')। 'शंकर आह-कौ भवन्तौ महात्मानौ?' श्रुणु-तम्, ब्रह्माणं विष्णुं चाह-भो भो हिरण्यगर्भ त्वां त्वां च कृष्णं वदाम्यहम् (२५-४। ६।) मधुकैटभभीतं ब्रह्माणं 'विष्णुर्मोहिनी भूत्वा दैत्यौ मोहयित्वा ररक्ष' अ० २५, ४८)। 'वायुपु० अ० २२-ब्रह्मा विष्णुश्च यज्ञश्च कालस्यैव कलात्रयः'। २२। (मेरौ श्रीवने विष्णोरायतनम्' (४८/२८)। 'वायुपु०-अ० ५५-शंकरः प्राह-अयं मे दक्षिणो बाहुर्ब्रह्मा लोकपितामहः। वामो बाहुश्च मे विष्णुर्नित्यं युद्धेषु तिष्ठति'। ५८।)। 'विष्णोरंशेन जायन्ते पृथिव्यां चक्रवर्तिनः' (अ० ५७-७२)। 'माधवस्य तु सोंऽशेन पूर्वे स्वायम्भुवेऽन्तरे। कल्किः।' (अ० ५८-७६)। 'द्वैपायन इति ख्यातो विष्णोरंशः प्रकीर्तितः' (अ० ६०-११)। 'भविष्ये द्वापरे (२९) द्रौणिर्व्यासो भविष्यति (१०४)। 'सात्त्विक्या पुरुषस्यांऽशेन यज्ञे विष्णुरभूत्तदा' (६६-१२५)। 'मारीचात्कश्यपाद् विष्णुरदित्यां सम्बभूव ह। त्रिभिः क्रमैरिमाँल्लोकाञ्जित्वा विष्णुरुरुक्रमः)। १३५।' (हिरण्यकशिपोः 'तस्याऽऽसीन्नरसिंहः स विष्णुर्मृत्युः पुरा किल' (६७-६६)। 'दत्तात्रेयं तनुं विष्णोः पुराणज्ञाः प्रचक्षते' (वायुपु० ७०/७७)। 'चतुर्थो ब्रह्मणश्चांऽशो यो व्यासः संभविष्यति (। ७४-७५।)। 'धुन्धुमारम्-तमाविशत्ततो विष्णुः' वायुपु० अ० ८८-४२)। 'मान्धातातु तनुर्विष्णोः पुराणज्ञाः प्रचक्षते' (अ० ८८-६९)। 'विष्णुं कपिलरूपेण हंसं

नारायणं प्रभुम् (१४७)। 'धन्वन्तरेः संभवोऽयम्'। 'अजः प्रोवाच विष्णुं तम्'। ९२-९, ११।) 'विष्णुः···धन्वन्तरिः काशीराजः' (१७,-२०, २१,)। 'पुनर्विष्णुः पूर्वकृष्णः प्रजापतिः' (१७४)। 'पूर्वे कृष्णः प्रजापतिः, जज्ञे नारायणः प्रभुः, देवो विष्णुरितिख्यातः शक्रादवरजोऽभवत्'। 'अदितेरपि पुत्रत्वमेत्य यादवनन्दनः' (१९२, १९६,)। 'यो वसुदेवो विष्णुं जनयामास (२२९)। 'तदा जज्ञे विष्णुर्वृष्णिकुले स्वयम्' (२२३)। कुलानि दशचैकं च यादवानां महात्मनाम्' विष्णुरेतेषां प्रमाणे प्रभुत्वे च व्यवस्थितः' (२५५,-२५६,)। 'विष्णुः किमर्थं सम्भूतः' 'कथं स विष्णुर्वसुदेवकुले वासुदेवत्वमागतः' (वायु० अ० ९७-८,)। 'स कथं गां गतो विष्णुर्गोपत्वमकरोत्' (१२)। 'यो विष्णुः, वाराहं सैंहं सहस्रांशुं क्षीरशायिनं यज्ञं च दधार, विष्णो रुत्पत्तिमाश्चर्यम्' 'प्रथमो नारसिंहः' 'द्वितीयो वामनः' 'तृतीयो वाराहः' 'चतुर्थोऽमृतधरः' 'पंचमो तारकनाशकः' 'षष्ठ आडीवकनाशकः' 'सप्तमस्त्रिपुरनाशकः' 'अष्टमोऽन्धकनाशकः' 'नवमो ध्वजनाशकः' 'दशमो वार्तः' 'एकादशो हालाहलः' 'द्वादशो घोरः' एते संग्रामा विष्णुना शंकरेण चाऽवतीर्य कृताः (वायु० पु० अ-९७)। 'ततोऽभिशप्तो भृगुणा विष्णुर्भार्यावधे तदा' (१४०)। 'जज्ञे पुनः पुनर्विष्णुः, यज्ञः, नारायणः, नरसिंहः, सप्तमे युगे वामनः, 'त्रेतायुगे तु दशमे दत्तात्रेयो बभूव ह' 'पञ्चदश्यां तु मान्धाता' 'एकोनविंशे जामदग्न्यः' विष्णुरष्टाविंशे पराशराद् वेदव्यासः' 'विष्णुरदित्या वामनः' 'विष्णुर्वृष्णिकुले देवक्या वसुदेवात्तु' 'कल्किः (वायु० अ० ९८)।

'अतेषु विष्णुषु-शाण्डिल्यसूत्रं नित्यानन्दमुनिभाष्यम्-'प्राणित्वाद् विभूतिभक्तिर्न परा' (२-१-२५)। भाष्यम्-विष्णुरविप्रभृतिषु या भक्तिः सा परा न, मोक्षप्रदा न, भवति, तत्र हेतुः प्राणित्वात्, प्राणिभक्तिर्न मुक्तिप्रदा। श्रीपुरुषोत्तमोऽत्र तद्भक्तिश्च न निषिद्धा, पुरुषोत्तमाऽन्यभक्तिर्निषिद्धा।

श्रीमद्भागवते १ स्कन्धे ३ अध्याये—

'जगृहे पौरुषं षोडशकलम्, एतन्नाऽवताराणां निधानम्, यस्यांऽशांऽशेन सृज्यन्ते' प्रथमं कौमारम्, द्वितीयं सौकरम्, तृतीयं देवर्षित्वम्, तुर्यं नरनारायणौ, पञ्चमं कपिलम्, षष्ठं दत्तम्, सप्तमं यज्ञम्, अष्टमम् उरुक्रमम्, नवमम् पृथुम्, दशमं मात्स्यम्, एकादशं कामठं, द्वादशं धान्वन्तरं, त्रयोदशं मोहिनीम्, चतुर्दशं नारसिंहम्, पञ्चदशं वामनम्, षोडशं पर्शुरामम्, सप्तदशं व्यासम्,

अष्टादशं रामम्, नवदशं कृष्णरामौ, विंशं बुद्धं एकविंशं कल्किं, । एते चांशकलाः पुंसः, कृष्णस्तु भगवान् स्वयम्। अत्र भगवान् स्वयं सच्चिदानन्द उक्तः, अन्ये तु अंशेन कलया प्रविष्टाः। इति। 'जातः पराशराद् योगी वासव्यां कलया हरेः' (अ० ४-१४,)। 'प्राणेभ्यो-ऽहं नारदः जज्ञे' (३१)। 'विष्णोर्भक्तिं करोमि' (१६)। 'शुश्रूष-माणश्चरितानि विष्णोः (२२)। 'पुरुषस्य सूरनः' (४५) बिभ्रत्क्रोडों तनुम्' (अ० ५-१)। 'कपिलं हरिं दत्तं सनकादीन्नरनारायणौ पृथुं हयग्रीवं कूर्मं नृसिंहं हरिं वामनं हंसं नारदं मनुम्, धन्वन्तरिं प-र्शुरामं रामं, कलया सितकृष्णकेशः, भूम्नोऽवताराः (३-१)॥ (भा० ३ स्क० अ० १५ सनकादिका वैकुण्ठं ययुः,। अ० स्क० 'वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः'। 'भा० ३ स्कं० अ० ५३-वन्दे विष्णुं कपिलं वेदगर्भम्। ८।)। 'च० स्क० अ० १-'वि-ष्णुर्यज्ञस्वरूपधृक्'। ४। ७। 'सोमोऽभूद् ब्रह्मणोंऽशेन दत्तो विष्णो-स्तु योगवित्। दुर्वासाः शंकरस्यांऽशः। ३३।'। 'ताविमौ वै भग-वतो हरेरंशाविहाऽऽगतौ। कृष्णौ यदुकुलोद्वहौ'। ५८। ७। 'अ० १३-जातो नारायणांशेन पृथुः'। २०।'। 'अयं कलयाऽवतीर्णः' अ० १५-१९,। 'आग्नीध्रीयेंऽशकलयाऽवतरिष्यामि' (ऋषभः)। १८। 'विष्णोर्विक्रमतः वामांगुष्ठात् गंगा' (अ० १७-१)। 'एवं तौ पार्षदौ विष्णोः पुत्रत्वं प्रापितौ दितेः (स० स्क० अ० १०, ३६)। 'गूढं परंब्रह्म मनुष्यलिङ्गम्' (४८) 'श्रुत्वा कृष्णं परंब्रह्म पार्थः परम-विस्मितः' (७९)। 'भा० अ० स्क० अ० ६-'पत्नी विकुण्ठा शुभ्र-स्य वैकुण्ठैः सुरसत्तमैः। तयोः स्वकलया जज्ञे वैकुण्ठो भगवान् स्वयम्। ४। वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः। रमया पार्थ्यमानेन देव्या तत्प्रियकाम्यया। ५। (भा० अ० स्क० अ० ८-'अमृताऽऽपूर्णकलशं बिभ्रद्वलयभूषितः। सः (धन्वन्तरिः) वै भग-वतः साक्षाद् विष्णोरंशांशसंभवः'। ३४।' 'विष्णुर्योषिद्रूपमद्भूतं दधार'। ४१। ७। 'अ० १२-'अवतारा मया दृष्टा रममाणस्य ते गुणैः। सोऽहं तद् द्रष्टुमिच्छामि यत्ते योषिद्वपुर्धृतम्'। १२ एव-मभ्यर्थितो विष्णुर्भगवान् शूलपाणिना। मोहिनीं दृष्ट्वा मुग्धः। ३१।'। 'अ० १३-'विष्णुर्वामनरूपधृक्'। ६। 'दत्वेमां याचमाना-य विष्णवे यत् पदत्रयम्'। १३।'। 'सर्वस्वं विष्णवे दत्वा' अ० १९-२३।'। 'भा० स्क० ९, अ० १०-अंशांऽशेन चतुर्धाऽगात्पुत्र-त्वम्, रामलक्ष्मणभरतशत्रुघ्न इतिसंज्ञया (२, ३,)। 'न० स्क० अ० १५-रामः वासुदेवांऽश हैहयानां कुलान्तकम्'। १४।'। 'दत्त ना-

रायणस्यांऽशम्' । १७ ।' । 'पराशराद्वतींगो हरेः कला' । २१ ।' । 'दत्तात्रेयाद्धरेरंशात्' । २४ ।' । 'यदोश्च, तत्रांऽशेनाऽवतीर्णस्य विष्णोर्वीर्याणि शंस नः' (भा० द० अ० १-२) 'विष्णोर्माया, आदिष्टा प्रभुणांऽशेन कार्यार्थे संभविष्यति' (२५) 'देवक्या गर्भसंभूतं विष्णुम् (६५) 'प्राग्विष्णुना हतं कालनेमिम्' (६८) सप्तमं वैष्णवं धाम यमनन्तं प्रचक्षते' गर्भो बभूव देवक्याः (अ० २-५,) । 'भगवानपि आविवेशांऽशभागेन मन आनकदुन्दुभेः' (१६) । दिष्ट्यांऽत्र ते कुक्षिगतः परः पुमानंशेन साक्षाद् भगवान्' (४१) । 'देवक्यां विष्णुआविरासीत्' (अ० ३-१०) । 'स त्वं साक्षाद् विष्णुरध्यात्मदीपः' (२४) । भवानेकः शिष्यते शेषसंज्ञः' (२५) । 'साऽम्बरेऽदृश्यताऽनुजा विष्णोः अष्टभुजा' (अ० ४-९) । 'अवतीर्णोंऽशभागेन साम्प्रतम्, कृष्णः' (३५) । 'सर्वं विष्णुमयं बभौ' (१९) । 'तावन्त एव तत्राऽब्दो क्रीडन्तो विष्णुना समम् । एवं सम्मोहयन् विष्णम्' (४२, ४४) । 'इत्यभिष्टूय भूमानम्' (४१) । 'स एव भगवान् साक्षाद् विष्णुः जातो यदुषु' (४८) । 'अवतीर्णो हि भगवानंशेन जगदीश्वरः' (अ० ३३-२७) । 'विक्रीडितं व्रजवधूभिरिदं हि विष्णोः' (४०) । 'गूढो गुहाशयः साक्षी महापुरुष ईश्वरः, अवतीर्णः' (अ० ३७-११. १३) । 'अन्वय विष्णोर्मनुजत्वमीयुषः' (१०) । 'प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती । अवतीर्णौ जगत्यर्थे स्वांऽशेन बलकेशवौ' (३२) । 'एतौ भगवतः साक्षाद्धरेर्नारायणस्य हि । अवतीर्णाविहांऽशेन वसुदेवस्य वेश्मनि' । (२३) । 'लीलामनुष्य हे विष्णो' यम आह (४४) । 'मन्ये कृष्णं च रामं च प्राप्ताविह सुरोत्तमौ । (२३) । 'युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ' (अ० ४८-१८) । 'त्वं वसुदेवगृहेऽवतीर्णः स्वांशेन' (२४) । 'सत्त्वगुणं बिभर्ति' (२३) 'देवस्य सवितुर्दुहिता कालीन्दी पतिमिच्छती । विष्णुं वरेण्यं वरदं तपः परममास्थिता' (अ० ५८-२०) । 'वासुदेवाय विष्णवे' (अ० ५९-२७) । 'चक्रं च विष्णोस्तदनुप्रविष्टम्, वाराणसीं स.ऽट्टसभालयांगणाम् । दग्ध्वा वाराणसीं सर्वां विष्णोश्चक्रं सुदर्शनम् । भूयः पार्श्वमुपातिष्ठत् कृष्णस्याऽक्लिष्टकर्मणः' (अ० ६६-४१, ४२,) । 'लोके भवान् जगदिनः कलयाऽवतीर्णः' (अ० ७०-२७) । 'बलेः, ऐश्वर्याद् भ्रंशितस्य विप्रव्याजेन विष्णुना । श्रियं जिहीर्षतेन्द्रेण विष्णवे द्विजरूपिणे' (२४, २५,) । 'य इदं कीर्तयेद् विष्णोः कर्म चैद्यवधादिकम्' (अ० ७४, ५४,) । 'येषां गृहे, स्वयमास विष्णुः' (अ० ८२,३१) 'कृष्ण कृष्ण महायोगिन् ! संकर्षण सनातन ! ।

जाने वामस्य यत्साक्षात्प्रधानपुरुषौ परौ । (अ० ८९, ३) । 'स्यादिदं भगवान् साक्षात्प्रधानपुरुषेश्वरः (४) । 'युवां न नः सुतौ, किन्तु प्रधानपुरुषेश्वरौ । अवतीर्णौ. । (१८) । 'राम रामाऽप्रमेयात्मन् । कृष्ण योगेश्वरेश्वर ! । वेदाऽहं वां विश्वसृजाम् ईश्वरावादिपूरुषौ' (२९) । 'अपाययत्स्तनं प्रीता सोहिता मायया विष्णोर्यया सृष्टिः प्रवर्तते' (५४) । 'पादावंकगतौ विष्णोः संस्पृशन् शनकैर्मुदा' (३०) मिथिलेशः । 'भूयांसं श्रद्दधुर्विष्णुम्, ऋषयो विदुः कृष्णम् । (अ० ८९, १९) 'भूमापुरुषो वदन्द–'द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीताः भुवि धर्मगुप्तये । कलाऽवतीर्णाववनेर्भराऽसुरान् हत्वेह भूयस्त्वरयेतम् [illegible]ित मे । ५९ । इत्यादिष्टौ भगवता तौ कृष्णौ परमेष्ठिना । ओमित्यानम्य भूमानमादाय द्विजदारकान् । निशम्य वैष्णवं धाम पार्थः परमविस्मितः । यत्किञ्चित् पौरुषं पुंसां मेने कृष्णाऽनुकम्पितम्' (६०, ६१, ६२, ६३) । 'ऋषभम्, वासुदेवांशम्, अवतीर्णं, ब्रह्मपारगम्' (प० स्क० अ० २, १६) । 'विष्णोरवताराः–कलयाऽवतीर्णाः–'हंसो दत्तः सनकादिः ऋषभो हयग्रीवो मत्स्यो वाराहः कच्छपो हरिर्नृसिंहो वामनः कलावताराः पर्शुरामो रामो यदुवंशे कृष्णः, कल्किः, एते विष्णुः कलयाऽवतीर्णः) (प० स्क० अ० ४) । 'वन्दे महापुरुष ! ते चरणारविन्दम्' (अ० ५–३३) । 'मया निष्पादितं ह्यत्र देवकार्यमशेषतः । यदर्थमवतीर्णोऽहमंशेन ब्रह्मणाऽर्थितः' (अ० ७–२,) । 'त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः । अवतीर्णोऽसि भगवन् स्वेच्छोपात्तपृथग्वपुः । (अ० ११–२८) । 'व्याध आह–'यस्याऽनुस्मरणं नृणामज्ञानध्वान्तनाशनम् । वदन्ति तस्य ते विष्णो ! मयाऽसाधु कृतं प्रभो । (३३) । 'य एतद् देवदेवस्य विष्णोः कर्माणि जन्म च' । 'चराचरगुरोर्विष्णोः' (द्वा० स्क० अ० २–१७) । 'कल्किः प्रादुर्भविष्यति' (१८) 'विष्णोर्भगवतो भानुः कृष्णाऽऽख्योऽसौ दिवं गतः' (२८) । 'पराशरात् सत्यवत्याम् अंशांऽशकलया विभुः । अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम्' । (४९) ॥ 'इति भागवते सर्वत्र विष्णोरंशकलात्मका अवतारा अभिहिताः । गूढं परंब्रह्म तु तत्र गूढमेवान्तःस्थितम् प्रबोध्यम् ॥

अथ विष्णुपुराणे–'नारायणः अकरोत् स्वतनूमन्याम्, मत्स्यकूर्मादिकां तद्वद् वराहं वपुरास्थितः (अ० ४–६, ८) । 'पृथ्वी प्राह–'भवतो यत्परं तत्त्वं तन्न जानाति कश्चन । अवतारेषु यद् रूपं तदर्चन्ति दिवौकसः' । १७ । अत्र परतत्त्वम् अज्ञातम् अवतारात्मकयद्रूपमपरतत्त्वं ज्ञातं भवतीतिप्रोक्तम् ॥ 'विष्णुः स्त्रीरूपसंस्थितः

(अ- ९, १०९) । 'वामने पद्मा, भार्गवे धरणिः, राघवत्वे सीता, रुक्मिणी कृष्णजन्मनि' । अन्येषु चाऽवतारेषु विष्णोरेवाऽनपायिनी । देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी । विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुम्' । (१४२, १४३, १४४, १४५) ।' । 'ध्रुवो विष्णुं ध्यातं ददर्श' । अ० १२, ३० ।) 'पृथुः, यज्ञेन यज्ञपुरुषो विष्णुः सम्प्रीणितो नृप । तस्यांऽशस्ते भविष्यति । (अ० १३-१७, १८ ।) । 'प्रह्लाद ! सर्वमेतत्ते मत्प्रसादाद् भविष्यति । इत्युक्त्वाऽन्तर्दधे विष्णुः' (। २९ ।) 'पितर्युपरति गते नरसिंहस्वरूपिणा, विष्णुना, । (३२) । 'एकेनांशेन ब्रह्माऽसौ भवत्यव्यक्तमूर्तिमान् । (अ० २२-२४) । एकांऽशेनाऽऽस्थितो विष्णुः करोति परिपालनम् । २६ । रुद्रस्वरूपो भगवान् एकांशेन भवत्यजः । २८ । विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज । स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः । ३२ । 'भद्राश्वे भगवान् विष्णुरास्ते हयशिरा द्विज । वराहः केतुमाले तु भारते कूर्मरूपधृक् । मत्स्यरूपश्च गोविन्दः कुरुष्वास्ते जनार्दनः । वि० पु० द्वि० अं० अ० २, ५०, ५१) । 'पातालानामधश्चास्ते विष्णोर्या तामसी तनुः । शेषाख्या यद्गुणान् वक्तुं न शक्ता दैत्यदानवाः । १३ । 'ऊर्ध्वोत्तरम् ऋषिभ्यस्तु ध्रुवो यत्र व्यवस्थितः । एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भासुरम् (वि० अं० २, अ० ८, १००,) 'विष्णुः (सूर्यः) विष्णोः पृथक्' (१८) । 'कपिलो विष्णोरंश उर्वीमागतः' (अ० १४-९) । 'अंशेन तस्या जज्ञेऽसौ यज्ञः' । (अं० ३, अ० १-३६) । 'वामनः कश्यपाद् विष्णुरदित्यां सम्बभूव ह' (४२) । 'चतुर्युगेऽप्ययं विष्णुः, युगव्यवस्थां कुरुते' (५४) । 'सत्ये कपिलः, त्रेतायां राजा, द्वापरे व्यासः, कलौ कल्किः, (। ५८ ।) । 'द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने । अं० ३, अ० ३-५,) । 'प्रथमे ब्रह्मा व्यासः, द्वितीये प्रजापतिः, तृतीये शुक्राचार्यः, चतुर्थे बृहस्पतिः, पञ्चमे सूर्यः, षष्ठे मृत्युः, सप्तमे इन्द्रः, अष्टमे वसिष्ठः, नवमे सारस्वतः, दशमे त्रिधामा, एकादशे त्रिशिखः, द्वादशे भरद्वाजः, त्रयोदशेऽन्तरीक्षः, चतुर्दशे वर्णी, पञ्चदशे त्रय्यारुणी, षोडशे धनञ्जयः, सप्तदशे क्रतुञ्जयः, अष्टादशे जयः, नवदशे भारद्वाजः, विंशे गौतमः, एकविंशे हर्यात्मा, द्वाविंशे वाजश्रवाः, त्रयोविंशे तृणबिन्दुः, चतुर्विंशे वाल्मीकिः, पञ्चविंशे शक्तिः, षड्विंशे पराशरः, सप्तविंशे जातुकर्णः, अष्टाविंशे मत्पुत्रः कृष्णद्वैपायनः, नवविंशेऽश्वत्थामा भविता व्यासः ॥ (वि० तृ० अं० ३ अ० श्लोकाः १२…२१) । 'ब्रह्मणो विष्णोर्मुर्तं रूपं ब्रह्माऽभूतो ब्रह्मा प्रागबभूव' (च० अं० अ० १, ५) । 'स सर्वभूतप्र-

भवो धरित्र्यां स्वांऽशेन विष्णुर्नृत्यतेऽवतीर्णः । सा द्वारका सम्प्रति तत्र चाऽऽस्ते स केशवांऽशो बलदेव नामा' (अ० अ० अ० १, ९०, ९१) । 'पुरञ्जयशरीरेऽहमंशेनाऽवतीर्य' (अ० २-२६) । 'भगवतोंऽशभूतं कपिलम्' (अ० ४-१२,) । 'अब्जनाभ आत्मांऽशेन रामलक्ष्मणभरतशत्रुघ्नरूपेण चतुर्धा पुत्रत्वमायासीन्' (८७) । 'परशुरामसंज्ञं नारायणस्यांऽशम्' । (अं० ४, अ० ७-३६) । 'अंशेन विष्णुर्यदुवंशेऽवाततार' (अ० ११, २) । 'यत्राऽवतीर्णं कृष्णाख्यं परंब्रह्म निराकृति' । (४) । 'भगवदंशम् दत्तात्रेयमाराध्य बाहुसहस्रं लेभे' (१२) । 'यश्च सहस्रार्जुनो नारायणांशेन परशुरामेणोपसंहृतः' । २० ।' । 'द्वारकाजनाः अंशेन मानुषरूपधारिणं प्रणिपत्याहुः' । २० ।' 'जाम्बवानाह-रामेणेव नारायणस्यांऽशेन भवता कृष्णेन भवितव्यम्' । ५३ । 'वसुदेवगृहे भगवदंशावतारं पश्यद्भिर्देवैर्दुन्दुभयो वादिताः' । अ० १४-२८, । 'शिशुपालो अवतीर्णांशस्योपरि द्वेषं चाति चकार' । ५१ । 'शिशुपालो हिरण्यकशिपुत्वे रावणत्वे च विष्णुना हतः' (अं० ४, अ० ५-१) । 'हिरण्यकशिपोर्विष्णुरयमिति नृसिंहरूपं मनसि नाऽभूत्' (४, ५,) । 'विष्णुस्तेषां प्रमाणत्वे प्रभुत्वे च व्यवस्थितः । निदेशस्थायिनस्तस्य ववृधुः सर्वयादवाः' । (अ० १५-४९,) । 'वासुदेवस्यांऽशः कल्किः' (९८) । 'यदैव भगवान् विष्णोरंशो यातो दिवं द्विज । वसुदेवकुलोद्भूतस्तदैवाऽत्राऽऽगतः कलिः (१०८) । गते सनातनस्यांऽशे विष्णोस्तत्र भुवो दिवम् । तत्याज सानुजो राज्यं धर्मपुत्रो युधिष्ठिरः' । ११० । 'अंशाऽवतारो ब्रह्मर्षे योऽयं यदुकुलोद्भवः । विष्णोः । अशांशेनाऽवतीर्योर्व्यां तत्र' (वि० अं० ५, अ० १, २, ३) वि ष्णोरंशांऽशसंभूतिचरितं जगतो हितम्' (४) । 'कालनेमिहतो योऽसौ विष्णुना' । २२ । 'एवं संस्तूयमानस्तु भगवान्परमेश्वरः । उज्जहाराऽऽत्मनः केशौ सितकृष्णौ महामुने । ५९ । उवाच च सुरानेतौ मत्केशौ वसुधातले । अवतीर्य भुवो भारक्लेशहानिं करिष्यतः । ६० । वसुदेवस्य या पत्नी देवकी देवतोपमा । तत्राऽयमष्टमो गर्भो मत्केशो भविता सुराः ! । ६३ । हतेषु तेषु कंसेन शेषाऽऽख्योंऽशस्ततो मम' अंशांऽशेनोदरे तस्यास्सप्तमः स भविष्यति । ७२ । सत्वांशेनाऽवतीर्योर्व्यां धर्मस्य कुरुते स्थितिम् । ३२ । 'विष्णोरंशे भुवं याते ऋतवश्च।बभुः शुभाः (अं० ५, अ० २, ४) । 'बिभ्राणां (देवकीं) वपुष विष्णुम्' । ६ । 'स विष्णुर्गर्भगस्तव' (१९) । 'वसुदेवो वहन् विष्णुं जानुमात्रवहां ययौ (अ० ३, १८) । 'वसुदेवसुतौ तत्र विष्णोरंशसमुद्भवौ' (अ० १५, १४) । योऽहमं-

शावतीर्णस्य सुखं द्रक्ष्यामि चक्रिणः, विष्णोरंशस्याप्यहं सुखम्' (अ० ५, अ० १७. २, ३,) । 'भगवद्वासुदेवांऽशो द्विधा योऽयं व्यवस्थितः। तदेतत्परमं धाम तदेतत्परमं पदम् । २६ । 'अंशावतारं पुरुषोत्तमस्य ह्यनादिमध्यान्तमजस्य विष्णोः' । ३३ । 'फणासहस्रमालाढ्यं बलभद्रं ददर्श सः' । ३६ । 'विष्णोरखिलजन्मनः, अवतीर्णो महीमंशः' । ५० । 'पाहि विश्वांशावतारकरणैर्न ममाऽसि पुत्रः' (अ० २०/१०३) 'तत्तु सन्निधिमाहात्म्यं विष्णोरंशस्य चक्रिणः। न तद्बलं यादवानां विजितं यदनेकशः' (अ० ५, अ० २३, १३) । 'भवान् विष्णोरंशः, पुरा गार्ग्येण कथितम्, हरेरंशम यदुवंशे भविष्यति' । अ० २३, २६, २७) । 'भगवानिमम् अंशेन लोकमायातः' (अ० २९, २५) । 'उत्सृज्य द्वारकां कृष्णस्त्यक्त्वा मानुष्यमात्मनः। सांऽशो विष्णुमयं स्थानं, प्रविवेश मुने निजम्' । (अ० ३८, ४) । 'देवैश्च प्रहितो वायुः प्रणिपत्याह केशवम् । दूतोऽहम्, सन्देशं कथयामि, भवतोऽवतीर्णस्य समाधिकशताब्दानि जातानि, अतः स्वर्गं प्रयाहीति, भगवानाह-यादवभार समुत्तार्य द्वारकां सागराय दत्त्वा स्वर्गम् आयामि' अ० ३७-१६…२७) । 'इत्येवं विष्णुपुराणे सर्वत्रांऽशरूपेणाऽवतरणमभिहितम् ।

वामनपुराणे-विष्णुमूर्तेः सत्त्वाधिष्ठितस्य नरनारायणस्य स्थानं हिमालये (अ० २, ३,-४३,) । 'हरिं कृष्णं च देवर्षे नरनारायणौ तथा। योगाभ्यासरतौ नित्यं हरिकृष्णौ बभूवतुः । २ । नरनारायणौ चैव जगतो हितकाम्यया ।। प्रह्लादं प्राह-विष्णुः, गच्छ जेष्यसि भक्त्या तं न युद्धेन कदाचन' । अ० ८, ३८ । 'त्वं देवः पुण्डरीकाक्षस्त्वं विष्णुः शार्ङ्गचापभृत् । ४९ । या या जायेत मे बुद्धिः सा सा विष्णो त्वदाश्रिता' । ६१ । 'कथं देवाधिदेवोऽसौ विष्णुर्वामनतां गतः (अ० २४, १) । 'अदित्याः सुतः विष्णुः स्वयमेवाऽस्तु' (अ० २७-४, ७) । 'पतिः सुराणां यस्तस्मै नमः कृष्णाय वेधसे' (७४) । 'तं यज्ञपुरुषं विष्णुं नमामि प्रभुमीश्वरम्' (२८) । येनैकदंष्ट्रेण समुद्धृतेयं धरा, तमीड्यमीशं प्रणतोऽस्मि विष्णुम्, अंशावतीर्णेन, स षोडशांशेन' (अ० २९-२५, २६, २७) । 'एकैकांऽशकलाजन्म' । (३७) । 'अजायत स गोविन्दो भगवान् वामनाकृतिः' (अ० ३०, १३) । 'अवतीर्णो हरिर्वामनेनेह रूपेण' । (अ० ३१-४) । 'देवदेवपतिः साक्षाद्विष्णुर्वामनरूपधृक्' (४३) । 'अथ दैत्येश्वरं प्राह विष्णुः सर्वेश्वरेश्वरः' (७२) । 'इत्येवं कथितं विष्णोर्माहात्म्यम्' (अ० ३६-९३) । 'वेदव्यासेन मुनिना आराध्य परमेश्वरम् । सर्वज्ञत्वं ब्रह्मज्ञानं प्राप्तं देवप्रसादतः' । (अ० ४६-४२) 'विष्णुः सिंहवपुर्धरः' (अ० ७२-६) । 'प्रीतिमान-

भवद् विष्णुः शंखचक्रगदाधरः। गजोऽपि विष्णुना स्पृष्टो जातो दिव्यवपुः पुमान्' (अ० ८५-६१, ६६,)। 'तं यज्ञपुरुषं विष्णुम्' (८३)। 'मे विष्णोः मत्स्यरूपं मानसे ह्लदे, कौर्ममब्धौ, हयशीर्षं कृष्णायाम्, गोविन्दम् हस्तिनापुरे, त्रिविक्रमं कालिन्द्याम्, लिङ्गभेदे भवम्, बदर्यां नारायणम्, वाराहे गरुडध्वजम्, कृतशौचे नृसिंहम्, गोकर्णे विश्वधारणम्, विशाखयूपेऽजितम्, हंसपदे हंसम्, महोदधे हयग्रीवम्, प्रयागे योगशायिनम्, (अ० ९०-१⋯१४)। 'ददौ विष्णोः क्रमत्रयम्' (अ० ९२, १६)। 'चक्रधरेण विष्णुना बद्धो वलिर्वामनरूपधारिणा'। (अ० ९२-६४)।

महाभारतम्-'विष्णोः कंसवधस्तथा' (पर्व-१, क० २, ८२)। 'ब्रह्माऽऽह विष्णो देवानां बलमाविधत्स्व समुद्रमथने' (आ० प० अ० १८-३१) 'ततो नारायणो मायां मोहिनीं समुपाश्रितः' (४५) 'विष्णुः वसुदेवाद् देवक्यां प्रादुर्भूतः' (आ० ५० अ० ६३, ९९)। 'नारायणममित्रघ्नं वैकुण्ठमुपचक्रमुः। अंशेनाऽवतरेत्येवं तथेत्याह च तान् हरिः' (संभवपर्व अ० ६४, ५१, ५४)। 'स चापि केशौ हरिरुद्बबर्ह शुक्लमेकमपरं चापि कृष्णम्'। तौ चापि केशौ निवेशतां यदूनां कुल स्त्रियौ देवकीं रोहिणीं च। तयोरेको बलदेवो बभूव योऽसौ श्वेतस्तस्य देवस्य केशः। कृष्णो द्वितीयः केशवः सम्बभूव केशो योऽसौ वर्णतः कृष्ण उक्तः। भारते-आ० वैं० प० अ० १९७, ३१⋯३३)। 'संभूतौ तौ विदित्वा तु नरनारायणावृषी। कृष्णपार्थौ पूर्वदेवौ'। (खाण्डवदाहपर्व-अ० २२४, ५⋯१२)। 'वासुदेवाऽर्जुनावेतौ, नरनारायणौ, पूर्वदेवौ दिवि श्रुतौ' (अ० २२८, १८)। 'सस्मार कथाम् अंशाऽवतरणे ब्रह्मणो भवनेऽभवत्' (सभाप० अ० ३६, १२)। 'एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः। नागपर्यंकमुत्सृज्येहाऽऽगतो मथुरां पुरीम्। तं वदन्ति महात्मानः कृष्णं धर्मसनातनम्' (भगवद्गीतागोपालानन्दस्वामिकृतभाष्ये अ० १० श्लोक-१३-१, २,)। 'त्वं विष्णुरिति विख्याते इन्द्रादवरजो विभुः' (वनप० अ० १२,-२५)। 'विष्णुस्त्वमसि' द्रौपदी प्राह-(५१)। 'महादेव आह-'नरस्त्वं पूर्वदेहे वै नारायणसहायवान्। बदर्यां तप्तवान्, त्वयि वा परमं तेजो विष्णौ वा पुरुषोत्तमे' (अ० ४०-१, २)। 'लब्धवी वसुमती चापि कर्तव्या विष्णुना सह' (२५)। 'नरनारायणौ यौ तौ हृषीकेशधनञ्जयौ। कार्यार्थमवतीर्णौ'। (अ० ४७-१०, ११)। 'तत्र विष्णुः, लोके कृष्ण भविष्यसि (वनप० अ० ८४, १९, २०)। 'विष्णुः स्वेन शरीरेण रावणस्य वधाय वै। पर्यामस्तमयोध्यायां जात दाशरथि ततः' (अ० ९९,-

४१) । 'देवा वैकुण्ठं गत्वाऽऽहुः–वाराहं रूपमाश्रित्य जगती वै समुद्धृता । नारसिंहं वपुः कृत्वा हिरण्यकशिपुर्हतः । वामनं वपुराश्रित्य त्रैलोक्याद् भ्रंशितो बलिः । (अ० १०३–१९....२३) । भासस्तवोग्राः प्रतपन्ति विष्णो' (भ० गी० अ० ११–३०) । 'हनुमान् भीममाह– 'ममापि सफलं चक्षुः स्मारितश्चास्मि राघवम् । रामाभिधानं विष्णुम्' (वनप० अ० १५१–६, ७) । श्वेतः कृतयुगे वर्णः पीतस्त्रेतायुगे मतः । रक्तो द्वापरमासाद्य कृष्णः कलियुगे तथा । (अ० १८९–३२) । 'कपिलं परमर्षि च यं प्राहुर्यतयः सदा । अग्निः स कपिलो नाम सांख्ययोगप्रवर्तकः' (अ० २२१, २१) । 'ददौ शक्राय च महीं विष्णुर्देवः स वामनः । स एव भगवान् विष्णुः कृष्णेति परिकीर्त्यते' (वनप० अ० २७३,–६९, ७२) । तदर्थम् अवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः । विष्णुः (रामः) (अ० २७६, ५) । 'मतो हि मे शक्रसमो घनञ्जयः सनातनो वृष्णिवीरश्च विष्णुः' (उद्यो० प० अ० २२–३३) । 'तमसह्यं विष्णुमनन्तवीर्यमाशंसते धार्तराष्ट्रो विजेतुम्' (अ० ४८, ८८) । 'नरनारायणावेतौ' 'नरनारायणौ वरम्' 'वासुदेवार्जुनौ पूर्वदेवौ' 'नारायणो नरश्चैव सत्त्वमेकं द्विधा कृतम्' (अ० ४९–८....२०) । 'कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः । विष्णुस्तद्भावयोगाच्च कृष्णो भवति सात्वतः' (अ० ७०, ५) । नरो नारायणश्चैव तावेवाऽर्जुनकेशवौ' (अ० ९६–१४, ४९) । 'विष्णुं कृष्णम्' गालवः प्राह' (अ० १०७–१४) । 'नरो नारायणश्चैव, देवा वैकुण्ठमित्याहुर्नरा विष्णुमिति प्रभुम् (भीष्मप० अ० ८–२१, २२) । 'मोहादेतौ न जानन्ति नरनारायणावृषी' (अ० २३–२६) । 'धृतिं न विन्दामि शमं च विष्णो !' (अ० ३५–२४,) । 'यदर्थं नृषु संभूतौ नरनारायणावृषी । (अ० ६८–१५) । 'न वेद कृष्णं दाशार्हमर्जुनं चैव पाण्डवम् । पूर्वदेवौ महात्मानौ नरनारायणावुभौ । (द्रोणपर्व–अ० ११, ४१) । 'केशवाऽर्जुनौ । नरनारायणाविमौ (क० प० अ० १६, १९, २०) 'विष्णोर्जिष्णोर्वसुदेवात्मजस्य' (क० प० अ० ७९, ६६) 'यस्य चक्रे स्वयं विष्णुः सारथ्यं जगतः प्रभुः' (क० प० अ० ७७, ७४) । 'केशवाऽर्जुनौ नरनारायणौ देवौ कथितौ नारदेन मे' (क० प० अ० ९६, २७, २८) । 'विष्णुर्लोकनमस्कृतः पृथिवीं प्राह' (स्त्रीपर्व० अ० ८, २५) । 'नमस्ते भगवन् विष्णो' (शा० प० अ० ४७, ८६) । 'तपसा भगवान् विष्णुराविवेश च भूमिपम् (पृथुम्) (शा० प० अ० ५९, १२८) । 'स एव भगवान् विष्णुरनन्त इतिविश्रुतः । अहंकारस्य यः स्रष्टा' (अ० १८२, २०, २१) । 'तेषां विष्णुर्मनोऽभूत्' (अ० २०७, २६) । 'ततो

विष्णुर्महातेजा वाराहरूपमास्थितः' (अ० २०९, १६)। 'विष्णुन्, तदिदं ब्रह्म वार्ष्णेयम्, विष्णोरमिततेजसः, वार्ष्णेयं शृणु' (अ० २१०, १०....१३)। 'प्राप्य श्वेतं महाद्वीपं नारदः, तुष्टाव, कपिलं, वाराहं च' (अ० ३३८-१, ६८, ७७)। 'नारसिंहं वपुः, अदित्यां द्वादशादित्यः, त्रेतायां रामो भृगुकुलोद्वहः, दाशरथी रामः, कंसहेतोर्मथुरायां प्रादुर्भावो भविष्यति। चतुर्मूर्तिधरः सनकादिः, हंसः कूर्मो मत्स्यो वाराहो नरसिंहो वामनो रामो रामो दाशरथिः सात्वतः कल्किः, अवतरामि' (शा० प० अ० ३३८-७८....१०४)। 'प्रविष्टौ मानुषीं तनुं नरनारायणौ' (अ० ३४१-३७, ३८)। 'नरो नारायणश्चैव जातौ धर्मकुलोद्वहौ' (अ० ३४२, २७)। 'गोविन्द उज्जहाराऽऽशु वाराहरूपमास्थितः' (अ० ३४५-१२)। 'नारायणस्यांऽशजमेकपुत्रं द्वैपायनम्' (अ० ३४९, ४)। 'एष विष्णुः, (अनुशा० प० अ० १४-९) 'सप्तमोऽहं भविष्यामीति'शिवः प्राह-शिवः कृष्णः' (अ० १७)। 'विष्णुराह-चक्रेण निहता दैत्याः, पद्भ्यां क्रान्ता वसुन्धरा। वाराहरूपमास्थाय हिरण्याक्षो निपातितः। वामनं रूपमास्थाय जितो राजा मया बलिः' (अनुशा० प० अ० १२६, ११, १२)। 'जामदग्न्यश्च विप्राय भूमिं दत्वा महायशाः। रामोऽक्षयाँस्तथा लोकान् जगाम मनसोऽधिकान्। रामो दाशरथिश्चापि हुत्वा यज्ञेषु वै वसु। स गतो ह्यक्षयान् लोकान्' (अ० १३७,-१२....१४)। 'हरस्याऽग्रजो हली बल इति ख्यातो भविष्यति धराधरः। अनन्तश्च। स एव विष्णुः सोऽनन्तो मतः' (अनुशा० प० अ० १४७-५४....६०)। 'विष्णुस्त्रिविक्रमः' (अ० १४८, २३)। 'विष्णुन, कृष्णः' (अ० १४९-६, २०)। 'चतुर्व्यूहो वामनो हंसो नारायणो नरो विष्णुः रामः कपिलः कृष्णो व्यासः' (२०)। 'विष्णुमेनं प्रतीहि' (अ० १५८, ३८)। 'नरनारायणावेतौ संभूतौ मनुजेष्विति' (अ० १६७, ४४) 'तद् दृष्ट्वा परमं रूपं विष्णोर्वैष्णवमद्भुतम्' (आश्वमे० प० अ० ५५,-६)। 'श्रुत्वैव हि गतं विष्णुम् नतापि मुमुहुर्विशः' (मौस० प० अ० ८, २४)। श्रीकृष्णान्तर्धानेऽर्जुनो मुमोह'। 'यः स नारायणो नाम देवदेवः सनातनः। तस्यांऽशो वासुदेवस्तु कर्मणोऽन्ते विवेश ह' (स्वर्गा० प० अ० ५,-२४)।

इत्येवं मुख्यभारतभागवतपुराणविष्णुपुराणगर्गसंहितादिषु सर्वत्र विष्णुनाम्ना वैकुण्ठस्थेन नरनारायणेन चाऽवतारा धृता इति वर्णनात्, कलांऽशादितया वर्णनात् अवतारा अवतारी चेति ज्ञातव्ये सन्देह एव नोपतिष्ठते, वैकुण्ठादौ विभूतिरूपमत्वे को विरोधः?, अक्षरधाम्नो वैकुण्ठादेरवयं, अक्षरधाम्नि अचेतनविभूतिविषये देहदेहिभावे चेतनाऽ-

ऽसंतमूर्तौ परब्रह्मणोऽपि विभूतिदेहत्वे तत्र नारीदेहत्वे च श्रीस्वामिनारायणपरमात्मनोऽनभिप्रेतत्वेन तदनङ्गीकारात् ।

'कारणं तु ध्येयः' 'ध्येयो नारायणः सदा' इत्यत्रापि सच्चिदानन्दस्वरूपमूर्तिपरब्रह्मात्मककारणस्य ध्येयत्वेनोक्तत्वात्, विशिष्टस्य ध्येयत्वेनाऽवतारावतारिध्येयत्वस्यैव विशेषतया प्रतिपादनात्, श्रीस्वामिनारायणपरमात्मनैव गोलोकवैकुण्ठश्वेतद्वीपब्रह्ममहोलादिधाम्नां पृथक्निर्दिष्टत्वेन शास्त्रपुराणेष्वपि पृथङ्निर्देशेन रचनाया अपि कथितत्वेन भिन्नतायाः सिद्धत्वादेव धामान्तराऽवतारान्तराऽपह्नवाऽशक्यत्वात्, वाराहमत्स्यकच्छपनृसिंहाद्युपासकानां वैकुण्ठादौ वराहादिरूपाऽप्रापणेऽपि तन्मूलरूपस्य चतुर्भुजविष्णोः अनात्मदिव्यविभूतिमूर्त्यात्मकस्य प्राप्त्यभिप्रायकवचनामृतस्य ब्रह्मलोकस्थसच्चिदानन्दस्वरूपमूर्तिकैकतत्त्वात्मकपरब्रह्मश्रीस्वामिनारायणपरमात्मप्राप्त्यभावस्यैवाऽभिप्रायात् तत्प्राप्तिकल्पनपरायणकथनं सर्वथाऽसम्भव्येव, देहत्यागवार्ता तु गृहीतदेहत्यागो मूलरूपदेहस्य तु वैकुण्ठे स्थितत्वादेव विष्णोर्विभूतिदेहनित्यत्वोपचारादिना कथनात्, ब्रह्मवैवर्ते महासृष्ट्यग्रे तत्देहधारणतायां गोलोकादिनिर्मितेश्च कथनात्, ब्रह्मलोके परब्रह्मणि ब्रह्मधाम्नो मुक्तानां च तद्गन्धस्याऽप्यभावात्, तत्रत्यैक्यप्रतिपादनपरानुधावनमनुचितावधावनमेवेति बोध्यम् । अवतारधर्तृत्वं विभिन्नधामस्थविभिन्नरूपाणां तत्तद्ब्रह्माण्डाद्यधिकृतविष्ण्वादीनां प्रागुक्तप्रमाणेषु व्यासेनैव निर्दिष्टत्वात् । येषां भावाः श्रीस्वामिनारायणपरमात्मना श्रीकृष्णपरमात्मना दर्शितास्तत्तद्भावाश्रिता मूर्तयस्तु तद्भावद्वयेनैव सिद्धा एव, प्राक्सिद्धानामेव भावानां तदुत्तरकालीनानां ग्रहणात्, तत्तन्मूर्तिनामानन्त्यं प्रकटीकृतमेव, किञ्च यदि स एव सर्वभावानामाधार एक एव परमात्माऽवतारी सर्वावतारपिण्डरूपः प्रतिपाद्यते तदा 'वैकुण्ठनाथस्य भावः शेषशायिनो भावो भूमपुरुषस्य भाव इत्यादौ भावाश्रितानां पिण्डान्तरास्तित्वविलोपप्रसंगात्, धामान्तराणामप्यनावश्यकतापातात्, चतुर्भुजाऽष्टभुजसहस्रभुजादिमूर्तीनामप्यनावश्यकतापातात्, द्विभुजमूर्तेरेकस्या एवैकस्वरूपाया वर्णनावश्यकत्वात्, यद्युच्येत तत्तन्मूर्तिकावतारेष्वन्तःप्रविष्टपरब्रह्मण एव निरूपणं समालम्ब्यते तर्हि भवतु नाम परब्रह्मणो निरूपणं तथा किन्तु सच्चिदानन्दमूर्तिकस्यैव परब्रह्मणो निरूपणं भगवदभिप्रेतं, न तु दिव्यविभूतिविग्रहकस्याऽमूर्तस्याऽऽनन्दस्य तस्येति, परब्रह्मश्रीहरेरपि निराकारनिर्गुणाऽमूर्तकखण्डने एव तात्पर्यात्, शरीरि–विग्रहोभयत्वे त्वतात्पर्यात्, अवतारिणोऽवतरणस्य निम्नगतिकतया निम्नगतिकात्मनामीश्वराणां मुक्तानां च तथाविधानां स्वस्वेतगुणाविकारकलाऽर्पणादिभिरुत्कृष्ट-

सम्पादकतया स्वस्य निम्लतानन्दस्याऽन्यप्रसंगेनाऽवताराणां सृष्टिसंचालकत्वं स्वस्यावतारिणस्तु नियामकत्वमेवेतिव्यवस्थायाः सर्वत्र श्रुत्यादिषु वर्णितत्वेन स्वरूपसदानन्दमूर्तिपरमात्मनः अनात्मविभूतिविग्रहवत्त्वे सत्यवतारात्मकत्वमित्यस्य सर्वथाऽसामञ्जस्य तु, 'अवताराऽवतारिभेदो नास्ती'त्यादिवचनानामपि अवतारण एव स्वरूपसदानन्दमूर्तेर्व्यापकपरमपुरुषस्य दर्शनविषयत्वेन तस्य स्वयंस्वरूपस्य संकुचितभावेनाऽवस्थितस्याऽवतारतया वर्णनस्यैवाऽस्थानघटितत्वात् तत्र तत्र विभूतिविग्रहवत्त्वे अनात्मविभूतिविग्रहवत्त्वस्या ऽवतारिणि कल्पनायाः सच्चिदानन्दमूर्तिस्वयमवतारिणि वा अनात्मविग्रहवत्त्वेन मूलरूपकल्पनाया एव विकल्पवृत्त्यात्मकत्वेनाऽप्रमाणतया पतञ्जलिनैवोक्तत्वेन तत्पतञ्जलिः स्वयं कथमेतादृशविकल्पवृत्तिं प्रमाणीकुर्यादिति ।

यद्यवताराः परमेश्वरस्य शुद्धशरीरात्मका एवेति चेत् तेषां स्वरूपसन्मूर्तिकदिव्यदर्शनसेवादिसामञ्जस्ये अनात्माऽचेतनविभूतिविग्रहात्मकशुद्धशरीरात्मकमूर्तिकल्पनाऽनौचित्यात् ।

अथ पुरुषोत्तमः स्वयं समायाति, स्वावताराः चैतन्यप्रकाशानन्दमूर्तयः समायान्ति, स्वमुक्तास्तथास्वरूपा एव समायान्ति, तदैश्वर्यगुणविभूषावेषचिन्हशय्याद्योऽपि तथाविधा एव सुमूर्ताः समायान्ति स्वरूपसन्त एव समायान्ति दृश्यन्ते च, केषाञ्चिदपि नात्र वैमत्यम्, यानि तु शास्त्राणि अनात्मजडविभूतिविग्रहवत्तया परब्रह्मणो ब्रह्मणो मुक्तानां च साकारत्वं प्रदर्शयन्ति तानि शास्त्राणि न श्रीस्वामिनारायणरुचिपराणि विभूतिशब्दादेः स्वरूपसत्सच्चिदानन्दचेतनसुमूर्तिसाकारपरत्वे तु श्रीस्वामिनारायणसम्प्रदायशास्त्राणीति बोध्यम्, एतादृशानां स्वसम्प्रदायशास्त्ररचनार्थं श्रीहरिणा मुक्तानन्दादिसत्पुरुषानुद्दिश्याऽऽज्ञाकरणात् पुष्टिकरणतायास्तेषामेव कथनात्, प्राचीनानां पुष्टिकरणताया अकथनात् । श्रीहर्यभिप्रेतसारग्रहणताया एव कथनात् स्वस्मै मिलितं यत् स्वरूपं तेन सहाऽन्यस्वरूपाणां साम्यभावे तु 'मध्यस्य नवमे वचनामृते—अतः स्वस्य साक्षान्मिलितं यद् भगवत्स्वरूपं तत् सदा साकारदिव्यमूर्ति सर्वावतारकारणम् अवतारि विज्ञेयम्, एवं चेन्न विद्यात्, प्रत्युत निराकारं विद्यात् तथाऽन्याऽवतारसमं विद्यात्, तर्हि तस्य द्रोहः कृतो भवेत्' इत्यनेन अरुचेः श्रीमुखेनोक्तत्वात्, साकारस्य शुकदेवस्य सर्वत्र व्यापने समर्थस्य दृष्टान्तेन स्वरूपसत्साकारस्य परमेश्वरस्य विभूतिविग्रहं विनापि सर्वत्राऽवतारादिस्वरूपव्यापकत्वादिसामर्थ्यस्य दृढीकरणत्वात् । अथ लोयाप्रकरणस्यैकादशे वचनामृते प्रोक्तं या भगवन्मूर्तिः स्वस्य मिलिता तस्या एव ध्यानं कर्तव्यम् ये च जाता पूर्वं भगवद-

वतारास्तेषां मूर्तीनां ध्यानं न कर्तव्यम्, या स्वस्य भगवन्मूर्तिर्मिलिता तस्यामेव पतिव्रताया इव प्रतिज्ञा रक्षणीया, यथा पार्वत्या आभिहितम् कोटिजन्मानि यावत् प्रतिज्ञा सामकी, वरये शंभुं वा वर्ते कुमारी' एतादृशी प्रतिज्ञा, साऽपि भगवद्रूपेऽन्यजीवरूपे चोभयस्मिन्नविवेकिदेहिनः समभावो जायते तन्निवृत्त्यर्थं कथिता, ततः स्वस्य मिलिता या मूर्तिस्तां परिहाय तस्या एव पूर्वे परोक्षा अवतारा जातास्तेषां चेद् ध्यानं कुर्यात् तर्हि तं भगवन्तं विनाऽन्ये ये देवमानवाद्याकारास्तेषामपि ध्यानं कुर्यादित्यापद्येत, तन्निवृत्त्यर्थं पतिव्रताया इव प्रतिज्ञा कथिता, इत्येवं स्वेष्टदेवस्यैवोपास्यतया प्रतिपादनात्। किञ्च लोहस्य त्रयोदशे–देहे वर्तन्तो येऽन्ये जीवा अथ ब्रह्मादयोऽपि शिवादयोऽपि सरस्वतीं मोहिनीं च दृष्ट्वा मोहं प्राप्य पराभवं गताः, अतो नारायणं विना तु पराकाष्ठापन्ना महान्तोऽपि नारायणचरणयोरनिमग्नाश्चेत् पराभवं प्राप्नुयुः, इति चेत्!, तर्हि ब्रह्माऽक्षरधाम्नि मुक्तानां विभूतिदेहे वर्तमानानां भगवन्मोहिनीस्तत्रत्या मुक्तानिका दृष्टवा मोह आपद्येत तस्माद् धाम्न्यक्षरे विभूतिशरीरमेव नास्तीति, एवंविधोऽचलसिद्धान्तः स्वान्तःस्थः श्रीहरिणा कथितः। किञ्च मुक्तानां ब्रह्मलोकस्थानां परमेश्वरस्याऽग्रे चन्द्रस्याऽग्रे ताराणामिव राज्ञोऽग्रे भृत्यानामिव भेदोऽस्ति, तं (श्रीहरिं) परनारायणं समाश्रित्य तु यस्मिन् कस्मिन्नपि महत्ता प्रतिपाद्यते तस्मिँस्तस्मिन् संभवेदेव, एतादृशं नारायणं समाश्रित्य तु ब्रह्मणः शिवस्य नारदस्य सनकादिकानां च भगवत्त्वं कथ्यते उद्धवस्यापि तं नारायणमवलम्ब्य भगवत्त्वं कथ्येत, अधुना मुक्तानन्दस्वामिप्रभृतिसाधूनामपि एनं नारायणमवलम्ब्य भगवत्तुल्यता कथ्येत, एनं नारायणं परित्यज्य तु अक्षरस्यापि भगवत्त्वं न कथितं भवेत् तदाऽन्येषां का कथा, तस्मात् तन्नारायणसमस्तु स नारायण एक एव नान्य इति सर्वशास्त्रसिद्धान्तः। लोहग्रामस्य चतुर्दशे वचनामृते श्रीस्वामिनारायणभगवता श्रीरामानुजाश्रितस्य समज्ञप्तिर्लिखिता तद्यथा–'रामानुजस्य एवंविधं मतं वर्तते यत् 'जीवा माया पुरुषोत्तमश्च त्रयोऽप्यमी नित्याः, तत्र पुरुषोत्तमस्तु जीवमायानियन्ताऽस्ति, सर्वकारणमस्ति, स्वस्याऽक्षरधाम्नि सदा दिव्याकारः सन् विराजमानोऽस्ति, ये च सर्वेऽवतारास्ते तस्यैव सन्ति, एवंविधस्य पुरुषोत्तमनारायणस्योपासना जीवैः कर्तव्या, एवंविधा रामानुजस्य समज्ञप्तिर्ज्ञायते'। इत्यत्र स्वरूपसत एव सच्चिदानन्दपरमात्मनो दिव्याकारोऽभिहितः, न तु दिव्यविभूतिविग्रहाकारो लिखितः, अथ ऋषभदेवभगवतो वासुदेवेन सह एकात्मका प्राप्तिः कथिता, किञ्च भगवतो बहवोऽवताराः संभूतास्तान् एवं जानामि यदेते सर्वेऽवतारा

नारायणस्यैव सन्ति तथापि तेषु मध्ये ऋषभदेवेऽधिको रोचते, तथा ततो निम्नदशः कपिलो दत्तात्रेयश्चोभौ समौ भासेते, एतदन्यवतारापेक्षया कोटिगुणितः स्नेहो मम श्रीकृष्णे वर्तते, यदेवं जानाति यत् 'अन्यसर्वावतारापेक्षयाऽयमवतारो बहुमहान् बभूव बहुसामर्थ्यवांश्च' अतस्मिन्नवतारेऽवतारी देवोऽयं भेदो न ज्ञायते, अन्ये तु ये मत्स्यकच्छपादयो भगवदवतारास्तेषु चापि रुचिर्मम नास्ति, अथ ममोपासना त्वेवंरीत्या वर्तते यत्, सर्वेभ्यः पर एको महाँस्तेजःसमूहोऽध ऊर्ध्वं समन्ततः सीमवर्जितोऽनन्तो वर्तते, तन्मध्ये बृहति सिंहासने दिव्यमूर्तिश्रीनारायणपुरुषोत्तमो भगवान् विराजते, तत्सिंहासनस्य परितो निबद्धा अनन्तकोटिमुक्तास्तस्य नारायणस्य दर्शनं कुर्वन्ति, एवं मुक्तसहितं नारायणं सदाऽहं पश्यामि, तस्मिँस्तेजःसमूहे निरन्तरं लक्ष्येऽपि मे रुचिर्नास्ति तत्रत्यभगवन्मूर्तिदर्शनेनैवातिसुखं भवतीति, श्रीरामानुजस्वामिना यादृशं क्षराऽक्षरपरश्रीपुरुषोत्तमभगवतो निरूपणं कृतमस्ति तस्मिन् श्रीपुरुषोत्तमभगवति ममोपासनाऽस्ति, एतादृशो ममाभिप्रायो रुचिश्च वर्तते, मम वार्तया मम मतः सम्प्रदायग्रन्थैश्च पूर्वाऽपरविचारशीलिनो बुद्धिमत एव ज्ञायेते, सोऽयं साक्षाच्छ्रीपुरुषोत्तमनारायणोऽस्तीति । अत्र स्वरूपसच्छ्रीहरिसच्चिदानन्दमूर्तिरेव कथिता न तु दिव्यविभूतिमूर्तिः, । अथाऽन्यसृष्टीनां 'स्थानानि निरयास्तात स्थानस्य परमात्मन.' इत्यनेन निरयत्वकथने निरये धृतावतारस्य परमेश्वरस्य निरयाऽनादरयर्थं परमधाम्नोऽत्यत्युत्कर्षताबोधकत्वाभिप्रायः, एवं उपमानां निकृष्टत्वे नाभिप्रायः किन्तु परमेश्वरस्योत्कृष्टत्वबोधनाऽभिप्रायः, ततो मुक्तानां सद्गुरूणां 'कप्यासं पुण्डरीकमिवाऽक्षिणी'तिवत् श्रेष्ठांशमात्रगुणस्य 'पादोऽस्य विश्वा भूतानि'तिस्वरचितस्य रक्षणार्थकत्वस्य, प्रस्थप्रस्तरस्यैव अवतारिणि सदाकर्षितत्वस्य, खण्डाधिपस्यैव ब्रह्माण्डाधिपसृष्टचधिपं प्रति बहुमान्यत्वस्य, सूर्यमण्डलस्यैव परमेश्वरायत्तत्वस्य, ताराणामिव परमेश्वरांशेऽपूर्णत्वस्याऽतत्समत्वस्य दासानामिव सदाज्ञावर्तित्वस्य स्वल्पपक्षनियोगामिव यथाबलं परमेश्वरे कार्यकारित्वस्य, प्रधानस्येव विश्वस्तत्वस्याऽभिप्रायात्, नाऽनिष्टाऽपदृष्टान्तत्वादि दूषणम् ।। श्रीहरिणा स्वयमेवाऽवतारेषु स्वस्यारुचेर्दर्शितत्वेन श्रीकृष्णभगवति च विशेषस्नेहवत्त्वस्य दर्शितत्वेन तदभिप्रायोविशेषतोग्राह्यः ।। 'हृदि चिन्तये' इत्यस्य यदि—'मम विशिष्टः स्नेहो वर्तते' इत्यनेन प्रबलवाक्येनाऽवतारपदघटितसहायकेनैक्यार्थकरणे तु स्नेहचिन्तनस्यैव तात्पर्यविषयतया भवत्युपासनागोचरेष्टदेवत्वस्य स्वस्य परमेश्वरस्यार्थेऽकल्पनात्, श्रीकृष्णपदस्य परब्रह्मपरमात्मपरायणस्योक्तत्वेन शिक्षापत्र्या 'हृदये जीववज्जीवे योऽन्तर्यामितया

स्थितः। ज्ञेयः स्वतन्त्र ईशोऽसौ सर्वकर्मफलप्रदः। १०७। स श्रीकृष्णः परब्रह्म भगवान् पुरुषोत्तमः। उपास्य इष्टदेवो नः सर्वाविर्भावकारणम्। १०८। इतिश्लोकद्वयस्थः-'यः, असौ, सः' इतिविन्यासः, तत्त्रयान्वयेन अन्तर्यामी सर्वकर्मफलप्रदो योऽसौ भवदृष्टिगोचरः अनादिश्रीकृष्णपुरुषोत्तमनारायणः श्रीस्वामिनारायणः स एव श्रीकृष्णः हरिकृष्णोऽहमवतारी परब्रह्म भगवान् पुरुषोत्तमोऽस्मि इति तात्पर्यावगमात्। 'कृष्णकृष्णावतारानाम्' इत्यस्य श्रीशतानन्दमुनिप्रसिद्धटीकायां श्रीकृष्णस्याऽवतारिणो येऽवतारा रामकृष्णादय इति तस्यार्थकरणादेव उपरिदर्शिततात्पर्याऽवधारणात्। सर्वत्र श्रीस्वामिनारायणसम्प्रदायशास्त्रेषु श्रीस्वामिनारायणभगवदाज्ञाकारितेषु भगवदनेकनाम्नामवतारिणि श्रीस्वामिनारायणपरमात्मन्येव मुख्यवृत्तेः 'साक्षात्स्वयं श्रीपुरुषोत्तमनारायणो धर्मभक्तिपुत्रोऽयमस्तीति' 'निगमनात्मकोपसंहारवाक्येन प्रबलेन श्रीहरिणा वचनामृतपुस्तकस्यकृतेनाऽवलोकनेन श्रवणेन चाऽङ्गीकरणश्रौव्ये सम्मानिते सति सर्वथा श्रीस्वामिनारायणसम्प्रदायाऽऽश्रितानां श्रीस्वामिनारायणपरमात्मपरायणवचनानाम् उत्कृष्टतया स्वीकारः सार्वभौमः पन्थाः, अष्टाक्षरमन्त्रादिष्वपि श्रीस्वामिनारायणभगवच्छरणदास्याद्यर्थो मुख्यः सार्वभौमोऽवगन्तव्यः, गोलोकादिपदविशेषाण्यपि श्रीस्वामिनारायणभगवद्धामपरायणान्येवाऽवगन्तव्यानि, वचनामृतेषु तु सर्वत्र पूर्वप्रचलितानि पदानि श्रीस्वामिनारायणपरमात्मतच्छक्तिसामर्थ्यैश्वर्यसंकल्पतन्मुक्तादिपराण्येव निगमनीयानि, नैतावता पूर्वाऽवमन्तृत्वावकाशः, आचार्याणां पूर्वपूर्वशास्त्राणां हार्दविवेचकानां स्वेष्टपरायणभाष्याद्यर्थानुसरणात्, व्यासस्यापि स्वपुराणं तच्छ्रैष्ठ्यवर्णनानुधावनात्, भक्तानामपि तथैव पातिव्रत्यसिद्धेः, सुसत्पतिसमृद्धिभोगान्वितायाः पतिव्रताया वृथाऽन्यसुगन्धलेशप्रतिदत्तनासिकायाः कृत्तिमयमृगीत्वेन,। 'अक्षरातीतकैवल्यमूर्तिरेवाऽभवत्' 'सोऽयं परब्रह्म श्रीस्वामिनारायणः सर्वोपर्यवतारी सर्वश्रुतिशास्त्रस्मृतिपुराणादिप्रतिपाद्यो महापरमेश्वर' इतिसिद्धान्ताद् प्रच्याव्य श्रीकृष्णस्यावतारः स्वामिनारायण इतिसिद्धान्तास्वादनमभिप्रवर्तयन् नाऽऽदरणीय इत्यलं प्रतिप्रयोगेण, वृत्तालयस्याऽष्टादशे वचोमृते 'एवं श्रीकृष्णभगवन्तं निर्गुणं यो न कथयति किन्तु शुद्धसत्त्वात्मकं कथयति स तु भागवतस्य पूर्वापरान्वयबोधादिमानेव न भवति, गोपिकाः कामभावेन श्रीकृष्णं भजमानाः सत्य एव निर्गुणतां ययुः, अतः श्रीकृष्णः शुद्धसत्त्वात्मक इति कथं प्रवर्णनीयः? एवं शुद्धसत्त्वात्मिका विभूतिर्विभूतिविग्रहश्च खण्डित एव, तत्रैवाऽग्रे

'श्रीकृष्णभगवतो द्विभुजस्वरूपे उपासनाया भेदा न कर्तव्या' इत्युक्तेः सच्चिदानन्दमूर्तिस्वरूपलक्षणैकतत्त्वात्मकसाकारः श्रीस्वामिनारायणपरमात्मा तत्र तत्र तथातथाविधवर्णनेन निर्णीतः, वचनामृतान्ते निगमनवाक्ये श्रीस्वामिनारायणस्यैव तथोक्तत्वात्। शुद्धसत्त्वात्मकदिव्यविभूतेःस्थूलसूक्ष्मादिविग्रहस्वरूपत्वे पञ्चविंशतिसंख्यास्पदपदार्थात्मिका कल्पनीया, भवेत्, तत्र गन्तॄणां कृते तत्रत्यकुम्भकारकारूणां वसतिरपि सापेक्षा विग्रहघटनार्थं स्वीकार्या भवेत् यद्वा स्वयुदरजन्मलब्धता भवेत् यद्वा भगवानेव तादृद्घटयिता भवेत् तथा सति जन्मसातत्ये ध्वंसविरहे च त्रिपादस्य क्वचिदन्ततापत्तिः स्यादेवेति ततोऽवनार्थं ब्रह्मधामगतचेतनस्वरूपसदात्मान एव सुमूर्ता जायन्त इति सिद्धान्तः समाश्रयणीय एवेति। अथ गोलोकस्य मध्ये भवनात्मकस्याऽक्षरधामत्वेऽक्षरधाम्नोऽधऊर्ध्वं परितः सीमरहितत्वस्य वचनामृते कथनस्य विरोधापत्तिः, तन्निवारणार्थं मध्यस्यार्थः पिपीलिकामध्ये चटका मह्तीत्यपेक्षार्थकमध्यपदप्रयोगेणाऽक्षरब्रह्मलोकस्यैवाऽनवधित्वमुख्यार्थत्वात्, गोलोकस्य तु ससीम्नो निरूपणात्। गवां किरणानां लोक इत्यभिप्रायेत्वविरोधः। वचनामृतोक्तरीत्या मायिकदेहेन्द्रियान्तःकरणान्यमायिकानि दिव्यानि अप्राकृतानि भवन्ति भगवद्गृहीततया चेत् तर्हैव लीलाविभूत्यात्मकेन निर्वाहे शुद्धसत्त्वात्मकविभूतिविग्रहस्य निष्प्रयोजनत्वम्, लीलाविभूतिदिव्यविभूतिद्वयग्रहणेन नामान्तरेण अविद्याविद्याद्वयमिव प्रतिपादयन् श्रीस्वामिनारायणभगवत्साधुजनसच्छास्त्रीयसिद्धान्तविधुरत्वं निजीयं निवेदयेत्। अथोपासना स्वरूपसन्मूर्तिकश्रीस्वामिनारायणपरमात्मनः सततैकाकाराऽऽत्मान्तःकरणवृत्तीषु आवासनात्मिका, आवासो मूर्तिस्थापना, तथा च मूर्तेर्वेदनं, ध्यानं, स्मरणं, ज्ञानम्, अनुभवप्रमा, समानाकारमानसदर्शनं, निदिध्यासनं, मूर्तिभावना, मूर्तिकामना, मूर्त्यैकतानता, मूर्तिव्याप्तचित्तता, मूर्तिलग्नबुद्धिता, मूर्तिमननं, मूर्तिमात्रव्यूहनम्, मूर्त्योतप्रोतसच्चिदानन्दता, यावत्करणफलरसता, मूर्तिमात्ररागिता, मूर्त्यानन्दानुभूतिः, मूर्तिऋतम्भराप्रज्ञा, मूर्तिसविकल्पधारा, मूर्तिगोचरचैतन्यम्, मूर्तिचुम्बितचित्त्वं, मूर्तिप्रभासचित्तिः, मूर्तिज्ञातृता, विशिष्टमूर्तिबोधनम्, विशिष्टमूर्तिविवेकः, सपरिकरमूर्तिविमर्शनम्, मूर्तिस्वरूपनिश्चयः, स्नेहद्रवितालोचनम्, मूर्त्यन्तःप्रकाशः, सत्त्वप्रकाशावृतता, भक्त्यन्वितहार्दम्, प्रेमपूरितशेमुषी, परब्रह्मप्रभा, अपाराकर्णणज्ञप्तिः, मूर्तिभोगानुरागः, रतिरमणवैदुष्यम्, श्रद्धासञ्जितमतिः, प्रतिभसिद्धिः, मूर्तिसाक्षात्कारः, मूर्तिप्रत्यभिज्ञानाभ्यासः, दृढभूमिकविज्ञाननिर्विकल्पकता,

सततमूर्त्यावर्तनम्, इत्याद्या उपासनापर्याया बोध्याः, तैः परब्रह्मानन्दभोगः फलम् ॥

आर्पशेर्पुर्यासोपानाऽऽनुपूर्वीगुर्वीचित्त्यर्थसरणितरणिरूपकरणान्यतमैकान्तमहर्षिभिरास्फालिते परफलनफलकेऽविशयेऽपि तत्त्वावननिरञ्जनविषयेऽवश्यं यथापेक्षं परीक्षणीयः, असंस्कृत्य तासत्यास्तिमश्चित्यचित्त्याविर्भूतविपयिताभावकस्यैव तत्तात्त्वेन संख्यातत्वात् संख्यातानाञ्चाऽतद्विशेषिततद्विशेषिताऽऽश्रितज्ञप्तिप्रकर्षाऽऽत्मसमर्पितपदकत्वात् कण्टकितमप्यभिधानीयं पार्श्विकमिव समास्थेयमेव, स्वरूपाऽस्तित्वाऽन्विताऽपराऽननुबद्धचित्प्रतिपत्त्यनुबद्ध-सदर्थस्याऽपि विषयित्वेनाऽनुभूतावारोहणाऽऽश्रयस्यैव शाश्वतिकपरार्थफलकत्वं मानानुस्यूतमिति चैतन्यं चैतन्यमन्थनाऽऽकुलीकृतमनेकैर्थ्यापि क्षणिकत्वचिरत्वशाश्वतिकत्वस्वचेत्यत्वाऽऽगन्तुकत्वतदन्यादृशत्वाद्यन्यतमाऽऽन्तरतो नैकमपि रूपकमासादयत्यनुन्मथिताऽऽयतिकत्वेन ।

तत्र क्षणिकत्वे किं स्फुरणस्य गतिप्रकृतिकत्वमुत वस्तुच्छायासमासञ्जनप्रतिसञ्जनकत्वं किम्वा सहाऽऽत्मलाभार्थतादात्म्यकत्वं यद्वा परिणत्यवस्थान्वितत्वम् अथ वा स्थैर्याऽनधिकरणत्वम् ? ।

तत्राऽऽद्ये गुणत्वेऽसिद्धिरसंभवश्च, अन्यथा तु क्षणिकत्वाऽवनाय गतेरपि गत्यपेक्षितत्वावश्यकत्वेन तदर्थं पुनरित्यनवस्थापातात्, तस्य पारिमाण्डल्ये विप्रकृष्टकरणप्राप्त्यनुपपत्तेराकाराऽऽरूढत्वाऽलाभेनाऽऽभासकत्वम्, प्रसरणे तु प्रदेशान्तरव्याप्तिमतः क्षणकूटनान्तरीयकत्वम् ।

अतः क्षणिकत्वे वस्तुच्छायया आसञ्जनक्षण एवैकः, प्रतिसञ्जनक्षणश्चाऽपरो नियामकः, इत्यपि न । तत्र किं स्वं प्रत्याकुञ्चनसामर्थ्यं स्वाधिकरणसत्ताव्याप्यम्, तदनुजं वा ?, उभयथाऽप्याकर्णनसंक्रमणप्रापणादिक्रमिकाणां क्षणकूटाऽनुयायितया विरोरेकस्या एव क्षणसंवलनं दुरुपपादमेव बहिर्विषयस्य सहात्मलाभस्तादात्म्यं च प्रातिक्षणप्रतिहतमेव अवस्थायाः परिणामकत्वेऽर्थादापतिते स्थैर्ये धर्मिणि तदन्यथात्वमनुपपन्नमेव ।

अथ चिरत्वं वेदित्र्याः, वेदनविषयसापेक्षत्वात्, इत्यपि न, उत्पत्तावनैकान्तिकत्वात्, आपूरकाऽधीनत्वे विषयस्याऽतथात्वम्; व्यधिकरणत्वात्, दृशेस्तथात्वे परिणतिप्रसङ्गेन क्वचिच्छून्यत्वपर्यवसानापातात्, अभ्युत्थानादिसमयेऽप्यवभाससातत्याऽन्यथाऽनुपपत्त्या शाश्वतिकत्वव्यवस्थानेऽपि समानविषयाऽवभासशाश्वतिकत्वप्रसङ्गः,



प्रकाशस्याऽऽगन्तुकत्वेऽनियतोत्पत्तेर्ब्रह्मादीनां नित्यनियतसर्गव्यवस्था-

पकत्वाऽनुपपत्तिः पाषाणाद्युत्पत्तिर्नित्यसर्वज्ञव्यक्तिव्याहतिश्च, तादृशत्वाऽव्यवस्थितौ तदन्यादृशत्वमप्यलब्धभूमिकमेव, अन्ततोऽचिद्राज्यविरलाऽनुभवानुपपत्तिरिदानीं तदानीन्तु नित्यस्वरूपानुभूत्यनवरतिविरतिरनुःखातैव, वस्तुतस्तु नित्यचितेरपरिणतताया एवाऽवभासकत्वं स्वाऽस्वभाऽनपेक्षं संसाराऽसंसारोभयदशायां सुमतमेव।

'सामस्त्येन, वहुत्वेन, क्वचिदंशेन, शून्यतः,। आकारयद्धि विज्ञानं, सर्वं स्वाकृतिकं ध्रुवम्'। 'इक्षु'रितिविज्ञानम् अवनितद्गुणरूपरसगन्धादितद्धर्मसंसर्गेतरभेदादिसमस्ताकारं वह्वाकारं वा, 'निर्विकल्पकं किञ्चिदि'तिविज्ञानम् एकमात्राकारं समस्ताकारम्, 'शुक्तौ रजतमि'तिविज्ञानम् अंशेन रजताकारमंशेन च शुक्त्याकारम्, तुर्यस्थितौ तु नित्यचित् निरालम्बना, सर्वाऽप्येषा चित् स्वाऽऽपूरकत्वेनाऽभिमतनित्यचिदनन्या शाश्वतिकास्वात्मकाकारा मानमेव, तथा च कैश्चित्तमो निरस्तं, कैश्चिन्माया, कैश्चिदणवः, कैश्चिद्भावः, कैश्चित्तु ब्रह्म, इत्येतत्पक्षे परिछेदाद् अमानमेव, देशादिहितं तु मानमेव।

अस्ति तत्त्वं स्वचिद्वेद्यं चितिर्मायाऽणवस्तमः। सोत्साहाः कर्मसंरूढा मार्गयन्त्यपि सत्नवम्॥ आश्रयाऽऽश्रयिसंसर्गाच्छब्दवाच्याचिदन्वयात्। तदन्यवाधात् प्रच्छेदात् सर्वं साकृति तत्त्वतः॥ पूर्वमभ्युदयः सत्यस्तत्प्रतीपनिवर्तनात्। ततोऽनावृत्तिसंस्थानं कालधर्मविवर्तनात्॥

अथ साकृतौ व्याप्तयः-स्वा(सत्ता)ऽधिकरणवस्त्वनुरूपेन्द्रियवृत्तिपरिणामकसत्तात्वम् आकारत्वम्, स्थूले सूक्ष्मे वा पदार्थे तत्तदिन्द्रियद्वारा वहिर्गतां वुद्धिवृत्तिं स्वाकारेण परिणामयितुं सामर्थ्यं विद्यते तद्वस्तु साकारम्, नेत्रवृत्तिर्घटाकारेण निरूप्यते, तथाविधपृथिवीजलतेजसां साकारत्वम्। शब्दस्पर्शरूपरसगन्धादीनामाधारतानियामकः कश्चिदाकारोऽभ्युपगन्तव्यः, तत आधार आधेयं च साकृति। यदुत्पत्तिः कारणव्यङ्ग्या तत्कार्यं च कारणं च साकृति। उपादानम् मायापर्यन्तं साकारम्। अत्राऽस्ति अत्र नास्तीति व्यवहार आकृतिनिवन्धन इति साऽवधिकसत्त्वासत्त्वविषयविज्ञं साकारम्। न्यूनाधिकदेशवृत्तितया सपरिमाणकत्वस्याऽल्पविपुलाकारतानिवन्धनत्वात् परममहत्पदार्थोऽपकृष्टो वा साकारः। पृथिव्यां गन्धो वद्ध इतिवद् हृदये आत्मा वद्ध इति हिरण्मयकोशेऽवकाशात्मक आकाशो वद्ध इति वन्धनसम्बद्धं सर्वमपि साकारम्। ययोर्मिथः संसर्गः स चाकारे सति संभवतीति सान्वयसर्वपदार्थानामाकृतिमत्त्वम्। एकत्वादिसमाश्रयव्यवहार आकारनिवन्धन इति ससंख्यकपदार्थस्याऽऽ-

करत्वम्। परस्परं विभक्तत्वं पृथक्त्वं च तत्तदाकारनिबन्धनमिति सर्वे पदार्थाः स्वाकृत्या विभक्ताः साकारा इति। पदार्थत्वं जात्याकृतिव्यक्तिसंघातापन्नमिति निरूपणस्याऽऽकृतिनिबन्धनत्वात् निरूपिताः पदार्थाः सर्वे तन्त्रेषु साकाराः। परस्परं भेदः प्रतियोग्यनुयोगिसाकारनिबन्धनः, विवेकज्ञानविषया आत्मपरमात्मजडादिपदार्थाः साकाराः, अलीकप्रतियोगिकभेदाऽनभ्युपगमात्। ये स्वधर्मावच्छिन्नाः परधर्मानवच्छिन्नाः पदार्थाः प्रकृतौ सत्त्वरजस्तमांसि परमेश्वरे सच्चिदानन्दानि जीवात्मनि सुखेच्छायत्नादीनीत्येवं स्वविशेषधर्मैर्निर्णयविषयाणां साकृतित्वम्। परमात्मनः सर्वप्रत्यक्षदर्शित्वाऽऽक्षिप्तं भवति यत् यद् यत्तस्य प्रत्यक्षविषयं सर्वं साकारमिति। परमात्मनो ज्ञानमपि सर्वविषयावच्छिन्नं स्वविषयेण स्वेनाऽऽकृतिमता भाव्यमिति। विशेषणविशेष्यभावापन्नं यद्यज्ज्ञानं तत्तत्पदार्थाकारनिबन्धनमिति 'इदमेवमिदं नैवमि'त्यादिव्यवहारविषयं सर्वं साकारमिति। व्याप्यव्यापकभावापन्नं सर्वं साकारं यथा घटाकाशमहदाकाशौ साकाराविति। विचित्राऽनेकशक्त्याश्रयत्वं साकारत्वम्, प्रकृतौ जीवात्मनि बन्धनानुकूला परमेशे मोक्षानुकूलाऽन्तर्यामिणि नियामकत्वानुकूला सुशुद्धसत्त्वान्तरानुकूला साक्षिचात्मिकेति स्वस्वाऽऽधाराऽऽकारनिबन्धना। प्राविर्भावतिरोभावावस्थाश्रयं साकारम्, सूक्ष्मतन्मात्रेन्द्रियाऽहंकारविज्ञानात्मपरमात्मतद्गुणसामर्थ्यैश्वर्यशक्तिचमत्कारादिसर्वमपि साकारमिति। निराकारत्वं सर्वथाऽनैकान्तिकम्॥

॥ इति स्वरूपवैशद्यात्मको द्वितीयो भागः॥



श्रुतितात्पर्यनिर्णयः तृतीयोभागः

# ॐ प्रमात्ववैशद्यम्॥

दर्शनेष्वतिममख्या वादा नैके विदुन्मिताः। प्रामाण्यख्यातिशक्तिव्युत्पत्तिव्याप्त्यपहेतुगाः॥ १॥ जातिनिग्रहतत्त्वैक्याऽनेक्यक्षणिकशाश्वताः। विवर्तपरिणामाऽसत्प्रतिभासविकारिणः॥ २॥ व्यवहारमृषाशून्यज्ञानद्रव्यचिदन्विताः। स्फोटालंकारविध्यर्थवादतात्पर्यलक्षणाः॥ ३॥ समक्रममहाभंगीभोगाऽपूर्वफलोदयाः। आत्ममुक्तिजडाऽविद्याविद्याब्रह्मपरमेश्वराः॥ ४॥ परिष्कृतप्रतिभाना विलासाः

सदसद्गताः। सार्वज्ञ्यवर्जिता वादाः शाश्वतायतना न ये ॥ ५ ॥ सोपानानि त एवैते निर्णयेऽत्थे फले परे। आयतौ परमार्थे वै स्वेष्टे ब्रह्मरसे गतौ ॥ ६ ॥ विचार्यन्तेऽत्र तान्येवाऽभ्यासस्सातत्ययोगिनः। फलं हर्षर्पणं त्वेषां परानुरक्तिरूपवत् ॥ ७ ॥

व्यष्टिसमष्टिविषयभावापन्ना सर्वाऽपि व्यवहृतिः शेमुषीसम्पाद्या संवादिनी विसम्वादिनी वा विग्रहितानां चितां नान्तरीयकसहभावतत्त्वाऽऽपन्नेति तत्सम्पन्न ईशोऽनीशो वाऽऽत्मा चिद्वा ज्ञप्तिर्वा मदो वा, पुद्गलो वा प्रकाशो वा विग्रहो वा गभस्तिर्वाविस्फुलिंगो वा शक्तिर्वा प्रतिभासो वा योऽपि कोऽपि विग्रहविवाहको वरतमः सिद्धिविषयः परमार्थप्रयोजकः समस्त्येवेति तदात्मके तद्भासि वा प्रामाण्यं स्वत एव वा परतो वोभयतो वाऽनुभयतो वाऽन्यादृशं वा तद्वप्रामाण्यं तथैव वा तेनैव वा कासभासितं कथं वेति दार्शनिकानां कार्तस्वरं कुतूहलं त्वनुत्तरविमर्शास्पदं विद्योतत इति विमानानां विभिन्नमपि तत्स्वरूपं त्वविशेषतस्त्वीदृशमतिमारूढपदमनुभाति यत्—

प्रामाण्यं-प्रमात्वम्, तच्च-तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वम्, तत्पदस्य बुद्धिस्थप्रकारे तादृशप्रकारावच्छिन्नेऽपि च शक्तिः 'जात्याकृतिव्यक्तयः पदार्थाः' इतिसूत्रात्। विनिमायितांऽशिकोभयादिभ्रमाऽसंग्रहाय नैकधर्मावच्छिन्ननिरवच्छिन्नविनिमायितादिप्रमासंग्रहाय च नव्यैः परिष्कृतं यत् "तत्सम्बन्धिनिष्ठत्व-तत्सम्बन्धितावच्छेदकताऽनवच्छेदकाऽवच्छिन्नाऽवच्छेदकत्वाऽनिरूपितत्व-ज्ञानीयतन्निष्ठप्रकारतानिरूपितत्वैतत्त्रितयसम्बन्धेन तद्धर्मविशिष्टविशेष्यताशालित्वं तत्प्रमात्वमिति"। निर्धर्मितावच्छेदकभ्रमस्याऽप्रामाणिकत्वमेवेति।

नैयायिकानां प्रामाण्याऽप्रामाण्ये परतो ग्राह्ये, सांख्ययोगानां स्वतोग्राह्ये, बौद्धानां प्रामाण्यं परतोग्राह्यमप्रामाण्यं स्वतोग्राह्यम्, मीमांसकानां प्रामाण्यं स्वतोग्राह्यम् अप्रामाण्यं परतोग्राह्यम्, जैनानाम् अप्रामाण्यं स्वतः प्रामाण्यं तु परतोग्राह्यम्, वेदान्तिनां प्रामाण्यं स्वतोग्राह्यम् अप्रामाण्यं तु परतः, रामानुजादिवैष्णवानामप्येतदेव सम्मतम्, विशिष्टब्रह्माऽद्वैतवादिनस्तु प्रामाण्याऽप्रामाण्ये साक्षिभास्ये-इत्यभिनवः पन्थाः, नकुलीशपाशुपतशैवादीनामप्येतत्स्मृतिसमानाभिहारित्वमिति फलतः समायाति, आगमिकानां स्फुटितार्थिनां निगमाभिसम्पन्नानां प्रामाण्याऽप्रामाण्ये स्वतः परतश्चेत्युभयाऽग्राह्ये न त्वेकान्तत इति, अर्थवादिकानामितिह्यजुषां चैते परतोग्राह्याऽग्राह्ये

न तु स्वत इति, सत्त्वप्रकर्षितात्मनां तु सार्वज्ञ्योदये सर्वथा प्रामाण्यं स्वत एवेति नेतरदिति सुतरां परमेशस्य स्वप्रामाण्यं शाश्वतिकमिति नाऽस्मिन् ग्राह्याऽग्राह्यत्वप्रस्थानमत्यंकुरोऽपि परमात्मज्ञानप्रामाण्यवदिति, बार्हस्पत्यानां स्वत एव प्रामाण्याऽप्रामाण्यग्रहः, वैतण्डिकानां तु नैकं नोभयं नाऽन्यतरं वेति।

नैयायिकानां प्रमात्वस्य परतोग्राह्यत्वे बीजन्तु–'प्रमात्वं यदि स्वतोग्राह्यं स्यात् तदाऽनभ्यस्तप्राथमिकस्फटिकादिज्ञानोत्तरदशायां दूरादवलोकिते स्फटिके 'स्फटिकज्ञानं प्रमा न वे'त्यनुभवसिद्धप्रमात्वसंशयाऽनुपपत्तिः स्यात्, तत्र स्फटिकज्ञानप्रामाण्यस्याऽनुव्यवसायेन निश्चितत्वात्, तस्माज्ज्ञानप्रामाण्यमनुमेयम्–'स्फटिकइतिज्ञानम्,–प्रमा,–संवादिप्रवृत्तिजनकत्वात्', 'शुक्तौ रजतज्ञानम्, अप्रमा,–विसम्वादिप्रवृत्तिजनकत्वादि'त्येवमनुमितिग्राह्ये प्रामाण्याऽप्रामाण्ये।

सांख्ययोगानां सत्कार्यवादिनां ज्ञानं कारणे सदेव तद्गतं प्रामाण्यमपि सदेवाऽप्यस्थूलावस्थे ज्ञाने प्रामाण्यं न गृह्यते, कारणकूटेन स्थौल्यापन्ने ज्ञाने तत्प्रामाण्यमभ्युद्भूतमनुव्यवसायात्मकपौरुषेयबोधेन फलात्मकेन विषयीक्रियते, एवमप्रामाण्यमपि, चित्तवृत्तीनां प्रामाणिकानां प्रमात्मकपौरुषेयबोधाऽऽविर्भावकत्वम्, विपर्यस्तसंशयितादीनां तासामप्रमात्मकबोधजनकत्वमिति तेनैव बोधेन प्रमात्वाऽप्रमात्वे गृह्येते।

विशिष्टवादिनां धारावाहिकबुद्धेर्द्वितीयादिज्ञानात्मिकायाः प्रामाण्याऽप्रामाण्ये तदनुव्यवसायात्मकोत्तरोत्तरधारावाहिकविशिष्टज्ञानग्राह्ये, तत्रोत्तरोत्तराऽन्यूनाऽनतिरिक्तोत्पन्नानां ज्ञानानां विषयतया पूर्वपूर्वज्ञानानां धर्मात्मकधर्माणां प्रामाण्यादीनामपि तदुत्तरोत्तरज्ञप्तिग्राह्यत्वमेवेति।

विद्याऽविद्ययोर्ब्रह्मशक्तित्ववादिनां यावदात्मसु संस्थितानां तासां ब्रह्मांऽशरूपाणां स्वस्वांऽशे प्रामाण्यमपि बाध्यबाधकभावस्याऽनपह्नवात् अन्यतरस्याया अप्रामाण्यमिति तासु तासु सदा स्थितमपि प्रामाण्यं तदा तदा स्वाश्रयग्राहकमानसोपासनात्मकस्फुरणादिसामग्रीजन्यविद्याग्रहविषयतया विद्याग्राह्यमेव, एवमप्रामाण्यमपि बाध्याऽविद्यावृत्तितयाऽविद्याग्राहकात्मकाऽऽत्ममानसदोषात्मकसामग्रीजन्याऽविद्याग्रहविषयतयाऽविद्याग्राह्यमेवेति सुस्थिरम्, प्राप्तब्रह्मात्मभावे तु स्वयं स्फुरत्येवेति न तदा ग्राह्यं न वाऽग्राह्यं प्रामाण्यम् अप्रामाण्यं वा, तदानीं नित्यसार्वज्ञ्यारोहाद्धिरोधिकोऽप्यभावान्निरपेक्षस्य ग्रहाऽनावश्यकत्वात् प्रतियोग्यनुयोगिभावाऽभावात् सामग्र्यसम्भवाच्च

ग्राह्यत्वकल्पनाऽयोगात् ।

हैरण्यगर्भाणां तु संयमस्थितौ 'आकाशे संयमात् सर्वभूतरुतज्ञानम्' 'परकायप्रवेशे परचित्तज्ञानमि'त्यादिभूमैश्वर्याऽऽगमसम्पत्तौ सत्यां तत्तदीयपरात्मसमवेतज्ञानानां प्रामाण्ये स्वाश्रयग्राहकसंयमात्मकसामग्रीजन्यग्रहविषयत्वं यथा तद्वदप्रामाण्येऽपि तथाविधसंयमोदितग्रहविषयत्वं तदैश्वर्यसिद्धमिति ।

अहं ब्रह्माऽस्मीत्यपरोक्षात्मकसाक्षात्कारवादिनां तु तदानीं धर्मधर्म्यभेदभावापन्नत्वेन नित्यज्ञानस्य प्रमात्मकस्यैव ग्राह्यग्राहकभावविधुरतया पृथक्सत्ताशून्यस्य प्रामाण्यपदार्थस्य लयादेवाऽग्रहणमिति सुतरां मृषाभूतस्याऽप्रामाण्यस्य ग्रह इति नोभयं ग्रहविषयं तदानीम् ।

औपनिषदानां तु विभिन्नप्रस्थानाऽऽकृष्टतया वेदान्तवार्धिमग्नानां तेषामेकजीववादे सर्वं प्रमाणत्वं स्ववृत्तितया स्वत एव ग्राह्यं नैकविधचैतन्ययोरभेदसामग्रीजन्यग्रहविषयं भवतीति ततस्तेषामप्रामाण्यं त्वन्तःकरणबाहुल्यप्रयोज्यौपाधिकविविधवृत्तिरूपप्रपञ्चभाविमृषाऽप्रमागतं त्वनुमाऽर्थापत्त्यादिवित्तिविषयमिति परतोग्राह्यं संभवत्येवेति ।

सर्वथा भेदवादिविविधश्रौतानां तु प्रामाण्यं सर्वविधलौकिकाऽलौकिकसन्निकर्षोत्थप्रमाग्राह्यम् अप्रामाण्यं त्वनुमेयमेवेति प्रवर्तनाऽप्रवर्तने तत्र नियामिकेऽनुसन्धेये ।

ब्रह्मात्मवादिनामौपाधिकाऽनेकजीववादे तु प्रातिभासिकं प्रामाण्यं प्रतिभासामग्रीरूपप्रत्येकपरिच्छिन्नेन्द्रियद्वारकवृत्त्यवच्छिन्नविषयावच्छिन्नचिदभिन्नतात्मकसामग्रीजन्यव्यावहारिकसत्तान्वितप्रतिभाग्राह्यमेव प्रामाण्यं ततो मृषात्वसाम्येऽपि निवर्तनाफलबलेन मानान्तरग्राह्यम् अप्रामाण्यमेवेति सर्वात्मनां समानम् ।

स्वाप्नपदार्थानां तदानींजनितविमर्शपरिभासमानानां पुण्याऽपुण्यसंस्कारसहकृतानां स्वाप्नावस्थायां तज्ज्ञाने प्रामाण्याऽप्रामाण्ये मानसज्ञानमात्रग्राह्ये, क्वचिदग्राह्ये, क्वचिदन्यतरभासः, क्वचिन्नोभयभासोऽपि । सुषुप्तौ तु स्वात्ममात्रसंविदभिन्नप्रमात्वं तत्संविन्मात्रग्राह्यं न तत्राऽप्रामाण्याऽवभासस्तत्सामग्रीविरहात् । मूर्छायां तूभयस्याऽन्यतरस्य वा ग्रह एव नेति सर्वथाऽग्राह्ये ते । तुर्यावस्थायां पारमार्थिकस्वसंविन्मात्रस्य स्थितेस्तदात्मकप्रामाण्यं तथैव तादात्म्यतया ग्राह्यं यद्वा सामग्र्यनंगीकारे न तद्ग्रहणस्याऽवकाश इति ।

अन्यत्रतात्पर्यवतां पुराणसंहितेतिहासार्थवादानां तु प्राथमि-

कानां मध्यमानां महतां वा वाक्यानां प्रशस्तिप्रभृतिपुष्टयर्थविषये महार्थबोधात्मके वेदने प्रामाण्यं तत्तत्कारणात्मकाऽऽकांक्षायोग्यताऽऽसत्तितात्पर्यशक्तिलक्षणाऽन्यतमादिसहकृतविविधस्मरणघटितसामग्रीजन्यमानसबोधविषयं स्वतोग्राह्यं प्रकरणान्तरसमन्वयादिबोधग्राह्यं परतोग्राह्यं तद्वदप्रामाण्यमपि तदुभयमपि चाऽनुमयमप्यन्यतरद्वा यथायथं सुघटम्, भिन्नप्रस्थानानां भिन्नसामग्रीणां सत्त्वेन नैकत्राऽऽग्रहो ग्रहविषये तस्मिन्निति।

दिग्भ्रान्तस्य दिशाबोधे प्रामाण्यं दोषजन्यं, सर्वत्र दिशाया ऐक्यात् प्रामाण्यं तत्र निरूपाधिकं चेत् स्वतोबोधमात्रग्राह्यम्, सोपाधिकं चेत् तत्तदुपाधिघटितसामग्रीजन्यग्रहविषयम्, तथैव च तत्राऽप्रामाण्यं विसंवादिप्रवृत्युत्तरजायमानाऽभिमतदेशप्राप्त्यादिसहकृतप्रत्यक्षादिना परतोग्राह्यमिति, अत्रेष्टप्रमात्वम् अनिष्टप्रत्यक्षाद्युत्थाऽप्रमात्वेन बाध्यते।

ऐन्द्रजालिकानां मानवस्य पारावतीकरणादौ दर्शकानां पारावतदर्शनक्षणे ज्ञाने तदानीन्तनैन्द्रजालिकविद्यापराभूततदानीन्तनचित्तवृत्तिप्रभृतिसामग्रीसमुद्भूतग्रहविषयं यच्च मानवज्ञानप्रामाण्यं मानसबोधारूढं तत्तु तदानीन्तनपूर्वसंस्कारसमुद्भूतस्मरणविषयं वा क्षणिकपारावतवेदनेऽप्रामाण्यं प्राक्स्मरणबलात् समनियतस्मरणबलाद्वा पश्चाद्भाविमानवदर्शनबलाद्वा मानसबोधगतं वा दृष्टिगतं वा तत्परतोग्राह्यमिति, वस्तुतस्तु पारावतदृष्टिभ्रान्तिस्तत्र प्रामाण्यं न सम्मतम्, ऐन्द्रजालिकदोषवशात् समुद्भूतदृष्टिविशेषेऽप्रामाण्यमेव मानसस्मरणग्राह्यमिति।

भूतपिशाचाद्याविष्टस्याऽहम्ममतादिव्यवहाररूपस्फुरणादौ पशाचिकं प्रामाण्यं तदाविष्टपिशाचविसादिसम्वलितसामग्रीग्रहविषयं, दर्शकानां चेष्टया श्रोतॄणां तु तथाजातीयप्राक्संस्कारेष्वस्मृतिविशेषेण तदानीन्तनीयं प्रामाण्यं सनकालीनं गृह्यत इतिपरतोग्राह्यं तत्, तदानीन्तनाऽसदालापादिसंवेद्यं अप्रामाण्यं तु सर्वथैवाऽनुमेयं परतोग्राह्यमिति।

एवमेव कथाकाराणां नाटकीयपात्राणां वा तदानीन्तनतत्तत्प्रतिरूपभावापन्नानां विविधबोधगतं प्रामाण्यं दर्शकानां श्रोतॄणां च तन्निमित्तकनिजबोधीयप्रामाण्यं च तदानीन्तनीया या या यथायथं सामग्री तज्जन्यबोधग्राह्यं यच्चाऽप्रामाण्यं वेषान्तरस्थितिकोद्भूतवेदनोद्भूतं तदपि क्वचित् स्वतः क्वचित् परतोग्राह्यमिति, तत्र सत्यभानस्याऽसत्यभानस्याऽपि च बहूनां जायमानत्वादिति।

आभिचारिकाणां मन्त्राराधितदेवताविभावितपराभाव्यशक्तिविशेषवेदने तु 'निर्माणचित्तान्यस्मितामात्रादि'त्यनुसारेण परं प्रति प्रहित-

राजदूतवत् परव्यक्त्युपर्यापतितदैवविनिर्माणाऽदृष्टप्रतिकृतिसामर्थ्यशालिचित्तवृत्तिचेष्टादिसमुद्भावकमान्त्रिकाऽनुकरणविलासवेदनात्मके वा तस्मिन् प्रामाण्यं तदानीन्तनीयचित्ततादात्म्यापन्नचित्तीयनिर्मितसामग्रीजन्यग्रहविषयं तदप्रामाण्यमपि तथैव तत्स्वतोग्राह्यमिति ।

आगमिकस्फोटवादिनां वर्णपदवाक्याऽखण्डपदवाक्यजनितस्फोटानामर्थप्रकाशकत्वात् तत्तदर्थबोधगतप्रामाण्यं पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितचरमवर्णश्रावणाऽभिव्यक्तस्फोटस्वरूपब्रह्मात्मकैकनित्यसामग्रीजन्यग्रहविषयं मौनिश्लोकादौ बोधे तु तत्तत्संस्काराऽऽहितसामग्रीजनिमत्स्मरणग्राह्यं प्रामाण्यमिति, अध्ययनादिबोधे त्वाप्तताविश्वस्तगुरुवृत्त्यनुगुणवृत्तिसमुन्मेषितमानससामग्रीसहसंस्कृतात्मवृत्त्यभिन्नवृत्त्यन्तरग्राह्यं प्रामाण्यमिति, तत्रोभयत्राऽप्रामाण्यं त्वनभिव्यक्तस्फोटदशापन्नं स्फुटितबोधेन प्रोहनीयमिति परतोग्राह्यं तत् ।

अस्फोटवादिनां निगमवेदिनां तु सामग्र्युपहितस्मरणग्राह्यं तादृशबोधग्राह्यं वेति स्वतो वा परतो वा यथायोगं तदिति ।

आलंकारिकाणां तत्तस्थलीयबोधगतप्रामाण्यं तत्तदलंकारेण साक्षात्परम्परया वा समन्विता या या विशिष्टा सामग्री ह्युपमादिसमवधाना तद्ग्रहणग्राह्यं तदिति, एवमेव रसादिविशिष्टा तत्तत्सामग्री तदानीन्तना रसिकार्थबोधगतप्रामाण्यग्रहजनिकेति तद्ग्रहविषयं तत्प्रामाण्यमिति, अप्रामाण्यमत्र तत्तद्रसाभाससमवहितसामग्रीजन्यग्रहविषयमिति ।

सौगतानां ज्ञानं जीवस्वरूपम्, ज्ञानमनेकधा, तत्र परमसहायेन केवलज्ञानेन यद्वस्तु परिज्ञातं भवति तत्परिज्ञानं प्रत्यक्षम्, वस्तुषु परतो यज्ज्ञानं जायते तत्परोक्षम्, ऐन्द्रियिकं सर्वमपि परोक्षम्, तेन नाऽऽत्मसाक्षात्कारः, परोक्षे प्रामाण्यम् अप्रामाण्यं च, प्रत्यक्षे तु प्रामाण्यमेव, अप्राप्यकारित्वाज्ज्ञानस्य सर्वार्थाऽवलोकित्वं भवति, किन्तु प्रतिबन्धकाऽभावे सति प्रामाण्यम, प्रतिबन्धके सति त्वप्रामाण्यम्, अपूर्णज्ञानेन पूर्णज्ञानमनुमीयते, तत्र पूर्णत्वं प्रामाण्यं परतोग्राह्यम्, अपूर्णत्वम् अप्रामाण्यं स्वतोग्राह्यम्, परतोग्राह्यत्वम् अनुमानग्राह्यत्वमिति, एवं सार्वज्ञ्यविभूतिकेवलज्ञानिनाऽऽगमोपदेशादागमस्य प्रामाण्यं प्रत्यक्षदर्शिताप्रयोज्यमिति तद्गतप्रामाण्यं प्रत्यक्षदर्शित्वादिनाऽनुमेयम् अन्येषां स्वस्य तु स्वतोग्राह्यम् ।

प्रकारान्तरेण सौगतानां ज्ञानस्याऽर्थक्रियाकारित्वं सत्त्वं तदत्र ज्ञानस्य सम्वादित्वम्, तादृक् ज्ञानं स्वसंवेदनरूपं प्रमाणत्वं गृह्णाति, अप्रामाण्यमपि तदेव गृह्णाति, न चैकत्र द्वयोर्विरोधः, व्यक्तिभेदेन व्य-

वस्थानात्; स्वकारणजन्यया ज्ञानगतया मेयबोधात्मिकया स्वतःप्रमाणया शक्त्या ज्ञानस्य स्वतःप्रामाण्यम्, तादृक्कारणजन्यत्वं प्रमात्वस्योत्पत्तौ स्वतस्त्वम्, एवं च निर्विकल्पकस्यैव प्रामाण्यम्, सविकल्पकस्य न प्रामाण्यम्, प्रतिबन्धकाऽभावस्य कारणतावच्छेदकत्वोपगमान्न नानाकारणताविभ्रमः, ज्ञानत्वप्रमाणत्वयोरेव ग्राहिका साहजिकी शक्तिरेकैव, सा पूर्वं दोषशंकाऽनवतारे प्रामाण्यरूपा, पश्चाद् यदि दोषशंकानाशस्तदाऽपि प्रामाण्यं शक्त्यात्मकं स्वतोग्राह्यम्, स्वसम्वेदनस्याऽर्थक्रियाज्ञानस्याऽनुमानस्याऽभ्यासदशोत्पन्नज्ञानस्य च स्वतःप्रामाण्यम्, सन्देहविपर्ययादिविषयीभूतस्य तु परतःप्रामाण्यम्, प्रत्ययान्तराऽपेक्षस्यैव तस्य स्वतःप्रामाण्याद् अनवस्थाप्रसंगोऽपि न, अवयविद्रव्याऽनङ्गीकारेणैकसन्तानवर्तिवस्तुद्वयस्याऽविनाभावादेवाऽन्याऽऽलम्बनमपि ज्ञानमन्यविषयज्ञानस्य प्रामाण्यं गृह्णात्येव, नहि तत्र द्रव्यगतरूपरसगन्धादयो विभक्ताः, एकसामग्र्यधीनत्वात् सन्तानैक्यादव्यवसायाद् रूपरसादीनामैक्याऽध्यवसायेन तत्सम्वादसिद्धिः।

आर्हतानामपि तथैवमेव प्रामाण्यं तेनैव संवेदनेन गृह्यते, अप्रामाण्यमपि तेनैव गृह्यते, अविरोधस्य सौगतवत् स्वीकारात्, आगमार्थेषु विश्वाससापेक्षबोधशक्तिग्राह्यं प्रामाण्यम्, सर्वागमानां नियताधिकारिदेशकालसहकार्यादिनियन्त्रितमेव प्रामाण्यं प्रवाहस्याऽनादित्वेन सर्वथा प्रामाण्यम्, विश्वासाऽसहकृतसामग्रीबोधे त्वप्रामाण्यम्, एवम् आविद्यकं सर्वमपि ज्ञानम् अप्रमाणम्, आविद्यकग्रहस्याऽप्रामाण्यग्राहकत्वात्, अविद्यानाशे सति तु प्रपञ्चशून्यताज्ञानं प्रमाणम्, तत्प्रामाण्यं प्रज्ञप्तिग्राह्यमिति, माध्यमिकास्तत्र सर्वस्य शून्यतया शून्यमेव सर्वार्थबाधितत्वेन परमार्थरूपम्, एतत्तु योगिभिः प्रत्यक्षीक्रियते, शून्यगतं प्रामाण्यं योगिधर्मसहकृतसामग्रीग्राह्यम्, अप्रामाण्यं तु निषेधधीविषयमिति तद् अयोगिज्ञानसामग्रीग्राह्यम् प्रवदन्ति।

वेदान्तिनां निर्गुणवादिनां विज्ञानसामग्रीजन्यत्वविशिष्ट–तदतिरिक्तकरणाऽजन्यत्वं प्रमायाः स्वतस्त्वम्, प्रमात्वं गुणप्रयोज्यम्, अप्रमात्वं दोषप्रयोज्यम्, दोषस्त्वागन्तुकः, कारणानां निर्दोषत्वे ज्ञानस्य प्रामाण्यं स्वाभाविकम्, दोषाऽभावोऽत्र विरोध्यप्रामाण्यप्रतिबन्धतया क्षीणसामर्थ्यो हि प्रतिबन्धकाऽभावविधयाऽन्यथासिद्धः, न गुणेन दोषाभावो न दोषाभावेन गुणो वाऽन्यथासिद्ध इति, सर्वथा निर्विकल्पकस्य प्रामाण्यं सविकल्पकस्य त्वप्रामाण्यम्।

पाशुपत–सिद्धान्ति–लकुलीश–विशिष्ट–विशेष–नन्दिकेश–रसेश–प्रत्यभिज्ञान–कारुणिक–कापालिकादिशैवानां बोधस्वभावाया विद्यायाः

प्रामाण्ये स्वाभिमतयोगसामर्थ्याश्लिष्टतारकादिज्ञप्तिसामग्रीजन्यग्रहविषयत्वं स्वतस्त्वम्, अबाधस्वभावायास्तस्यास्त्वप्रामाण्यमपि तद्वदेव स्वतोग्राह्यम्। नन्दिकेशानां त्वयं विशेषो यत्-जगतो ज्ञप्तिमात्रत्वेन चित्कलायाः सदा सत्या एव ज्ञप्तिस्वरूपतया ब्रह्माऽन्वितया तयैव सर्वप्रामाण्यं सर्वाऽप्रामाण्यं च विषयीक्रियते इति। शिवाऽद्वयानां त्वयं विशेषः-शिवः प्रकाशरूपः स्वप्रकाशः स्वभिन्नप्रकाशाऽविषयः, विमर्शशक्त्या विमर्शविषयस्य शिवस्य स्वप्रकाशत्वम्, शिवस्याऽऽत्मस्वरूपस्य 'अहमि'तिस्फूर्तिविमर्शशक्तिस्तस्याः प्रामाण्यं स्वतोग्राह्यम्, अप्रामाण्यं त्वावरणशक्तिपराभूतयावदज्ञानेष्विति तदप्यावरणशक्तिसहकृतसामग्रीग्राह्यम् अप्रामाण्यमपीति। वीरशैवानामपि स्वतःप्रकाशस्वरूपं ब्रह्म वेति तदात्मकज्ञप्तेः स्वतोग्राह्यत्वम्। प्रत्यभिज्ञानिनां तु सर्वं ज्ञानं क्षणिकं क्षणिकज्ञानप्रामाण्यं क्षणिकतर्काऽधीनं निश्चयसंशयाऽऽपाद्यापादकभावसमूहात्मकं ज्ञानं तर्कात्मकं तत्प्रामाण्यं तर्काधीनम्, अप्रामाण्यमपि तर्काऽधीनम्, ज्ञानस्मृत्यपोहनशक्तिः शिवस्यैवेति सर्वस्य ज्ञानस्य प्रत्यभिज्ञानसम्विदात्मकतया तदंशस्यापि तदभिन्नतया प्रत्यभिज्ञानप्रामाण्याऽप्रामाण्ये तर्कग्राह्ये। अथ क्रमवादिनामेतेषां सर्वस्य विकल्पात्मकत्वेन तद्गतम् अप्रामाण्यं विकल्पसामग्रीग्राह्यम्, ततः क्रमेण स्फुटस्फुटतरस्फुटतमादिसंविदामपि प्रामाण्यं स्वाश्रयग्रहजनकसामग्रीग्राह्यम्, अत्र परासम्विद्रूपायाः काल्या एव परमतत्त्वरूपत्वात् तदात्मकत्वात् सर्वस्य संविदात्मिकया तया ग्राह्यत्वात् तत्प्रामाण्यमपि स्वतोग्राह्यम्, परेशस्य स्फुरणधारा पञ्चधा-व्योमेश्वरी खेचरी दिक्चरी गोचरी भूचरी चेति, तच्छक्तीनां चिदानन्देच्छाज्ञानक्रियात्मकत्वेन पञ्चविधता, काली स्वान्तर्वर्तिभावजातं बाह्यतयाभासयति, अवभासितभावजातं सत्, संविदपि सती, तत्प्रामाण्यमपि स्वतोग्राह्यम्, दोषाभिभूतसंविदप्रामाण्यं दुष्टसंविद्ग्राह्यं स्वतइति।

मीमांसकानां दोषाऽभावादेव मिथ्यात्वसंशयत्वविपर्ययत्वाद्यसत्त्वमेव, अतो ज्ञानसामग्रीमात्रजन्यत्वं ज्ञाने प्रमात्वम्, यदेव ज्ञानकारणं तदेव प्रमाकारणं तज्जन्यत्वमुत्पत्तौ प्रामाण्यम्, निर्विकल्पकप्रत्यक्षस्य प्रमाणाऽप्रमाणाऽन्यतरकोटौ स्वीकृतिः,—

अत्र कुमारिलभट्टः-प्रामाण्यस्योत्पत्तौ स्वतस्त्वम्, ज्ञप्तौ परतस्त्वम्, संशयादिस्थलेऽपि स्वतस्त्वम्, ज्ञप्तौ तु स्वप्रकाशत्वाऽनङ्गीकारः, अगृहीतप्रामाण्येन ज्ञानेन कथमन्यस्य प्रामाण्यं गृह्येत, संशयविपर्ययशंकाऽनास्कन्दितविज्ञानस्यैव प्रामाण्यात्, दूरत्वादिदोषवशाद् अप्रामाण्यशंकासत्त्वस्य प्रत्यासन्नगमनादिना निरासात्, यदि यत्नेनाऽपि न

बाधस्तदाऽपि प्रामाण्यस्य न विरतिः, दोषशंकाया अकिञ्चित्करत्वात्, मन्वादिज्ञानस्य प्रामाण्यग्राहकत्वानङ्गीकारात्, ज्ञानस्य स्वप्रकाशतया ज्ञातमेव सर्वं ज्ञानमिति तत्प्रामाण्यमपि ज्ञातमेवेति तत्र ज्ञातता स्वयम्प्रकाशा तया ज्ञानप्रामाण्यं गृह्यते, ज्ञाततप्रामाण्यार्थं न ज्ञानान्तराऽपेक्षेति नाऽनवस्था, सर्वज्ञानानामतीन्द्रियत्वेन 'तदप्रामाण्याऽग्राहिकया ज्ञातताविशेष्यकस्फटिकत्वादिप्रकारकज्ञानजन्यत्वप्रकारिकानुमित्यात्मकज्ञानजनिकया परामर्शादिघटितसामग्र्या संजायमानग्रहविषयत्वस्याऽतीन्द्रियज्ञानप्रामाण्ये सत्त्वेन स्वतोग्राह्यत्वमेवेति। आत्मसमवेतवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति धर्माऽधर्मादेरिव ज्ञानस्याऽपि तादात्म्येन प्रतिबन्धकत्वेन प्रथमम् 'अयं स्फटिक' इतिप्रत्यक्षं, ततः स्फटिके ज्ञाततायाः उद्भवः, सा च प्राकट्याभिधाना ज्ञानजन्यविषयवृत्तिपदार्थान्तरमेवेति 'ज्ञातः स्फटिकः' इतिप्रत्यक्षनिरूपितलौकिकविषयतावती प्रत्यक्षसिद्धा, तया लिङ्गेन ज्ञानं तत्प्रामाण्यं चाऽनुजन्यते, तत्र 'ज्ञाततोत्पत्तिः स्फटिकत्ववद्विशेष्यकस्फटिकत्वप्रकारकज्ञानजन्यत्वव्याप्या ज्ञातते'तिव्याप्तिस्मरणं चेत्येकः कालः, तत इन्द्रियसम्बद्धविशेषणतात्मकज्ञाततेन्द्रियसन्निकर्षव्याप्तिस्मरणेत्युभाभ्यां 'स्फटिकत्ववद्विशेष्यकस्फटिकत्वप्रकारकज्ञानजन्यत्वव्याप्यस्फटिकवृत्तिस्फटिकत्वप्रकारकज्ञाततावती इयम्'इतितादात्म्येन व्याप्यवत्तापरामर्षस्ततः 'इयं ज्ञातता स्फटिकत्वप्रकारकज्ञानजन्येत्य'नुमितिस्तया ज्ञाततालिङ्गकाऽनुमित्या प्रामाण्यं विषयीक्रियते, अतो ज्ञानप्रामाण्ये तदप्रामाण्यग्रहाजनकस्वाश्रयाऽनुमितिजनकज्ञाततालिङ्गकपरामर्शात्मकसामग्रीजन्यग्रहत्वव्यापकविषयितानिरूपकत्वं स्वतोग्राह्यत्वं घटत इति।

प्राभाकराणां ज्ञानमात्रस्य स्वप्रकाशत्वेन स्वात्मकज्ञानविषयत्वम् आवश्यकम्, ज्ञानप्रामाण्ययोर्ज्ञानान्तरग्राह्यत्वे तदर्थं पुनरित्येवमनवस्थापातः स्यात्, त्रिपुटीप्रत्यक्षस्वीकारेण ज्ञाने मितिमातृमेयेतत्त्रिकभानात् तत्त्रयोल्लेखि 'अयं स्फटिकः स्फटिकमहं जानामी'त्येवाऽऽदितो ज्ञानाकारस्य 'स्फटिकत्ववन्निष्ठस्फटिकत्वप्रकारतानिरूपितविशेष्यतानिरूपकविशिष्टज्ञानाश्रयोऽह'मि'तिबोधकतया विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वानंगीकारात् प्रथममनुपस्थितस्याऽपि प्रामाण्यस्य भानं तादृशचक्षुःसंयोगादिसामग्रीजन्यग्रहत्वव्यापकविषयितानिरूपकं सुघटं स्वतोग्राह्यमिति, 'अयं स्फटिकः स्फटिकत्वेन स्फटिकमहं जानामी'त्यादिवत् सर्वेषां ज्ञानानां समूहालम्बनात्मकतया तदप्रामाण्याऽग्राहकतज्ज्ञानग्राहकसामग्रीजन्यसमूहालम्बनव्यवसायविषयता सर्वप्रामाण्ये इति सारसिकः पन्थाः।

मुरारिमिश्राणाम् 'अयं स्फटिक'इतिव्यवसायोत्तरजायमानः 'स्फटिकत्वेन स्फटिकमहं जानामी'तिमानसज्ञानात्मकोऽनुव्यवसायस्तज्जनिकात्ममनःसंयोगादिसामग्रीजन्यतदनुव्यवसायविषयत्वं ज्ञानप्रामाण्ये वर्तते, व्यवसायजन्यमानसज्ञानेन व्यवसायतद्गतप्रामाण्ये गृह्येते, ननु व्यवसायो मानसबोधश्चेति समूहालम्बनः कथं न जायत इति चेन्न, सर्वत्र तथाऽभावात् फलबलेन भिन्नतास्वीकारात्, पूर्वं यावत्तत्सामग्र्यभावाच्चेति ।

नैयायिकानां 'स्फटिकइतिज्ञानं, प्रमा, सम्वादिप्रवृत्तिजनकत्वात्, शुक्तौ रजतज्ञानम्, अप्रमा, विसम्वादिप्रवृत्तिजनकत्वादित्येवमनुमित्या प्रामाण्याऽपामाण्ये गृह्येते, चरमं ज्ञानं त्वज्ञातमज्ञातप्रामाण्यं च, प्रमात्वस्य परतोग्राह्यत्वे बीजं तु 'प्रमात्वं यदि स्वतोग्राह्यं स्यात् तदाऽनभ्यस्तप्राथमिकस्फटिकादिज्ञानोत्तरदशायां दूरादवलोकिते स्फटिके सति 'स्फटिकज्ञानं प्रमा न वे'त्यनुभवसिद्धप्रमात्वसंशयाऽनुपपत्तिः स्यात्' तत्र स्फटिकज्ञानप्रामाण्यस्याऽनुव्यवसायेन निश्चितत्वात्, ततो ज्ञानप्रामाण्यमनुमेयमेवेति । ततः क्लृप्तेयं विप्रतिपत्तिः-'ज्ञानप्रामाण्यं,-तदप्रामाण्याऽग्राहकज्ञानग्राहकसामग्रीजन्यग्रहत्वव्यापकविषयितानिरूपकं न वे'ति । अत्रैव यावत्यो विधिनिषेधकोटयः समाविष्टा यथायथं स्वस्वरूपाणि लभन्ते इति ।

अत्रेदमुच्यते-एतेषां यथायथं क्षणद्विक्षणत्रिक्षणपर्यन्तस्थायिनां ज्ञानानां तत्तन्मताऽनुसारेण स्वसिद्धान्तितज्ञान-तत्प्रामाण्य-तज्ज्ञत्यादिरक्षणार्थं सामूहिकाऽऽलम्बिताऽनुव्यवसित-मानसबोधित-चिच्छक्तिवेदित-प्रकाशधर्मित्व-शून्यावेदितादिपद्धतिमनुसृतानामेषां नैकान्ततस्तत्स्वरूपाणि सिद्ध्यन्ति परस्परमतिव्याहतत्वात्, प्रामाण्याऽप्रामाण्यवत् तदनुयोगि-योग्यनुयोगि-प्रातिस्विकनाऽन्यतराऽङ्गतरादिसहायकृतामपि तथैव स्वतस्त्वपरतस्त्वादीनां तदङ्गादीनामपि स्वतस्त्वपरतस्त्वादिसमालम्बने सर्वेषामियमनवस्था त्वपरिहार्यैव, तत्तद्युक्तीनामपि प्रतियुक्तितर्काद्यैराभासीकरणात् सद्व्यवस्था त्वव्यवस्थैवाऽनवस्थारूपतां भजते, अतः—

प्रामाण्यगरलं पीत्वा बुद्धिगर्वप्रभाविभिः । अनवस्थामृतिक्षिप्त्यै व्यवस्थौषधमद्यते ॥ १ ॥ वस्तुतस्तु प्रकाशस्य न प्रकाशान्तराऽर्थिता । ज्ञानप्रकाशसूर्यस्य न ग्रहान्तरकाशिता ॥ २ ॥ राहुग्रासक्षणेऽप्यर्के नाऽन्यप्रकाशवेदिता । स्वल्पप्रकाशभावोऽपि स्वतस्तस्य प्रकाशिता ॥ ३ ॥ यद्येवं चेत् कथं भ्रान्तिर्ज्ञानाऽर्के भासते क्षणम् ? । नैव, तत्रापि वै भ्रान्तो भागं भागोऽन्यथाऽह्वते ॥ ४ ॥ एवं चेद् भिन्नता

ज्ञानेऽन्यभुक्तस्याऽन्यथान्तता, । नैवं, स्फिततरत्वाद्यवस्थावेशान्न दूषणम् ।। ५ ।। यावतां लौकितत्त्वानामिन्द्रियादिप्रयोगतः । साक्षात्कारो भवेद् यत्र तत्रांऽशो, न तु सर्वशः ।। ६ ।। न विशेषज्ञ आत्माऽसौ यावत्सामान्यविन्न च । अक्षज्ञो हि तनूभाक् सन् राह्वविद्याभिवेष्टितः ।। ७ ।। तस्मान्मिश्रप्रकाशोऽस्य यावद्देहस्थितस्त्विह । मिश्रेणैव प्रकाशेन मिश्रप्रामाण्यमीयते ।। ८ ।। यावत्स्थायि स्वयं ज्ञानं सर्वं विषयमापकम् । स्वं वाऽन्यं वा ग्रासभावीकृत्य वश्यं प्रकाशते ।। ९ ।। नाऽन्यवश्यं न चाऽऽगन्तुधर्मं, सर्वविलक्षणम् । चिदात्माख्यां गुणाख्यां वा धत्ते यथार्थरूपि यत् ।। १० ।। साक्षी चेताः सुसर्वज्ञः सर्वविन्नित्यदर्शनः । अन्तर्यामी हृदयस्थश्चिन्निवासः सदात्मगः ।। ११ ।। यस्य भासा विभात्येव त्विदं सर्वं पराऽपरम् । यस्य ज्ञप्त्या विजानाति सा ज्ञप्तिः स्वप्रकाशिका ।। १२ ।। स्वं स्वांऽशं स्वाश्रयं स्वाश्रितस्य धर्मं निजस्य च । सर्वं गृह्णाति सर्वेषां शुक्लं कृष्णं च तद्युगम् ।। १३ ।। प्रमात्वं चाऽप्रमात्वं चित्साक्षी गृह्णाति वै ततः । साक्षी नारायणो ब्रह्माऽऽत्मनां बोद्धा हि कर्मिणाम् ।। १४ ।। साक्षिण्येव भवन्त्येव ज्ञातृभावव्यवस्थितिः । अन्योऽभिज्ञानसम्पन्नः साक्षितादात्म्यनैत्यतः ।। १५ ।। अन्यश्चाभिकशीत्येवं नैजवाक्यप्रमाणतः । नित्यज्ञस्य प्रमाग्राहः स्वल्पज्ञस्याऽप्रमाग्रहः ।। १६ ।। इत्येवं वा व्यवस्थानं द्वयोस्तादात्म्यसंस्थितेः । व्यवस्थानं तथैवाऽत्र प्रवृत्तेः सूपलम्भनात् ।। १७ ।। चिद्धर्मत्वाच्चिदात्मत्वाच्चिद्ब्रह्माऽव्यतिरेकतः । चिद्गेहत्वाच्चित्तनुत्वात् प्रामाण्यं गृह्यते चिता ।। १८ ।।

ननु कोऽयमात्मनः स्वतोग्राहकः प्रकाशो नाम ?, आत्ममनःसंयोगजन्या चिदिति चेत्, प्राप्तं पराधीनप्रकाशत्वम्, अप्रकाशत्वं सुतरामिति करणशून्यदशायां जडताप्रसंगः, सदा वा सुतरां तथाप्रसंगः, ननु प्रसंगोऽयमिष्ट इतिचेत्, तथाप्रसंगस्य कदाचिदवश्यंभावित्वेन तादृशप्रसंगात्मकमुक्त्यर्थं तत्त्वज्ञानप्रयासस्य वैफल्यम्, तत्त्वज्ञानस्य साक्षात्परम्परया वा तदुपकाराऽप्रामाण्यात्, मोक्षस्याऽऽयतिक्षणवर्तित्वेन चरमज्ञानस्य प्रासङ्गिकाणां केनाऽप्यग्राह्यत्वेन च तद्वत् तदुत्तरमोक्षस्याऽप्यग्राह्यत्वेन मोक्षप्रामाण्यस्य खपुष्पायमाणतापत्तेर्मोक्षस्यापि तथात्वं दुर्निवार्यमिति मोक्षिणोऽपि सत्त्वे का खल्वास्था तिष्ठेदिति, एवं तुल्यन्यायेन नित्यात्मनो चिद्व्यतिरेकेणाऽवस्थाने परात्मनोऽपि चाऽऽत्मत्वेन चिद्व्यतिरेकित्वं कथं नेप्यते ?, नित्यज्ञानित्वे किम्फलस्ते पक्षपातः ?, यदि चेत् सृष्टिकार्यार्थं तस्य नित्यज्ञानिता, तदाऽऽत्मनामपि स्वस्वसृष्टिकार्यार्थं कथं न चिदधीनता चिदात्मता वा चिद्धर्मता वेति,

यदि नित्यसर्वज्ञज्ञप्त्यैव जडात्मनस्तदाऽऽचक्षणे सृष्टिकार्यार्थनिर्वाह इति, तदाऽऽयातमेव परमात्मचित्संवेद्यसृष्टिस्थितिसंहारविषयकयावत्संविदां परमात्मचित्सम्वेद्यत्वमिति तदन्यथाऽनुपपत्त्या जडात्मनि तत्स्थितिश्चाऽपीति साक्षित्वे सिद्धे जडात्मनस्तदधीनत्वेन तत्तनुतयाऽवस्थानेन चिद्गतं सर्वं प्रामाण्यं साक्षिवेद्यं तदानीमिवोत्तरकालेऽपि परमात्मचिदधीनचितामपि साक्षिवेद्यत्वं चितां स्वतोग्राह्यत्वमिति ।

भ्रान्त्याऽऽत्मा मनुते तत्र चितां वै ग्राह्यता मम ।
भ्रान्तिग्राह्यं परग्राह्यमप्रामाण्यं विजोत्थितम् ॥

अथ प्रमात्वानुयोगिकस्तत्त्वविमर्शः—

इन्द्रियाण्यात्मशक्तय इति, न तानि भूतानि, गोलकानां स्थूलशरीरात्मकत्वेन स्थूले गोलकानां तत्तच्छक्तियोग्यतानिर्माणात् । दश वाऽधिकानि वा शक्तय एवेन्द्रियाणि, इन्द्रस्य स्फुर्तिशक्तयस्तानि ज्ञानविशेषाणि विषयानाहरन्ति, आत्मा–इन्द्रस्तस्य शक्तयोऽपत्यानीन्द्रियाणि । आत्मा द्रव्यं ज्ञानं च ज्ञानवांश्च, द्रव्यस्य प्रसरणशीलत्वादात्मरूपज्ञानस्य तद्धर्मज्ञानस्य गुणत्वेनाऽपि द्रव्यत्वेन प्रसरणशीलत्वाद् गोलकादिष्वागमनाद् विषयदेशं प्रति प्रसरणाच्च देशद्रव्यगुणकालधर्मभावाऽभावादिविषयकत्वाद् गाह्याकारमादाय तद्रूपाकारतयेन्द्रियगोलकप्रत्यावर्तनादात्मानं प्रति विरामादात्मने विषयाकारादिसमर्पणेनात्मनि विश्रामात्, संस्कारतया तत्त्वान्तराधायकत्वात् ततः स्मरणरूपेणाऽपि समुद्भवादात्मशक्तयो गोलकसहायकतयेन्द्रियाण्युच्यन्ते, गोलकाऽसहायकक्षणे ताः शक्तयो गोलकाऽप्राप्तौ गोलकावधि प्रसुताश्चेन् मननाऽहंकरणचिन्तनबोधनस्वापनस्मरणविपर्ययनमोहनविकल्पनसंशायननिर्णायनादिसंज्ञा लभन्ते इति मनआदीन्यपि नाऽऽत्मज्ञानातिरेकितत्त्वान्तराणि, नहि ऋते चिदात्मानं तेषामस्तित्वम् 'भुक्तस्य योऽणीयान् भागस्तन्मन'इत्यौपनिषदं वचः, । 'प्रकृतेर्महाँस्ततोऽहंकारस्तस्माद्गणश्च षोडशकः' इतिसांख्यवचनं च सति भोजने जीवनवृत्तेर्हि बलाऽभिन्नप्राणनाख्यशक्तेरणीयस्त्वसन्ताने सत्येवाऽऽत्मज्ञानशक्तेर्मननस्योपजीवनाज्ज्ञानशक्तेरेव मननाख्याया मनोऽभिधानात् । प्राणोऽपि न वायुः, हृदयाऽवयवस्थाऽऽत्मीयौजःपरिणामात्मकयोगात् प्राणनाख्यजीवनशक्तिरेव हृदयांश इतियुक्तत्वात् या प्राणन्ती हृदंशस्य क्रियाजनिका भवति सा जीवनयोनियत्नानुगुणा प्राणनशक्तिः । न चैवं जीवनयोनेर्व्यर्थत्वमिति वाच्यम्, जीवनयोनेरात्मनि सत्त्वात् तज्जन्यबलाऽनुस्यूतप्राणनशक्तेर्हृदंशे सत्त्वात् प्राणने एव प्राणप्रयोगात्, मननादौ च मनआदिप्रयोगात्, कपिलशास्त्रोक्तायाः प्रकृतेरत्राऽऽत्मनः सजातीया प्रकृष्टोत्तमा कृतिः कार्यं यज्-

ज्ञानात्मकं तस्या ज्ञानात्मिकायाः प्रकृतेर्भेदा एव महत्तत्त्वादयो न तु तत्त्वान्तरम्, महत्तत्त्वाऽहंकारमनआदीनां जडात्मकत्वाभावाच्चैतन्यरूपत्वात् सविषयकत्वाज्जडतो व्यावृत्तेः। गुणा अपि सत्त्वं–सत्त्वज्ञानं सात्त्विकप्रकाशात्मकमेवेति, रजः–रजोभावो रागस्तृष्णा ज्ञानस्यैव रञ्जनात्मकोंऽशः, येन ज्ञानेन रज्यते। तमोऽपि तामसो भावः क्रोधनमूर्छनाद्यात्मको वा सूक्ष्मज्ञानात्मको धूम्रभावापन्नो ज्ञानप्रवाहः। तस्मात् त्रिगुणं गुणत्वाद्गौणत्वादात्मनि समाश्रयान्न ज्ञानातिरिक्तं तत्त्वं त्रिगुणमिति। सांख्ययोगपुराणानां त्रिगुणं मायेतिवचनानि त्वात्मनि मोहात्मकज्ञानपराणि विषयमुग्धतात्मबोधकानि, 'मां यान्ति'त्याकारकविषयाकृष्टिप्रतिसंक्रमितज्ञानांश एवेति न तत्त्वान्तरं त्रिगुणम्। का तर्हि माया?, या त्रिगुणकारणीभूता त्रिगुणसाम्यावस्थात्मिका चेति चेत्?। सा त्वात्मशक्तिः परमात्मशक्त्यंशरूपैवेति परमेशस्य प्रकाशप्रवृत्तिनियमनगुणात्मिका यथा तथाऽऽत्मनः प्रकाशप्रवृत्तिनियमनगुणात्मकज्ञानमेव शक्त्यपराऽभिधाना मायेति। ननु कस्मात्तर्हि पृथिव्यादिपञ्चभूतानामुत्पत्तिरिति चेत्?। परमेशेन स्वतेजःस्वरूपाच्चिदाकाशाच्चिदाकाशात्मकाऽक्षरतेजसां मिथो नैविड्यादिसमुद्भवच्छायात्मकमायायाः प्रकाशप्रवृत्तिनियमनधर्मिकाया एव चिदाकाशे स्वावच्छिन्नकाशप्रतिभासनात् तदाकाशादनिलाऽनलसलिलाऽवनिसमुत्सर्जनात्परमात्मनस्तेजोरूपच्छायारूपशरीरांशान्येव भूतानि 'यतो वेमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रत्यभिसंविशन्ति'चेत्यादिश्रुतिवर्णितानि बोध्यानीति न मायाख्यं परमेश्वरशक्तितो भिन्नं किञ्चित् स्वतन्त्रं तत्त्वं वर्तते, तमोमोहमहामोहतामिस्राऽन्धतामिस्राणि त्वविद्यास्मितारागद्वेषाभिनिवेशात्मकान्यज्ञानपरिणतय एवेति न छायांऽशतो तत्त्वान्तरं मायेति। 'अजामेकां लोहितशुक्लकृष्णा'मितिश्रुतिरपि नित्यकिरणनैविड्यनान्तरीयकच्छायाया एवाऽजात्वं त्रिरूपत्वं मृदुमध्याऽधिमात्रतया वर्णयति। तदेव परमेशशक्तिमत्त्वं मायायाः। 'पादोऽस्य विश्वा भूतानि' 'त्रिपादस्याऽमृतं दीवि'चेत्यक्षरब्रह्मलोकैकांऽशा विभूतिः स्थूलभावापन्नच्छायाया एवैकांऽशे सृष्टिभावं ज्ञापयति। न स्वस्या मायायाः स्वातन्त्र्यम्, तस्मादेनां परमेशशरीरात्मिकामपि श्रुतिर्गमयति–स्वगुणशक्त्यैश्वर्यार्थाऽक्षरमुक्तमायेश्वरात्मभूतादिसर्वमपि परमेशशरीरं व्याप्याऽधीनपरतन्त्रस्वनान्तरीयकस्वस्थितिस्थाप्याऽस्तित्ववन्ति सर्वाणि परमेशांशतत्त्वानीति न स्वतन्त्रतत्त्वान्तरं मायेति वेदवैदिकवाक्यानामयमर्थोऽवगन्तव्यस्तात्पर्यविषयत्वेनेति।

मार्कण्डेयादीनां युगयुगान्तरीयमहाप्रलयप्रदर्शनात्मकमायायाः प्रदर्शनं तन्मार्कण्डेयस्य ज्ञानसृष्टिरेव परमेशसंकल्पकृतेति ज्ञानात्मिकैव माया। श्रीकृष्णभगवता स्वमुखे मात्रे ब्रह्माण्डदर्शनम्, वामनभगवता बलये स्वविराड्रूपदर्शनं च, तद् यशोदाया बलेश्च ज्ञानप्रवाहे भगवत्स्वरूपविषयीकरणतात्मकमायैव, अत एव 'रूपं रूपं प्रतिरूपो बभूव' 'इन्द्रो मायाभिः पुरुरूपमीयते'इत्यनयोरेकवाक्यतया परमात्मेन्द्रः स्वसंकल्पात्मकमायाभिः पुरुरूपवान् भवतीत्येवमात्मेन्द्रोऽपि मायाभिर्ज्ञानात्मकसंकल्पैः पुरुरूपाणीयते स्वप्नजाग्रदादाविति, शुक्तिरजतमित्यादावपि भ्रमात्मिका मायैव बोध्या। विचित्राश्चर्यजनकत्वं विचित्रार्थकरत्वं ज्ञाने मायात्वम्। अतद्वति तत्प्रकारकत्वं, अन्यत्राऽन्यधर्मावभासः, असम्यग्ज्ञानत्वं, चेत्यादिकमपि तत्रैव ज्ञाने घटते। अविद्यात्वमपि तत्रैव घटते। अत एव मायामारीचस्य मायाजालंधरशंकरस्य देहान्तरधर्तृत्वम् अस्मितामात्रात्ज्ञानात्मकादेव। सौभर्यादीनां देवानां भूतादीनां च ज्ञानात्मकाऽस्मितारूपमायया बहुरूपधर्तृत्वं घटते। मन्त्रादावपि स्वात्मज्ञानसाध्यरूपान्तराऽस्मिताख्यसूक्ष्मचैतन्यस्य साधितसंस्कारविशिष्टस्य लक्ष्यैकतानस्य स्वरूपान्तरमाभिचारिकं देवतारूपं डाकिन्यादिप्रतिमेवं संभवतीति परकायप्रवेशात्मकं तत्प्रवेशात्मकं च मायया जायते। तस्मात्ज्ञानान्माया न तत्त्वान्तरम्।

भगवद्भक्तावावरणकर्तृत्वं मायात्वमिति सुधासिन्धौ श्रीहरिणाऽभिहितम्, बन्धकर्त्र्यविद्या मायेति वल्लभाचार्येणप्रोक्तम्, सदसत्तदुभयभिन्नमनिर्वचनीयाऽविद्या मायेति शंकराचार्येणोक्तम्। राधात्मिका शक्तिर्माया, स्फूर्तिर्माया, शिवा माया, तमो मायेति तत्तन्मतेऽभिहितम्। माया–अज्ञानमित्यनर्थान्तरम्। अज्ञानम्–अपूर्णज्ञानम्, ज्ञानेंऽशे तत्त्वभंशे चाऽतत्त्वम्, तथा च तत्त्वाऽतत्त्वात्मकं ज्ञानमज्ञानमयं माया, सा तमोमय्युक्ता· तमो नामांऽशेऽतत्त्वस्याऽनुस्यूतता, नामसत्वम् अन्धकारः, तच्च सत्यपि प्रकाशेंऽशेऽप्रकाशत्वम्, धर्मे वा संसर्गे वा धर्मिणि पदार्थे याथार्थ्येऽपि भागेऽयाथार्थ्यम्, अन्तत आकांक्षाभास्यसंसर्गे वैपरीत्यमिति तत्प्रयुक्तो बोधोऽपि भ्रान्त एव। दोषसत्त्वे वस्तुभासोऽप्यभासरूपो माया, सर्वथाऽनवभासोऽपि मायैव, सौषुप्तं चानवभासनं मायैव, मूर्छायामपि यदनवभासनं तन्माया, यद्विरहेऽनवभासेऽपूर्णत्वं तत्तस्योत्तेजकम्, सृष्ट्यात्मनामियं स्थितिः। ब्रह्मगतानां तु प्रकाशांऽशे मृदुत्वं माया, अधिमात्रत्वं ब्रह्मेति। सार्वज्ञ्यस्याऽवस्थान्तरं स्वैच्छिकम्। तदानीं सार्वज्ञ्यांशे मृदु

चेत्, तदानीं सा माया तदैच्छिकी न तु बन्धकर्त्री, न परमेशभक्तिरोधयित्री, न चाऽमुक्तत्वसम्पादयित्री, न:ऽऽत्ममुक्तस्वभावहन्त्री, किन्तु स्वरूपतः सार्वज्ञ्यसूक्ष्मभावव्यवहार्यैव, तथा च सर्वत्र प्रकाशांऽशे मार्दवं मायेत्यपि सुवचम्, मृदुत्वं च सौकुमार्यमान्द्यसाधारणम्, सौकुमार्यं मुक्तादीनां सार्वज्ञ्ये, सृष्टिस्थात्मनां तु सार्वज्ञ्ये मान्द्यमिति, मान्द्यं त्वंशे तत्त्वाऽनवभासनरूपं माया, सौकुमार्यं त्वंशे तत्त्वाऽनवभासनरूपं न, किन्तु सर्वांशे सार्वज्ञ्येऽधिमात्रतानपूर्वावस्थैवेति न सार्वज्ञ्यहानिः, न च मायाऽऽपत्तिः, न ह्येतावताऽज्ञानं वा संसारो वाऽसार्वज्ञ्यमिति, नांऽशे विपर्ययो वा विकल्पो वा मिथ्यात्वमिति वेति, ततो ज्ञानमृदुत्वं मायेति सर्वतन्त्रीयज्ञाने सुघटम्।

ननु मनसो ज्ञानात्मकत्वेऽन्तःकरणाऽनंगीकारे मध्यद्वाराऽभावेन सर्वज्ञानानामेकदोत्पत्त्यापत्तिरिति चेन्न। ध्यानात्मिकाया वृत्तेः स्वतन्त्रत्वात्, या वृत्तिर्ध्यानसहकृता, तया वृत्त्या तदिन्द्रियजज्ञानं भवति, अत एव शताऽवधानिनां यद्यद्गोलकीयवस्तुसाकांक्षं ध्यानं सहभासते तत्तद्ध्यानसहकृतं तत्तद्गोलकगतं वृत्त्यात्मकं तत्तज्ज्ञानं तत्तद्विषयभासात्मकं भवति, तथा च विशेषज्ञानात्मकं ध्यानं स्वतन्त्रं सुषुप्तावपि मूर्छायामपि यत् स्वात्मविषयकं नित्यमनुवर्तते तद्विशेषतया द्रव्यात्मकं तथा समर्थं यत् स्वप्नेऽपि जाग्रत्यपि तत्तद्विशेषप्रवाहात्मकं यत्प्रणालीसुप्रसंप्रसरति तत्प्रणाल्या तदिन्द्रियेण तज्ज्ञानं विशेषतो जायते, एकया द्वाभ्यां तिसृभिस्तदधिकाभिः प्रणालीभिर्वा ध्यानं प्रसरत् सदेकेन्द्रियजं द्वीन्द्रियजं त्रीन्द्रियजं दशेन्द्रियजं वा तावद्विषयकं ज्ञानं प्रवर्तते, यत्राऽप्रसरो ध्यानस्य तज्ज्ञानं न जायते, इत्येवं ध्यानद्रव्ये स्वात्मनिहितस्वशक्तिमत्त्वेन व्यवस्थानात्, मनसो वाऽन्तःकरणान्तरस्य स्वतन्त्रद्रव्यत्वकल्पनाया अनावश्यकत्वात्, अत एव मनइन्द्रियवादिनां मनोऽन्तःकरणवादिनां च 'धीर्ह्रीर्भीः सर्वं मन एवे'तिश्रुत्याऽपि मनसोऽभिधानानां बहूनामपि ध्यानविशेषे तात्पर्यात् समन्वयो नेयः।

अथापि पृथिव्या जडत्वात् कारणपरम्परया चिदाकाशस्यापि जडतापत्तिरिति चेन्न, नहि संख्यापरिमाणपृथक्त्वसंयोगविभागसुखदुःखधर्माऽधर्मादिगुणानां जडत्वे तत्कार्यकस्याऽऽत्मनो जडत्वम्, तत्राऽनैकान्तिकात्, यद्गुणकं कारणं तद्गुणकं कार्यमित्यपि न, सुखादावनैकान्तात्, नहि कारणगुणधर्मादयः कार्ये प्रवर्तन्ते, कार्यस्यांशिकतयाऽऽत्मनो नित्यत्वं व्यापित्वं चेति कार्ये सुखदुःखादाव-

नंगीकारात्, अंशकार्यस्य तद्गुणवत्त्वेंऽशत्वव नियामकम्, यदंशत्वं नाम येन केनापि गुणधर्मादिना राहित्ये सत्यपि येन केनापि तद्गुणधर्मादिना योग्यतावत्त्वम्, जडाकाशे चैतन्यविरहेऽपि व्यापकत्वं निरावरणत्वं शाश्वतिकाऽस्तत्वमवकाशरूपत्वं चिदाकाशीयतत्तदंशीयधर्मादिवत्त्वेनांऽशत्वम्, कारणधर्माद्यसजातीयधर्मादिमत्त्वं तु कार्यत्वनियतं तत्तद्विशेषकार्यत्वमेव जाड्यादौ नियामकम्, तत्तद्विशेषकार्यत्वविषये तत्कार्यत्वव्याप्यं जाड्यमपि तावदेव स्थूलावस्थात्मकं तदवस्थालयभावमापन्नं पृथिव्या जाड्यं पार्थिवत्वे लीने लीनमेव, ततो जलीयजाड्यमवशिष्यते, तदपि तेजोलये लीनं, ततो वायुजाड्यमवशिष्यते तदपि वायौ लीने लीनमिति गन्धरसरूपस्पर्शास्तज्जाड्यव्याप्यगुणा जाड्ये लीने लीनीभवन्तीति विलक्षणजाड्यमेव तत्तद्गुणनियामकम्, अथाऽऽकाशजाड्ये लीने शब्दोऽपि लीनो भवति, ततश्चिदाकाशस्थौल्यं विलक्षणमवशिष्यते, तदेवं व्यवस्थानान्न यद्गुणकं कार्यं तद्गुणकं कारणमिति महाभूतेषु नित्या व्याप्तिरनैकान्तात्, ततश्च न मायामहदहंकारमनसां सिद्धिर्न वाऽहंकारात् षोडशकगणस्याऽपि समुत्पत्तिसिद्धिः। ननु कथं तर्हि तन्मात्राणां भूतादित्वमिति चेन्न। नहि भूतानां तन्मात्रादित्वं, किन्तु तन्मात्राणामेव भूतादित्वम्, भूतानां तु चिदाकाशादित्वमेव, भूताकाशस्तु स्वयमवकाशरूपस्तेजःप्रकाशचैतन्यविधुर एवाऽऽविर्भवति स्थौल्यं लभते तदाऽऽविर्भावाधिकरणसद्भावे एव शब्दस्याऽऽविर्भावात् तथैव भूताकाशगुणत्वाच्छब्दस्याकाशवद्व्यापकत्वाच्छब्दस्य सूक्ष्मावस्थया यावदाकाशद्रव्यभावित्वेनाऽऽकाशगुणतया व्यापित्वं चाकाशसमकलेवरत्वं शब्दस्याऽङ्गीकर्तव्यम्, स्थौल्यव्यञ्जकाऽभावे स्थूलेन्द्रियाऽग्राह्यत्वेऽपि सौक्ष्म्यव्यञ्जके सद्भावे सौक्ष्म्यव्यञ्जकत्वं सूक्ष्मग्राहकत्वमपि प्रवर्तते, स्वप्ने शब्दाभावेऽपि स्वाप्नीयशारीरकर्णेन स्वाप्नीयसूक्ष्मशब्दश्रवणाऽनुभवात्। तत्र सूक्ष्मकर्णवृत्तिगतध्यानवृत्त्या तच्छब्दानुभवात्। तस्माच्छब्दः सार्वदिकाऽऽकाशतन्मात्रात्मकाऽऽकाश कार्यमेवेति तथा स्पर्शरूपरससौरभादयोऽपि बोध्याः, त एते व्याप्यवृत्तयः, स्थौल्यसौक्ष्म्यावस्थाभेदेन स्वकारणेषु वर्तन्ते, वस्तुस्थित्योपयोगो यथा तथा वा भवतु किन्त्वस्तित्वे व्याप्यवृत्तय एव, गन्धत्वरसत्वरूपत्वस्पर्शत्वशब्दत्वादिसामान्यभावैर्व्याप्यवृत्तय एव, नान्तरीयकसामान्यैस्तत्तदधिकरणानुस्यूतानां तेषामव्याप्यवृत्तित्वं परिच्छिन्नत्वात्मकमेव स्वोकार्यम्, सामान्यधर्मेण व्यापकत्वे विशेषधर्मैरव्यापकत्वेन विरोधो विशिष्टभावे विशेषणभेदेन भेदस्य सर्वैरङ्गीकृतत्वात्, संयोगस्या-

व्याप्यवृत्तित्वं द्रव्यावयवविश्लेषवलात् कल्प्यते तथा गन्धादीनामपि तदन्विताऽवयवविशेषभेदादव्याप्यवृत्तित्वं परिच्छिन्नतात्मकं सुदुष्परिहारम्, गुणानां स्थौल्यं तु तदाश्रये तत्तदुत्तेजकसमवधाने तत्तदाश्रयस्थितिक्षणे सम्पाद्यम्, ध्यानातिरिक्तज्ञानानां तत्तदिन्द्रियप्रणालिकासूत्तेजकसमवधानेनोत्पत्तेः सविषयकत्वसमुत्पत्तिदशायामेव निर्विकल्पकत्वं ततो धारावाहिकतया सविकल्पकत्वं विशिष्टतया वस्तुबोधात्मकत्वं फलाधायकतया सप्रयोजनकत्वं च भवत्येवेति। सविषयाणां सहोत्पन्ननियमस्य तत्र मते निर्विषये निर्वाणेऽनैकान्तात्, निर्विषयत्वांऽशांऽङ्गीकारे त्वेकस्यैवाऽवस्थाऽऽनन्त्यस्वीकारे परस्पराऽपेक्षितज्ञानविषययोरन्योन्याश्रयप्रसंगात्। निर्विषयत्वे स्वोत्पत्तौ स्वस्यैव निर्विषयस्यैकक्षणे एव लब्धिवत्त्वे त्वात्माश्रयप्रसंगात्। मन्मते तु कारणान्तरस्य चेतनस्य नित्यत्वादुत्तेजकानां समवधानांऽगीकारान्नात्माश्रयादिदोषः।

तच्च ज्ञानमिन्द्रियप्रणालिकया स्थूलतामापन्नं केवलं प्रत्यक्षमिति। तदेव हेतुसहकृतं चांशे परोक्षमपि प्रमात्मकं चेदानुमानिकमनुमित्यात्मकम, तदेव च शब्दशक्त्यादिसहकृतं चेच्छाब्दमिति, तदेव सादृश्यादिसहकृतं चेदुपमानजन्यमुपमेति, तदेवाऽर्थादापद्यते चेदर्थापत्तिकमिति, तदेव चेष्टया जायमानं चेच्चैष्टिकमिति, चेष्टाया अर्थापादनस्य सादृश्यस्य शब्दस्य वा हेतुविधया यज्ज्ञाने कारणत्वेन स्थौल्यमापाद्यते चेष्टादिभिस्तदातत्सर्वमप्यानुमानिकमिति, कार्यसांकर्येऽपि कारणाऽसांकर्याद् व्यवहारः। अथ संस्कारेण स्मर्यते स्मरणेनाऽपि स्मर्यते, तत्तु संस्कारात्मकविलक्षणकारणकत्वात् साक्षात्काराद्यनुभवाद्भिन्नं स्मृत्यात्मकमेवेति याव संस्कारस्तावदुद्बोधकसत्त्वे जायते तदुद्बोधकाऽभावे न जायते न्यूनाधिकं वा वस्त्वंशशून्यविकल्पात्मकं जायते, तत् क्वचित्प्रमात्मकं क्वचिदप्रमात्मकम्।

प्रमात्वं यथावस्थितव्यवहारानुगुणज्ञानत्वम्, सम्यगनुभवत्वम्, तद्वद्विशेष्यकतत्प्रकारकज्ञानत्वं, विशिष्टज्ञानत्वं, यावद्विषयविषयकत्वं, वा। वस्तुतस्तु यावदनुस्यूतसमष्टिव्यष्टिचराऽर्थज्ञानत्वं प्रमात्वम्, यावत्योऽनुस्यूताः विशेषणविशेष्यसंसर्गभावापन्ना याः समष्टयः साजात्यानि व्यष्टयो वैजात्यानि चराश्च संसर्गाः अर्थाः वस्तूनि तेषां ज्ञानत्वं प्रमात्वम्। यथार्थस्मृतेः प्रामाण्यम्। तर्कस्यापि प्रामाण्यम्। प्रत्यक्षमनुमाशाब्दमुपमाऽर्थापत्तिश्चैष्टिकं यौगिकं प्रतिभा सविकल्पकं स्मरणं प्रत्यभिज्ञा स्वप्नं ध्यानं तर्कः प्रमारूपाणि। अथ संशयो विपर्ययो विकल्पो भ्रमो निर्विकल्पकमविद्याऽज्ञानं भयं प्रति

भासो वैवर्त्तिकं मौच्छिकमान्ध्यमभानमाहार्यं व्याघातादि चेत्यनेक-रूपमप्रमात्मकम् ।

ध्यानवृत्तिसहकृतेन्द्रियजन्यं ज्ञानं प्रत्यक्षमस्मदादीनाम्, ध्यानवृत्त्यात्मकं समाधिभावापन्नं ज्ञानं मुक्तादीनाम्, शाश्वतप्रत्यक्षं परमेश्वरस्य । सद्धेतुसहकृतपरामर्शादिजन्यज्ञानमनुमितिः । सादृश्य-सहकृतकरणजन्यं ज्ञानमुपमा । शब्दसहकृतशक्त्यादिजन्यज्ञानं शाब्द-बोधः । विगुणार्थकृताऽर्थान्तरापादनमर्थापत्तिः । विलक्षणक्रियेङ्गित-जन्यज्ञानं चेष्टा । योगाभ्याससंयमजन्यज्ञानं समाधिजं वा यौगिकम् । चिन्तासहकृतज्ञानं प्रतिभानम् । धारावाहिद्वितीयादिज्ञानं सविकल्प-कम् । संस्कारमात्रजन्यज्ञानं स्मरणम् । संस्कारेन्द्रियादिजन्यज्ञानं प्रत्यभिज्ञा । निद्राकालीनेन्द्रियगोलकाऽनपेक्षान्तरज्ञानं स्वाप्नम् । सततमात्मीयज्ञानं ध्यानम् । व्याप्यप्रसक्त्या व्यापकप्रसक्तिज्ञानं तर्कः । तान्येतानि प्रमारूपाणि तेषु सर्वत्र यावन्तोऽनुस्यूता ये ये विशेषण-तया विशेष्यतया संसर्गतया वस्तुविशेषाः समष्टिरूपा वा व्यष्टिरूपा वाऽन्यूनाऽनतिरिक्ततया भासन्ते तज्ज्ञानत्वस्य तत्र सत्त्वात् प्रमा-त्वमेव ।

अंशेऽपि तादृशप्रमाभिन्नज्ञानमप्रमा. यत्र ज्ञाने विशेषणस्य विशेष्यस्य संसर्गस्य वा वस्तुनः समष्टितया व्यष्टितया वा विषयतया भानं नास्ति तत् पिण्डात्मकमपि ज्ञानमंशतोऽपि प्रमाभिन्नम् अप्र-मेति । यथा वर्णमेलनं पदं परमाणुमेलनमवयवी क्षणमेलनं घटि-कादि तथा तत्तदंशज्ञानमेलनं प्रमाऽप्रमादि । तस्मादेकविषयकं ज्ञान-मेकम्, बहुविषयकं ज्ञानमनेकम् अनेकांशज्ञानघटितं च । समूहा-लम्बनादिकमपि तथा । अथ संशये विरुद्धकोटिद्वयाऽनुस्यूततयैक-स्याः कोटेः संसर्गस्य वस्त्वनुस्यूततया तद्विषये तस्मिन् प्रमाभिन्न-त्वादप्रमात्वम् । विपर्ययेऽतद्रूपप्रतिष्ठत्वाद् रूपमिथ्यात्वेन तद्रूप-विषयत्वाऽभावात् सर्वथाऽप्रमात्वम् । विकल्पस्य वस्तुशून्यत्वाद् वस्त्वन्योन्यथत्वात् सर्वथा प्रमाभिन्नत्वम् अप्रमात्वम् । जपाऽन्तिके रक्तारोपिते स्फटिकादौ वृत्त्या रक्तरूपारोपाद् वास्तविकसंसर्गाभा-वाद् रक्तस्फटिक इति ज्ञानस्याऽऽरोपात्मकत्वाद् भ्रमस्यांऽशेऽप्रमा-त्वम् । वास्तविकसंसर्गाद्यविषयकज्ञानस्य भ्रमत्वात् । निर्विकल्पकस्य प्रथमक्षणीयवस्तुविषयकत्वेऽपि तत्र तत्तत्सांसर्गिकसंसर्गस्याऽविषय-त्वाद् वैशिष्ट्यानुस्यूतत्वविरहात् तत्तत्सांसर्गिकसंसर्गांशे प्रमात्व-भिन्नत्वादप्रमात्वम् । अंशज्ञानानामंशिज्ञानस्वीकाराद् विशिष्टज्ञानस्य विशिष्टवैशिष्ट्यज्ञानस्य महावाक्यार्थबोधादेरपि तथापद्धत्या स्वीका-

वनमहं मौनी मूको वेति ।। न किञ्चिदहं याचेऽतो मेऽर्था दीयन्तामिति ।। न कश्चिन्मे सिद्धान्तस्तथापि अद्वैतं तत्त्वं मन्ये इति ।। अवेद्यं ब्रह्म तथापि तद्वेदनान्मोक्ष इति ।। अत्र सर्वमेव धातकेन प्रबलेन यद् घात्यं तद् अप्रमा, विरुद्धेऽपि त्यागभागपूर्वकेऽविरोधे सति प्रमात्वम्, स्वस्य स्वीयाऽज्ञातत्वम्–अर्थवादः, अन्यार्थे स्वावतारादिबहुत्वे प्राशस्त्ये प्रमात्वात् । खण्डमौनिमूकत्वात् । याचनान्तरशून्यत्वादप्यविरोधे प्रमात्वम् । सिद्धान्तान्तरशून्यत्वाद् इति । किंचिदंशेऽवेद्यत्वाद् ब्रह्म इति ।। इत्येवमंशे प्रमात्वम् ।। विरुद्धांशापसारणात्, विरोधांशेऽप्रमाऽपि ।

४ उक्तसन्यासः–उक्तप्रयोगस्य न्यासः । यथा अम्बरं मेघवत् आतपाऽदर्शनात् । अत्र प्रतिवाद्याह–रात्रावन्धकारेऽप्यातपादर्शनान्न तेनाऽम्बरे मेघसिद्धिरिति । अत्र वाद्याह–नाहं प्रवच्मि अम्बरं मेघवदिति, किन्तु वस्त्रं कृष्णमिति, अशुक्लत्वादिति । अत्र प्रयोगस्य सर्वथा त्यागेऽप्रमात्वम्, द्वितीयप्रयोगेऽपि व्याप्तिबलादि चेत् प्रमा, नान्यथा, वादो तु निगृह्यते, प्रतिवादी वा निगृह्यते, निग्रहाधीनाऽप्रमेति ।।

५ साधनान्तरम्–परोक्तदूषणोद्दिधीर्षयाऽन्यहेतुकरणं विशेषणप्रक्षेपो वा । यथा 'शरीरम् आत्मवत् क्रियावत्त्वा'दित्याभिहिते प्रतिवाद्याह–क्रियाया घटिकायन्त्रेऽपि सत्त्वात् तत्राऽऽत्माऽभावाद् व्यभिचारः । वाद्याह–चेष्टावत्त्वमत्र हेतुर्न क्रियावत्त्वम्, अथवा प्रयत्नजन्यक्रियावत्त्वं विशेषो हेतुः । पक्षोऽपि प्राणच्छरीरम् । तेन शवे न स्वरूपासिद्धिः ।। तथा च पूर्वहेतुज्ञानं वा व्याप्तिज्ञानं भ्रमोऽप्रमा, ततो हेत्वन्तरे व्याप्तिज्ञानं प्रमेति ।

६ अर्थान्तरम्–प्रकृताऽनाकांक्षितार्थाऽभिधानम् । 'परमात्मा सकरणकः, ब्रह्माण्डघटनावत्त्वादि'त्युक्ते । प्रतिवाद्याह–ब्रह्माण्डघटनावत्त्वं तु पञ्चभूतेषु, तत्र सकरणकत्वं नास्तीति । वाद्याह–ब्रह्मपदं नपुंसकलिङ्गम्, नपुंसकस्याऽण्डो नास्ति, अण्डं तु पक्षिणः सरीसृपादेश्च पुरुषस्यापि । करणश्च कश्चिद् राजाऽभवत् । सहस्य स आदेशः । कम्प्रत्ययश्चेति । अकारस्य पञ्चमीविभक्त्येकवचनम् आत्, मीयते मा । सः परमश्चाऽऽत्मेति । इत्येवं सर्वेऽर्थाः प्रकृतेऽनाकांक्षिताः, तान् प्राह–प्रतिवादिन उद्घाटारोहणार्थं दोषविस्मरणार्थं च ।। अत्र दोषोऽनाकांक्षितार्थश्चाऽप्रमा । साकारत्वकर्तृत्वश्रुतिबलकव्याप्तौ तु प्रमैव ।। एवं शब्दो नित्यः अस्पर्शत्वादित्यत्र प्रतिवाद्याह–अस्पर्शत्वं स्पर्शेऽपि व्यभिचरितम् । वादी दोषमेनं विस्मारयितुम् उद्घाटमाह–हेतुर्नाम हिनोतेर्धतोस्तुनिप्रत्यये कृदन्तम्, पदं नामाऽऽख्यातोपसर्गनिपाताः, अभिधेयस्य क्रियान्तरयोगाद् विशिष्यमाणरूपः शब्दो नाम वृक्षो वृक्षमित्यादिः, कारकसंख्या-

विशिष्टक्रियाकालयोगाभिधायि आख्यातम्, धात्वर्थमात्रं च कालाभिधानविशिष्टम्, प्रयोगेषु अर्थात् अभिधानरूपा निपाताः, उपसृज्यमानाः क्रियावद्योतका उपसर्गा इत्येवमादि अनाकांक्षितव्याकरणविषयमवलम्ब्य वदन् प्रतिवादिनम् उद्वाटं गमयन् प्रवृत्तदोषं विस्मारयन् शाठ्यम् अर्थान्तरं करोति स्वीयपक्षीयदोषोद्धाराऽसमर्थं इति। अत्र दोषोऽप्रमा, अनाकांक्षितमपि प्रकृतप्रयोगेऽप्रमेति क्वापि प्रकृते सिद्धिः प्रमा नास्ति ॥

७ निरर्थकम्–अवाचकपदप्रयोगः। वाचकत्वं शक्त्या लक्षणया परिभाषया वा, तदभावेऽवाचकत्वम्। ब्रह्म व्यापकं सर्वत्र वृत्तिमत्त्वादित्यत्र, प्रतिवाद्याह–बरहमाः वयपकः सरवतर वरतमतवाच्चेति सर्वमर्थशून्यं कथं प्रयुज्यते। वाद्याह–शक्तिमच्छब्दाः प्रयुज्यन्ते न त्वशक्ता वर्णा इति। अवाचकमपि शब्दशास्त्रविरुद्धस्वरूपं निग्रहस्थानम्। कृत्तद्धितसमाख्यातलकाराऽऽत्मनेपदपरस्मैपदसकर्मकाऽकर्मकलिंगवचनविभक्तिवर्णादेशागमप्रभृतीनां विपर्यासन्यूनतातिरेकादयः, अनभ्यस्तव्याकरणादीनाम् उच्छृंखलवचनान्यपि निरर्थकानि। एतानि शक्त्याद्यभावात् कस्मिँश्चिदप्यर्थे न प्रमाणानि, स्वात्मनि प्रमाणान्यपि महावाक्यार्थे न प्रमाणानि। निरर्थकं सर्वम् अप्रमा। उक्तानुमानं सव्याप्तिकं प्रमा ॥

८ अविज्ञातार्थम्–यत् परिषदा प्रतिवादिना च त्रिवारमभिहितमपि न विज्ञायतेऽर्थे वाऽऽनुपूर्व्यां वा श्लिष्टशब्दमतीतप्रयोगमतिद्रुतोच्चरितमसामर्थ्यसंवरणाय प्रयुक्तं तत्। वादिना 'अहार्यो वीतिहोत्रवान् रासायनात् आन्धसिकमूवदिति'प्रयुक्तम्। बौद्धेन–पञ्चस्कन्धा द्वादशायतनानि चित्तचैत्तम्। जैनेन–अस्तिकायः पुद्गलः सप्तभंग्यश्च। पातञ्जलेन यतमानव्यतिरेकेन्द्रियवशीकारगुणवैतृष्ण्यानि। मीमांसकेन–स्फ्यः कपालः। वेदान्तिना–सुतेजा विश्वरूपः पृथग्वर्त्मा बहुलो रयिः। काणादेन–विशेष इति। नैयायिकेन–न्यायः पर्याप्तिरवच्छेदकतेति। वैयाकरणेन टि-धि-इत् संज्ञेति। ज्योतिर्विदा–क्रियः तावुरिरिति। शैवेन स्थाणुरिति। शाक्तेन मकारा इति। एते स्वस्वतन्त्रे ज्ञानार्था अपि अन्यत्राऽप्रसिद्धार्थाः ॥ एषामर्थाः–अहार्यः पर्वतः, वीतिहोत्रो वह्निः, रासायनो धूमः, आन्धसिकमूर्महानसम्। रूपविज्ञानवेदनासंज्ञासंस्काराः पञ्चस्कन्धाः, पञ्चेन्द्रियाणि पञ्चविषया मनो धर्मश्चेति द्वादशायतनानि, चित्तं ज्ञानसन्तानः चैत्तं रागादि। अस्तीति कायते शब्द्यते जीवपुद्गलधर्माऽधर्माऽऽकाशाः पञ्चास्तिकायाः, पूर्यते गलमिति पुद्गलः उपचयापचययिवस्तु पृथ्वीजलतेजोवायवः स्थावरं जंगमं चेति, भङ्ग्यः भंगाः प्रयोगाः–अस्ति च, नास्ति च, अस्ति च नास्ति च, अस्ति च वक्तव्यः, नास्ति च वक्तव्यः, अस्ति च नास्ति च वक्तव्यः, अस्ति च

पत्तिरप्रमेति, सभाक्षोभाभिभूतेन वक्त्रा पूर्णाऽप्रयोगात् स एव निगृह्यते, प्रतिवादी चेत् सभाक्षुब्धस्तर्हि स्थापनाया अनुवादे वा न्यूनत्वभावेन निगृह्यते। यत्र निग्रहस्तत्राऽप्रमा, यदंशाऽनुद्भवः स त्वंशोऽप्रमा प्रमाभास इति। यदि उद्भवः तर्हि तत एव प्रमा।

१२ अधिकम्–स्थापनायां न्यायावयवांशाधिकप्रयोगः। 'पर्वतः शैलो वह्निमानग्निमान् धूमादालोकात् महानसवद् रासायनीशालावत्' इत्यादिः। अत्र व्याप्तिपरामर्शादीनां परस्परविनिमये व्यभिचाराद्युत्थानम्, द्वयोः करणत्वे त्वेकस्याऽन्यथासिद्धता समूहात्मके व्यर्थता, तथा च सर्वथाऽप्यप्रमा, एकं प्रमा चेदन्यदप्रमा, अन्यत् प्रमा चेदेकमप्रमा, एवं प्रतिवाद्याक्षिपेत् उभयमप्रमेति। प्रत्येकस्या ऽप्रमात्वा ऽविशेषादिति भिन्नप्रयोगे तु प्रमेति।

१३ पुनरुक्तम्–निष्प्रयोजनं पुनरभिधानम्। समानानुपूर्वीकं शब्दपुनरुक्तं भिन्नानुपूर्वीकम् अर्थपुनरुक्तम् 'वह्निमान् वह्निमान् वह्निमान् वह्निमानित्यादि, अनित्यो घटो विनाशी कलशो ध्वंसी गर्गर इत्यादि। प्रतिपत्त्युत्तरमपि वचनान्निष्प्रयोजनता, अनुवादे भजने जपे कीर्तनेऽध्यापने पाठेऽध्ययने आवर्तनेऽनवगतेऽपेक्षणे ऽभ्यासेऽनुकरणे लीलायां कलहादौ तु न निष्प्रयोजनं वचनं तन्न पुनरुक्तम्। पुनरुक्तेन पूर्वाकांक्षानिवृत्तेरशाब्दबोधाद् अप्रमात्वम्, अपुनरुक्तं सप्रयोजनं प्रमा। सप्रयोजनं मुहुरुक्तमपि प्रमा, यथार्थे 'यः सर्वज्ञः स सर्ववित्'–यो विशेषज्ञानवान् सः सामान्यज्ञानवानित्येवं व्याप्त्यर्थमपि पुनरुक्तं प्रमा॥ एवम्–वह्निरुष्ण उष्णो वह्निः, बहिरस्ति गेहे नास्ति जीवन् गेहे नास्ति बहिरस्ति इत्येवमंशेऽपि निष्प्रयोजनं पुनरुक्तं तद् अप्रमा। सप्रयोजनं तु मुहुरुक्तं बोधपदं मुहुरुक्तं प्रमा। पुनरुक्तमप्रमेति॥ ननु दोषेऽर्थे कथं न प्रमेति चेत्, घातकत्वार्थे तु प्रमा, किन्तु घातकेन स्वेन स्वघात्यार्थे न प्रमेति॥

१४ अननुभाषणम्–परिषदा विज्ञातस्य वाक्यार्थस्य प्रतिवादिना त्रिरभिहितस्याऽपि यद् अप्रत्युच्चारणम्। अप्रत्युच्चारयन् किमाश्रयं परप्रतिषेधं ब्रूयात्। विदितेऽप्यर्थे तदुच्चारणाऽकौशल्यम्। विदितार्थे प्रमा, अविदिते त्वप्रमा, अनुच्चारणे सभाक्षोभो वाऽनवगतार्थता वाऽप्रतिभा कारणानि। विदितानुच्चारणे ज्ञानप्रामाण्यं न हन्यते वादिकथा घात्या भवति अननुभाषणं पराजये पर्यवसितम्॥

१५ अज्ञानम्–परिषदा विज्ञातार्थस्य प्रतिवादिना त्रिरभिहितस्य वादिनो यदज्ञानम्। वादी खल्वविज्ञाय कस्य प्रतिषेधं कुर्यात्। किं वदसि बुध्यते एव नेतिप्रश्नजिज्ञासाशब्दैरज्ञातार्थकनिग्रहो ज्ञायते।

यदि बहुवारमुक्तेऽपि न ज्ञायेत तर्हि अज्ञातविषय इतिवादिनोऽर्थज्ञानाऽनुद्भवोऽर्थभ्रमो वाऽप्रमा। प्रतिवादिनो जयः प्रमा॥ सोऽघातकोऽपि घातकवदर्थादुपपन्नइति विज्ञातार्थस्य यावत्क्षणं बलं तावत्प्रमा, परिषद्विज्ञातत्वात्, सद्दूषणमपि तत्राऽप्रमात्वं नोद्भवति, यावज्ज्ञात्वा न खण्ड्यते इति॥

१६ अप्रतिभा–उत्तरस्याऽप्रतिपत्तिः। परोक्तं बुद्ध्वाऽपि नोत्तरयति। परोक्तमनुवाद्याऽपि नोत्तरं प्रतिपद्यते, खसूचनाद्यनुतिष्ठति भूलेखनमाचरति केशविकीरं वस्त्रादिसमीकरणं मूर्धखर्जनमगुलीस्फोटनं वा प्रकरोति, पिपीलिकादिदंशवेदनाप्रदर्शनादि प्रकटयति, ताम्बूलोद्गीरणमूत्रोत्सर्जनादिमिषेण वहिर्याति। अत्र प्रतिभाऽनुत्थानं प्रतिभाऽऽभासो वाऽल्पप्रतिभा वा दूषणम् प्रतिषेधाऽसामर्थ्यात्, स्वयं घात्यं यावदंशे घात्यं घातकस्वाभावस्तावदंशे अप्रमा। अंशेऽप्यर्थः प्रतिभाति चेत् तदंशे प्रमा, तदन्यांऽशेऽप्रमा। यत्रांऽशे निगृहीतः सोंऽशोऽप्रमा। प्रतिभाऽनुत्थाने तु प्रमात्वाभाव एवेति॥

१७ विक्षेपः–उत्तरस्फूर्तावपि तदंशे दोषापत्तौ तत्र कार्यान्तरव्यासंगेन कथाविच्छेदः। वादी–क्षितिः सकर्तृका कार्यत्वात्। प्रतिवादी–अत्रांकुरे व्यभिचारो मयोद्भाव्यः। वादी–अंकुरस्य पक्षसमत्वम्। प्रतिवादी–ध्वंसे व्यभिचारः। वादी–भावत्वेन विशेषणीयत्वात्। प्रतिवादी–शरीराऽजन्यत्वादकार्यत्वम् अकार्यत्वादकर्तृकत्वम्। वादी–अत्र का श्रुतिः प्रमाणं तन्मया गृहे गत्वा मार्गणीयम् इति कृत्वा सभां प्रक्षोभ्य स्वयं च क्षुब्ध्वा प्रयाति॥ अत्र वादी निगृहीतस्तस्माज्ज्ञानमन्तिममाभास एवाऽप्रमा घात्यम्। घातकम् अकर्तृकत्वं यावन्न दोषोद्भवः समाधिर्वा तावत् प्रमा, सति तु विजये प्रमा। कथामवग्राह्य विच्छेदेच्छुकस्याऽनावश्यकाऽपसरणव्याजवचनम्–महादिदानीं मे कृत्यमतिवर्तते, इत्युत्तराऽप्रतिभानम्, भानमप्यभानात्मकम् अप्रमा॥

१८ मतानुज्ञा–स्वपक्षे दोषमभ्युपगम्य परपक्षे दोषप्रसञ्जनम्। यथा त्वद्वचनं दुष्टमित्युक्ते तवापि वचनं दुष्टमिति, त्वं चौर इत्युक्ते त्वमपि चौर इतिवत्। प्रतिबन्दी त्वियम्–परापादितदोषानभ्युपगमार्थं तदुद्धारेण परपक्षे दोषोद्भावनम्,–यद्वा त्वं चौरो न त्वहम्, तव वचो दुष्टं न तु मे इति। वादी–आत्मा नित्यो मोक्षभागित्वात्। प्रतिवादी–अनित्ये ज्ञाने विषयितया मोक्षभागित्वमस्तीति व्यभिचारः। वादी–सत्यं ज्ञानमनन्तं ब्रह्मेति ज्ञानस्यापि पक्षसमत्वात्। प्रतिवादी–असिद्धत्वात् तवाऽपि हेत्वाभासो मोक्षभागित्वमिति मतानुज्ञया निगृह्यते। हेत्वाऽभासत्वाद घात्यम् अप्रमा। विषयितया अत्रभिप्रेतात् सच्चिदा-

नन्दात्मकस्वरूपस्याऽऽविर्भावस्यैव मोक्षभागित्वाऽर्थकत्वात्। धर्मभूतज्ञानस्य तथात्वाऽभावात्, धर्मिभूतज्ञानस्य त्वात्मत्वान्मोक्षभागित्वमेव न व्यभिचार इति व्याप्त्यादिबलेन स्थापनायाः प्रमात्वम्। मतानुज्ञायांशानाम् घात्यत्वे त्वप्रमात्वम् ॥

१९ पर्यनुयोज्योपेक्षणम्—अवश्योद्भाव्यस्य निग्रहस्थानस्याऽवसरेऽप्यनुद्भावनम्। सदृश्यैवोद्भाव्यम्। इदं निग्रहविषयकं निग्रहस्थानम्, तस्मान्निग्रहबलं यावत्तावन्निग्रहः प्रमा, निग्रहाऽज्ञानेन तु निग्रहो निर्बलोऽप्रमा, अप्रमया फलं पर्यनुयोज्योपेक्षणम् प्राश्निकेणोत्सर्जनम्, उत्सर्जकोऽविजयी, वादी विजयीति वादिस्थापना प्रमा। वादिस्थापनायां यदि दूषणं प्रतिवादिनोपेक्षितं तर्हि प्रतिवादी निग्रहविषयकनिग्रहेणाऽऽरूक्न्दितो भवतीति प्रतिवादिप्रतिभा अप्रमा फलतो बोध्या।

२० निरनुयोज्यानुयोगः—वाद्युक्तस्थापनायाम् अवसरे प्रतिवादिना यथार्थनिग्रहस्थानोद्भावनातिरिक्तं यन्निग्रहस्थानोद्भावनम्। प्राश्निकेणाऽपेक्षिताऽन्यप्रसर्जनम्। अनिग्रहस्थानेऽपि निगृहीतोऽसीति ब्रुवतो वा सोऽपि निग्रहगोचरनिग्रहग्रस्ततां भवतीति, वादिना सभ्यैर्वाऽयं प्र[illegible]वादी निग्रहास्पदीकर्तव्यः। प्रतिवादि[illegible]नमप्रमा। वादिस्थापना प्रमेति ॥ स्थापना प्रायशः प्रमाऽऽरब्धव्या ॥

२१ अपसिद्धान्तः—एकं सिद्धान्तमभ्युपगम्य प्रवृत्तोऽपि तस्मिन्नेव विषयेऽन्यसिद्धान्तमासञ्जयति सोऽपसिद्धान्तो निग्रहस्थानम्। अद्वैतमतेनाऽहं वदिष्यामीत्यभ्युपेत्य वादिनाऽऽरब्धायां कथायां 'ब्रह्मभिन्नं सर्वं मिथ्या ब्रह्मभिन्नत्वात्' अविद्याया मिथ्यात्वात् संसारस्यापि मिथ्यात्वमिति स्थापनायाम्, प्रतिवादिना अविद्याया मिथ्यात्वे ब्रह्मसम्बन्धाभावाद् अवस्तुत्वाद् ब्रह्मणो नित्याऽपरिणामात् कस्मात् संसार इत्युक्ते, वादी—अविद्याया नाऽत्यन्तमिथ्यात्वम्, किन्तु नित्यत्वे सत्यपि ब्रह्माग्रे मिथ्यात्वमिति, यद्वा ब्रह्म एव नित्यमपि स्वसादीक्षणात्मकविद्यया जडचेतनात्मकं संसारं सृजतीति। प्रतिवादी—तर्हि पूर्वोत्तरेऽविद्यायां व्याघातः, पश्चिमोत्तरे ब्रह्मणि स्वव्याघातः। वादी—अस्तु तर्हि ब्रह्माऽपरिणामित्वरक्षार्थं जीवात्मनां नित्यत्वममिथ्यात्वम् अविद्याया अपि तथात्वं तत्र का हानिः। प्रतिवादी—अपसिद्धान्तो हानिः, भवान्निगृहीतः। पूर्वस्थापनायाम् अप्रमात्वापत्तिः, अन्यसिद्धान्तप्रमात्वमिति ॥ सांख्यमतेन वदिष्यामीति वादी प्राह—सर्वं सत् कार्यम्, कारणव्यापारात् प्रागपि सत्। तथाऽऽरब्धायां कथायाम्। प्रतिवादी—आविर्भावो यदि सन्, घटानाविर्भावे क्व तिष्ठेत्?। वादी—आविर्भावोऽसन्, तस्याऽऽविर्भावः कारणव्या-

पारैः क्रियते। प्रतिवादी–आविर्भावस्याऽऽविर्भावान्तराऽभ्युपगमेऽनवस्थेतिवस्तुहानिः फलम्, असत्त्वाऽभ्युपगमे तु सर्वं सदिति सिद्धान्तहानिः, अपसिद्धान्तापत्तिः अप्रमा फलम्। तदिदमसत् स्वीकरणं न तव प्रमा. निग्रहस्थानं घातकम्, वादी निगृहीतः। वादी–आविर्भावे नाऽऽविर्भावो विशेषे न विशेषान्तरं जातौ न जात्यन्तरमितिव्यवस्थायां तु नानवस्था युक्ता सन्नेवाऽऽविर्भावः कारणव्यापारात् प्रागपि सूक्ष्मदशापन्नो घटकारणेषु तिष्ठति स एव घटात्मको घटधर्म आत्मनि द्रव्यतादात्म्यवद् ब्रह्मणि सर्वतादात्म्यवत् ज्ञाते घटे ज्ञातताबद्वा ततो नाऽनवस्थेति वादिनो विजयः। प्रतिवादी मौनं सेवते निगृह्यते तत्प्रतिभाऽप्रमेति॥ घात्या तत्क्षणावच्छिन्नाऽप्रमा, सदोषा तु सर्वथाऽप्रमेति॥

२२ हेत्वाभासाः–हेतुवदाभासन्ते,–हेतुषु पञ्चधर्माश्चत्वारो वा, पक्षसत्त्वं सपक्षसत्त्वं विपक्षाऽसत्त्वम् असत्प्रतिपक्षितत्वम् अबाधितत्वम्। एतन्मध्याद् रूपत्रयेण रूपद्वयेन रूपेण वा युक्ता यद्वा परिष्कृततत्तद्रूपेण वा तेषां निग्रहस्थानत्वमिति। तत्र सबलत्वे स्वस्य परव्याघातकत्वे स्वस्वरूपे दोषनिश्चयात्मकप्रमात्वम् घात्यस्याऽप्रमात्वम्, घात्यस्य निर्दोषत्वे घातकानां दुष्टत्वे घातकानां अप्रमात्वम्, घात्यात्मकत्वात्। हेत्वाभासलक्षणेनैव निग्रहस्थानभाव इति॥ घातकानां घातकत्वरूपत्वे प्रमात्वमेव, घात्याभिमतानामपि अघात्यत्वरूपत्वे तु प्रमात्वमेव जल्पे स्वपक्षविजये प्रबलता, वितण्डायाः परपक्षदूषणे प्रबलता, यत्र यदा प्राबल्यं तत्र तदा तदंशे तत्सामयिकप्रमात्वम्, यत्र यदा निर्बलता तत्र तदा तदंशे तत्सामयिकाऽप्रमात्वमिति॥ जल्पो वा वितण्डा वा प्रायशोऽङ्गभंगात्मिका। भग्नेऽङ्गेऽप्रमात्वम्। प्रमाणाभासानाम् अप्रबलताऽप्रमात्वम्, प्रमेयाऽऽभासानामप्रमात्वम्, दृष्टान्ताभासानां सिद्धान्ताभासानाम् अवयवाभासानां तर्काभासानां निर्णयाभासानां वादाऽऽभासानां तत्तदंगाभासानां तत्तत्साधनाभासानां तत्तज्ज्ञप्त्याभासानां तत्तत्कारणाभासानामपि तत्तदंशे तत्र तत्र समये नैर्बल्येऽप्रमात्वमेवेति। प्राबल्ये तु प्रमात्वमेवेति। प्राबल्यं नैर्बल्यं च सोपपत्तिकं भवति, उपपत्तयः सन्त्यो युक्तयः प्रमाः। असदुक्तयोऽप्रमा इति। पिहितस्वच्छिद्रोऽपि परच्छिद्रं नोपेक्षते इति स जयति॥ इति॥ (डॊ. आदित्यनाथ झा राज्यपाल–अभिनन्दनग्रन्थस्त्रिखण्डात्मकस्तत्र ‘संस्कृति’ खण्डे, पृष्ठ–९५ दिल्ली–काशी, बुधे २–४–१९६९ प्रकाशितोविषयोऽयं प्रमात्वविमर्शः॥

इति प्रमात्वविमर्शः

## ॥ तूलनाविषमता ॥

| श्रीस्वामिनारायणः | श्रीरामानुजः | श्रीशंकरः |
|---|---|---|
| तेजोब्रह्माऽक्षरद्वारापरब्रह्मव्यापकः | ज्ञानानन्दात्मकब्रह्मव्यापकम् | निराकारज्ञानब्रह्मव्यापकम् |
| आनन्दघनैकतत्त्वस्वरूपमूर्तिः परमेश्वरः | नित्यविभूतिशरीरवान् परमेश्वरः | शुद्धाऽविद्याशरीरवान् सगुण ईश्वरः, |
| आविर्भूतचेतनमूर्तिर्मुक्तः | विभूतिशरीरवन्तोमुक्ताः | निराकारतेजोब्रह्मैवमुक्तः |
| ऐश्वर्यघनसुमूर्ताईश्वराः | लीलाविभूत्यादिमन्त ईश्वराः | शुद्धसत्त्ववन्त ईश्वराः |
| ज्ञानघना जीवात्मानः | मायिककर्मठा जीवा ज्ञातारः | मलिनाऽविद्याऽऽवृतब्रह्म जीवाः |
| परब्रह्मप्रकाशो ब्रह्मधामलोकः | नित्यविभूतिभूमिः | अविद्याभूमिः |
| भगवत्स्वानन्दतृप्तिः | विभूतिपदार्थभोगादि तृप्तिः | कल्पितपदार्थतृप्तिः |
| परब्रह्माऽवताराः | विभूतिरूपाढ्यब्रह्माऽवताराः | कल्पिताऽवताराः |
| अहं तव भक्त उपासना | अहमितिविशिष्टोपासना | अहंब्रह्मोपासना |
| धर्मज्ञानवैराग्यभक्तयो मोक्षदाः | ज्ञानभक्ती मोक्षदे | ब्रह्मज्ञानं मोक्षदम् |
| अक्षरधाम्नि सारूप्यादिभावः | वैकुण्ठादौपार्षदादियुगलभावः | अत्रैव ब्रह्मभावः |
| पुरुषोत्तमसमसारूप्यं | साकाराः स्त्रीपुरुषा मुक्ताः | निराकारा मुक्तिः |
| स्वरूपमात्रैकरसानन्दघनमूर्तिः | स्वरूप-रूपोभयमूर्तिः | ब्रह्मैकम् |
| परब्रह्मैकतत्त्वं | स्वरूपरूपोभयतत्त्वम् | ब्रह्माभेदतत्त्वम् |
| अक्षरब्रह्म-धाम च मूर्तं च | विभूतिधाम सर्वाकारभूतम् | ब्रह्म शुद्धमाविद्यकं च |
| जीवेश्वरमायाब्रह्मपरब्रह्माणि पञ्च-तत्त्वानि | जीवमायाब्रह्माणि त्रीणितत्त्वानि | एकमेवतत्वं ब्रह्म |

| | | |
|---|---|---|
| मायिककर्माणि संसारः | लीलासंसारः सत्यः | अन्तःकरणसंसारो मिथ्या |
| आविर्भूतस्वरूपसाकारसगुणः | प्राप्तसगुणसाकारभोगादिः | निराकारनिर्गुणाऽभोगः |
| स्नेहसेवा मुक्तिः | मुक्तशरीरेण भोगादिर्मुक्तिः | तेजोभावः कैवल्यमुक्तिः |
| नित्यतृप्तिः | प्राप्ततृप्तिः | अतृप्तिः |
| आशंकिताऽऽवर्तनम् | ऐच्छिकावर्तनम् | अविद्यकृताऽऽवर्तनम् |
| भगवदैच्छिकवेषान्तरम् | भक्तैच्छिकवेषान्तरम् | आविद्यकवेषान्तरम् |
| त्रिगुणनित्या माया | आश्चर्यरूपा माया | कल्पनाऽज्ञानं माया |
| जीवसृष्टिरीश्वरसृष्टिर्ब्रह्ममुक्ताः | लीलाविभूतिसृष्टिः | अज्ञानसृष्टिः |
| अक्षरधाम | वैकुण्ठलोकः | ब्रह्ममात्रम् |
| भगवच्छरणागतिः | आचार्योपसत्तिप्रपत्तिः | गुरूपसत्तिः |
| सन्तो द्वाराणि | देशिका द्वाराणि | गुरवो द्वाराणि |
| आतिवाहिकाऽर्चिमार्गः | मायिकलयाऽर्चिमार्गः | प्राणलयोऽर्चिमार्गः |
| एकानेकरूपाणि | ऐच्छिकरूपाणि | एकरूपम् |
| अन्तर्यामी साकारः | अन्तर्यामी स्वरूपः | अन्तर्यामी निराकारः |
| विशिष्टब्रह्माऽद्वैतम् | विशिष्टाद्वैतम् | केवलाऽद्वैतम् |
| नित्यसेवकोऽधीनः | अपृथगंशो व्याप्यः | अंशादिः |
| सर्वं ब्रह्मीयम् | सर्वत्र ब्रह्म | सर्वं ब्रह्म |
| अन्वयिव्यतिरेकिपरब्रह्म | अन्वयि ब्रह्म | तादात्म्यं ब्रह्म |

॥ इति ॥



# विषयाः

| | | |
|---|---|---|
| निर्गुणवेदान्तिमते | ,, | ,, |
| पाशुपतसिद्धान्तिलकुलीशविशिष्टनन्दिकेशरसेशप्रत्यभिज्ञाकारुणिककापालिकादिमते | ,, | ,, |
| मीमांसककुमारिलप्राभाकरमुरारिमिश्रादिमते | ,, | ,, |
| स्वाभिप्रायः | ,, | ,, |
| स्वामिनारायणीयमते | ,, | ,, |
| आन्ध्ये, व्याघाते, तर्के, अनवस्थादौ, प्रतिबन्द्यां, उभयतःपाशे, साधनाभासे, विरुद्धे, सत्प्रतिपक्षे, असिद्धौ, बाधे | ,, | ,, |
| छले, मौनिश्लोके, चेष्टायां | ,, | ,, |
| (२४)— जात्युत्तरेषु चतुर्विंशतावपि | ,, | ,, |
| मन्त्रार्थेषु, सप्तपक्ष्यां | ,, | ,, |
| (२२)— निग्रहस्थानेषु द्वाविंशतावपि | ,, | ,, |
| जल्पादौ च. | ,, | ,, |

॥ इति ॥



# ख्यातयः

| | | |
|---|---|---|
| १ | नैयायिकानाम् | अन्यथाख्यातिः |
| २ | मीमांसाकानाम् | सत्ख्यातिः |
| ३ | स्वामिनारायणीयनाम् | सत्समुच्चयितख्यातिः |
| ४ | रामानुजानाम् | सत्ख्यातिः |
| ,, | आयुर्वेदस्यापि | एषा भवति |
| ५ | प्राभाकराणाम् | अख्यातिः |
| ६ | कुमारीलभट्टानाम् | सत्ख्यातिः |
| ७ | मुरारिमिश्राणाम् | सत्ख्यातिः |
| ८ | सांख्ययोगानाम् | अख्यातिः, सत्कार्यख्यातिश्च |
| ,, | केवलयोगस्य | असत्ख्यातिरपि वदन्ति |
| ९ | क्षणिकविज्ञानवादियोगाचाराणाम् | आत्मख्यातिः |
| ,, | सौत्रान्तिकवैभाषिकाणामपि च | ,, |
| १० | शून्यवादिमाध्यमिकानाम् | असत्ख्यातिः |
| ११ | जैनानाम् | अनैकान्तिकताख्यातिः |
| १२ | लोकायतिकानाम् | साक्षात्ख्यातिः |
| १३ | माध्वानाम् | विकल्पनाख्यातिः |
| | | क्रमानैक्यख्यातिः |
| | | सारूप्यख्यातिः |
| १४ | वाल्लभानाम् | अन्यथारूपख्यातिः |
| | | आभाससुख्यातिः |
| | | लीलाख्यातिः |
| १५ | निम्बार्काणाम् | भेदाऽभेदख्यातिः |
| | | ज्ञानाऽज्ञानख्यातिः |
| | | सत्याऽसत्यख्यातिः |

| | | |
|---|---|---|
| | | दृश्याऽदृश्यख्यातिः |
| | | दृष्टिसृष्टिख्यातिः साकारा सा |
| | | अधिष्ठेयाऽभिन्नभिन्नाख्यातिः |
| १६ | अद्वैतिशांकराणाम् | अनिर्वचनीया ख्यातिः |
| १७ | शाब्दिकानाम् | शक्तिवैवर्तिकख्यातिः |
| १८ | प्रत्यभिज्ञावादिनाम् | प्रत्यभिज्ञानख्यातिः |
| १९ | पाशुपतशैवानाम् | स्वायत्तेष्टत्वविषया विषयता-ख्यातिः |
| २० | सिद्धान्तिशैवानाम् | अधिष्ठानवैरूप्यख्यातिः |
| २१ | लाकुलीशशैवानाम् | भिन्नाऽभिन्नचाकचक्यख्यातिः |
| २२ | विशिष्टाद्वैतिशैवानाम् | संसर्गताख्यातिः |
| २३ | वीरशैवानाम् | स्फूर्तिवैवर्त्यख्यातिः |
| २४ | नन्दिकेशशैवानाम् | आभासवृत्त्यात्मख्यातिः |
| २५ | रसेश्वरशैवानाम् | सिद्धयसिद्धिख्यातिः<br>असिद्धिसिद्धिख्यातिः |
| २६ | कालीक्रमशैवानाम् | क्रमवैकल्पिकीख्यातिः |
| २७ | कौलशैवानाम् | लीलाख्यातिः |
| २८ | ऐन्द्रजालिकानाम् | मान्त्रिकशक्तिख्यातिः |
| २९ | परमसर्वज्ञस्य | सत्यतादात्म्यख्यातिः |
| ३० | चिन्तामणिकारगंगेशोपाध्यायानाम् | अभिनवधर्मान्यथाख्यातिः |



# ख्यातिविमर्शः

धीक्षेत्रं नु कृतं कस्माद्विद्वभिः ख्यातिनामकम् ।
इति चेत्, ख्यायते यद्वद् वस्तु ज्ञानेऽत्र तत् तथा ॥ १ ॥
ब्रह्मण्यपि प्रपञ्चोऽयं ख्यायते, तद्धि वेदनम् ।
निदर्शनं च वाऽनेन समता सदृशी मतिः ॥ २ ॥
ऊपमा वापि साजात्यं दृष्टान्तो निर्णयोऽपि वा ।
कर्तव्य इति लाभार्थं ख्यातिक्षेत्रं विवेचितम् ॥ ३ ॥
प्रमा–नास्ति विवादार्हा, त्वप्रमा वादयोगिनी ।
विदुषां तत्र वैमत्यं स्वस्वप्रक्रिययोत्थितम् ॥ ४ ॥
स्वस्वाभिप्रायसम्मिश्रं फलकृद्युक्तिसंभृतम् ।
असार्वज्ञ्ये प्रभात्येव सार्वज्ञ्ये सति नैव तत् ॥ ५ ॥

'रज्जुं'–'इदं रजतमि'तिज्ञानं सर्वेषां ख्यातं विमतिस्थानम्, एतद्वैमत्यं तज्ज्ञानालम्बनकम्, अत्र ज्ञाने विषयः सद्वाऽसद्वा सदसद्वाऽनिर्वाच्यो वाऽन्यथारूपो वाऽभिनवाऽन्यथारूपो वा विवर्तविषयो वा परिणतो वांऽशतो द्वेधा वा शक्तितादात्म्यो वा ब्रह्मात्मको वा कारणकूटो वा मृदुप्रचयो वाऽवस्तुरूपो वा निरूपाख्य इति वा विमर्शमात्रं वा शाश्वतो वा क्षणिको वा समनियतो वाऽसमनियतो वा समकालो वाऽसमकालो वा प्राप्यकारी वाऽप्राप्यकारी वेत्यादयो कियन्तोऽपि विकल्पाः समुत्पद्यन्त इति ।

नैयायिकानामत्र भ्रमस्थले 'रज्जुं रजततया जानामी'त्यनुव्यवसायस्याऽन्यथाख्यातौ प्रमाणतया स्वीकारात्, भ्रमकाले प्रवर्तमानस्य यथार्थरजते इव रज्जुनिष्ठविशेष्यतासंसर्गावच्छिन्नरजतत्वप्रकारकज्ञानात्मककारणस्य प्रवर्तकस्य ज्ञानलक्षणया रजतत्वभानगर्भस्य सत्त्वेन प्रवृत्त्युपपत्तेः, रज्जु रजतत्वाऽवैशिष्टयपरिहारिकाया ज्ञानलक्षणाया गौरवाविशिष्टतया प्राक् ज्ञातायाः प्रवृत्तिविशिष्टज्ञानीयकार्यकारणभावग्रहाऽनुत्थानाऽप्रयोजकत्वात् । उत्पन्नकार्यकारणभावग्रहेऽप्रामाण्यग्रहोत्पादकताबलवत्तयाऽप्रामाण्यग्रहाऽऽस्कन्दितकारणोत्थप्रमाया अप्यप्रमात्वेन विशिष्टज्ञानस्य प्रवृत्तिकारणत्वप्रमितत्वविरहेऽपि विशेषस्थले 'रज्जुरजतयोरिमे रजते रज्जु वे'तिप्रोत्पन्नज्ञाने लौकिकसन्निकर्षात्मककारणस्याऽबाधितत्वेन प्रत्येकांऽशे विसंवादिप्रवृत्तिकारणतया ज्ञानलक्षणाया आवश्यकत्वेन गर्भस्वीकृततयाऽन्यथाभानस्य सत्त्वनिगमनात् । तत्तद्विशेष्यकतद्विशिष्टबुद्धि प्रति तत्तद्विशेषणक–तत्तद्विशेष्यघटितसन्निकर्षस्य का-

रणताया अप्यावश्यकत्वेऽपि रजतरंगोभयविशेष्यकसमूहालम्बनभ्रमे युगपत्प्रवृत्तिनिवृत्त्यनासञ्जस्य स्वतन्त्रस्य प्रवर्तकस्य इष्टतावच्छेदकप्रकारकज्ञानस्य, निवर्तकस्य तु अनिष्टताऽवच्छेदकप्रकारकज्ञानस्यैवाऽऽवश्यकतया तत्र धर्मिण तदन्येष्टतावच्छेदकप्रकारकाऽन्यथाज्ञानस्य निराबाधत्वात्। व्याप्यतावच्छेदकावच्छिन्नपक्षधर्मताज्ञानजन्याऽव्याप्यवृत्तिपदार्थाऽनुमितिरूपभ्रमस्यापि सर्वथा निष्प्रत्यूहत्वात्। 'रङ्गं रजतं पश्यामि' 'मूलावच्छिन्नवृक्षे कपिसंयोगमनुमिनोमि' 'ताम्रादिप्रतिभासु गवयपदवाच्यत्वमुपमिनोमि' 'सेचने वह्निकरणकत्वं शाब्दयामि'–'स्वप्ने स्वीयं शवं स्मरामी'त्याद्यनुव्यवसायानामेवाऽन्यथाख्यातौ प्रमाणात्।

मीमांसकानां तु भ्रमस्थले ज्ञानद्वयांगीकाराद्भ्रमत्वम्, किन्तु यथार्थत्वम्, यावतां ज्ञानानामर्थाऽव्यभिचारित्वेन सत्त्वनियमात्, संवित्सु भासमानार्थानामेव विषयत्वात्, अनवभासमानानां विषयत्वेऽतिप्रसंगात् सार्वज्ञ्यापत्तेश्च, 'शुक्ताविदं रजतमि'त्यत्र प्रत्यक्षं स्मरणं चेति ज्ञानद्वयम्, इदमंशः प्रत्यक्षः, रजतांशः स्मरणम्, नेत्रादिसन्निकर्षविरहात्। 'पीतः शंख' इतिज्ञानमपि यथार्थम्, नयनगतपीतनायनरश्मीनां दूरगतया शंखेन संयोगात् तद्गतपीतिम्नः स्वेन ग्रहणात्, दोषवच्छंखस्य ग्रहणात्, तत्र विद्यमानस्याऽप्यसम्बन्धस्याऽग्रहाद् विशिष्टधीव्यवहारः, ततश्च प्रवृत्तिः, पार्थिवमिश्रतेजोऽणुसमवाये पार्थिवेषु पीतिम्नो ज्ञाने याथार्थ्यं, तेजसि शौक्ल्यं शंखेऽपि तथेति यावच्छौक्ल्याऽग्रहस्तावद्वस्तुमात्रग्रहो यथार्थः, स्वाश्रयसंयोगितया पीतिम्नः साक्षात्कारे प्रयोजकत्वांगीकारात्। 'स्फटिकः रक्त'इत्यत्रापि पार्थिवस्फटिकस्याऽच्छतेजःसमाश्रयतया तत्तेजसा जपाकुसुमप्रदेशस्थतेजसा चान्तरालवर्तितेजोभिश्च सह नायनरश्मीनां सहभावसंवलनेन कुसुमपार्थिवभागाणुप्रग्राहितेजोरश्मिसंयुक्ते स्फटिके स्वाश्रयसंयुक्तसंयोगितया रक्तताज्ञानं सदेव, असम्बन्धाऽग्रहो यावत् तावत् 'स्फटिकः रक्त'इतिज्ञानम्, धर्मिमात्रज्ञानमपि सत्यम्, श्वेतइति तु मानसम् असम्बन्धग्रहे द्रागेव जायते, व्यवधाने सति तु श्वेत इति बाह्यं प्रत्यक्षम्, व्यवहारबलेन तेजसां बिम्बानुग्राहित्वस्वीकाराद्वा द्वयोस्तेजसि स्वाश्रयसंयुक्तत्वेनाऽऽरोहात् 'रक्तं च' 'स्फटिकश्च'ेति पृथक्तया भानस्वीकारात् ज्ञानद्वयमपि सत् प्रत्यक्षसिद्धमिति। मरुमरीचिकासु जलज्ञानमपि तासु विरलजलाकर्षणात् शौक्ल्यसाजात्याच्च विपुलप्रादेशिकपटलानां घनताभासाद् वास्तविकं जलं च किरणानि च गृह्यन्ते ततो जलज्ञानं तेजोज्ञानं च सदेव, पानाऽर्हीपचयविरहात् पटलमात्रभानं, न तुपानोपयोगितेति, यद्वा जलज्ञानं स्मरणमात्रं सदिति। द्विचन्द्रज्ञानेऽपि शलाकादिनिरोधप्रयुक्ता नायनरश्मिगतिर्द्वेधा जायते तत्रैका

ऋजुर्द्वितीया वक्रीभूता, ऋजुवृत्तिः स्वदेशस्थं चन्द्रं गृह्णाति, यद्वा वृत्ति-द्वैधा भूत्वा प्रत्येकं चन्द्रविषयिणी द्विचन्द्रज्ञानं जनयति, सामग्रीद्वयस्य यथार्थतया द्विचन्द्रज्ञानं यथार्थम्, विभक्तरश्मिभ्यां द्वित्वस्योत्पत्तौ द्वित्व-स्य चन्द्रमसश्चाऽसम्बन्धाऽग्रहाद् 'द्वौ चन्द्रावि'ति तावत् सन्नेव व्यव-हारः, असम्बन्धग्रहे निरोधकविप्रकर्षे च द्वैधात्वनाशादैक्येनैकचन्द्रभान-मिति व्यवस्थानात्। उल्मुकचक्रादौ चक्राकाराग्निज्ञानमपि यथार्थम्, अग्नेरवयवानां तदन्तराले प्रसारात् अतिशैघ्र्येणाऽन्तरालाऽग्रहणाच्च, यद्वा तत्तद्देशसंयुक्ततत्तदग्न्यंशविशेषवर्तुलान्वयप्रतीतिः सतीति। आदर्शे स्वाऽऽस्यदर्शनं यथार्थम्, स्वच्छदर्पणतलग्राहकपरावृत्तप्रसाराणां नायन-रश्मीनां निजाननविषयीकरणात् आदर्शाऽऽननयोर्भेदाऽग्रहणाच्चाऽऽदर्शे मुखव्यवहारः सत्यः, आदर्शदोषाणां स्वाश्रयसंयुक्तसंयोगितया मुखे भानं सत्यमपीति। दिग्भ्रमस्थलेऽपि दिशामेकत्वादेव अन्याऽन्यवस्त्व-पेक्षितदिशयोर्भेदाऽग्रहात् प्राच्यादिदिशामवाच्यादिरूपेण भानं यथार्थमेव, बाह्येऽनुनीतहेतुभिरनुमानात् आन्तरे तत्स्मरणाच्च तथाव्यवहारात्। स्वाप्नं ज्ञानं सर्वं यथार्थम्, उद्बुद्धाऽनुद्बुद्धाऽन्योद्बुद्धसंस्कारोत्थस्मृतीनां पूर्वपूर्वतरपूर्वतम-चिरचिरतरचिरतम-जन्मजन्मान्तरादिसम्पादिताऽने-कसंस्कारसमुद्भवानां सविषयाणां विमर्शाऽनुगृहीतानां तत्तदंशे याथा-र्थ्यमेव। संशयाभिधे भानेऽपि स्थाणुर्वा पुरुषो वेति मानसं स्मरणद्वयं भावकोटिकमेव, पुरःस्थितोर्ध्ववस्तूपदर्शनोद्बोधजन्यम् भानं तत्सत्यम्, बाह्यं तु समूर्ध्वदर्शनं धर्मिमात्रगोचरं सदेव, अनन्तरं भावोद्बोधस्ततो-ऽभावद्वयबोध इति ततः पृथग्बोधस्तूभयोरिति वा तत्र सर्वमेव भानं यथार्थम्। शब्दज्ञानानुपाती वस्तुशून्यो विकल्पोऽपि शाब्दबोधो वा स्मरणं वा यथार्थभानमेव। ऐन्द्रजालिकादिदर्शनादावपि तत्तन्मान्त्रि-कादिविद्यानां ज्ञानात्मिकानां नायनरश्म्यारूढप्रभावाणां तत्क्षणश्रावित-शाब्दभानसहितानां पारावतादिदर्शनरूपापादिकानां तदानीन्तनसंस्का-राऽऽधायिकानां भेदाऽग्रहप्रसञ्जकत्वेन तत्र तत्राऽन्याऽन्यभानं यथार्थम्, क्वचित् तत् दर्शनात्मकं स्मरणात्मकं तदन्यप्रमात्मकं वेति। यथावस्थि-तव्यवहारानुगुणज्ञानत्वस्य प्रमात्वस्य सर्वभानेषु सत्त्वात् तद्वन्निष्ठवि-शेष्यताकत्वं सत्त्वं ज्ञाने सत्ख्यातित्वमेवेति। अतः कर्मफलभानानां तत्त्वभानानां मोक्षतत्साधनभानानां व्यवहारभानानां प्राथमिकचारमिक-भानानामपि याथार्थ्यमेवेति सत्ख्याति र्निष्प्रत्यूहा, कारणबाधाद् दोषव-शाद् विरोधिनाऽभिभवाद्वा भेदाऽग्रहान्मिथ्याव्यवहार इति॥

श्रीस्वामिनारायणीयानामत्रार्थे सत्समुच्चयख्यातिरित्यभिनवः प-न्थाः, समुच्चयस्त्रेधा, बीजस्तम्बफलात्मकतया त्रेधा व्यवस्थानात्,

अधिष्ठानं बीजम्, पीठरः स्तम्बः, फलमर्थक्रियाप्राप्त्यादि. तदनुरोधेन सत्समुच्चयख्यातिरपि त्रेधा बीजांकुराऽऽधायिका, स्वरूपयोग्यतात्मिका, फलाधायिका चेति, वस्तूनां यावतामणुसूक्ष्मस्थूलात्मकरूपत्रयतया स्थूलावस्थायां फलाधायकत्वम्, सूक्ष्मावस्थायां स्वरूपयोग्यतात्मकत्वम्, अण्ववस्थायां स्वरूपयोग्यताऽऽधायकत्वम्, यावत्स्वरूपयोग्यताऽऽधायकता तावत्तद्भानं लौकिकमलौकिकं वा निर्विकल्पकं सविकल्पकं वा बाह्यं मानसं वा विशिष्टं चाऽविशिष्टं वा विविधप्रमाणाऽन्यतमाऽनुगृहीतं सत्समुच्चयख्यातिरूपमेव, तत्र पदार्थांशे यथायथं दर्शनम्, सम्बन्धांशे यथायथमनुमादिकम् । सूक्ष्मसाधनांशे तु यथायथं स्वरूपयोग्यतात्मकं सत्समुच्चयख्यातिभानम् । स्थूलांऽशे यथायथं फलाऽऽधायकसत्समुच्चयख्यातिभानम्, इत्येवं पराभिमत–भ्रमविपर्ययविकल्पतर्कमृषाशून्यैन्द्रजालिकाऽभिचारचमत्कारपरचित्तवेदनप्रातिभसार्वज्ञ्यादिसर्वविधभानभूमिकासु त्रिविधाऽन्यतम–सत्समुच्चयख्यातिसंस्थानात् नाऽन्याऽभिमताऽन्यथाख्यात्यादिगन्धलेशोऽपि । पराभिमतभ्रमादिस्थलेऽणुपदार्थादौ बाह्यप्रत्यक्षविधुरे वा तत्त्वे मानसबोधस्याऽलौकिकविधया यद्वा सहचारभावानुग्रहविधया सूक्ष्मदशोद्भावकतान्विते तत्र भानस्य सत्तया सद्भानस्यापि सत्तया ख्यापनात् प्रागेव तस्याः क्षणान्तरे सूक्ष्मस्वरूपयोग्यताऽऽपादकतया स्वरूपयोग्यताऽऽधायकसत्समुच्चयख्यातित्वम्, तस्या एव प्रवाहक्रमाऽऽपन्नायाः सूक्ष्मांकुराद्यवस्थाविषयकस्थितौ स्वरूपयोग्यताभिव्यंजकतया स्वरूपयोग्यतात्मकसत्समुच्चयख्यातित्वम्, पूर्वविषयज्ञानादिसंग्राह्यैव स्थितिलाभात्, तस्या एव प्रवाहक्रमापन्नायाः स्थूलवस्तुभानात्मकत्वं सत्तया स्थौल्यात् फलाधायकत्वं चोत्तरक्षणे फलप्राप्तिकारित्वमपीति तदानीं फलाधायकसत्समुच्चयख्यातित्वं तस्या एवेति, प्राच्यविषयं कवलीकृत्यैव व्यवस्थानात् । अणुसूक्ष्मस्थूलस्थितिकभानस्यैकस्यैव विषयानुसारेणांगीकारात् तत्तत्पदार्थविषयकसमुच्चयितैकस्यैव त्रिक्षणावस्थायिभानस्य सर्वत्रांगीकाराच्च त्रेधा तस्यैकस्यैव ख्यापनात् सत्समुच्चयख्यातेः सर्वाभ्यो विलक्षणत्वात् । स्वरूपयोग्यत्वं चात्र यथार्थवस्तुनः फलाधायकताधर्मोपलक्षितत्वम्, फलाधायकतायां प्रवृत्तिः, यावद् धर्मोपलक्षणं तावत् प्रवृत्तिरपि सा निवृत्त्युत्तरफलकाऽभियोगिनी, अतः स्वरूपयोग्यत्वं चाऽत्र निवृत्त्युत्तरफलकाऽभियोगिप्रवृत्तिविषयत्वम्, तच्च 'शुक्ताविदं रजतमि'त्यादिक्षणे वर्तते, तादृशी ज्ञप्तिः प्रवृत्त्यंशे सती, अनन्तरं च निवृत्त्यंशे सती, विषयस्तु स एव, तत्तदवयवानां केनचिदंशेन तत्र विद्यमानत्वात्, स्वसमानधर्मस्य साजात्यस्य गुणेन कर्मणाऽऽकृत्याऽवयवादिभिर्वा विद्यमानत्वात् । मरुमरी-

चिकायां दृष्टिप्रयोगे सत्येव जलीयाऽनुमानससङ्ख्यानोत्तरसूक्ष्मतङ्ख्यान-स्यैव स्थौल्यभावात् क्षणत्रयान्तर्वर्तिभानैक्यस्य समुच्चयितस्यैव सत्तया ख्यापनात् सत्समुच्चयख्यातित्वम्, अनन्वितविशेषणादिज्ञानस्यैवाऽन्वय-विषयकत्वे सान्वितभानतया तस्यापि समुच्चयितस्यैव ख्यापनात् सत्स-मुच्चयख्यातित्वम्, जडचेतनेशविशिष्टब्रह्मणः प्रमितेः परब्रह्मणो विशि-ष्टतयोत्तरकाले विकासादधिकविषयग्राहकतया तस्या एव प्रमितेः समु-च्चयितभानात्मकतया सत्समुच्चयख्यातित्वं निराबाधम्, नहि किमपि ज्ञानं स्वविषयांशविषयकज्ञानमविषयीकृत्याऽवतिष्ठति, तथा च लाघ-वात् तदेवांशज्ञानमधिकविषयं विषयीकृत्य प्रसरणस्वभावं विशिष्टात्मकं संभवतीति तस्य तथाविधसमुच्चयितरूपतया यथार्थतया च सत्समुच्च-यख्यातित्वमव्याहतम्, सर्वज्ञता तु सर्वथैव सत्समुच्चयितख्यातिरूपा सर्वज्ञेश्वरस्य निर्विवादेति। समूहालम्बनस्य समकालीनस्यैव मीमांसकैः स्वीकारात् ततोऽस्य त्रिकालीनस्य समुच्चयितज्ञानस्य विलक्षणत्वात् न मीमांसकमताऽवैगुण्यम्। रामानुजानां धारावाहिकभानानां तत्तत्क्षण-विशिष्टवेऽेण सत्तया तदीयसत्ख्यातितोऽप्यस्यास्त्रिक्षणप्रसृतायाः सत्स-मुच्चयख्यातेर्वैलक्षण्यध्रौव्यात्। जीवात्मनां ज्ञानघनतया नित्यस्य ज्ञान-घनस्य ज्ञानानां धर्मरूपाणां गुणानामपि चिरस्थायित्वेऽप्यनापत्तेर्भानानां सत्समुच्चयख्यातित्वस्य सामञ्जस्यमेवेति।

अत्र रामानुजाः–रज्जुसर्पस्थले रज्ज्वां सर्पज्ञानस्य याथार्थ्यमिति स्वीकुर्वन्ति, रज्ज्ववयवानां सर्पावयवानां च पार्थिवतया तथाविधोपादा-नकारणैः भिन्नभिन्नकालावच्छेदेन भिन्नभिन्नपदार्थारम्भकतया तिमिरा-दिदोषसहकृतैस्तैरेवावयवैस्तत्र क्षणिकसर्पोत्पादात् क्रियाकारित्वधर्मान-वच्छिन्ननिर्विकल्पकसर्पस्यैव समुद्भवात् दंशादिधर्मवर्जितस्यापि तस्य भयोत्पादकतया सर्पज्ञानं यथार्थमिति, सर्पः सन्निति सत्ख्यातिस्तत्रेति। मरुमरीचिकायां जलस्य किरणैः सह पृथिवीगर्भादाकर्षणाज्जलावयव-जन्यस्य जलस्य पानादिधर्मानवच्छिन्नस्यापि कम्पनादिक्रियासहितस्य भानं सदिति। शुक्ताविदं रजतमित्यत्र रजतावयवानां विरलानां पार्थि-वानां विरलतेजसां भागानां च तत्र सत्त्वात् तज्जन्यस्य दर्शनमात्रा-स्कन्दितस्य गुरुत्वादियुक्तस्य रजतस्य सत्त्वात् रजतज्ञानस्य सत्त्वमिति सत्ख्यातिस्तत्र। स्वाप्नपदार्थेषु धर्माऽधर्मादिसहकृतसंस्कारजन्येषु यद्वा संस्कारसहकृतधर्माऽधर्मादिजन्येषु तेषु तदानीं भोग्यत्वादिहर्षशोकादि-जनकेषु तत्कालावच्छिन्नेषु सत्तया भानात् ते पदार्थाः सन्त एवेति, अत एव च शास्त्रेषु निशीथप्रान्तभागीयब्राह्ममुहूर्तीयविविधस्वप्नदर्शन-जन्ययथार्थफलानां जाग्रदादिसमावस्थायां दिनान्तरेषु समुपलब्धिः सर्वत्र

यथार्थता दर्शिता तथैव यथार्थफलदर्शनाच्च श्रीकृष्णद्वैपायनीयपुराणेषूषा-प्रभृतीनां स्वाप्नफलवर्णनस्य पतिप्राप्तिरूपस्य याथार्थ्यमेवेति, मनुष्याणामपि विविधक्रियाफलशालितायाः स्वप्ने याथार्थ्यात्स्वाप्नं ज्ञानं सदिति सत्ख्यातिः सर्वथा सर्वत्र सूपपन्नेति ।

प्राभाकराणां तु पराभिमतभ्रमादिस्थले तत्र तत्र सर्वत्र ज्ञानद्वयमेव, पुरोवर्तिप्रमात्मकं दर्शनम्, अपुरोवर्तिप्रमात्मकं स्मरणमिति, तदुभयमपि सत्, सर्वज्ञानानाम् अर्थाऽव्यभिचारितया सत्त्वं प्रामाण्यं च, रङ्गे रजतार्थिनो विसंवादिप्रवृत्तिं प्रति दोषाधीनरजतभेदाऽग्रहस्य कारणत्वात् संवादिप्रवृत्तिं प्रति च तत्प्रकारकतद्विशेष्यकज्ञानस्यैव कारणत्वात् प्रवृत्त्युपपत्तेः, सत्यरजतस्थले—नेदं रजतमित्यत्र तु रजताऽभेदग्रहाऽभावस्य प्रतिबन्धकतया प्रवृत्त्यनापत्तेः, क्वचित् 'प्रस्तरो न रजतम्—रङ्गे इदं रजतमि'त्युपस्थितिद्वयकाले रङ्गविशेष्यकरजतभेदग्रहप्रतिबन्धकदोषस्योत्तेजकत्वाऽङ्गीकारात् प्रवृत्त्यनुपपत्तेर्विरहात्, यादृशदोषात्तरं यादृशी अप्रमा प्रामाणिकी यादृशप्रवृत्त्यभावो निवृत्त्यभावो वा प्रामाणिकस्तादृशीम् अप्रमां प्रति तादृशदोषत्वेन कारणत्वांऽगीकारेण रङ्गरजतयोः रजतरङ्गज्ञानक्षणे युगपत्प्रवृत्तिनिवृत्त्यनापत्तेः, 'ह्रदो वह्निमानि'त्यपि 'ह्रदः' 'वह्निमान्'—इतिज्ञानद्वयस्वीकारात् तत्र वह्निव्याप्यधूमवद्भेदाऽग्रहादेव ज्ञानद्वयलब्धिरिति ज्ञानद्वयम् अगृहीताऽसंसर्गकं सदेव ख्यायते । 'अयोगोलकं वह्निमदि'त्यत्रापि वह्निव्याप्यधूमवद्भेदाऽग्रहादेव तज्ज्ञानद्वयं न तु विशिष्टज्ञानात्मकपरामर्शात् । 'रङ्गं रजततया जानामी'त्यत्रापि रङ्गं पश्यामि रजतत्वप्रकारकत्वं स्मरामि यद्वा रजतत्वप्रकारकत्वाऽसंसर्गाऽग्रह एवेति तत्र रङ्गं रजतं रजतत्वं प्रकारत्वं सदेव गृह्यते, असंसर्गो यावन्न गृह्यते तावन्मानसी प्रवर्तना, असंसर्गग्रहे तु निवर्तना, ग्रहश्च सन्निति, अग्रहस्य ग्रहोऽपि सन्नेवेति, तत्र सर्वथा बाह्यं सर्वं सत्तया सन्निति प्रत्यक्षं ख्यायते, ततो रंगे प्रत्यक्षख्यातिः सत्ख्यातिरिति । किन्तु रजतम् आन्तरम् यतस्तत्प्रत्यक्षतया न ख्यायते रङ्गं रजततया न ख्यायते अबाह्यस्य अख्यापनात् आन्तरस्य बाह्यतयाऽख्यापनात् अख्यातिरेव रजतस्येत्यख्यातौ तात्पर्यमिति, रङ्गस्य प्रत्यक्षाद् रजतस्य तु स्मरणाद् भिन्नमेव तयोः ख्यापनम्, रजतस्याऽप्रत्यक्षम् अख्यातिरिति, एवमेव सर्वत्र स्मरणस्य प्रत्यक्षविषयेऽख्यापनाद् अख्यातिरेव, एवं प्रमाणान्तरेषु प्रमान्तरेषु च लौकिकसन्निकर्षसापेक्षेषु सर्वत्र सती ख्यातिरेव, किन्तु तेष्वपि ज्ञानद्वयादिषु परस्पराऽनन्वितेषु सन्निकर्षाऽनपेक्षेषु स्मरणस्थानापन्नेषु स्मरणसुहृत्सु च कालान्तरीयदेशान्तरीयवस्तूनामख्यापनाद् विवेकेन द्वयोः ख्यापनाद्विवेका-

ख्यातिरिति सा अख्यातिरिति प्राभाकराणां भिन्नः पन्थाः, अतः सत्ख्यातिवादिवंशीयाः प्राभाकरा अख्यातिशास्त्रसंश्रिता इति। स्वाप्नज्ञानेष्वेषां सर्वथाऽख्यातिरेव। मौनिश्लोकबोधादौ चेष्टाजन्यभानादौ चापि सर्वत्र अख्यातिरेव, अर्थाद् आन्तरप्रभाख्यातिरेव प्राभाकराणामिति। यद्वा सर्वेषां ज्ञानानामप्रत्यक्षतया सर्वथाऽख्यापनादख्यातिरिति।

कुमारीलभट्टमते ज्ञानमात्रस्याऽप्रत्यक्षत्वम्, न हि स्वं स्वेन गृह्यते व्याघातात्, स्वस्य स्वविषयकत्वे प्रमाणान्तराऽनपेक्षणेनाऽप्रामाण्याऽऽपत्तेः, प्रमाणान्तराऽपेक्षणं तु ज्ञानोत्पत्तिमात्रलाभार्थकम्, समुत्पन्ने ज्ञाने ज्ञातताऽऽत्मलाभः प्राकट्यरूपः स्वाश्रयाऽभिन्न एव स्वग्राहकः स्वात्मकज्ञानग्राहक इति, रज्जुरजतादिज्ञानेऽपि तत्तदंशगता ज्ञातता तत्तदंशीयविभिन्नज्ञानग्राहिका सती एवेति सर्वत्र सत्ख्यातिरिति।

मुरारिमिश्राणां तु व्यवसाये विशिष्टव्यवसाये विशिष्टविशेषानुव्यवसाये महाव्यवसाये महानुव्यवसाये च सर्वत्र विषयैक्ये पूर्वपूर्वानुगृहीततया ज्ञानैक्येऽविरोधात् तथाविधानि ज्ञानानि सत्यान्येवेति सत्ख्यातिस्तत्र ध्रुवपदा, यदि तु पूर्वपूर्वविषयाऽनवच्छिन्नानि भिन्नविभिन्नविषयाणि यद्वा अनन्वितविषयाणि तदा तानि तथाविधानि ज्ञानानि भिन्नान्येव भिन्नतनुरूपाणि सन्त्येवेति तेषां सत्तया स्वस्वांऽशे सत्ख्यातिरिति।

सांख्ययोगानाम् अख्यातिस्तु प्राभाकरतो विचित्रा, एतेषां पौरुषेयबोधस्यैव प्रमात्वेनाऽन्तःकरणस्थज्ञानात्मकधर्मस्य सविषयत्वेऽपि वृत्तिरूपेण बाह्यविषयग्राहकत्वेऽपि यथार्थवस्तुग्रहत्वेन सत्ख्यापनसत्त्वेऽपि प्रमाणविपर्ययविकल्पनिद्रास्मृतीनां वृत्तीनाम् अविद्याऽस्मितारागद्वेषाऽभिनिवेशात्मकक्लेशाऽभिभूततया नैरन्तर्येण तासां प्रवाहस्य सर्वांशे सत्तया ख्यापनविरहात् प्रकृतिपुरुषभेदज्ञानस्यैव सत्प्रभात्वात् तस्य च बहिरख्यापनादात्मन्येव ख्यापनात् ख्यापनस्यापि कैवल्यस्थितावात्मनि लयाद् अख्यापनात् तिरोभावाच्चाऽन्ततोऽख्यातौ पर्यवसानात्, 'असन्दिग्धाऽविपरीताऽनधिगतविषया चित्तवृत्तिर्बोधः पौरुषेयः फलं प्रमा' इति तेषां सिद्धान्तिततया घटचाक्षुषादौ वृत्त्यात्मके सत्ख्यातिर्व्यावहारिकी, रज्जुरजतीयादिसंशयविपर्ययादौ त्वन्यथाख्यातिरपि व्यावहारिकी 'वृत्तयः क्रमशश्च तस्य निर्दिष्टा'इत्यत्र मन्दालोके धन्विनो दर्शनादिक्रमे संशयस्य स्वीकारात् 'अनित्याऽशुचिदुःखाऽनात्मसु नित्यशुचिसुखात्मख्यातिरविद्ये'ति तत्राऽन्यथाख्यातेः स्वीकारात्। 'एवं तत्त्वाभ्यासान्नाऽस्मि न मे नाऽहमि'त्यादिना यथार्थज्ञानस्यैवोत्तरकाले स्वीकारात् सत्या अपि ख्यातेरस्याः पुरुषे एव स्वीकारात् बाह्येऽस्या

अख्यापनाद् अख्यातिः स्वतन्त्रा विचित्रेति । 'शुक्ताविदं रजतमि'त्यत्र रजतं न शुक्त्युपादानोपादानकम् अतोऽविद्यैव सा, तत्र रजतस्य सर्वथाऽख्यापनादख्यातिरेव सा । एवं बुद्धावात्मप्रतिबिम्बे आत्मनि वा बुद्धयारोहे बुद्धयात्मनोः पारस्परिकधर्माऽऽरोहणाऽवस्थायां तदानीमन्यस्याऽन्यधर्मभासनादन्यथाख्यातिसत्त्वेऽपि स्वस्वधर्मवतोस्तयोः स्वस्वधर्माऽवर्जनात् स्वस्वावबोधाऽवर्जनाच्च सत्ख्यातिरपि तथा चोभयख्यातिक्षणे तत्र समकाले तदानीं सदसत्ख्यातिरपि निराबाधाऽविरुद्धा च सदसतोस्तदानीं विरोधाऽभावात् कारणकाले सत्कार्यवादिमते सूक्ष्मतत्त्वविषयकज्ञानानां बाध्यबाधकभावाऽनङ्गीकारात् तद्विषयाणामप्यविरोधादिति, किन्तु भेदज्ञाने सति स्वात्मभिन्नस्याऽख्यापनाद् अख्यातिरेव चाऽन्ततः फलतश्च शिष्यते इति प्राभाकरतो विलक्षणेयम् अख्यातिरिति ।

क्षणिकविज्ञानवादियोगाचाराणां क्षणिकं विज्ञानमेव सर्ववस्त्वात्मकं सर्वाकारं तदेव चात्मा, आत्मना सह क्षणिकानां यावतां पदार्थानां कार्यकारणभावसम्बन्धाख्या व्याप्यव्यापकभावरूपा तादात्म्यौत्पत्तिकविग्रहाऽविनाभावस्वभावधर्मा प्रतिबन्धनियमतया क्षणिकत्वोपसंहारवती व्याप्तिरेवैकान्ततो विज्ञानतादात्म्यबोधिनी समानकालीनसजातीयाऽनेकमूलविज्ञानसत्त्वाऽभाववत्तया कारणात्मकस्य मूलविज्ञानस्यैकस्याऽपि क्षणिकाऽऽलयविज्ञानात्मकनिरन्वयाऽऽत्मलाभपरिणामरूपविज्ञेयविधिस्वभावापन्नकारणनिरोधक्षणाऽनुवर्तनात्मकाऽर्थाऽऽकारता-साधिनी सत्त्वमात्रस्य क्षणिकत्वनिश्चायिनी बाह्यार्थसत्ताव्यावर्तिनी क्षणिकत्वानुयोगिमायोपमताबोधिनी विज्ञानस्य स्वस्मिन्नेव ग्राह्यग्राहकभाववत्त्वात् स्वप्रकाशताऽभिधायिनी बाह्यार्थानां सांवृतिक(भ्रान्ति)-वासनासहकारतया सृष्टिरूपत्वेऽप्यसदर्थाऽवभासिनी स्वस्वलक्षणविषयिणी ग्राह्यग्राहकाऽऽकारपरिणामनिवृत्तिस्वरूपमोक्षाभिसारिणी च स्वलक्षणमात्रविषयकनिर्विकल्पकाऽऽरोपादिविषयकसविकल्पकभावाभावतादात्म्यगर्भा सविकल्पकाऽप्रमात्वनिर्विकल्पकप्रमात्वदर्शयित्री पदार्थप्रतीत्यसमुत्पत्तिसंसाधिताऽऽत्मख्यातिमेवाऽऽवेदयतीति, ज्ञानस्य स्वप्रकाशत्वं–स्वग्राहकग्राह्यप्रकाशत्वम् यथाभूतार्थग्रहणसामर्थ्यं तत्सत्यताप्रतिपादनसामर्थ्यं च स्वभावत एव, ज्ञानत्वग्राहिका प्रामाण्यग्राहिका च शक्तीद्वे स्वाभाविक्यौ सहजे एव, अनुव्यवसायात्मकधर्मिज्ञानस्य प्रमाव्याप्यत्वं स्वाभाविकं स्वकारणज्ञानसहोत्पन्नमेयबोधकशक्तिव्याप्यत्वमिति मेयाऽऽत्माऽभेदात् सर्वत्राऽऽत्मख्यातिर्विज्ञानात्मिका भवतीति, अतः क्षणिकविज्ञानं स्वप्रकाशं स्वस्मिन्नेकस्मिन्नेव कर्मकर्तृभावस्वीकारात् असन्देहात् अविपर्ययाच्च, विज्ञानाकारम् आन्तरं रजतं बाह्यम्

'इदं रजतमि'त्यत्र प्रथतेऽत आत्मख्यातिस्तत्र, 'नेदं रजतमि'ति तु तत्तामात्रस्य निषेधः, विवृत्तसत्तापदार्थो निषिध्यते, अत एव दृष्टिसृष्टिवादोऽयं दृश्यस्य विज्ञानाकारत्वात्, सैवेति प्रत्यभिज्ञानमपि वस्तुसाजात्यनिबन्धनं ज्वालैक्यप्रत्यभिज्ञानवत्, न त्वर्थैक्यनिबन्धनम्, ज्ञानाधीनोऽर्थो हि विषयो न तु विषयाधीनं ज्ञानम्, ज्ञानस्य प्रत्येकक्षणव्यापकत्वात् स्वतन्त्रत्वात्, क्षणानामपि ज्ञानकृतस्वरूपत्वात् क्षणं ज्ञानं ज्ञेयो ज्ञाता चेति सर्वमेकमेव ज्ञानतत्त्वं समप्रवाहपतितम्, तत् सहैवोत्पद्यते सहैव लीयते एकक्षणस्थायि सहोपलम्भनियमितम्, तदेव कार्यं तदेव च कारणम्, विभिन्नक्षणस्थायिनां कार्यकारणभावाऽनुपलब्धेः, समक्षणस्थायिनां तादात्म्यादेव कार्यकारणभावात्, विभिन्नक्षणवृत्तीनां सम्बन्धानुपपत्तेः, कारणाऽसत्त्वे कार्यस्याऽनवस्थितेः, स्वतः क्रियाशून्यस्य कारणत्वानुपपत्तेश्च, स्वतःप्रकाशविधुरस्य कार्यकारणरूपेण ग्राहकत्वाऽनुपपत्तेश्च, स्वतःप्रकाशं ज्ञानं त्वर्थात्मकं फलात्मकं साधनात्मकं जात्याकृत्याद्यात्मकं सर्वानुस्यूतं स्वयमेव स्वस्य स्वभावाद् धारावाहिकतयाऽनुवर्तमानतया प्रमाता प्रमाणं प्रमेयं प्रमितिरिति सर्वमपि ज्ञानात्मकं क्षणिकं प्रसारात्मकं तत् प्रवृत्तिविज्ञानं विभागाऽऽपन्नमप्यविभक्तम्, यच्च विभागाऽनापन्नं तद् आलयविज्ञानम् महासुषुप्त्यवस्थाख्यं तुर्याऽवस्थाख्यं मुक्त्यवस्थाख्यं च स्वानुभवप्रकाशं सदैकाकारं वर्तमानं सत् पराभिमतं ब्रह्मात्मकं ब्रह्मपदार्थात्मकं ब्रह्मैव, आत्मात्मकम् आत्मपदार्थात्मकम् आत्मैव तदिति, ज्ञानपुञ्जात्मकं पराभिमतजडतत्त्वात्मकं पराभिमताऽवयव्यात्मकम् पराभिमतस्थौल्यसौक्ष्म्यात्मकं रूप्यरूप्यात्मकं ग्राह्याऽग्राह्यात्मकम् भावाऽभावात्मकं सगुणनिर्गुणात्मकम् आकृत्यनाकृत्यात्मकम् आधाराऽनाधारात्मकम् आधेयाऽनाधेयात्मकं भावाऽभावात्मकं सत्त्वाऽसत्त्वात्मकं प्रमाऽप्रमारूपं प्रमाणाऽप्रमाणरूपम् अण्वनण्वात्मकं व्याप्याऽव्याप्यात्मकं व्यवहार्याऽव्यवहार्यात्मकं दृश्याऽदृश्यात्मकं स्वप्नाऽस्वप्नात्मकं धर्माऽधर्मात्मकं चेतनाऽचेतनात्मकं शक्त्यशक्त्यात्मकं स्फुरणाऽस्फुरणात्मकं पराभिमताऽविद्याऽनविद्यात्मकं मायाऽमायात्मकम् अन्तःकरणाऽनन्तःकरणात्मकम् इन्द्रियाऽनिन्द्रियात्मकं विवेकाऽविवेकात्मकं कर्माऽकर्मात्मकं पुण्याऽपुण्यात्मकं पापाऽपापात्मकं शून्याऽशून्यात्मकं शब्दाऽशब्दात्मकम् ऊहाऽनूहात्मकं जन्याऽजन्यात्मकं जन्त्वजन्त्वात्मकं शरीराऽशरीरात्मकं वासनाऽवासनात्मकं संस्काराऽसंस्कारात्मकं नियमाऽनियमात्मकं प्रवृत्त्यप्रवृत्त्यात्मकं वृत्त्यवृत्त्यात्मकं मृषाऽमृषात्मकं योगाऽयोगात्मकं संयमाऽसंय-

मात्मकं साधनाऽसाधनात्मकं साध्याऽसाध्यात्मकं निर्णयाऽनिर्णयाऽऽत्मकम् इच्छाऽनिच्छात्मकम् आनन्दाऽनानन्दात्मकं सुखाऽसुखात्मकं दुःखाऽदुःखात्मकं भक्ष्याऽभक्ष्यात्मकं पेयाऽपेयात्मकम् अन्धकाराऽनन्धकारात्मकं क्षित्यक्षित्यात्मकं जलाऽजलात्मकम् अनलाऽननलात्मकम् अनिलाऽननिलात्मकम् आकाशाऽनाकाशात्मकं शब्दाऽशब्दात्मकं रूपाऽरूपात्मकं रसाऽरसात्मकं स्पर्शाऽस्पर्शात्मकं गन्धाऽगन्धात्मकं भयाऽभयात्मकम् अभिनिवेशाऽननभिनिवेशात्मकं ग्राहकाऽग्राहकात्मकं भोग्याऽभोग्यात्मकं भोक्त्रभोक्त्रात्मकं पीठराऽपीठरात्मकं व्यूहाऽव्यूहात्मकं बीजाऽबीजात्मकम् अंकुराऽनंकुरात्मकं स्तम्बाऽस्तम्बात्मकं नालाऽनालात्मकं पुष्पाऽपुष्पात्मकं फलाफलात्मकं पत्राऽपत्रात्मकं पराभिमतनित्याऽनित्यात्मकं व्यापाराऽव्यापारात्मकमित्येवं सर्वात्मकं ज्ञानमेव, ज्ञाने यथाभूतार्थकारणसामर्थ्यं तत्सत्यताप्रतिपादनसामर्थ्यं च स्वभावत एव भवतीति स्वप्रकाशत्वं स्वग्राहकग्राह्यप्रकाशत्वं च स्वत एव भवतीति, तथापि यच्चाकृतिशून्यं तन्निर्विकल्पकं सर्वं प्रमाणम्, यच्चाकृतिसहितं तत् सविकल्पकं सर्वमप्रमाणम्, ज्ञानं ज्ञातं सत् प्रमात्वेन ज्ञायते इति तत् प्रमाणं स्वतःप्रमाणम्, ज्ञाने ज्ञानत्वग्राहिका प्रमाणत्वग्राहिका चेति द्वेधा शक्तिरपि ज्ञानात्मिकैव, धर्मिज्ञानं प्रमाव्याप्यम् अनुव्यवसायः प्रमाव्याप्यः, उत्तरोत्तरं ज्ञानं पूर्वपूर्वसमानाकारमनुव्यवसायः, उत्तरोत्तरसमानाकारं पूर्वं पूर्वं ज्ञानं व्यवसायः, तथा च घटप्रत्यक्षे घटात्मकतयाऽऽत्मैव ज्ञानं ख्यायते न घटो घटेतिज्ञानात् पृथगिति सर्वत्राऽऽत्मख्यातिरेव, 'शुक्ताविदं रजतमि'त्यत्र शुक्तिरूप आत्मा रजतरूपोऽप्यात्मा ख्यायते इत्यात्मख्यातिः सर्वत्र, दिग्भ्रमेऽपि दिग्रूप आत्मा ख्यायते इत्यात्मख्यातिस्तत्र, स्वप्नेऽपि स्वाप्नात्मक आत्मा ख्यायते इत्यात्मख्यातिस्तत्र, कामलादिदोषात्मकोऽप्यात्मा ख्यायते इति पीतशंखेऽप्यात्मख्यातिः। नन्वात्मन एव सर्वत्र ख्यापनाद् व्यवहारसांकर्यापत्तिरिति चेन्न, आत्मनि शक्तीनामानन्त्याद् व्यवहारानुगुणख्यापनात् ख्यापनस्यैव व्यवहारात्मकत्वान्न सांकर्यापत्तिः, पराभिमतस्य ब्रह्मणो जीवात्मनो वा ज्ञानत्वेऽपि निर्विषयत्वमिव बौद्धानामपि क्षणिकविज्ञानस्यापि निर्विषयत्वं मोक्षे सुघटमिति सर्वथा तदानीम् आत्मख्यातिः। ननु बाह्यघटादीनां प्रत्यक्षतया स्थायिजडरूपाणाम् अनात्मनां सिद्धानां कथमान्तरज्ञानात्मकत्वमिति चेदित्थम्,-घटोऽयमिति केन साध्यते ?, घटोऽयमिति कस्य रूपम् ?, घटोऽयमिति कथं ज्ञातः ?, चाक्षुषेण ज्ञानेन साध्यते, व्यवसायरूपमस्य स्वरूपं, बुद्ध्या च ज्ञातः,

ततो बुद्धिर्व्यवसायश्चाक्षुषाणि सर्वाण्यात्मैव। ननु तर्हि त्रिकालावच्छेदेन ज्ञात इति वा कादाचित्कत्वेन ज्ञात इति विकल्पो भवेत्, तेन कालावच्छिन्नो बाह्य एवेति चेन्न, पूर्वमसत्त्वात् पश्चादनुपलम्भान्मध्येऽवगाह्यरूपत्वात् कादाचित्कत्वेन ग्राह्यत्वेऽपि कालजन्यत्वेऽपि कलयति पदार्थानिति वा कलयत्युत्पादयति नाशयति च न तु स्थापयति इति कालात्मा ज्ञानमेव क्षणात्मकं क्षणिकं विज्ञानमिति तस्याऽऽन्तरपदार्थतयोपलम्भादान्तरत्वमिति, तस्य कारणानां पदार्थानां कालव्याप्यत्वात् ज्ञानात्मककालस्य क्षणिकस्य प्रवाहपतितस्य सदैव समानधारावाहिकतयाऽनुषक्तत्वात् सर्वेषां ज्ञानात्मकत्वम्, ज्ञानं त्वान्तरं पदार्थः, आन्तरत्वं चाऽप्रकटत्वम्, अप्राकट्यं चेन्द्रियाद्यग्राह्यत्वम्, ग्राह्यत्वं तु प्राकट्यम्, तथा च प्रकटा घटादयोऽप्रकटं ज्ञानं चाऽऽत्मा, सर्वात्मा ज्ञानम्, सर्वरूपाणां विज्ञानवेदनासंज्ञासंस्काररूपाणां क्रमस्कन्धानाम् आत्मरूपत्वात् ज्ञानमन्तरा तेषामनस्तित्वाद् बीजाऽङ्कुरस्तम्बनालफलात्मकानां चेतनात्मानमन्तराऽनस्तित्वात् तत्तत्पदार्थरूपः सर्व एवाऽऽत्मा ज्ञानमिति। नहि ज्ञानेन घटादयः साध्यन्ते ज्ञानमेव घटादिना साधनीयमिति, ज्ञानेन चाऽऽत्मा साधनीय इति, येन यत् साध्यते स तदंश इति तदात्मक इति यथा वह्नेरंशो विस्फुलिङ्गो वह्निरिति यथा तेजसोंऽशः प्रकाशस्तेज इति यथा इन्द्रियांशो चेतन इन्द्र इति वा विपरीता व्याप्तिरंशेनांऽशिसाधिका, तथा च तत् सर्वमात्मैव ज्ञानमिति, तच्च क्षणान्तरे विलीनतया विषयान्तरप्रकाशतया च क्षणिकमिति आत्मा क्षणिक इति सर्वत्र आत्मा ख्यायते इत्यात्मख्यातिरेवेति। न च परस्परविरुद्धानामेषां शून्यत्वे पर्यवसानामिति वाच्यम्। नहि घटस्य घटाभावस्याऽधिकरणात्मकस्य शून्यत्वे पर्यवसानम्, भावतया ग्राह्यत्वेन प्रत्यक्षविरोधात् व्याप्त्या सत्तया साधितत्वात् सुरूपाख्यस्य निरूपाख्यत्वनीरूपाख्यत्वयोर्बाधितत्वात्। न च विरुद्धानामेकत्राऽसमावेशाज्ज्ञानाऽनात्मकत्वमिति वाच्यम्, संयोगस्याऽव्याप्यवृत्तेः स्वाऽभावेन सह समावेशनाज् ज्ञानाऽनात्मकत्वसाधनं हतमेव, धर्माऽधर्मयोर्विरुद्धयोरप्येकत्र समावेशस्य सर्वतन्त्रसिद्धान्तितत्वात्, अग्निजलयोर्विरुद्धयोरपि जलस्याऽग्निजन्यत्वस्य प्रतितन्त्रसिद्धत्वात्, स्वाप्ने पदार्थे विरुद्धयोर्मृत्युजीवनयोरपि स्वेनैव कदाचिदनुभूतत्वात्, आकाशे शब्दशब्दाभावयोरपि स्थितत्वाद्विरोधोऽकिञ्चित्करः, अस्माकं सर्वेषां पदार्थानाम् अव्याप्यवृत्तितया ज्ञाने भावाऽभावानां सर्वथाऽविरोधात्, संशये ज्ञानाऽज्ञानयोरपि भावाभावयोरिवाऽविरोधात् ज्ञाने स-

वेषां तदात्मकतयाऽन्यविरोधाच्च, क्रियायाः क्षणमात्रस्थायितयाऽर्थ-
क्रियाकारित्वस्य सत्त्वस्य क्षणिकत्वादेव पदार्थजातस्य क्षणिकत्वात्
ज्ञानस्यापि सतः क्षणिकत्वमर्थक्रियाकारित्वात् आत्मनोऽपि सतः
क्षणिकत्वम् अर्थक्रियाकारित्वात्, क्षणिकं सर्वं पुञ्जात्मकम् पुञ्जाऽ-
नुकूलशक्तिमत्त्वात्, क्षणिकं सर्वं शक्तिमत् क्रियाकारित्वात्, क्षणिकं
सर्वं सक्रियं स्वात्मलाभात्, क्षणिकं सर्वम् आत्मलाभवत् आत्मात्म-
कत्वात्, क्षणिकं सर्वम् आत्मात्मकम् विषयत्वेन व्यवस्थानात्, वि-
षयत्वं च विषयि विनाऽनुपलभ्यमानं विषयि विज्ञानं निवेदयति,
विषयि विना विषयाणामलीकत्वादेव ज्ञानात्मकं सर्वमात्मात्मकमिति
जाग्रतीव स्वप्ने पदार्थरूप आत्मैव सुषुप्तावपि विलयधाराऽऽत्मक
आत्मैवेति तत्राऽऽत्मख्यात्या तथैव बाह्यशुक्तिरजतादावपि ज्ञानात्मैव
ख्यायत इति सर्वत्राऽऽत्मख्यातिः सर्वथाऽप्रतिक्षेप्या।

माध्यमिकानां शून्यतत्त्वे सर्वपदार्थानां विराम इतिमतिः,
यतः कोऽयं घटो नाम ?, कम्बुग्रीवापृथुबुध्नस्थूलोदरादिमानिति,
किमिदं कम्बुग्रीवादिकम् ?, वर्तुलाऽन्वितकपालादिकमिति, किमिदं
कपालम् ?, व्यूहितकपालिकात्मकमिति, केयं कपालिका ?, मृत्तिका-
त्मिकेति, केयं मृत्तिका ?, कंकररजोऽणुरूपेति, कोऽयमणुः ?, काल्प-
निक इति, केयं कल्पना ?, विज्ञानमिति, किमिदं विज्ञानम् ?, आ-
त्मेति, कोऽयमात्मा ?, क्षणिका चिदिति, चित्त्वे किं क्षणिकत्वम् ?,
द्वितीयक्षणाऽस्थायित्वमिति, कोऽयं क्षणः ?, क्षयशीलश्चोत्तरध्वंसप्र-
तियोगी प्रवाह इति, कोऽयं क्षयो ध्वंसश्चेति ?, अभाव इति चेत् !
तस्य सत्त्वविरोधाद् भावभिन्नस्य तस्य किमात्मकता ?, असत्त्वात्म-
कत्वे समायातं निरुपाख्यत्वं शून्यत्वमिति, तथैव चान्ततः सर्वेषां
शून्ये पर्यवसानम्, यत् सत् तत् क्षणिकम्, यत् क्षणिकं तन्नास्ती-
ति तदुत्तरक्षणलाप्यत्वाच्छून्यमेवेति, यत् पूर्वं न पश्चान्न तन्मध्येऽपि
शशशृंगवदिति सर्वं शून्ये पर्यवस्यति, भूतो वर्तमाने न, वर्तमानो
भूते न, भूतो भविष्ये न, भविष्यो भूते न, वर्तमानो भविष्ये न,
भविष्यो वर्तमाने न, यश्चोभयतो न स मध्येऽपि न, तथा च यस्य
कार्यकारणभावो न तत् सर्वथा न, इति विवर्त एव सदधिष्ठान-
कल्पनारूपोऽजात एव, अत एव असतो वन्ध्यापुत्रस्य ख्यात्यदर्शनात्
असत्ख्यातिरेव शुक्तिरजतादौ तथाऽन्यत्राऽपि, शून्ये तत्त्वे सर्वदा
अबाधितप्रत्यभिज्ञाबलम्, तत एव सृष्टौ शून्यदृष्टिवादोऽसत्ख्याति-
फलकः, यन्मिथितं तत् अपरमार्थतत्त्वम्, यत् परमार्थतत्त्वं तच्छू-
न्यम्, तच्च सत्त्वाऽसत्त्वादिभिरनिर्वाच्यं सर्वभावानां परमार्थरूपम्,

वस्तूनां द्वैधात्वे यत् सत्त्वं तत् सांवृतं रूपमनिर्वाच्यं वाध्यं च, यद् असत्त्वं शून्यरूपं तद् अवाध्यं पारमार्थिकम्, सर्वशून्यत्वभावना नैरात्म्यभावनापर्यन्तैव, सा अवाध्या, शून्यत्वदृष्टिः स्वरूपतोऽपरमार्थभूता, विषयस्य पारमार्थ्येऽपि शून्यत्वस्याऽनिर्वाच्यस्य निरधिष्ठाना कल्पना युक्तिवलादेव, अतोऽन्तेऽपि अनिर्वाच्यसर्वशून्यत्वरूपो मोक्ष इति, मोक्षोपायो नैरात्म्यभावना अनित्यभावनाऽसत्कारणकगर्भाऽसत्ख्यातिरूपेति, सत्कोटितोऽसत्कोटितः सदसत्कोटितस्तद्विलक्षणकोटिश्चापि विलक्षणं शून्यं परमार्थसदिति शून्याऽद्वैतवादोऽनात्मलाभख्यात्यात्मक एव, अविद्यात्मकसंवृतिसत्त्वे संस्कारविज्ञाननामरूपषडायतनेन्द्रियस्पर्शवेदनातृष्णोपादानभवजातिजरामरणाऽऽत्मसत्त्वम् अविद्यानाशे पूर्वपूर्वनाशादुत्तरोत्तरनाशादात्मपर्यन्तानां शून्यत्वे पर्यवसानात् सर्वमसदेवेत्यसत्ख्यातिर्बाह्ये चाऽऽन्तरेऽवसाने मोक्षेऽपीति। वाह्यानां शून्ये पर्यवसानं यथा—

घटो गोलस्तथा पिण्डश्चक्रं गोलं कणस्तथा।
सूर्यो गोलः शशी गोलः क्षितिर्गोला च खं तथा॥ १॥
मध्याकाशो महाकाशो गोलो ब्रह्माण्डगोलकम्।
महाकाशात्मकं शून्यं तथाऽणुगोलकात्मकः॥ २॥
तस्यापि विलयो विन्दौ विन्दुगोलस्ततस्तराम्।
शून्यं गोलं महाशून्यं सर्वं सिद्ध्यति चान्ततः॥ ३॥
तेजसां विलये शून्यं तामिस्रं शून्यसंज्ञितम्।
ज्ञानस्य विलये तद्वत् तामिस्रं शून्यसंज्ञितम्॥ ४॥
अज्ञानां विलये यद्वत् शून्यशेषं भवत्यपि।
अर्थानां विलये तद्वच्छून्यं तामिस्रनामकम्॥ ५॥
क्षणिकाः शून्यशेषा वै विज्ञानं शून्यशेषकम्।
वाह्यं तथाऽऽन्तरं शून्यम् असत्ख्यातमशेषकम्॥ ६॥

अथ जैनानाम् परमार्थतया सर्वथाऽनैकान्तिकताख्यातिः, यतः प्रत्येकपदार्थः स्वस्वद्रव्यक्षेत्रकालभावाऽऽद्यपेक्षया स्वात्मना भावरूपोऽस्त्येवेति 'स्यादस्ति'विषयः प्रथमो भंगः। स एव पदार्थः परात्मनाऽभावरूपः परद्रव्यक्षेत्रकालभावाद्यपेक्षया परात्मनाऽभावरूपो नास्त्येवेति 'स्यान्नास्ति'विषयो द्वितीयभंगः। स एव पदार्थः स्वस्वाऽपेक्षयाऽस्त्येव किन्तु परापेक्षया नास्त्येवेत्यस्तिनास्त्युभयविषयः तृतीयो भङ्गः। स एव पदार्थः स्वस्वरूपेण कीदृश इति यथावदेकान्तपक्षेण कथयितुमशक्यः, अस्तिरूपेण कथने नास्तित्वाऽभाव आपद्येत, नास्तिरूपेण कथनेऽस्तित्वाऽभाव आपद्येतेत्यतः स्यादवक्तव्यवि-

षयश्चतुर्थभंगः। स एव पदार्थ एकस्मिन्नेव समयेऽस्तित्वरूपेण स्वपर्यायसद्भाववान् नास्तित्वरूपेण परपर्यायसद्भाववान् भवति, किन्त्वेकस्मिन्नेव क्षणे तादृशोभयभाववानिति कथयितुमशक्यः, यतोऽस्तित्वभावकथने नास्तित्वाभाव आपद्येतेति स्यादस्त्यवक्तव्यविषयः पञ्चमो भंगः। तत्रैवैकस्मिन्नेव समये तद्भावान्तर्गत-नास्तित्वभावकथनेऽस्तित्वाऽभाव आपद्येतेति स्यान्नास्त्यवक्तव्यविषयः षष्ठो भंगः। तत्रैवाऽस्तित्वभावकथने नास्तित्वाऽभाव आपद्येत नास्तित्वभावकथनेऽस्तित्वभावाऽभाव आपद्येत तत्र पदार्थाऽस्तित्वनास्तित्वोभयभावौ त्वेकस्मिन्नेव समये सहगौ स्तः परन्तु कथयितुमशक्यौ, यतो वाणी तु कर्मपुद्गलरूपाऽस्ति ततः स एव पदार्थः स्यादस्तिनास्त्यवक्तव्यविषयः सप्तमो भंगः। सप्तभंगेभ्योऽधिको भंगो नहि सम्पद्यते, तथा च सर्वपदार्थस्वरूपम् अनैकान्तिकमित्यनैकान्तिकताख्यातिरेवेति।

घटादिकं क्वचित् स्वात्मना भावरूपम्, क्वचित् परात्मनाऽभावरूपम्, स्वात्मनाऽस्तित्ववत् परात्मना नास्तित्ववत्, स्वपरोभयात्मना सत्त्वाऽसत्त्वात्मकम्, स्वात्मना वक्तव्यम् परात्मनाऽवक्तव्यम्, स्वपरोभयात्मना वक्तव्याऽवक्तव्यम्, एवं च सति सत्त्वाऽसत्त्व-वक्तव्याऽवक्तव्यतया सर्ववादाश्रयं घटादिकं नैकान्तस्वरूपमिति सर्वे पदार्था व्याख्याताः, अतः पदार्थानां नियतत्वाऽनियतत्व-प्रधानत्वाऽप्रधानत्व-द्रव्यत्वाऽद्रव्यत्व-शब्दवाच्यत्वाऽशब्दवाच्यत्व-विज्ञानगम्यत्वाऽविज्ञानगम्यत्व-पुरुषानुग्राह्यत्वा ऽ पुरुषानुग्राह्यत्वादिकमप्यनैकान्ततया सम्पन्नम्, अत एव च-भावैकान्तत्वम् अभावैकान्तत्वम्, द्वैतैकान्तत्वमद्वैतैकान्तत्वम्, नित्यैकान्तत्वमनित्यैकान्तत्वम्; भेदैकान्तत्वमभेदैकान्तत्वम्, हेत्वैकान्तत्वमहेत्वैकान्तत्वम्, सापेक्षैकान्तत्वं निरपेक्षैकान्तत्वम्, दैवेकान्तत्वमदैवैकान्तत्वम्, पुरुषार्थैकान्तत्वमपुरुषार्थैकान्तत्वम्, इत्येवमादीनां परस्परविरुद्धतया कथञ्चिदपि सिद्ध्यभावाद् अनैकान्तिकत्वं फलतः समायातीति अनैकान्तिकताख्यातिः सर्वत्र फलति। शुक्तौ रजतभानस्थलेऽपि मिथ्याज्ञानविपरीतज्ञानाऽज्ञानाऽपूर्णज्ञानमायामोहाऽलीकादि यत् किमप्यविद्यात्मकं तत् सप्तभंगविषयं सत् अनैकान्तिकताख्यातिविषयमेवेति। एतादृश्यविद्यालये सति सम्यग्ज्ञानकेवलज्ञान-पूर्णज्ञानाऽतिशयज्ञान-नित्यजागरणज्ञान-त्रिकायज्ञान-सत्यज्ञान-सार्वज्ञ्य-नित्यप्रबोध-प्रकाशाद्यात्मकज्ञानानि यथार्थविषयाण्यपि सप्तभंगविषयतया अनैकान्तिकताख्यातिरूपाण्येव। एवं केवलदर्शननिर्वेदनबोधलाघवप्रकाशाऽमरसम्विदमूर्तसम्वित्सुलक्षणसंविच्छक्तिसम्विदोऽपि समुदिता यथार्था

अपि सप्तभंगविषयतया अनैकान्तिकताख्यातिरूपा एवेति। सिद्धदशायां सम्पूर्णज्ञानमयश्चात्माऽपि अनैकान्तिकताख्यातिरूपः। मुक्तः परिणामरूपरसगन्धस्पर्शगुरुत्वसंयोगलिङ्गशून्योऽनुपमोऽकथनीयो निरामयः सच्चिदानन्दरूपोऽव्ययो विभुरचिन्त्योऽनाद्यनन्तो ब्रह्मेशोऽनङ्गो ज्ञानदर्शन एकोऽनेकोऽमलस्वरूपो विमलविज्ञानोदयरूपो गंभीरनिर्मलप्रकाशाऽऽधारोऽपि यथार्थोऽपि सप्तभंगविषयतया अनैकान्तिकताख्यातिरूप एवेति।

सत्पदार्थस्य सत्स्वरूपभानम् असत्पदार्थस्याऽसत्स्वरूपभानं सम्यग्दर्शनं यथार्थज्ञानम्, तच्च हृदये वर्तते तदपि सप्तभंगविषयतया अनैकान्तिकताख्यातिरूपम्। असत्यस्य सत्यदर्शनं सत्यस्याऽसद्दर्शनं मिथ्यादर्शनं यथा कामलरोगिणः-पीतः शंख-इति तदपि सप्तभंगविषयतया अनैकान्तिकताख्यातिरूपम्। ज्ञानदर्शनचारित्र्यतपोवीर्यादिगुणिन आचार्यात्मानोऽपि सप्तभंगविषयतया अनैकान्तिकताख्यातिरूपाः। ज्ञानाऽऽवरणीयदर्शनाऽऽवरणीय-वेदनीय-मोहनीय-जीवनीया-ऽभिधानीय-गोत्रीयाऽन्यविधीयाऽन्तरायादिकर्मणां पृथ्वीजलतेजोवायुकायानां घनसूक्ष्माणां स्पर्शकायश्वासपुष्पाख्यप्राणानां सूक्ष्मस्थावरत्रसस्थावराणां परमाणुद्विदलपुद्गलरेणुलिक्षायूकायवस्तम्बतरुगजादीनामपि सप्तभंगविषयतया अनैकान्तिकताख्यातिरूपतेति।

गुञ्जाफलनिभे विन्दौ जले सलिलपुद्गलाः। पञ्चत्रिंशत्सहस्राणि चेतनाः संभवन्ति हि ॥ १ ॥ एवं पृथ्वीविकारेऽपि कंकरेऽप्यनलेऽनिले। तावन्त एव विद्यन्ते पुद्गलाश्चेतनाश्रितः ॥ २ ॥ ज्ञानं जीवस्वरूपं तत् स्वपरव्यवसायकम्। प्रवृत्त्या वा निवृत्त्याऽनुमीयते सप्तभंगगम् ॥ ३ ॥ मतिः श्रुतं चाऽवधिश्च मनःपर्यायमित्यपि। केवलं चेति पञ्चापि ज्ञानं नैकान्तिकं हि तत् ॥ ४ ॥

पञ्चेन्द्रियमनोजन्योऽनुभवो मतिसंज्ञकः। स्मृतिः साऽपि तथा प्रत्यभिज्ञासंज्ञः सुतर्ककः ॥ ५ ॥ स च चिन्ताऽभिनिबोधोऽनुमानं कथ्यतेऽत्र वै। श्रुतं ज्ञानं विचाराख्यं कम्बुग्रीवादिमानयम् ॥ ६ ॥ अर्थक्रियाप्रकारीति शास्त्राऽऽगमजमित्यपि। अवधिर्ज्ञानमत्रापि रूपिद्रव्यात्मगोचरम् ॥ ७ ॥ भूतभाविभवाऽऽभासं जन्मप्रत्ययरूपि च। गुणप्रत्ययरूपं च देहान्तरसमागमम् ॥ ८ ॥ मनःपर्यायसंज्ञं तु परमानन्दवेदनम्। केवलं ज्ञानमत्रोक्तं क्षणैक्ये त्रिक्षणा तु वित् ॥ ९ ॥ तदेव मुख्यं प्रत्यक्षम् आत्मज्ञानं तदेव हि। तन्मनोऽक्षाऽनपेक्षं वै तथाऽतीन्द्रियमीरितम् ॥ १० ॥ अक्ष्णोतीति प्रजानाति स आत्माऽक्षः

प्रतिष्ठितः। विनेन्द्रियं विना चैव मनः केवलचिद्भवम् ॥ ११ ॥ अतः केवलमित्युक्तं ज्ञानमात्मगतं हि तत्। ज्ञातं यत् केवलज्ञाने नैव प्रत्यक्षमेव तत् ॥ १२ ॥ मुक्तौ चेदं सदा तिष्ठत्येव सर्वज्ञतात्मकम्। ज्ञानस्याऽप्राप्यकारित्वात् स्वस्थितं सर्वमेव तत् ॥ १३ ॥ ब्रह्माण्डादिप्रविज्ञानं सर्वज्ञस्य मतं हि तत्। आस्माकीनेन चाऽपूर्णज्ञानेन पूर्णमेव तत् ॥ १४ ॥ सर्वज्ञस्य परं चानुमीयते ज्ञानमेव तत्। इदं सर्वं सप्तभंगीविषयं ख्यायते ततः ॥ १५ ॥ अनैकान्तिकताख्यातिरूपं नैकान्तरूपकम्। एवं यत् परतो ज्ञानं परोक्षं तन् मतिः श्रुतम् ॥ १६ ॥ सप्तभंगीनयाऽऽच्छाद्यम् अनैकान्तिकताऽऽख्यकम्। समन्तभद्रविदुषा सप्तभंगीनयात्मकः ॥ १७ ॥ कृतः समन्वयश्चाऽयं फले नैकान्त्यतां गतः। ग्रासो मक्षिकया युक्तो भक्ष्यो वान्तिफलो हि सः ॥ १८ ॥ सम्यक्त्वं चेन्न वै सप्तभंगभज्यं तदा निजः। सप्तभंगनयस्तत्र व्यभिचारी निमर्थकः ॥ १९ ॥ सम्यक्त्वं चापि मिथ्यात्वं परस्परसुबाधितम्। यदा मिथ्यात्वमेवाऽस्ति सम्यक्त्वं नास्ति वै तदा ॥ २० ॥ मिथ्यात्वं सर्वथा सर्वकर्मबन्धनकारणम्। सप्तभंगप्रभग्नं तत् त्वनैकान्तिकतां गतम् ॥ २१ ॥

तानि मिथ्यात्वानि-हठाऽऽग्रहि-कदाग्रहिदुराग्रहिस्वाभिग्राहिस्वाभिनिवेशिसांशयिकस्वाभिचारिकाऽनाज्ञिकाऽज्ञानिकभ्रमाऽवलम्बितलौकिकरीतिकस्वार्थिकपारम्परिकैन्द्रियैकमानसिकाऽऽभिप्रायिकशाब्दिकसारणिकदार्शनिकनैद्रिकौपचारिकाऽर्थवादिककालिकस्वाभाविकदैशिकवास्तविकधार्मिकगौणिकमिश्रितवैज्ञानिकसाम्प्रदायिकनैयतिककामिकौद्यमिकप्रादेशिककापटिकच्छाद्मिकछालिकनैग्रहिकस्वाच्छन्दिकदौषिकघातिकतैर्थिकस्वार्थप्रकर्मैषिकनैमित्तिकसाहसिककुप्रावर्णिककुप्रावचनिकलौकोत्तरिकरागिकाऽऽडम्बरिकनैग्रहिकभांगिकमौखिकादिरूपाणि बहुधा सन्तीति तान्यनैकान्तिकताख्यातिरूपाण्येवेति।

सम्यक्त्वज्ञानपूर्वं यत् सर्वं मिथ्यात्मकं हि तत्। मिथ्यात्वज्ञानरोधे वै सम्यग्ज्ञानसमर्थता ॥ २२ ॥ ततो वै सम्यगुत्पादे मिथ्या सम्यक्त्वमीयते। सम्यग्ज्ञानेऽत्र हेतुस्तु सम्यग्दर्शनमस्ति हि ॥ २३ ॥ सम्यग्ज्ञानेन चारित्र्यं गुणयुक्तं भवत्यपि। चारित्र्यगुणलाभेन कर्मनाशो भवत्यति ॥ २४ ॥ कर्मनाशे सति द्राग् वै मोक्षप्राप्तिर्ध्रुवा मता। सम्यग्ज्ञानं भवेद् द्वेधा नैसर्गाच्चोपदेशतः ॥ २५ ॥ फलं क्षयोपलब्धिर्वै शुद्धिलब्धिस्तथा शुभा। देशनालब्धिरेवाऽपि प्रयोगाऽऽलब्धिरित्यपि ॥ २६ ॥ तथा करणलब्धिश्च पञ्चलब्धिमयं

फलम्। सम्यक्त्वं सप्तधा प्रोक्तं–मिथ्या–सम्यक्त्वमादिमम् ॥ २७ ॥ साऽऽस्वादनं तु सम्यक्त्वं द्वितीयं परिकीर्तितम्। तृतीयं मिश्रसम्यक्त्वं चतुर्थं चौपशामिकम् ॥ २८ ॥ क्षयोपशमनामाऽपि पञ्चमं परिकीर्तितम्। षष्टं वेदकसम्यक्त्वं क्षायिकं सप्तमं मतम् ॥ २९ ॥ सम्यक्त्वं पञ्चधा यद्वा प्रकारान्तरतो मतम्। आद्यं कारकसम्यक्त्वं सम्यक्त्वं रोचकं ततः ॥ ३० ॥ सम्यक्त्वं दीपकाख्यं च सम्यक्त्वं निश्चयात्मकम्। व्यावहारिकसम्यक्त्वं पञ्चमं परिकीर्तितम् ॥ ३१ ॥ श्रद्धाचतुष्टयं यत्र यस्मिन् लिंगत्रयं तथा। दशधा विनयो यत्र शुद्धता त्रिविधा तथा ॥ ३२ ॥ पञ्चदूषणराहित्यं पञ्चलक्षणवाँश्च यः। शमः संवेगनिर्वेदावनुकम्पा च वै शुभा ॥ ३३ ॥ आस्था श्रेष्ठेति–पञ्चाढ्यः सम्यक्त्वज्ञानवान्मतः। पञ्चभूषणशोभाढ्यश्चाऽष्टप्रभावनान्वितः ॥ ३४ ॥ जरणाषट्कसंयुक्तः षडाचारसमन्वितः। भावनाषट्कयुक्तश्च षट्स्थानाभियुतस्तथा ॥ ३५ ॥ दशधा रुचिमान् यश्च हितशिक्षापरोऽन्वहम्। सोऽयं सम्यक्त्वविज्ञानी मोक्षसंस्थितियोगवान् ॥ ३६ ॥ सर्वज्ञस्य सदाऽऽज्ञानां पालनं सेवनं मतम्। श्रावकाणां समाचारः सर्वज्ञाऽऽज्ञाप्रपालनम् ॥ ३७ ॥ तत्रैव मतियोगश्च तत्परश्चाऽऽप्तदेशने। तत्त्वाऽतत्त्वादिसंज्ञाने बुद्धिर्यस्य नियोजिता ॥ ३८ ॥ संयमानां भावना च सम्यक्तारुचिरुत्तमा। पापह्रासप्रयासश्च त्रसस्थावररक्षणम् ॥ ३९ ॥ गुरुपदिष्टमार्गस्थस्तत्प्रसादप्रवीणकः। श्रावकाणां गुणाश्चैकविंशतिलक्षणानि च ॥ ४० ॥ व्रतानि द्वादशैवाऽतिचारसंवर्जितानि च। सप्तदशापि नियमा दयापालनमित्यपि ॥ ४१ ॥ प्रत्याख्यानानि दशधा सर्वदोषविवर्जिता। एकादशप्रतिमा च लक्षणानि शुभानि च ॥ ४२ ॥ अन्तिमा च परा शुद्धिर्मृत्युः सप्तदशाऽभिधः। स्वप्नादिभिः समालेख्यः समालेखनसंस्थितिः ॥ ४३ ॥ समाधिमरणं ध्यानं चतुर्घेति समाहितः। सिद्धो बुद्धश्च मुक्तश्च परनिर्वाणसंभृतः ॥ ४४ ॥ सर्वदुःखाऽपरिक्लिष्टो मोक्षाऽनन्तसुखी मनः। अन्यसुखोपमा नास्ति निराबाधाऽतुलं सुखम् ॥ ४५ ॥ अनागतेऽत्यनन्तं तत् त्वेकान्तं सुखमुत्तमम्। मोक्षात्मकं व्रजन् विष्टिर्यथा यानवहो मतः ॥ ४६ ॥ तथाऽयं सप्तभंगातिभारवाही प्ररूपितः। यथा द्रव्ये गुणे जातौ सप्तभंगीनयो मतः ॥ ४७ ॥ ज्ञाने मोक्षे तथा भंगः सुखे चात्मनि पुद्गले। भ्रान्तौ मिथ्यात्वसंयोगे विपरीते प्रदूषणे ॥ ४८ ॥ नित्ये चैकान्तिके चाऽनैकान्तिकेऽपि नये तथा। सप्तभंग्यां तु सुतरामनैकान्तिकता मता ॥ ४९ ॥ अतः ख्यातौ हि सर्वत्र मते धर्मे पथि प्रिये। अनैकान्तिकताख्यातिः सर्वथाऽऽर्हततत्त्वगा ॥ ५० ॥

जाग्रत्सृष्टिर्यथा सत्याऽप्यनैकान्तिकतां गता। सप्तभंगनयेनैवं, स्वाप्नं सत्यं तथापि तत् ।। ५१ ।। सप्तभंगनयेनाऽनैकान्तत्वख्यातिमेति हि।—'मति-श्रुता-ऽवधिज्ञानयुतोऽरिहप्तृचेतनः ।। ५२ ।। मातृकुक्षौ यदाऽऽयाति तदा माता प्रपश्यति। स्वप्नान्येतानि रम्याणि फलाधानकराणि वै ।। ५३ ।। ऐरावतं गजं शुक्लवृषभं केशरीश्वरम्। लक्ष्मीं कुसुममालां च पूर्णचन्द्रं च भास्करम् ।। ५४ ।। ध्वजं पूर्णं च कलशं तथा पद्मसरोवरम्। क्षीराब्धि देवदेवाढ्यं विमानं रत्नसञ्चयम् ।। ५५ ।। निर्धूमाग्नि तथा नैजाभिषेकं चेति वै यदा। तदा चैषां फलं श्रेष्ठाऽरिहन्पुत्रजनिप्रदम् ।। ५६ ।। अतः स्वाप्नं समग्रं वै ज्ञानं सत्यं तथापि तत्। सप्तभंगीनयव्याप्तं नैकान्तख्यातिमर्हति ।। ५७ ।।

सर्वे वै पुद्गला नाश्या जीवा नित्यास्ततः सदा। कर्तव्या क्रमशः श्रेष्ठगत्यर्थं दृष्टिभावना ।। ५८ ।। अनित्यभावना पूर्वं ततोऽशरणभावना। संसारभावना पश्चात् ततश्चैकान्तभावना ।। ५९ ।। अन्यत्वभावना पश्चाच्छष्ठ्यशुचित्वभावना। आस्त्रवभावना पश्चात् ततः संवरभावना ।। ६० ।। निर्जरा भावना पश्चाल्लोकसंस्थानभावना। बोधिबीजा भावना च द्वादशी धर्मभावना ।। ६१ ।। भावनाभिः परं पारं पदं याति हि चेतनः। किन्तु ता भावनाः सप्तभंगन्यायाऽदितो यतः ।। ६२ ।। अनैकान्तिकताख्याति समायान्ति समन्ततः। फलं भावयमानानां नैकान्तं समुदीरितम् ।। ६३ ।।

जीवाऽजीवौ पुण्यपापे चाऽऽस्त्रवः संवरस्तथा।
निर्जरो बन्धनमोक्षौ च तत्त्वानि नवसंख्यया ।। ६४ ।।

तत्र जीवः—अनाद्यनन्तः स्वयंसिद्धः शाश्वतः केवलज्ञानदर्शनगुणात्मको नित्यज्ञानगुणदर्शनः सदा जीवितो ज्ञानाऽऽवरणीयकर्मपुद्गलाऽऽच्छादितो नित्यस्वचैतन्याऽभिमतिप्रतिभासनो मतिश्रुताऽवधिमनःपर्यायाऽऽदिभासुरो मिथ्यात्वोदयाऽभिभूतज्ञानविपरीतप्रकाशवान् अज्ञानसंभृतश्चैतन्यवान् सुखदुःखाऽभिवेदनावान् कर्मश्लेषविधुरः सन् केवलज्ञानदर्शनमयपरमात्माऽनन्तशक्त्याश्रयोऽसंख्यातप्रदेशाश्रयः स्कन्धात्मकः प्रदेशविश्लेषाऽप्रतियोग्यनन्तकालपर्यन्तचिरस्थाय्यसंख्यातप्रदेशात्मकः कर्मरहितः शुद्धः स्वच्छः सच्चिदानन्दसिद्धोऽरूपो रूपिकर्माऽस्पृष्टोऽवस्थास्वभावाऽपरिवर्तनोऽनन्तकालपर्यन्तैकाऽवस्थोऽनादिकालतः कर्मसहस्वरूपः कर्मपुद्गलाऽन्यकर्मपुद्गलाऽऽकर्षकः कर्मन्यूनाऽऽधिक्यप्रयुक्तगुरुत्वलघुत्वधर्मी यथाशरीरं रूपान्तरापन्नः पर्यायप्रविष्टोऽनन्तभेदभावापन्नो वर्तते।

जीवः एकधा चेतनः, द्वेधा सिद्धः संसारी च, त्रेधा त्रसः तथा

वरः सिद्धश्च, चतुर्धा–स्त्रीवेदी पुंवेदी नपुंसकवेदी अवेदी च, पञ्चधा–नारकी तिर्यङ् मनुष्यो देवः सिद्धश्च, षड्विधः–एकेन्द्रियो द्वीन्द्रियस्त्रीन्द्रियश्चतुरिन्द्रियः पञ्चेन्द्रियोऽनिन्द्रियश्च, सप्तधा–पृथ्वीकायो जलकायस्तेजःकायो वायुकायो वनस्पतिकायस्त्रसकायोऽकायश्च, अष्टधा–नारकी तिर्यक् तिर्यञ्ची मनुष्यो मानुषी देवो देवी सिद्धश्च, नवधा–नारकी तिर्यङ् मनुष्यो देव आहारी शरीरी इन्द्रियी श्वसोच्छ्वासी सम्भाषीति, दशधा–पृथ्वीजलतेजोवायुवनस्पत्येकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियभेदः, एकादशधा–दशभेदसहितः सिद्धः, द्वादशधा–पृथ्वीजलतेजोवायुवनस्पतिपञ्चसेन्द्रियत्रससिद्ध इति, त्रयोदशधा–पृथ्वीजलतेजोवायुवनस्पतित्रसषडपर्याप्तपर्याप्तसिद्ध इति, चतुर्दशधा–नारकी तिर्यक् तिर्यञ्ची मनुष्यो मानुषी भुवनपतिर्वाण्यन्तरो ज्योतीरूपो वैमानिको देव्यस्तच्चतुर्णां सिद्धश्चेति, पञ्चदशधा–सूक्ष्मश्चैकेन्द्रियो बहिरेकेन्द्रियो द्वीन्द्रियस्त्रीन्द्रियश्चतुरिन्द्रियोऽसंज्ञि पञ्चेन्द्रियः संज्ञिपंचेन्द्रियस्तदीयषडपर्याप्तपर्याप्तसिद्धभेद इति, एवं विस्तारतः ५६३ भेदा भवन्तीति।

जीवाः सर्वत्र सन्त्येवाऽनन्तरालोपमर्दिनः।
संभृताः घटरूपेण सदा निरवकाशिनः॥ ६५॥
जुवारिकाकणे जीवाः सूक्ष्माः सन्ति सहस्रशः।
यदि ते तु बहिर्भूत्वा पारावातसमा भुवि॥ ६६॥
भवेयुस्तर्हि लक्षाऽधियोजनक्ष्मातलेऽपि न।
समाविष्टा भवेयुर्वै तथा वारिकणेऽपि च॥ ६७॥
तेजःकणे तथैव स्युर्वायुर्बिन्दावपोति च।
भवन्त्येवाऽणवो जीवाः स्थावराः कायरूपिणः॥ ६८॥

तदेवं पृथिव्याः सर्वविधमृत्तिकाकंकरवालुकापाषाणक्षारलवणलोहधातुस्वर्णहीरकद्रवरङ्गरत्नभस्मपारदादिसमग्रतत्त्वानि जीवाणुसंभृतानि, जलस्य वृष्टिहिमनिर्झरणनदीसिन्धुमेघधूम्रनिहारदुग्धदधिमधुरसमदिरामज्जारक्तादिसमग्रतत्त्वानि जीवाणुसंभृतानि, तेजसः पार्थिवाग्निजलीयाग्निविद्युद्दीपभ्राष्ट्रचाकचक्यशिलातारकग्रहाऽरणिवंशकर्पूरकाचदर्पणदावानलोल्कावडवानलजाठरोष्णतापविषतिक्तज्वलनदाहोद्वेगादितत्त्वानि जीवाणुसंभृतानि, वायोः झंझावातश्वासोच्छ्वासप्राणभूतान्तर्वाताऽन्तरीक्षग्रहाधारमहावातादितत्त्वानि ससम्मर्दजीवाणुसंभृतानि, वनस्पतीनां बीजांऽकुरपत्रतृणशलाकाग्रन्थिस्तम्बस्कन्धशाखानालपत्रपुष्पफलत्वग्गर्भमूलदलदण्डचामरतन्तुकोशपक्षदन्तगुच्छवल्लीलताविरुतस्तबकशाकभाजाऽऽरनालतुषाकणपटव्यूहाऽन्तःकाष्टस्तम्भनोडविवरनाडीरसगर्भदण्डदुग्धपाकरोमदण्डकवालस्थाणुकन्दघासो[illegible]जलरुहा[illegible]हिरपल्लव-

कलिकाद्याः सर्वपदार्थाः स्थावरकाया जीवाणवः, एवं जङ्गमकाया मनुष्यनारकितिर्यक्सेन्द्रियनिरिन्द्रियजलचरस्थलचरगगनचरवायुचरा अण्डजजरायूजस्वेदजकर्दमजमृज्जमलजकच्चरजाऽस्त्रजीवाः संकुचिताऽसंकुचितशरीराऽणवो मानवमूर्छिताऽणुमानवदेवाद्या जीवाणव एवेति, सर्वे ते सप्तभंगविषया अनेकान्तिकताख्यातिरूपणा इति।

अजीवतत्त्वम्—जीवप्रतिपक्षोऽजीवः, जडश्चेतनाशून्योऽकर्ताऽभोक्ताऽनाद्यनन्तः शाश्वतश्चेति वर्तते, धर्माऽस्तिकायोऽधर्माऽस्तिकाय आकाशास्तिकायः कालः स्कन्धरूपिपुद्गलाऽस्तिकायस्तद्गतवर्णगन्धरसस्पर्शपुद्गलगुणाः, पुद्गला अणुनित्याः, द्व्यणुकत्र्यणुकचतुरणुकसंघाताद्यात्मका उत्पादविनाशशालिनश्च द्रव्यक्षेत्रकालभावगुणाद्या अजीवा इति, आकाशोऽनन्तप्रदेशी कालस्त्वप्रदेशी।

पुण्यतत्त्वम्—शुभकर्मपुद्गलाः पुण्यानि सुखाऽऽनन्दमोदप्रमोदोत्सवहर्षतृप्तिशान्तिसमारामविरामरमणोल्लासप्रकाशप्रेमसत्त्वपाटवाऽऽनुकौल्यप्राकाम्यविनोदरतिस्नेहलग्नमैत्र्यादिफलकानीति।

पापतत्त्वम्—अशुभकर्मपुद्गलाः पापानि दुःखाऽऽन्ध्यनोदक्षयविनाशोद्वेगचिन्तातापशोकविषादतृष्णालोभक्रोधवेगजाड्यकलिकापटचछलधौर्त्यशात्रवतमोमोहाऽप्रगतिप्रातिकौल्यशोष्ण्यक्षुत्प्रावरणघूत्रकुण्ठितत्वरूक्षताव्याधिरुग्णताऽऽधिपीडाज्वलनक्लेदनशथिल्यभयद्वेषवासनावैपरीत्यवियोगनिम्नत्वदारिद्र्यनरकविशीर्णत्वादीनि पापात्मकानि पापपुद्गलफलकानीति।

आस्रवतत्त्वम्—अशुभयोग आस्रवः कर्मरूपोऽजीवः, पापानां नालिकारूपः, मिथ्यात्वाऽव्रतप्रमादकषायाऽशुभयोगप्राणातिपातमृषावादाऽदत्ताऽऽदानमैथुनपरिग्रहरुट्मानमायाग्रध्नाऽशुभमनोवाक्काययोगाऽभिनिवेशवृत्तिघातक्रियात्मकान्यास्रवतत्त्वानि संसारप्रदानीति।

संवरतत्त्वम्—आस्रवरोधनार्थकनालिकाः संवराः, सत्यज्ञतसम्यक्त्वव्रतपालनासावधानताऽकषायतायोगस्थैर्यकरुणादानदत्तव्रतब्रह्मचर्यनिष्परिग्रहबहिरिन्द्रियवशीकरणतामनोवाक्कायदुर्योगसमाधानयथोपयोगोपकरणग्रहणसूचीमात्रमायात्यागवागादिगुप्तद्वन्द्वसहिष्णुतादंशमशकाद्युपद्रवतितिक्षाऽनाक्रोशाद्रोहमार्दवसारल्यसंयमाऽऽराधनासच्चारित्र्याद्याः संवरा निष्कामभावनाऽनुष्ठिता आस्रवप्रतिबन्धकाः स्वबन्धनाऽकारकाश्चेतनोदयवर्धकाः संसारनिवृत्तिसहमित्राणीव भवन्तीति।

निर्जरतत्त्वम्—संवरारम्भपूर्वकालीनकर्मदलसमूलक्षयकरतपोविधानात्मकाऽऽचरणानि निर्जराणि, अनशनोनुदरीवृत्तिप्रत्यावर्तनरसपरित्यजनकायशोषणान्तःकरणवश्यताप्रकटविविधतपश्चर्याप्रायश्चित्तदण्डविनय-

गुरुदेवसेवाभक्तिमोक्षशास्त्राभ्यासध्यानकार्यत्यागतपोरूपाचारविशेषाभि-यापनानि निर्जराणि मोक्षौपायिकानि पूर्वकर्मपापस्तरलयकारकाणीति।

बन्धतत्त्वम्—आत्मप्रदेशाः कर्मपुद्गलाश्च परस्परं समोतप्रोतग्रन्थनबद्धा एव वर्तन्ते इति कर्मतादात्म्यापन्नता एव बन्ध इत्युच्यते, स च प्रकृतिबन्धः स्थितिबन्धोऽनुभागबन्धः प्रदेशबन्ध इति चतुर्धा, तत्र कर्मणां स्वभावः परिणामश्च प्रकृतिबन्धः, स च निन्दाऽनुपकार-ख्यापनाऽपमाना ऽनन्तरायद्वेषक्लेशकलिमूकबधिराऽन्धकुण्ठिवृक्णखञ्ज-विचित्तनिद्राशोकदुःखानुत्पादकदयाऽघाताऽपरितापरागगायनशय्याऽऽस-ननैरोग्यकषायवेदनाकदाहाराऽसत्यवादममत्वाऽहन्त्वक्लिष्टतपःसमभाव-जघन्यवृत्तिकदाग्रहकठोरतानिकृष्टबलगतिजातिवर्णशरीरनीचगोत्रपरिवा-रसम्पद्दौर्भाग्याऽपकीर्तिभावहीनतादिरूपः प्राकृतबन्धः। स्थितिबन्ध-स्तु कृतकर्मजन्यदेवपितृनारकिमानवाद्यायुष्याऽबाधितकालाऽवस्थितिरू-पभोगप्रान्तावधिबन्धः। अनुभागबन्धस्तु कर्मभिरात्मनो गुणोदयनिरोध-कपराधीनत्वाऽसमर्थतामन्दताऽशक्त्याऽनुदयकुण्ठिततादिरूपः। प्रदेशबन्ध-स्तु कर्मपुद्गलदलाऽऽच्छादिततादृष्टिशून्यतायाथातथ्याऽज्ञानिताऽऽत्मभा-नविस्मृतिदेहपाशिताविविधरूपिताविविधमण्डलितताऽसत्ताऽव्यक्तताऽधि-कारितादिरूपः। वस्तुतः प्रकृतिबन्धो ज्ञानावरणीयकर्मदर्शनावरणीय-कर्मवेदनीयकर्ममोहनीयकर्माऽऽयुष्यकर्मनामकर्माऽन्तरायकर्माणि बध्ना-तीति प्रतिबन्धरूपः सः। स्थितिबन्धः त्रिंशत्कोटिकोटिसागरसमयपर्य-न्तोऽयं बन्धो ज्ञानावरणीयदर्शनावरणीयाऽन्तरायकृत्कर्मणां वर्तते। अ-नुभागबन्धो ज्ञानावरणीयकर्मभिरात्मनोऽनन्तज्ञानगुणावरणरूपो दर्शना-वरणीयकर्मभिरात्मनोऽनन्तदर्शनगुणाऽऽवरणात्मको वेदनीयकर्मभिरात्म-नोऽनन्तसुखाऽऽवरणात्मको मोहनीयकर्मभिरात्मनोऽनन्तशमतागुणाऽऽ-वरणात्मक आयुष्यकर्मभिरात्मनोऽक्षयस्थितिगुणाऽऽवरणरूपो नामकर्म-भिरात्मनोऽमूर्ततावधर्माऽऽवरणरूपो गोत्रकर्मभिरात्मनोऽगुरुत्वलघुत्वधर्मा-ऽऽवरणरूपोऽन्तरायकर्मभिरात्मनोऽनन्तशक्तिगुणाऽऽवरणरूपो बन्धोऽ-यमिति। प्रदेशबन्धः कर्मपुद्गलदलानामात्मज्ञानादिषु सहभावयोगात् सूर्याभ्रवन्नेत्रपटलवन्मधवस्त्रखड्गवत्कारागारस्थमानववच्चित्रकारचित्रव-त्कुम्भकारकृतपात्रवन्नृपाऽऽज्ञापितकोशाधिपादिवद् आत्मा कर्मभिर्वैचि-त्र्योदयानाप्नोतीति।

मोक्षतत्त्वम्—स्वात्मस्वरूपस्य नित्यविमलविज्ञानोदयो मोक्षः, भगवत्त्वाऽवाप्तिर्मोक्षः, सर्वकर्मबीजदग्धता मोक्षः, अनन्ताऽक्षयाऽव्य-याऽबाध्याऽनुपमसुखवत्ता मोक्षः। स्वात्मावगमः सर्वोपायपारंगताऽव्य-वहितोत्तरस्थितिरूपो मोक्षः। सम्यग्ज्ञानेन नित्यऽनित्यविवेकाऽऽशा-

श्चतशुद्धाऽशुद्धहिताऽहितलोकाऽलोकाऽऽत्माऽनात्मादिस्वरूपाणि जानाति, सम्यग्दर्शनेन ज्ञातस्वरूपाणां दार्ढ्यं विन्दति, सम्यक्चारित्र्येण दृढीकृतान् स्वात्ममोक्षार्थमाचरणेऽवतारयति, तपसा समारब्धोपायान् पारं नयतीति, तदा स्वयं समुत्तीर्णकर्तव्यताको मोक्षाभिगतो भवतीति, अत्र चारित्र्यतपसी साधने, ज्ञानदर्शने तु नित्ये आत्मतादात्म्यापन्ने इति।

जैनानां सर्वतत्त्वानां सप्तभंगसमन्विता। भवत्येवेति तत्त्वानां नैकान्तत्वप्ररूपणा ॥ ६९ ॥ जीवाऽजीवौ पुण्यपापे ह्यास्रवः संवरस्तथा। निर्जरो बन्धमोक्षौ च तत्त्ववैचित्र्यमीदृशम् ॥ ७० ॥ जीवा नित्याश्चेतनाश्च चिरस्थायिन एव ते। साधनैरूर्ध्वपदगा ऊर्ध्वकल्याणसारिणः ॥ ७१ ॥ च्यवनं जन्म दीक्षां च ज्ञानं मोक्षं परात्परम्। कल्याणं यान्ति विविधं सौक्ष्म्यादूर्ध्वोर्ध्वलक्षणम् ॥ ७२ ॥ तत्त्वद्वयं तु संक्षेपात् जीवोऽजीव इतिद्वयम्। जीवस्तु जीव एवास्ति ह्यजीवोऽजीव एव च ॥ ७३ ॥ अन्यसप्ताधितत्त्वानि द्वयोरन्तर्गतानि वै। पुण्यपापाऽऽस्रवबन्धा अजीवेभ्यो भवन्ति यत् ॥ ७४ ॥ कर्मसंचायकास्ते व पुद्गलाः सन्ति सर्वथा। कर्मिजीवास्तु तानुत्पादयन्त्येवेत्यजीविनः ॥ ७५ ॥ संवरो निर्जरो मोक्षो धर्मतत्त्वानि तानि वै। जायन्ते जीवगुणतस्तस्माज्जीवा हि ते मताः ॥ ७६ ॥ त्याजयन्ति तथा कर्मपुद्गलानपि ते ततः। अजीवपुद्गलाः सन्ति जीवास्ते धर्मिजीवगाः ॥ ७७ ॥ सप्तभंगीनयो यद्वद् वर्तते जैनशासने। तथवाऽन्यो नयो ज्ञानस्वरूपः सप्तविग्रहः ॥ ७८ ॥

नैगमाख्यनयश्चापि संग्रहाख्यनयस्तथा। व्यवहारनयश्चापि ऋजुसूत्रनयस्तथा ॥ ७९ ॥ नयः शब्दात्मकश्चापि नयः समभिरूपणः। एवंभूतनयश्चैते नयाः सप्तप्रकीर्तिताः ॥ ८० ॥

अनन्तधर्मात्मकवस्तुगतविशेषधर्मग्रहणपूर्वकाऽन्यधर्मौदासीन्यभाववविषयपदार्थवर्णनं नाम नयः। प्रमाणांऽशो नयः। नयोऽपेक्षा। विचारमीमांसा नयः। विषयाणां सापेक्षो विचारो नयः। विरुद्धानाम् अविरुद्धतया व्यवस्थापनं नयः।

सप्तनयानां निदर्शनम्–भवतः क्व निवास इति प्रश्ने सति—

नैगमीयनयेन–देशग्रामभवनगृहैकखण्डपर्यन्तं संकुचितोचितनिवासोत्तरं तत्रापि, संग्रहनयेन–आसनमात्रस्थलनिवाससिद्धिः, तत्रापि व्यवहारनयेन–स्वशरीरमात्रनिजप्रदेशनिवाससिद्धिः, तत्रापि ऋजुन्यायेन–आत्माऽऽकाशप्रदेशमात्रनिवाससिद्धिः, तत्रापि शब्दनयेन–स्वस्वभावमात्रनिवाससिद्धिः, तत्रापि समभिरूपनयेन निजात्मगुणमात्रनिवाससिद्धिः, तत्रापि एवंभूतनयेन–निजात्मगुणोपयोगलक्षणमात्रनिवाससिद्धिर्भवतीति,

एतत्सप्तनयेनाऽपि यद्यत्सिद्धिः प्ररूपिता ।
सप्तभंगीनयस्तत्र सिद्धावप्युपयुज्यताम् ।। ८१ ।।

नैगमिकनयेन–प्राणपुद्गलादिसमूहात्मकशरीरस्य जीवत्वसिद्धिः, सर्वस्यांऽशस्यांऽशिस्वरूपत्वात् कार्यस्य कारणात्मकत्वाच्च । साग्रहिक-नयेन–असंख्यातप्रवेशाऽवगाहिवस्तूनां जीवत्वसिद्धिः, कर्मपुद्गलसंग्राहि-त्वात् । व्यावहारिकनयेन–इन्द्रियसत्ताकद्रव्ययोगिनो जीवत्वसिद्धिः, स्फु-रणवाण्यादिभोगादिव्यवहारवत्त्वात् । ऋजुसूत्रनयेन–सोपयोगिनो जीव-त्वसिद्धिः, कणकम्बलफलदलाद्युपयोगसूत्रात्मकत्वात् । शब्दनयेन–जीवा-ऽर्थवतो जीवत्वसिद्धिः. द्रव्यात्मनोऽपि जीवत्वसिद्धिः, अहं जीवामीति विद्रवामीति च शब्दादिविषयत्वात् । समभिरूपनयेन–ससत्ताकस्वगुण-रमणवतोऽपि जीवत्वसिद्धिः, स्वगुणे गुणिनस्तादात्म्यभावेन रमणाभि-रूपित्वात् । एवम्भूतनयेन–सिद्धिमतः सिद्धभगवतो जीवस्यैवापि जीव-त्वसिद्धिः, सर्वदासिद्धशाश्वतैवंभूतगुणवत्त्वात् ।

धर्माऽधर्माऽऽकाशकालपुद्गलाऽस्तिककायिषु ।
सप्तनयप्रयोगेणाऽजीवतत्त्वस्य साधना ।। ८२ ।।
पुण्यपापाऽऽस्रवसंव्रबन्धनिर्जरमुक्तिषु ।
सप्तनयप्रयोगेण जीवाऽजीवत्वसाधना ।। ८३ ।।
एवम्भूतनयस्याऽङ्गं सप्तभंगीनयः खलु ।
सप्तभंगीप्रयोगेणाऽनैकान्तिकसमाधिता ।। ८४ ।।
धर्माऽस्तिकायतत्त्वात्माऽजीवतत्त्वे तथाविधे ।
सप्तभंगप्रयोगेण ज्ञाता नैति कथां तथा ।। ८५ ।।
द्रव्याद्यपेक्षया चास्ति नास्त्यन्याऽपेक्षया घटः ।
स्यादस्ति, स्यात्तथा नास्ति, स्यादस्तिनास्ति मिश्रितः, ।। ८६ ।।
नैकान्तत्वेन वक्तव्यः= स्यादवक्तव्य एव सः, ।
अस्तित्वेनाऽप्यवक्तव्यः= स्यादस्त्यवाच्य एव सः ।। ८७ ।।
नास्तित्वेनाऽप्यवक्तव्यः= स्यान्नास्त्यवाच्य एव सः ।
नैकक्षणे हि तद् भावद्वयापन्नं भवेदिति, ।। ८८ ।।
एवं नैकक्षणेऽभावद्वयापन्नकथा भवेत् ।
ततः स्यादस्तिनास्त्यवक्तव्योवैसर्वथा घटः, ।। ८९ ।।
कथाविपयतां कांचिन्नैवाऽऽप्नोति घटादिकम् ।
धर्मादिश्चाऽपि नैवैति ख्यातिमेकान्तिकीं यतः ।। ९० ।।
अनैकान्तिकताख्यात्याश्रस्तयस्मात् फलान्मतः ।
नयश्चाऽनेकधर्मेभ्यश्चै कधर्मेण निर्णयम् ।। ९१ ।।



करोत्येव पदार्थस्य, ज्ञानं तस्मान्नयो मतः ।

नयाद्भिन्नं प्रमाणं वै नैकधर्मैर्हि वस्तुगैः ॥ ९२ ॥
नैकरूपेण वस्तूनां निर्णयं प्रकरोति तत् ।
ज्ञानं प्रमाणरूपं तद्वस्तुप्रामाण्यकारकम् ॥ ९३ ॥
गुणाऽगुणाऽवरोपात्मा निक्षेपः स्थापनात्मकः ।
नामनिक्षेप एवापि द्रव्यनिक्षेप इत्यपि ॥ ९४ ॥
भावनिक्षेप एवैते निक्षेपाः स्थापनात्मकाः ।
नयप्रमाणसुहृदो भवन्त्यर्थवहा हि ते ॥ ९५ ॥
प्रमाणानि भवन्त्यत्र चत्वार्येव नये यथा ।
प्रत्यक्षं चानुमानं चोपमाऽप्यागम इत्यपि ॥ ९६ ॥

तत्र वस्तूनां प्रत्यक्षं प्रत्यक्षप्रमाणम्, सेन्द्रियप्रत्यक्षं निरिन्द्रियप्रत्यक्षं च। सेन्द्रियप्रत्यक्षं द्वेधा–भावेन्द्रियप्रत्यक्षं द्रव्येन्द्रियप्रत्यक्षं च। द्रव्येन्द्रियप्रत्यक्षं द्वेधा–निर्वृत्तिप्रत्यक्षम् उपकरणप्रत्यक्षं च। निर्वृत्तिप्रत्यक्षं द्वेधा–आभ्यन्तरनिर्वृत्तिप्रत्यक्षं बाह्यनिर्वृत्तिप्रत्यक्षं च। उपकरणप्रत्यक्षमपि द्वेधा–नेत्रगोलककनीनिकासहकृतं दूरदर्शिकाचादिसहकृतं च। भावेन्द्रियप्रत्यक्षमपि द्वेधा–लब्धिशक्तिजन्यम् उपयुक्तशक्तिजन्यं च। निरिन्द्रियप्रत्यक्षं द्वेधा–प्रदेशविषयकं सर्वविषयकं च। प्रदेशविषयकं पञ्चधा–मतिज्ञानं श्रुतज्ञानम् अवधिज्ञानम् मनःपर्यायज्ञानं केवलज्ञानं चेति

मनोयुक्तेन्द्रियजन्यज्ञानं मतिज्ञानं चतुर्धा–अव्यक्तात्मकाऽवग्रहज्ञानं व्यक्तात्मकेहाज्ञानं निश्चयात्मकाऽपायज्ञानं स्मरणात्मकधारणाज्ञानं च। अथ पुनश्चतुर्धा मतिज्ञानम्–औत्पत्तिकी बुद्धिः, वैनयिकी बुद्धिः, कामिकी बुद्धिः, पारिणामिकी बुद्धिश्च। एवं मतिज्ञानमष्टधा भवतीति।

श्रुतज्ञानं चतुर्दशधा–अक्षरश्रवणजन्यम्, मौनिश्लोकचेष्टाध्वनिप्रभृतिजन्यम्, विवेकोत्प्रेक्षादिजन्यम्, अविवेकाऽनुत्प्रेक्षादिजन्यम्, पूर्वज्ञानिरचितसम्यक्श्रुतशास्त्रजन्यम्, कल्पितमिथ्याशास्त्रजन्यम्, सादिश्रुतजन्यम, अनादिश्रुतजन्यम्, सपर्यवसितश्रुतजन्यम्, अपर्यवसितश्रुतजन्यम्, दृष्टिवादश्रुतज्ञानम्, आगमिकश्रुतज्ञानम्, सामयिकादिश्रुतज्ञानम्, अनावश्यकादिश्रुतज्ञानम्।

अवधिज्ञानम्–मर्यादितरूपिपदार्थानामिन्द्रियाऽपेक्षारहितं स्वयं ज्ञानम्, अष्टधा–भेदद्वारकम्, विषयद्वारकम्, संस्थानद्वारकम्, बाह्याऽऽभ्यन्तरद्वारकम्, अनुगाम्यननुगामिद्वारकम, देशसर्वस्वद्वारकम्, हीयमानवर्धमानस्थिरस्वरूपात्मकम्, प्रतिपात्यप्रतिपातिज्ञानं चेति।

मनःपर्यायज्ञानम्–संज्ञिपंचेन्द्रियमनोगतभावबोधकं ज्ञानम्, तच्च ऋजुमतिरूपं वस्तुमात्रज्ञानम्, विपुलमतिरूपं च सर्वगुणधर्मवज्ज्ञानम्।

अवधिज्ञानाऽपेक्षया मनःपर्यायज्ञाने विशुद्धताऽधिका वर्तते।

केवलज्ञानम्–अनिन्द्रियप्रत्यक्षप्रमाणज्ञानम्, इदं मनुष्यसंज्ञि-कर्मभूमिज-संख्यातृद्-वर्षायुः-पर्याप्त-सम्यक्दृष्टि-संयतय-प्रमाद्यवेद्यकषायि-चतुर्विधातिकर्मविनाशि-गुणस्थानकवर्तिनां भवति, अत्र सर्वत्र सर्वद्रव्यक्षेत्रकालभावा हस्तामलकवत्प्रकाशन्ते, इदं जघन्याऽन्तमुहूर्तेऽवश्यमोक्षप्रदं भवतीति।

अथाऽनुमानम्–नयोक्तेजितसामान्यविशेषस्वरूपतादात्म्यग्रहोऽनुमानम्, तत् पूर्ववत्, शेषवत्, सामान्यविशेषवच्चेति त्रेधा। आद्यं-पूर्वचिन्हेन तस्यैव बालस्य युवावस्थायां प्रत्यभिज्ञानम्, प्रत्यभिज्ञानं नाऽनुमानातिरिक्तं किञ्चित्, प्रत्यक्षेण हेतुना व्याप्तिस्मरणेन तादात्म्यग्रहसंभवात्। द्वितीयं-शब्दभावाध्वन्यादिभिः पूर्वव्याप्तिग्रहस्मरणेन गजवाजिविमानादिज्ञानम्। तृतीयं-एकघटज्ञानेन कदलीफलाऽऽम्रफलज्ञानेन सामान्यविशेषात्मकतज्जातीयसर्वघटफलाकृतिसमवायज्ञानम्, नेदमलौकिकं प्रत्यक्षम्, व्याप्तिग्रहेण जायमानत्वात्। साभाग्येन धर्मेण सामान्यज्ञानं विशेषधर्मेण विशेषज्ञानं दृष्टविशेषनियमग्रहेण विशेषज्ञानमिति।

अथोपमाप्रमाणम्–सादृश्यज्ञानमुपमा, सा च प्रसिद्धोपमा, अप्रसिद्धोपमा, प्रसिद्धाऽप्रसिद्धोपमा, स्वस्य स्वमात्रोपमा चेति, प्रथमा-आगामिनि काले कल्किर्भविष्यति सः परशुरामसमो भविष्यतीति। द्वितीया-देवायुष्यं सागरभृतकणवर्षसमं, अत्र सागरे कणाः कैश्चिन्न भृता इत्यप्रसिद्धोपमा। तृतीया-द्वारिका कीदृशी? देवलोकगन्धर्वनगरोपमा। चतुर्थी रामरावणयुद्धं रामरावणयुद्धसमम्।

अथाऽऽगमप्रमाणम्–यथार्थज्ञानिसमुदीरितोपदेश आगमः, स च त्रेधा-सूत्रागमः प्रभुवाणी। अर्थागमः प्रभुवाण्यनुसृताचार्यवाणी। प्रभ्वाचार्यवाण्यनुसारिणी वाणी। व्यावहारिकी वाणी तत्त्रयानुसारिणी प्रमाणम्।

अथ नवतत्त्वेषु प्रमाणचतुष्टयप्रयोगाः—

जीवः-प्रत्यक्षेण-चेतनालक्षणयुक्तः, अनुमानेन-त्रसस्थावरलक्षणवान्, उपमानेन-आकाशवत् अरूपी अग्राह्योऽनाद्यनन्तः शरीरव्यापी तिले तैलवद् दुग्धे घृतवच्च, आगमेन शुभाऽशुभकर्मकर्ता तद्भोक्ता तद्विनाशकश्चेति।

अजीवः-प्रत्यक्षेण विशीर्णजडलक्षणः। अनुमानेन-नवताजीर्णतावान्, सकम्पेन धर्मास्तिकायः, अकम्पेन अधर्मास्तिकायः, पुद्गलानां समावेशेन आकाशास्तिकायश्चेत्यादिः। उपमानेन पर्यायपरि-

वर्तनश्चश्चलश्चेत्यादिः। आगमेन-स्कन्धदेशप्रदेशमयश्चेति।

पुण्यम्-प्रत्यक्षेण-रूपादिशुभकाययशःसम्पत्तिः पुण्यपुद्गलात्मकम्। अनुमानेन-ऐश्वर्यचमत्कारसिद्ध्यादिभिः सिद्धम्। उपमानेन-पुण्यशालिसमानपुण्यसिद्धिः, आगमेन-शास्त्रवर्णनेन पुण्यं स्वर्गादिप्रापकं सिद्ध्यतीति।

पापम्-प्रत्यक्षेण-नीचजातिनिकृष्टकर्मादि, अनुमानेन-दुःखोद्वेगादिफलकारणम्, उपमानेन-निरयवत्क्लेशोपमितम्, आगमेन-प्रकृतिस्थितिदारिद्र्यविकृतवर्णनेनेति।

आस्रवः-प्रत्यक्षेण-मनोवचनकायव्यापारात्मकः, अनुमानेन-अव्रतिभोगलग्नतादिना सिद्धः, आगमेन-अनन्ताऽनुबन्धिरोषमानमायालोभादिः।

संवरः-प्रत्यक्षेण-देशदेहादिदुष्कृष्टयोगादिनिरोधात्मकः, अनुमानेन-त्यागादिभिर्निरोधः, उपमानेन-द्वारपिधानवद् द्वारात्मकेन्द्रियादिगतनालिकारोधः, आगमेन-स्थैर्यविरतिशमादिरूपः।

निर्जरः-प्रत्यक्षेण-कर्मोच्छेदकतपस्तपनादिफलकष्ट सः, अनुमानेन-ज्ञानदर्शनचारित्र्यक्षयादिभिः कर्मह्रासः, उपमानेन-कठिनतपश्चर्यासादृश्येन, आगमेन-सम्यक्त्वसहतपःप्रतिपादकेन फलेच्छारहितताऽऽत्मशुद्धिश्चेति।

वन्धः-प्रत्यक्षेण-क्षीरनीरवत् जीवस्य पुद्गलानाम् अन्तर्लोलीभूतता, अनुमानेन-उपदेशे प्राप्तेऽपि संशयविभ्रमाऽज्ञानाऽविनाशेन कर्मप्रकृतिकाठिन्यात्मकः, उपमानेन-जले शर्करावत् शुभाशुभकर्मवन्धः, आगमेन-शुभाऽशुभयोगाऽभिध्यानपुण्यपापादिकायवन्धः।

मोक्षः-प्रत्यक्षेण-केवलज्ञानोदयः, अनुमानेन-दर्शनचारित्र्यमोहनीयक्षयेण मोक्षाभिस्थितिः, उपमानेन-दग्धवोजवत् वीतरागिणः सर्वदग्धता, आगमेन-अमिथ्यात्वाऽनास्वादनाऽमिश्रगुणविरतिसम्यग्दृष्टिदेशविरतिप्रमत्तसंयतिकाऽप्रमत्तयतिसमपूर्वकरणकषायमर्दिताप्रकृत्युपशमसूक्ष्मसंपरायमोहोपशान्तिक्षीणकर्मक्षयकश्रेणिसंयोगिकैवल्ययोगिकेवलिकत्वादिप्राप्त्या अनन्ताऽक्षयाऽव्ययाऽवाध्याऽतिवर्तिसर्वविलक्षणसुखज्ञानतृप्त्याद्याविर्भावस्थितिक इति।

ननु सर्वपदार्थानामनैकान्तिकत्वे सर्वान्तर्गता सर्वपदार्थविषयिणी प्रवृत्तिरेव न स्यादिति चेन्न, यथाऽनैकान्तिकतासाधने सप्तनये कर्मवादे च कर्मवादिनामिष्टत्वात् प्रवर्तना तथेष्टताज्ञानं प्रवर्तनाकारणम्, निवर्तनाऽपीच्छाविषयतया भवतीतीच्छयैव निवर्तनाऽपि नत्वनिच्छया, तथा च प्रवृत्तिनिवृत्त्युभयजनिका तथातथाविषयिणी

विशेषेच्छैव, तदुत्पादकं च तथातथाविषयकं विशेषज्ञानं ततो यत्न इति नैकान्तिकतादोषो न वाऽनैकान्तिकताख्यातिहानिरिति।

नयश्चैकान्तवादात्मा न स्थिरः सप्तभंगतः।
अनैकान्तिकवादोऽयं तद्बलात् समुपार्जितः॥ ९७ ॥
अत्राऽप्येवमनैकान्तप्रयोगः स्वाश्रयोहनम्।
दूषणं, दूषणे चाऽप्यनैकान्तस्य प्रयोगतः॥ ९८ ॥
अप्यकिञ्चित्करत्वाद्धि नयः स्वात्मस्थिराकृतिः।
व्यवहारे नयश्चास्ति मोक्षे नाऽस्य प्रयोजनम्॥ ९९ ॥
यद्वा नित्यो नयो मोक्षात्मनां विज्ञानरूपवान्।
नाऽऽच्छाद्यः स्वात्मना क्वापि सुतरां तु परात्मना॥ १०० ॥
अतोऽनैकान्तिक ख्यातिः सर्वथा ध्रुवसत्पदा।
जैनानां सुभगा देवी रुष्टा तुष्टाऽर्थघातिनी॥ १०१ ॥
केवलः कर्मवादोऽयं क्षारवारिधिलोडनम्।
हरौ निष्कामधर्मश्चेत् क्षीराब्ध्यालोडनं सुधा॥ १०२ ॥

अथ लोकायतिकानां साक्षात्ख्यातिर्हि सर्वथा। सर्वतत्त्वानि वै साक्षाद्गोचराणि मतानि हि॥ १॥ लोकाऽऽलोचनदृष्टीनां प्रमाणं त्वेकमेव यत्। आलोचनं प्रमाणं तत्, तदन्यत्तु तदात्मकम्॥ २॥ कर्णेन च त्वचा नेत्रेणाऽद्धा रसनया तथा। घ्राणेनाऽऽलोचनान्येव प्रत्यक्षाणि भवन्ति हि॥ ३॥ ऐन्द्रियक तु यत् सर्वं चांशिप्रत्यक्षमेव तत्। अंतरंगं मानसं बोध्यं प्रत्यक्षं त्वान्तरं हि तत्॥ ४॥ स्वस्य दृष्टिः प्रमाणं स्यादप्रमाणं परस्य सा। परोक्षं त्वप्रमाणं स्यात्, साक्षाद्दृष्टिनिजा मता॥ ५॥ प्रत्यक्षा यस्य सा दृष्टिस्तन्मूलाऽऽलोचनात्मिक। परस्याऽपि भवेत् साक्षाद्दृष्टिरेव हि सा मता॥ ६॥ प्रत्यक्षस्य प्रभेदा वै सर्वज्ञानानि सर्वशः। वाह्यं तथाऽऽन्तरं द्वेधा प्रत्यक्षं परिकीर्तितम्॥ ७॥ वाह्यमालोचनं साक्षात्प्रत्यक्षं परितो मतम्। आन्तरं तु भवेद् द्वेधा मानसं चात्मजं तथा॥ ८॥ मनो ज्ञानं मतिः प्रज्ञा बुद्धिर्धीर्ज्ञप्तिरित्यपि॥ ज्ञानान्येतानि सर्वाणि मानसानि मतानि हि॥ ९॥ संयमेन च संशुद्ध्या ध्यानाभ्यासेन या तदा। दृष्टिर्दिव्या भवेन्नैजे चैतन्ये साऽऽत्मजा मता॥ १०॥ वाह्यं साक्षाद्, आन्तरं च हृद्दृष्ट्याख्यं समुत्तमम्,। आत्मीयं वहुसावेद्यं, प्रत्यक्षं वै त्रिधा मतम्॥ ११॥ समूहालम्बनं प्राक् स्यात् ततो वैशिष्ट्यशालि वै। वैशिष्ट्योत्तरवैशिष्ट्यं धारादृष्ट्यात्मकं हि तत्॥ १२॥ इन्द्रियाणि भवन्त्येव चैतन्यमदवन्ति हि। इन्द्रियैर्दृष्टे ज्ञानं मानसाय हृदे त्वनु॥ १३॥ हार्दिकं तद्धि वै

प्रोक्तं प्रत्यक्षं चान्तरं हि तत्। मानसं ज्ञानतत्त्वं तन्मनस्तत्त्वं न चेतरत् ॥ १४ ॥ मनोज्ञानं च धीज्ञानं, भावना ज्ञानघट्टता। हृच्चैतन्ये भवेद् या सा संस्कृतिर्भावनात्मधीः ॥ १५ ॥ ज्ञानघट्टत्वतो जाता या धीः साऽभिज्ञतात्मिकी। स्मृतिस्थाना च विषयारूढा प्रत्यक्षस्तत्प्रभा ॥ १६ ॥ प्रत्यक्षोर्ध्वं जायमानं चाऽनुप्रत्यक्षमेव तत्। नानुमानं मतं तद्धि दृष्टविषयजं यतः ॥ १७ ॥ सादृश्यदर्शनोत्थं यत् सदृष्ट्याख्यं हि तन्मतम्। शब्दाऽऽलोचनसंजातं शब्दार्थविषयं तु तत् ॥ १८ ॥ अर्थो दृष्टः क्वचित् तत्रेन्द्रियैर्हृदा च वाऽऽत्मना। ज्ञानघट्टतया तत्र पूर्वार्थस्य विलोकनम् ॥ १९ ॥ कालान्तरीणमेवापि देशान्तरीणमित्यपि। विप्रकृष्टाऽऽन्तरावृत्ति हृज्जं वा चाऽऽत्मजं हि तत् ॥ २० ॥ तादृग्वस्तुविलोकाख्यं ज्ञानात्मा व्यापको यतः, त्रैकालिकप्रभायुक्त आत्मा शक्तिमयो मदः ॥ २१ ॥ अर्थापादनमेवाऽपि प्रत्यक्षं मानसात्मकम्। स्थौल्यं चाऽऽयोजनं तत्र प्रत्यक्षं वै कृतं यतः ॥ २२ ॥ सदृष्टिर्वा प्रबोद्धव्या तथैव स्वपरात्मसु। स्वं स्वं प्रत्यक्षमेवाऽस्ति परगं तत्तु मानसम् ॥ २३ ॥ प्रत्यक्षहेतवस्तत्र परप्रत्यक्षवेदिनः। केनचिद्धेतुना चाऽनुपस्थितेन परात्मनः ॥ २४ ॥ हृदो वा नाऽवगन्तव्यं भवेत्, सर्वज्ञता न यत्। मुख्यो हेतुः स्वचैतन्यप्रभातादात्म्यमेव वै ॥ २५ ॥ यत्र स्यात् तत्र वै भिन्नात्मनो ज्ञानं धृतं भवेत्। योगिनां खलु तादात्म्यात् सार्वज्ञ्यं बहुधा भवेत् ॥ २६ ॥ भावस्तत्त्वं न त्वभावो वस्तुरूपः स वै यतः। भावाः पृथ्वी जलं तेजो वायुश्चेति न चेतरत् ॥ २७ ॥ तद्धर्मास्तद्गुणाः सर्वे तत्तत्त्वं नाऽपरं यतः। दृष्टिर्याऽनुपलब्ध्याख्या भावदृष्टिर्हि सा मता ॥ २८ ॥ संभवो मानसं ज्ञानं चैतिह्यं शाब्ददर्शनम्। चेष्टा तु चाक्षुषं यद्वा त्वाचं वा मानसं क्वचित् ॥ २९ ॥ अतः प्रत्यक्षमेवेदं स्वाप्ने सर्वं हि मानसम्। तस्मात् सर्वे प्रभेदा वै प्रत्यक्षस्यैव नेतरे ॥ ३० ॥ ज्ञानं न विषयाधीनं विषयो ज्ञानमेति यत्। तस्मात् ज्ञानानि सर्वाणि यथार्थानि भवन्ति हि ॥ ३१ ॥ प्रवृत्तिविषये प्राप्ते निवृत्तिर्नहि तत्र वै। निवृत्तिविषयाऽलाभे प्रवृत्तिर्नहि तत्र वै ॥ ३२ ॥ तस्माद् विषयसाक्षात्त्वं विषये सति सर्वथा। विषयाऽलाभदेशे तु विषयान्तरदर्शनम् ॥ ३३ ॥ प्रवृत्तौ वा निवृत्तौ वा कारणं परिकीर्तितम्। शुक्तौ रजतमित्यादौ शुक्तिः प्रत्यक्षरूपिणी ॥ ३४ ॥ रजतं मानसं तत्र साक्षात्कारमयं मतम्। साक्षात्ख्यातिस्ततस्तत्र पंचभूतविकारिणी ॥ ३५ ॥ विभिन्नानि भवन्त्येव दर्शनानि समन्ततः। विभिन्नाः शक्तयो व्याप्या व्यापिकाश्चोद्भवन्ति हि ॥ ३६ ॥ भूतचतुष्टयात्

ताश्च प्रत्यक्षदृष्टयो मताः। चैतन्यं भूतधर्मो वै जायमानः सुदर्शनः ॥ ३७ ॥ किञ्चिन्नैव प्रमाणं स्यात् यत् स्यान्निह्नवदर्शनम्। अक्ष्णोति सङ्केतत्वेषु व्याप्नोत्येव तथा पुनः ॥ ३८ ॥ जानात्येव स आत्माऽस्ति चैतन्यं ज्ञानमेव तत्। अक्षश्चात्मा तमेवापि प्रत्याप्तं ज्ञानमेव यत् ॥ ३९ ॥ प्रत्यक्षं तत् तथा प्रोक्तं त्वशेषार्थप्रगोचरम्। मुख्यं तादात्म्यचैतन्यं प्रत्यक्षं सर्वगोचरम् ॥ ४० ॥ विशेषार्थप्रभासत्वान्मनोऽपेक्षं द्वितीयकम्। मनोऽक्षाऽपेक्षमेवैतत् प्रत्यक्षं मध्यमं हि तत् ॥ ४१ ॥ ऐन्द्रियकं तु यत् तत्तु बाह्यं कनिष्ठमेव यत्। आत्मा भौतिक एवाऽयं मनो भौतिकमेव च ॥ ४२ ॥ भौतिकानीन्द्रियाण्येव तेजो भौतिकमित्यपि। रूपं च भौतिकं तस्मात् प्रत्यक्षं भौतिकं मतम् ॥ ४३ ॥ अक्षे यद् भासते तद्धि प्रत्यक्षं साऽक्षमित्यपि। साक्षात्ख्यातिस्ततः सर्वभ्रान्ताऽभ्रान्तस्थलीगता ॥ ४४ ॥ लोकायतिकसिद्धान्तः साक्षात्ख्यातिमयस्ततः। पित्रादिनिश्चयः साक्षान्मातृप्रत्यक्षगोचरः ॥ ४५ ॥ मातृज्ञानजवाक्येन पितृज्ञानं हि मानसम्। शाब्दप्रत्यक्षसाहाय्यं पुत्रस्याऽस्ति निजाऽक्षजम् ॥ ४६ ॥ ततः पत्रादिमौनादिश्लोकिबोधोऽपि मानसः। प्रत्यक्षश्चाक्षुषीरेखाप्रत्यक्षोत्पत्तिकाऽऽन्तरः ॥ ४७ ॥ ज्ञानं स्वयंप्रमाणं वै प्रमा चैव स्वयं मतम्। विषयाणां प्रकाशे वै समर्थं तत् प्रमाणकम् ॥ ४८ ॥ इन्द्रियादि मतं ज्ञानं प्रकाशाश्रयतस्तथा। प्रकाशश्च प्रभावद्धि प्रभाज्ञानं मतं तथा ॥ ४९ ॥ प्रमोद्बोधे स्थलं चास्तीन्द्रियं चक्षुस्त्वगादिकम्। स्पर्शज्ञानं समग्रे वै शरीरे वहिरान्तरे ॥ ५० ॥ सर्वप्रदेशसंयोगि ज्ञानं वै व्यापकं ततः। स एवाऽऽत्मा सदा भोक्ता ज्ञाता कर्ता सुवृत्तिमान् ॥ ५१ ॥ भोक्तृत्वात् सुखमासाद्य मुक्तिभावं भजत्यपि। अत्र मुक्तोऽस्ति देहादिव्याप्तचैतन्यसंज्ञकः ॥ ५२ ॥ नित्यमुक्तोऽस्ति भूतादिव्याप्तकारणरूपगः। सुखं मुक्तिः परानन्दो दुखं संसार एव हि ॥ ५३ ॥ दुखं त्यजेत् व्रजेत् सौख्यं साधनैर्मुक्तसंज्ञकः। देहाल्लोकान्तरं नास्ति मुक्तिर्भूतान्तरा न वै ॥ ५४ ॥ पुमर्थो न सुखान्यश्च बन्धो दुःखेतरो न च। पुण्यं सुखक्रिया प्रोक्तं पापं दुःखक्रियात्मकम् ॥ ५५ ॥ स्वर्गः स्वेच्छाविहारादिर्नरकं परवश्यता। देवः साक्षात् पिता, माता देवी देवेश्वरो गुरुः ॥ ५६ ॥ राजा यमः प्रजाः शास्याः स्वभावस्तन्निसर्गजः। ज्ञानोद्बोधकरं शास्त्रं प्रत्यक्षं गुरुसंज्ञितम् ॥ ५७ ॥ नाऽऽवागमौ न जन्मान्यत् सृष्टिः स्वभावतो मता। वैगुण्यं भौतिकं सर्वं यथायोगस्तथा मतम् ॥ ५८ ॥ योगः स्वभावसम्पन्नो नैव पूर्वाऽर्जनोद्भवः। भूतान्येव स्वभावेन भवन्ते चेतनात्मकाः ॥ ५९ ॥ ततो

वैषम्यनैर्घृण्ये नैव स्वोत्थप्रजाविधौ। यथायोगं निजे रूपे निजस्यैव न दूषणम् ॥ ६० ॥ इन्द्रियाणि विना ज्ञानं मनसा जायतेऽपि च। मनोऽक्षाभ्यां विना ज्ञानं त्वात्मना जायते परम् ॥ ६१ ॥ एवं स्वयं प्रकाशात्मचैतन्यः सर्वविन्मतः। परमेशो महात्मा च सर्वज्ञो मुक्त एव सः ॥ ६२ ॥ यज्ज्ञानं परतो नूनं परोक्षं जातमेव तत्। आत्मचैतन्यभासा यत् ज्ञानं प्रत्यक्षमेव तत् ॥ ६३ ॥ भावनावशतो यद्वत् कामुकः प्रेयसीं पुरः। दूरगामपि निकटे पश्यत्येव तथाऽऽत्मना ॥ ६४ ॥ संयमितेन सततं लोक्यन्तेऽर्थाः पुरः पुरः। ज्ञानस्याऽप्राप्यभासित्वात् स्वात्मन्येव स्थितान् सदा ॥ ६५ ॥ त्रिलोकवर्तिनस्त्वर्थान् विलोकयति गर्भगान्। ज्ञो ज्ञेयः कथमज्ञः स्याद् व्यापके ज्ञातरि स्वयम् ॥ ६६ ॥ एवं पूर्णं सदा ज्ञानं साक्षात्ख्यातिमयं मतम्। बाह्यं साक्षाद् यथा तद्वत् परं साक्षात् सदाऽऽन्तरम् ॥ ६७ ॥ परोक्षमपि साक्षात्त्वं नैव जहाति तत्त्वतः। अक्षजत्वात्, व्यवहारः परस्यैव परोक्षतः ॥ ६८ ॥

अथ माध्वमतं पूर्णप्रज्ञदर्शनवर्णितम्। स्वतन्त्रः श्रीहरिस्तस्याऽधीनं सर्वं चराचरम् ॥ १ ॥ जीवेशयोः सदा भेदो नाऽभेदः कर्हिचित् क्वचित्। तत्त्वमस्यादिवाक्यानि जीवानां परमात्मनः ॥ २ ॥ ज्ञप्तिसारूप्यमाश्रित्य हृत्स्थितित्वं विभाव्य च। ऐक्यं प्रबोधयन्त्येवाऽद्वितीयं ब्रह्म'इत्यपि ॥ ३ ॥ सजातीयस्य वै भेदं स्वस्मिन्निवारयत्यपि। अतः प्रत्यक्षसंसिद्धो भेदो नित्यो द्वयोर्मतः ॥ ४ ॥ परेशो जीवभिन्नो वै जीवसेव्यत्वहेतुतः। भृत्याद् राजा यथा भिन्नः पत्न्या भिन्नो यथा पतिः ॥ ५ ॥ राजत्वकामनायुक्ता न सत्कारं व्रजन्ति वै। प्रत्युताऽनर्थभाजस्ते भवन्त्येव पतिद्रुहः ॥ ६ ॥ प्राज्ञोऽयं सदा नित्या नोत्पन्नः कर्हिचित् क्वचित्। भेदो जीवेशयोर्नित्यो नित्यो भेदो जडेशयोः ॥ ७ ॥ जीवभेदो मिथो नित्यः पञ्चभेदाः सदा मताः ॥ ८ ॥ मायामात्रमिदं द्वैतं माया स्वेच्छा हरेर्मता। प्रज्ञप्त्याख्या च सा सर्वतत्त्वसद्गोचरा ध्रुवा ॥ ९ ॥ अद्वैतं श्रीहरेः साम्याऽऽधिक्यवर्जितमेव तत्। हरेः साम्याऽधिकत्वात्मकल्पनाऽपरमार्थिनी ॥ १० ॥ हरेः प्रज्ञप्तिरूपा वै माया सर्वार्थगोचरा। यथार्था पञ्चभेदानां सार्वज्ञ्याख्या परार्थिनी ॥ ११ ॥ माध्वानां ज्ञप्तयो यास्तु द्वेधा ताः सर्वथा यतः। असार्वज्ञ्यकृता जैवा घटज्ञाने द्विधा हि ताः ॥ १२ ॥ घटो बाह्येक्षणानां प्राप्तो नाऽन्तश्चेक्षणगोचरः। ज्ञातोऽज्ञातश्च वै तत्र विकारो वाक्प्रगोचरः ॥ १३ ॥ बहिः सत्यो घटो, बुद्धौ कल्पिताकार आस्थितः। अविकृताकृतिस्त्वेषा मृत्स्वरूपेण शाश्वतः

॥ १४ ॥ नित्या एवाऽणवः प्रोक्ताः संस्थानानि भवन्त्यतः। गुणानां भिन्नता नास्ति गुणिभ्योऽतस्तदात्मता ॥ १५ ॥ गुणगुण्याद्यभेदो वै समानाधिकृतत्वतः। गुणधर्मादिकं गुण्यभिन्नाऽभिन्नं न चेतरत् ॥ १६ ॥ अतः पञ्चैव भेदास्ते नाऽधिकाः परमार्थतः। अभात्रो भेदतत्त्वं तु यत्र तद्रूपतां गतः ॥ १७ ॥ तद्धर्मो धर्मधर्म्यात्मा नित्याऽण्वादिस्वरूपवान्। अतस्तत्त्वान्तरं भेदो नैव षष्ठं मतं यतः ॥ १८ ॥ शुक्ताविदं हि रजतं कल्पनागोचरं पुरा। कल्पनाजन्यमेवाऽस्ति कल्पनाख्यातमेव तत् ॥ १९ ॥ कल्पना तिष्ठते यावत् तावत् तिष्ठते राजतम्। कल्पनाविगमे तत्र रजतं नहि तिष्ठति ॥ २० ॥ तस्माद् विकल्पनाख्यातिः कल्पज्ञानानुपातिनी। शब्दज्ञानाऽनुपातित्वाद् विकल्पस्य हि गोचरा ॥ २१ ॥ इच्छया भगवाँस्त्वादौ ससर्ज त्रिगुणाँस्ततः। गुणाश्चेशेच्छया जाता इच्छात्मानस्तदात्मकाः ॥ २२ ॥ अतो भार्या च माया च श्रीः सा पूता तदर्थिनी। तल्लीला तत्सेविकात्मा तत्सर्गाऽऽवासरूपिणी ॥ २३ ॥ चेतना कार्यसंलग्ना, स्थिरा त्वेषां जडाऽभिधा। यथायथं हि वाग्वर्ण्या व्यवहारस्वरूपिणी, ॥ २४ ॥ प्रोच्यते त्रिगुणा यस्य दोषरूपाऽपि तस्य सा। यस्य त्वनुगुणा चैषा गुणरूपोच्यते तु सा ॥ २५ ॥ गुणानां परिणामोऽत्र सर्वतत्त्वेषु तिष्ठति। विषयेषु निवासाद्धे विषयिण्या विदो यतः ॥ २६ ॥ ततश्चेतनमूर्धन्या अपि त्रिगुणयोगिनः। प्रवर्तन्ते निवर्तन्ते हरीच्छाऽनुप्रमोदिताः ॥ २७ ॥ ततो वै सर्वकर्तृत्वं हरावास्ते परात्मनि। ज्ञानं हरेः परं प्राप्य प्रसादं चाऽर्जयेद्धरेः ॥ २८ ॥ नारायणप्रसादेन मोक्षं विन्दति भक्तराट्। सत्यस्याऽपि प्रपञ्चस्य पश्चात् त्यागो विधीयते ॥ २९ ॥ यथा वै रजतस्याऽऽदौ भानं लब्ध्वा ततः परम्। क्रमाच्छुक्तेः प्रभानं वै शुक्तिलाभस्ततः परम् ॥ ३० ॥ इयं तत्र क्रमाऽनैक्यख्यातिस्तद्वद्धरावपि। पुरा संसारविज्ञानात् क्रमात् कृष्णप्रसादतः ॥ ३१ ॥ भक्त्या संसारसन्त्यागो हरेश्चरणगामिता। मुक्तिरैकान्तिकी दास्यभावापन्ना सती मता ॥ ३२ ॥ सत्या शुक्तिर्हरिः सत्यो लब्धा सत्यस्तदाऽपि सः। यथा वा चाकचक्याख्यसाधर्म्याऽभिमतिः पुमान् ॥ ३३ ॥ रजतं प्रथमं धत्ते दृष्ट्यां पश्चात्तु शुक्तिकाम्। एवं त्वानन्दसाधर्म्याद् धत्ते मायां पुरा जनः ॥ ३४ ॥ पश्चात् सत्यं परब्रह्म धत्ते शुक्तिनिभं हरिम्। एवं प्रकाशसारूप्यं पूर्वं पश्चात् सरूपिणम् ॥ ३५ ॥ परमेशवाप्नोति प्रसादाढ्यो हि भक्तराट्। तस्मात् सारूप्यसत्ख्यातिः सर्वत्राऽपि निरूपिता ॥ ३६ ॥ आदौ 'विकल्पनाख्यातिः' संसारे रजतात्मिका। शुक्तिभाने 'क्रमाऽनैक्यख्याति'स्त-

त्रैव चाऽपरा ॥ ३७ ॥ मोक्षे 'सारूप्यसत्ख्याति'स्तत्र सर्वत्र वै परा। तदेवं फलतो धर्मख्यातिः पूर्णविदां स्मृता ॥ ३८ ॥ कल्पनायाः क्रमस्यापि सारूप्यस्य च धर्मता। सर्वथा माध्वसिद्धान्ते 'धर्मख्याति'स्ततो हि सा ॥ ३९ ॥ अन्यवेदान्तिवैचित्र्यभिन्नख्यातिविलक्षणा। भेदगर्भा सदा चास्ते मुक्त्यमुक्तिप्ररोहणा ॥ ४० ॥ इति ॥

अथ वै वाल्लभाः शुद्धाद्वैताः सर्वविलक्षणम्। मतं नैजं प्रदर्श्यैवाऽऽत्मानं शुद्धं वदन्त्यपि ॥ १ ॥ निर्गुणां श्रीकृष्णभक्तिं श्रीकृष्णं ब्रह्म यत् परम्। श्रीकृष्णानुग्रहं पुष्टिं कृपामार्गं वदन्त्यपि ॥ २ ॥ भक्तिं कृष्णस्य भजनं कृष्णे मानसयोजनम्। भक्तेः सत्कारणं पुष्टिं रसं कृष्णं वदन्त्यपि ॥ ३ ॥ एतेषां कृष्ण एवाऽसौ श्रृंगाररससंभृतः। स्थायित्वेन रसः सोऽयं प्रभुः सर्वरसप्रदः ॥ ४ ॥ रसवेद्यो निजैर्भावैरुद्बोध्यः स्वामिनीपतिः। स्वामिनीभावएवाऽस्ति स्वामिन्यां मन्मथोऽच्युतः ॥ ५ ॥ गूढः कृष्णो हृदि स्थायी स्त्रीभावाऽऽत्मा कृपावशः। आनन्दमात्रसद्रूपो भक्तानीभावभोजनः ॥ ६ ॥ आनन्दमात्रकरपन्मुखोदरसुमस्तकः। भोक्ता भावस्य भोग्यस्य कृपया बोधगोचरः ॥ ७ ॥ प्रीतिसेवाप्रसेव्यः स वश्यो भक्त्यध्वनाऽऽत्मनाम्। आत्मानश्चाऽणवः सर्वे कृष्णाऽभिन्नास्तदंशकाः ॥ ८ ॥ शुद्धसंसारिमुक्ताख्याऽवस्थात्रयविलासिनः। सच्चिदानन्दरूपश्रीकृष्णात् ते निस्सरन्ति हि ॥ ९ ॥ विस्फुलिंगा यथा क्षुद्रा अग्नेस्ते व्युच्चरन्ति वै। निर्गमाऽनन्तरं कृष्णाऽऽनन्दांशस्य तिरोभवात् ॥ १० ॥ विद्यासम्बन्धराहित्याज्जीवाः शुद्धाः स्वजीवतः। शुद्धाऽवस्थोत्तरं चैषामविद्यासंगतस्ततः ॥ ११ ॥ पञ्चपर्वाऽभिभूतत्वात् संसारित्वं भवत्यपि। दुःखाऽऽक्रान्ततया चैषां दुःखहान्यभिलाषया ॥ १२ ॥ अरागो देहभिन्नात्माप्रज्ञानं कृष्णयोगिता। संयमश्चाऽच्युते भक्तिर्विद्या पञ्चस्वरूपिणी ॥ १३ ॥ अभ्यां संजायते लभ्या पश्चाद् विद्वांस एव ते। साधुसत्संगतः सद्यो मुक्तिं कृष्णप्रवेशनाम् ॥ १४ ॥ लभन्ते मुक्तताऽवस्थापन्नाः कृष्णांशरूपिणः। कृष्णात्मका भवन्त्येषां पुनर्नाऽविद्यकागमः ॥ १५ ॥ अविद्या तु तमो मोहो महामोहस्तृतीयकः। तामिस्रश्चाऽन्धतामिस्रः पञ्चमश्चेतिरूपिणी ॥ १६ ॥ अज्ञानं ममताऽहन्ता रागो द्वेषो भयं तथा। पञ्चपर्वस्वरूपा सा बन्धदा दुःखकारिणी ॥ १७ ॥ संभ्रान्तिर्वासनाऽदृष्टं भोगः कर्म च पञ्चधा। अविद्या वर्तते यद्वा विद्या तल्लयकारिणी ॥ १८ ॥ विज्ञानं भावना सर्वार्पणं नैराश्यमुत्तमम्। नैष्कर्म्यं चेति विद्यायाः पञ्चपर्वाणि वा ततः ॥ १९ ॥ स्थूला साक्षादविद्या वा पञ्चधा देहमुत्तमम्, स्त्री सुरूपा, धनं भूरिः, सुतः श्रेष्ठो,

धरोत्तमा, ।। २० ।। बन्धरूपा भवन्त्येन, विद्यया सा निरस्यते । वैदेह्यं, ब्रह्मचारित्वं, नैष्कैंचन्यं, बिसन्ततिः, ।। २१ ।। अस्थानित्वं च वै विद्या पञ्चधा तन्निरोधिनी । यद्वाऽविद्या तु वै मिथ्याज्ञानं, रागः सरोषणः, ।। २२ ।। धर्माऽधर्मादिरूपा वं प्रवृत्ति,र्जन्मयोगिता, । दुःखाऽनुषंगिता नित्यं, पञ्चपर्वात्मिका मता ।। २३ ।। तन्निरोधाय वै विद्या–सम्यग्ज्ञानं, विरागिता, । अदृष्टाऽनभिलाषित्वं, कृष्णदीक्षाप्रवेशिता, ।। २४ ।। भक्त्यानन्दानुयोगित्वं विद्या वै पञ्चधा ततः । कृष्णप्रवेश एवैषा मुक्तिः स्यादनिवर्तिनी ।। २५ ।। मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः । आनन्दमात्रकरपन्मुखोदरशिरोऽलकाः ।। २६ ।। जीवत्वे त्वन्यथारूपख्यातिर्जीवस्य तत्र वं । तद्वद् रज्जुः स्वरूपेणाऽन्यथारूपेण भोगिराट् ।। २७ ।। ख्यायते वै द्वयोस्तत्र माया कारणमस्ति यत् । पराऽऽवर्तनमाप्तेषु कारणेषु परा कृतिः ।। २८ ।। आकृतिर्दृश्यते तत्राऽन्यथारूपा पुरेतरा ।। सा त्वेत्राऽत्राऽन्यथारूपख्यातिः संख्यायते यतः ।। २९ ।। कृष्णशक्तिरचिन्त्या या सा माया परिकथ्यते । सा चतुर्धा हि भवते कृष्णेच्छा प्रेरणामयी ।। ३० ।। आद्या सा कृष्णगा सर्वभवन्सामर्थ्यरूपिणी । द्वितीया सा ततस्तत्र व्यामोहनसुरूपिणी ।। ३१ ।। तृतीया सा ततश्चेन्द्रजालिविद्यास्वरूपिणी । चतुर्थी सा सर्वकापट्यार्थरूपप्रधारिणी ।। ३२ ।। मायित्वं वै ततश्चाऽस्य जगतः परिकीर्त्यते । मायया जायमानत्वान्माया सर्वत्र कारणम् ।। ३३ ।। वैष्णव्या मायया यद्यत् कार्यं सञ्जायतेऽपरम् । तामसत्वं हि कार्यस्य तस्य सत्त्वविरोधिनः ।। ३४ ।। कृष्णे सर्वं समाविष्टं वर्तते तत्त्वसंज्ञितम् । कृष्ण एव परंब्रह्म शुद्धाद्वैतं मतं परम् ।। ३५ ।। कृष्णे विद्या तथाऽविद्या शक्ती द्वे सर्वदा स्थिते । जीवात्मानः स्थिताः सर्वेऽणवस्तादात्म्ययोगतः ।। ३६ ।। हरिश्चाऽऽनन्दरूपोऽस्ति नित्यज्ञानादिसद्गुणः । स्वस्मान्निस्सारयत्येवाऽविद्यां विद्यां तथाऽऽत्मनः ।। ३७ ।। चैतन्यगुणका जीवा विसर्पद्गुणचिन्मयाः । व्याप्नुवन्ति स्वदेहेषु कस्तूरीगन्धवत् सदा ।। ३८ ।। जीवाः प्रवाहमर्यादापुष्टिभेदेन वै त्रिधा । जन्ममृत्युप्रवाहस्था विषयासक्तमानसाः ।। ३९ ।। संस्कारशून्या भवगा आसुरास्ते प्रवाहिणः । सदा भवगतास्ते वै महाप्रलयभाविनः ।। ४० ।। पुनः पुनः प्रजायन्ते विलीयन्ते पुनः पुनः । अनाद्यनन्त एवाऽयं प्रवाहो जगतां यतः ।। ४१ ।। अथाऽपरे तु मर्यादायुक्तजीवा भवन्ति ये । वेदोक्तनियमैर्युक्ताः कृष्णभक्तिपरायणाः ।। ४२ ।। परमेशप्रपूजाढ्या वेदमर्यादिता यतः । कर्मज्ञानादिमन्तस्ते स्वार्थसेवापरायणाः ।। ४३ ।। इतोऽप्यन्ये पराः श्रेष्ठाः पुष्टिजीवाः प्रकीर्तितः ।

वेदलोकोर्ध्वचरणश्रीकृष्णाऽतिपरायणाः ॥ ४४ ॥ गोपांगनासमा नित्यप्रेमोद्रेकपरिप्लुताः। रात्रिन्दिनं चिन्तयानाः 'श्रीकृष्णः शरणं मम' ॥ ४५ ॥ कृष्णार्थसेवनाढ्यास्ते पतिप्रेमपरंवशाः। न स्वार्थास्ते परार्थावं परेशार्थास्तदर्थिनः ॥ ४६ ॥ यावद्रसाऽभिनन्दाढ्याः श्रीकृष्णे पुरुषोत्तमे। श्रीकृष्णः श्रीहरिः स्वं स्वात्मानं द्वेधा ह्यपातयत् ॥ ४७ ॥ आनन्दाख्यस्य कृष्णस्य सृष्टेरानन्दरूपिता। पुष्टिसंज्ञकजीवानां सर्वथाऽऽनन्दरूपिता ॥ ४८ ॥ उपादानं स्वयं कृष्णः पुष्टिजीवशरीरिणाम्। मर्यादाजीवकोटीनामक्षरं ब्रह्म कारणम् ॥ ४९ ॥ अक्षरं ब्रह्म वै तस्मिन् परे ब्रह्मणि तिष्ठति। तादात्म्यरूपतस्तस्मात् पुष्टिजीवा भवन्ति हि ॥ ५० ॥ कृष्णे मायामनस्येव तिष्ठेते च ततस्त्विमे। प्रवाहिणो भवन्त्येव सदा संसारवर्तिनः ॥ ५१ ॥ अथाऽन्या लीलया तस्मात् कृष्णात् सृष्टिर्भवत्यपि। लीलासृष्टिर्हि सा दिव्या कृष्णरूपा तदात्मिकी ॥ ५२ ॥ गोलोको रुक्मिणी वृन्दावनं गोवर्धनस्तथा। यमुना वत्सबालद्या लीलासृष्टिः स्वरूपिणी ॥ ५३ ॥ अवतारास्तथा सर्वे लीलासृष्टिमया मताः। ऐश्वर्याणि च वीर्याणि यशांसि च बलानि च ॥ ५४ ॥ ज्ञानानि च श्रियः सर्वा गुणाः सर्वे च शक्तयः। शृंगाराणि समस्तानि चायुधानि प्रहेतयः ॥ ५५ ॥ मूर्तिचिन्हानि सर्वाणि तेजांसि च तिलानि च। स्नेहाद्याश्च रसाः सर्वे लीलासृष्टिमया हि ते ॥ ५६ ॥ पार्षदा गोपिका मुक्ता ये च धाम्नि स्थिताः सदा। सेवकाश्च प्रजाः सर्वा गोलोकब्रह्मवर्तनाः ॥ ५७ ॥ सर्वास्ताः सृष्टिलोकेषु जायन्ते स्वेच्छयाऽथवा। कृष्णेच्छया प्रजायन्ते शुद्धसृष्टिर्हि सोच्यते ॥ ५८ ॥ शुद्धाऽद्वैतेन कृष्णेन शुद्धा सृष्टिर्मता वरा। पुष्टिसृष्टिगृहे कृष्णो भक्तानां हृदयेषु च ॥ ५९ ॥ यत्र क्वापि प्रसंभूय सुखं चार्पयतीप्सितम्। आशीर्वादं च वा शापं भक्तसौख्याभिवृद्धये ॥ ६० ॥ ददात्येव हितार्थं वै शुद्धयर्थं दण्डमेव वा। तारतम्यमयी भक्तिर्यादृशी तादृशं फलम् ॥ ६१ ॥ पुष्टौ कृष्णः पूजनीयो मर्यादायां तु मानसः। प्रवाहे तु यथाप्राप्तो वाह्यः स्वार्थप्रदः प्रभुः ॥ ६२ ॥ प्रवाहे दैविरूपास्ते चिरकालेन वै क्वचित्। भक्ता भवन्ति योगाद्वा सतां सत्संगतोऽपि वा ॥ ६३ ॥ पुष्टिभक्ता अनासक्ता हृत्स्थकृष्णबलात् सदा। वासनावर्जिताः सन्ति कृष्णो यद्वासनाहरः ॥ ६४ ॥ आत्मनिवेदनं प्राग्वै ततः कृष्णकृपा मता। सर्वसिद्धिस्ततः स्यात् तत्कुर्यात् तच्छरणागतिम् ॥ ६५ ॥ कृष्णाय चार्पयेत् स्वं स्वात्मानं स्वीयं सुतं स्त्रियम्। धनं धान्यं महावस्त्रं मनो भूषाः समर्पयेत् ॥ ६६ ॥ तद्विना दोषरूपं वै सर्वं पूतं यदर्पणात्। ततो भोग्यं निर्गुणं तद् दिव्यं मोक्षप्रदं परम् ॥ ६७ ॥

स्वामिवस्तु स्वामिने चार्पितं दानं न तन्मतम् । दानं ग्राह्यं पुनर्नैव प्रसादो ग्राह्य एव यत् ।। ६८ ।। कृष्णार्पितं तु भक्तानां सेव्यं भवति पावनम् । सर्वदोषविनाशाय कृष्णे वस्त्वर्पितं चरेत् ।। ६९ ।। सत्सं-गाद्धि भवेच्छ्रेष्ठा रुचिः कृष्णकथामृते । कथाद्वाराऽऽविशत्येव कृष्णो भक्तहृदि त्वनु ।। ७० ।। चित्तशुद्धिस्ततस्तत्र कृष्णवासः परोक्षतः । प्रेमरूपा ततः स्फूर्तिर्भक्तिः स्नेहो ह्यनुत्तमः ।। ७१ ।। तादात्म्यरसता पश्चादैक्याऽऽनन्दसमाप्लवः । सेवैक्यं च निरोधश्च कृष्णे तादात्म्यवि-ग्रहः ।। ७२ ।। नित्यलीलाप्रवेशश्च गोलोके जायतेऽस्य वै । अतः पूर्वं तु जगति प्रपञ्चे क्रीडनं मतम् ।। ७३ ।। तामसं राजसं चापि सात्त्विकं क्रीडनं त्रिधा । लीलाऽपि त्रिविधा तत्र निरोधश्च त्रिधा मतः ।। ७४ ।। कृष्णमायाकृतं यद्धि तामसत्वं च तस्य तु । कृष्ण एव स्वयं नाशं करोत्येव कृपापरः ।। ७५ ।। धर्मरूपं तथाऽवैधं तामसत्वं च वै ततः । नाशमेव प्रयात्येव राजसत्वं विनश्यति ।। ७६ ।। सात्त्वि-कत्वं ततो नष्टं भवत्येव कृपाकणात् । सत्त्वे लीने जायतेऽपि निर्गुण-त्वं ततो द्रुतम् ।। ७७ ।। नित्यलीलाप्रवेशो वै कृष्णरूपेण संस्थितिः । मुक्तिरेव महानन्दाऽऽमोदप्रमोदसंभृता ।। ७८ ।। कृष्णरूपतया तत्र स्थितिश्चाश्रयरूपिणी । स्वरूपैक्यमयी सा वै पुरुषोत्तमरूपिणी ।। ७९ ।। स्वस्य भक्तिः स्वस्वरूपा सर्वा प्रेमरसात्मिका । धाम्नि यद्वत् तथा चात्र सर्वस्वार्पणरूपिणी ।। ८० ।। कृष्णानुग्रह एवाऽस्याः कारणं पुष्टिरेव सा । मोक्षस्य साधनं तस्मादेकमात्मसमर्पणम् ।। ८१ ।। भक्तौ ज्ञानं च कृष्णस्य माहात्म्येन समं परम् । कारणं चापि वै बोध्यं ज्ञाने शुद्धिः शुभाऽऽन्तरी ।। ८२ ।। कारणं, तत्र नैष्कर्म्यं कर्तव्यं स्वाऽ-र्पणात्मकम् । ब्रह्मण्येव परे तस्मिन् कृष्णे संकोचमन्तरा ।। ८३ ।। सर्वभेदप्रशून्यस्य कृष्णस्य शक्तयस्त्रिधा । सन्धिनी प्रथमा तद्वत् संवित् शक्तिर्द्वितीयका ।। ८४ ।। आह्लादिनी तृतीया च, संधिन्या भगवाँ-स्ततः । सर्वकाले सदा दिव्यस्तिष्ठत्येव तथाऽपरान् ।। ८५ ।। स्था-पयत्येव सद्योग्यान्, संविदा तु ततः परम् । जानात्येव पराँश्चापि बो-धयत्येव रूपतः ।। ८६ ।। आह्लादिन्या ततः कृष्णः स्वयं त्वानन्द-मुत्कटम् । भुङ्क्तेऽन्यान् निजभक्ताँश्चाऽऽनन्दयत्येव सर्वथा ।। ८७ ।। एवं कृष्णः परब्रह्म सदाऽऽनन्दस्वरूपवान् । विद्याऽविद्ये तु भवतः शक्ती द्वे तस्य शोभने ।। ८८ ।। तत्र विद्याप्रवाहोऽयं–सार्वज्ञ्यं च यथा-र्थता । प्रमात्वं च स्वतोगोचरत्वं चाऽप्यपरोक्षता ।। ८९ ।। अपरोक्षा-ख्यचैतन्यं तथा योगप्रकाशिता । अबाधिताख्यस्फूर्तित्वं यथावस्तुविलो-कनम् ।। ९० ।। मितिर्विधा सुसंवित्सा सम्यग्ज्ञप्तिश्च सा मता । अ-

थाऽविद्यास्वरूपाणि–त्वाल्पइव्वं चाऽयथार्थता ॥ ९१ ॥ अप्रमात्वम-तत्त्वार्थिगोचरत्वं परोक्षता । अपारोक्ष्यप्रचैतन्यमप्रकाशत्वमित्यपि ॥ ९२ ॥ बाधितस्फुरणं चाऽप्ययथाविषयकत्वम् । भ्रान्तित्वं विपरीतत्वं मायात्वं चाऽऽवृतित्वकम् ॥ ९३ ॥ मुग्धत्वं चाऽप्यभानत्वमाभासत्वं प्रमूर्च्छना । एवं चेच्छुक्तिरजतस्थले राजतदर्शनम् ॥ ९४ ॥ ब्रह्माऽविद्यास्थरजताऽऽभासरूपं न चेतरत् । तस्मात् आभाससुख्यातिर्यद्वा लीलामयं जगत् ॥ ९५ ॥ लीलासृष्टयात्मकं सर्वं लीलाख्यातिस्ततो मता । न कर्माऽपेक्ष्यते सृष्टौ नाऽणवः प्रकृतिर्न च ॥ ९६ ॥ न कालश्च स्वभावो वा लीला कृष्णस्य कारणम् । कृष्णभाने महानन्दस्त्वभाने विपरीतता ॥ ९७ ॥ महानन्दमयी क्रीडा फलं सृष्टेः प्रयोजनम् । सर्वत्र कृष्णसत्ख्यातिर्लीलाख्यातिस्तदंशिनी ॥ ९८ ॥ तदीयाऽऽभाससुख्यातिर्वाल्लभानां फलोदिता । कृपावादः सुसिद्धान्तः सेवाधर्मो त्रिधिर्मतः ॥ ९९ ॥ कीलकः प्रेमरूपो वै दास्यं सर्वार्पणात्मकम् ॥ १०० ॥ इति

अथ निम्बार्कसाम्राज्ये राधामाधव ईशिता । उपास्यं युगलं प्राप्यं युगलं ध्येयमित्यपि ॥ १ ॥ परमं ब्रह्म यत्प्रोक्तं राधामाधव एव सः । पुरुषोत्तम एवाऽसौ भगवान् परमेश्वरः ॥ २ ॥ राधया सहितो नाथो माधवः सर्वसंस्थितः । राधां विना न कृष्णोऽस्ति विना कृष्णं न राधिका ॥ ३ ॥ शक्तिमान् न विना शक्तिं शक्तिः शक्तं विना न वै । द्वयोरैक्यं ततः प्रोक्तं सर्वतत्त्वेषु तद्द्विधा ॥ ४ ॥ वस्तुमात्रं सुशक्तं वै धर्मैश्वर्यगुणान्वितम् । राधा प्राणस्वरूपा वै प्राणेशो माधवः स्मृतः ॥ ५ ॥ राधा त्वात्मस्वरूपा वै तदात्मेशो हि माधवः । राधया माधवो देवो माधवेनैव राधिका ॥ ६ ॥ द्वयोरैक्यप्रविज्ञानं ब्रह्मज्ञानं हि तन्मतम् । माधवो वै परब्रह्म राधा ब्रह्म वृत्ती हरेः ॥ ७ ॥ अक्षर राधिका प्रोक्ताऽक्षरेशानो हि माधवः । भगस्तु राधिका प्रोक्ता माधवो भगवानिति ॥ ८ ॥ व्याप्या राधा माधवस्तु व्यापकश्च नियामकः । राधायां सर्वधर्मादि भिन्नाऽभिन्नत्वमित्यपि ॥ ९ ॥ सन् यदा माधवः प्रोक्तश्चित् तदा राधिका मता । द्वयोरैक्यं परानन्दो द्वयोर्व्याप्तिस्तथाऽन्विता ॥ १० ॥ विकारशून्यं हि युगलं कूटस्थनित्यमित्यपि । विज्ञानानन्दरूपं च शक्त्यैश्वर्यात्मकं तथा ॥ ११ ॥ अस्पृष्टं प्राकृतैस्तत्त्वैर्दिव्यैस्तत्त्वैः सदाऽन्वितम् । प्रकृतिश्च प्रधानं च माया वै प्राकृतं मतम् ॥ १२ ॥ माया शक्तिर्यथा राधा तथा माधवयोगिनी । किन्तु राधासमा नैव राधा तादात्म्ययोगिनी ॥ १३ ॥ माया तु प्रकृतिर्नित्या जडा जाड्यादियोगिनी । संसारजननी भक्ता देहगेहादिरू-

पिणी ।। १४ ।। माधवस्य महाशक्तिर्माया भिन्ना हि माधवात् । साक्षाच्छक्तिरभिन्नैव विजातीया तु वै पृथक् ।। १५ ।। विजातीया महामाया शक्तिर्गणकवन्मता । द्रव्यभेदो यथा श्रेष्ठिवर्ये तद्वद्धि माधवे ।। १६ ।। मायाभेदोऽस्ति वै सत्यो माया सृष्टिस्वरूपिणी । सृष्टिः प्रपञ्च एवाऽयं जडचेतनमिश्रितः ।। १७ ।। जीवप्रकृतिकालाद्याश्चिज्जडाख्याः प्रभुश्रिताः । जीवप्रकृतिकालाख्यात् प्रपंचाद् भिन्न ईशिता ।। १८ ।। जीवाद्याश्रय ईशोऽयं विभुर्माधव ईश्वरः । स्वद्वारा स जगत्कर्ता जगज्जन्मादिलक्षणः ।। १९ ।। जगज्जन्मादिकर्तृत्वं स्वरूपात्मकलक्षणम् । स्वायत्तप्रकृतिद्वारोपादानं परमेश्वरः ।। २० ।। परमार्थं जगत् सत्यं माधवाऽऽयत्तवृत्तिकम् । तदात्मकं ततः प्रोक्तं जगत्कार्यं परात्मनः ।। २१ ।। जीवः शक्तिर्जडा शक्तिस्तयोः शक्तिमता सह । अनन्यत्वादभिन्नत्वं स्थानैक्याच्च विदैक्यतः ।। २२ ।। जीवेशयोश्चिदैक्याद्वै त्वभिन्नत्वं मतं खलु । स्वरूपतस्तु भेदोऽस्ति नाऽभेदो वै स्वरूपतः ।। २३ ।। शक्तिमद्धि परं तत्त्वं शक्त्यभेदश्च माधवे । अभेदश्च तथा बोध्यो भेदाऽभेदौ मतौ तथा ।। २४ ।। अचिन्त्यभेदाऽभेदोऽयं वादो निम्बार्कसम्मतः । अचितां चिदभेदस्तु चित्सत्ताधीनसत्तया ।। २५ ।। तस्मात्प्रोक्तौ चिदचितोर्भेदाऽभेदावचिन्त्यकौ । भेदाऽभेदौ समानौ वै न गौणौ वा प्रधानकौ ।। २६ ।। विजातीयस्य भेदोऽस्ति ब्रह्मण्येव परार्थतः । स्वगतीयसजातीयभेदौ न स्तो हि माधवे ।। २७ ।। माधवस्य जगत् सर्वं कथ्यते परिणामजम् । माधवस्यैव शक्तीनां सा वै परिणतिः स्फुटा ।। २८ ।। अभिन्ननिमित्तोपादानाख्यकारणमीश्वरः । राधामाधव एवाऽयं कथ्यते शक्तिमत्त्वतः ।। २९ ।। स्वगतभेदाऽभावोऽस्ति स्वाऽऽविर्भविषु वै सदा । हरिः स्वतन्त्रसत्ताकः परमात्मा परात्परः ।। ३० ।। परतन्त्रादिसत्ताकाः जीवप्रकृतिविष्टयः । अप्राकृतं हि वैकुण्ठं नित्यं माधवधाम यत् ।। ३१ ।। कारणत्वं च कार्यत्वं कार्यकारणरूपिता । राधामाधवयोरस्ति शक्तिमत्त्वात् तयोरपि ।। ३२ ।। गुणा नित्या भगवतः सत्यसंकल्पकामनाः । ज्ञानानन्दादयोऽनन्ता अभिन्ना अप्तरंगवत् ।। ३३ ।। बुद्धिमनोऽङ्गशून्योऽपि माधवः शक्तिमायया । लक्ष्यतेऽङ्गादिमाँस्तत्र लीला तस्यैव कारणम् ।। ३४ ।। लीला द्वेधा हरेः प्रोक्ता—भक्तानन्दप्रदा सती । सनातनीति चिच्छक्त्या स्वरूपेण च सा कृता ।। ३५ ।। कृता प्रकृतिकालाभ्यां कादाचित्की तु सा मता । या वै दैत्यादिसंहारप्रकर्त्री दृश्यतेऽत्र हि ।। ३६ ।। चिल्लीलाभ्योऽवताराः संजायन्ते परमात्मनः । भक्तानन्दप्रदास्तेऽपि सा लीला तु सनातनी ।। ३७ ।। कृत्स्नशक्त्यभिसंव्यञ्जी श्रीकृष्णः पुरुषोत्तमः । ज्ञान-

भक्तिविषयोऽसौ गोचरः करुणालयः ॥ ३८ ॥ अकृत्स्नशक्तिव्यंजी यः स्वयं सोंऽश उदाहृतः । द्व्येकशक्त्यभिसुव्यञ्जी विलासोंऽशः कला च सः ॥ ३९ ॥ वासुदेवस्तथा भूमा हिरण्मयपुरानपि । स्वेच्छयैव भवन्त्येव सूक्ष्मशक्तीश्वरा हि ते ॥ ४० ॥ ब्रह्माण्डोत्पादका एते ब्रह्माण्डेऽपि हरिर्हि सः । सहस्रशीर्षवपुषाऽऽविर्भवत्येव वै ततः ॥ ४१ ॥ ब्रह्मरुद्रादयः सर्वे जायन्ते कार्यतत्पराः । अतस्तेषु हरेः सर्वाऽन्तर्यामित्वं हि सर्वथा ॥ ४२ ॥ परमं कारणत्वं वा शक्तिद्वारा स्वरूपतः । स्वेच्छया त्वभिसंव्यक्तिर्जन्म दिव्यं निगद्यते ॥ ४३ ॥ निरुगेरपास्तपाप्मत्वं, रुद्राऽब्जाभ्यां विलक्षणम् । निर्गुणत्वं परेशत्वं विष्णोर्विभुत्वमस्ति यत् ॥ ४४ ॥ मुक्तानामपि वै तादृक् सत्यसंकल्पताबलात् । दिव्यदेहमनोबुद्धीन्द्रियप्रभृतिसर्जनम् ॥ ४५ ॥ भवत्येव ततः शुद्धः सर्गस्तेषां सदा मतः । अथ ज्ञानस्वरूपोऽपि ज्ञाताऽऽत्मा जीव इत्यपि ॥ ४६ ॥ अणुश्च बहुधाऽल्पीयानीशांऽशः शक्तिरीशितुः । सामर्थ्येन स्वरूपेणाऽल्पीयानंशस्ततः स्मृतः ॥ ४७ ॥ अंशस्यापि तु नैजांऽशिवैमुख्यान्मायया कृतः । पराभवस्ततोऽज्ञानतमोमायाऽनुवृत्तिता ॥ ४८ ॥ जायतेऽयं हि संसारस्तल्लयो हरिसम्मुखात् । साम्मुख्ये खलु सत्संगः कारणं परिकीर्तितम् ॥ ४९ ॥ सत्संगाद्धि महत्सेवा सेवया महतां कृपा । कृपया कृष्णधर्मादौ श्रद्धा नित्यविवर्धिनी ॥ ५० ॥ श्रद्धया तत्कथावार्ताश्रवणादि ततो रतिः । रत्या विवेकविज्ञानं दीपोपमनिजात्मजम् ॥ ५१ ॥ ततो भक्तिः सदा प्रीतिर्हरौ सद्भावनाऽन्विता । भावनागोचरं ज्ञानं भावितस्य हरेस्ततः ॥ ५२ ॥ तत्कृपा च तया तस्य गुणाऽऽविर्भाव उत्तमः । सर्वपाशविनाशश्च दिव्यज्ञानसमुद्भवः ॥ ५३ ॥ अपारोक्ष्यं स्वरूपस्य गुणानां निजकृष्णयोः । हरेः स्वरूपशक्त्यादिवृत्तिर्नित्याऽभिवर्धते ॥ ५४ ॥ तादात्म्याऽतिशयेनैव पुष्टा प्रीतिर्विवर्धते । स्वप्रकाशा स्वात्मशक्तिः संविद्रूपापि वर्धते ॥ ५५ ॥ वृत्तिश्चेयं दृढा चोपासनारूपा हि वर्धते । हरेः प्रसाद एवापि वृत्तावारोहमेति च ॥ ५६ ॥ ज्ञानाऽऽनन्दात्मभगवत्स्वरूपस्फुरणं मुहुः । अविद्यावृत्तिविलयो दिव्यमानसवृत्तिता ॥ ५७ ॥ एकतानस्वरूपा वै हरेः सम्बन्धिता ध्रुवा । सान्द्रप्रेममयी चाऽऽत्मनिष्ठाऽऽनन्दाऽब्धिरूपिणी ॥ ५८ ॥ वर्तते तु यदा तत्राऽभेदः कृष्णे प्रजायते । आसमुच्चितयोर्ज्ञानभक्त्योर्मुक्तौ तु हेतुता ॥ ५९ ॥ साक्षादेवेति वं बोध्यं कर्मचित्तस्य शोधकम् । सारस्त्वभिन्नयोर्ह्लादसंविदोः प्रेमविग्रहः ॥ ६० ॥ रतिः प्रेमाख्यभक्तिः सा त्वहैतुकी हि कारणम् । निष्कामा सा प्रकर्तव्या हरीच्छा निर्भरा दृढा ॥ ६१ ॥ हरेः रूपं द्विधैश्वर्यमाधुर्याख्यप्र-

भेदतः। ज्ञानं द्वेधा–तदैश्वर्यमाधुर्याख्यप्रभेदतः ।। ६२ ।। यशोदाऽर्जुन-भक्तानामैश्वर्यज्ञानमेव वै। राधागोपीगणानां तु माधुर्यज्ञानमेव वै ।। ६३ ।। साधनाऽऽख्या ततो भक्तिर्वैधशास्त्राज्ञया कृता। साध्या भक्तिस्तु सा श्रेष्ठरुचिप्रोत्था समीरिता ।। ६४ ।। सिद्धाः सनिष्ठा इष्टाश्च साधनैर्धाम यान्ति हि। अर्चिर्मार्गेण देवाद्यैर्नीयमानाः क्रमात् खलु ।। ६५ ।। आर्ता हरेः कृपार्द्रास्ते तार्क्ष्याद्यैर्धाम यान्ति हि। सिद्धा वै रुचिभक्त्या तु नीयन्ते हरिणा स्वयम् ।। ६६ ।। गुणास्तु गुणरूपा च दोषाश्चापि गुणा हरौ। अष्टादशप्रभेदास्ते लोकानुग्रहसत्फलाः ।। ६७ ।। मोहाऽऽशंकाविलोलत्वमदास्तन्द्रा परिश्रमः। खेदो मात्सर्य-क्रुद्धिंसाभ्रमाऽसत्यजगद्भ्रमाः ।। ६८ ।। वैषम्यं च पराऽपेक्षाऽऽकांक्षा रूक्षरसस्तथा। कामश्चैते तथाऽन्येऽपि यथापात्रं यथाक्षणम् ।। ६९ ।। लोकानुग्रहहेतुत्वाद् गुणा एव हरौ फलात्। देवमानुषपित्र्यादिसृष्टिमेलन-कारिणः ।। ७० ।। दोषाश्च रीतयो धर्मा देहदैहिकसारिणः। सर्वे फलात्तु ते भद्रा गुणा एव हरौ सताः ।। ७१ ।। क्षुत्तृषाशोकरागाद्या अपि कृष्णे फलाद् गुणाः। मोहेनाऽऽशंकया तर्कस्मयबोधरसादयः ।। ७२ ।। विलोलत्वमदाभ्यां तु केलिस्मरविवर्धिता। तन्द्राखेदश्रमैः सेवाऽऽनन्दवृद्धिः रसप्रदा ।। ७३ मात्सर्यक्रोधहिंसाभिरसन्नाशः सतोऽवनम्। भ्रमाऽसत्यप्रलोलाद्यैः कौतुकाश्चर्यसद्रसः ।। ७४ ।। स्त्रीणामा-कर्षणं कोपादिभिस्तत्र हरौ मतम्। विश्वभ्रमेण मायास्थलीनजीवदया-ग्रहः ।। ७५ ।। वैषम्येण पराऽपेक्षणेन चाऽऽकांक्षया तथा। सर्वभक्त-दयाकारुण्यानुग्रहानुवर्षणम् ।। ७६ ।। रूक्षभावेन गुप्तात्याकृष्टिः कामेन लीनता। एवमन्ये गुणा दोषाः सर्वे सद्गुणरूपिणः ।। ७७ ।। स्वस्व-रूपमहाशक्तिसारलीलाभिनन्दनाः। स्वरूपाऽनतिरेकात्मनखकुन्तलवन्म-ताः ।। ७८ ।। गुणयुग्गुणिमास्वामिराधामाधवयोः सदा। युगलोपासना कार्या संसारो युगलो यतः ।। ७९ ।। मोक्षोऽपि युगलस्तत्र सच्चिदा-नन्दवर्ष्मणः। अधिष्ठानं विना नैवाऽधिष्ठेयं वर्तते क्वचित् ।। ८० ।। अतो वै युगलख्यातिर्वस्तुतः स्फुटता त्वियम्। – रज्ज्वां भोगिप्रभानं यत् तत्र रज्ज्वाद्यभिन्नता ।। ८१ ।। वक्रताकृष्णताद्यैश्च सर्पस्याऽस्ति तदीयता। रज्ज्वाः सर्पे तथैवाऽस्ति द्वयोस्तस्मादभिन्नता ।। ८२ ।। कार्यकारित्वसौधुर्यं द्वयोरस्ति पृथक् पृथक्। कार्यकारित्ववैधुर्याद् भेदो रज्जुप्रसर्पयोः ।। ८३ ।। तस्माद् भेदो द्वयोश्चापि ज्ञायते तदनन्तरम्। भेदाऽभेदमयं तत्र विज्ञानं सम्प्रकाशते ।। ८४ ।। भेदाऽभेदात्मकख्यातिः रज्जुसर्पादिगोचरा। ज्ञानाऽज्ञानमयी ख्यातिश्चाक्षुषी सा स्फुटा ततः ।। ८५ ।। यथा वै नाट्यभवने पटभित्तौ सुविस्तृताः। विद्युद्योगगता-

ऽऽकारा दृश्यन्ते चाक्षुषाः स्फुटाः ।। ८६ ।। अरण्यानि सरांस्यूर्व्यपर्व-ताऽऽकाशविग्रहाः । सैन्यानि भूमिका राजा प्रजाः सत्या हि नैकधा ।। ८७ ।। अम्भराणि च सद्रेखाः पटा दीर्वाश्च हेतयः । विमानानि स्त्रियो युद्धं नगराणि च हस्तिनः ।। ८८ ।। विद्युत्प्रवाहपतिता आकारास्ते तदोत्थिताः । पटे तादात्म्यमापन्नाः पटान्तर्वर्तिनः खलु ।। ८९ ।। पटाभिन्नाः प्रकाशन्ते भिन्नाश्चापि पृथग्विधाः । विद्युद्व्याप्तिपराधीना असत्याः सत्यरूपिणः ।। ९० ।। स्पर्शाद्यविषया दृष्टिमात्रगोचररूपिणः । तथा शुक्तौ हि रजतं रज्ज्वां सर्पो मरौ जलम् ।। ९१ ।। दृष्टिप्रवाहपतिता रूप्यसर्पजलात्मकाः । आकाराः शुक्तिकारज्जुमर्वधिष्ठानयोगिनः ।। ९२ ।। दृष्टयैव निहितास्तेषु तादात्म्यापन्नतां गताः । अभिन्ना इव लोक्यन्ते भिन्नाश्चापि क्षणोत्तरे ।। ९३ ।। दृष्टिवेगव्यभावे ते लीयन्ते क्व गता इव । ततस्तेषां तु वै भिन्नाऽभिन्नख्यातिर्विभाव्यते ।। ९३ ।। सत्याऽसत्यमयी ख्यातिर्दृश्याऽदृश्यमयी तथा । दृष्टिसृष्टिमयी ख्यातिस्तत्त्वाऽतत्त्वप्रदर्शिका ।। ९४ ।। शुक्तिर्दृष्टिस्थरजताऽभिन्ना संभासते यतः पश्चाद्भिन्ना भासतेऽधिष्ठेयात्माऽऽत्मरूपिणी ।। ९५ ।। अधिष्ठेयाऽभिन्नभिन्ना ख्यातिः सा फलतः स्थिता । निम्बार्काणामिदं तत्त्वं राधामाधवयोरपि ।। ९६ ।। अनङ्गौ तौ लीलया वै साङ्गौ द्वौ वैक्यरूपिणौ । स्वगतीयसजातीयभेदशून्यावपि क्वचित् ।। ९७ ।। सभेदाविव दृश्येते राधामाधवरूपिणौ । इत्येवं स्फुटतत्त्वाद्धि ख्यातिरुक्ता प्रवर्तते ।। ९८ ।। इति ।।

अथ शाश्वतशब्दात्मस्फोटब्रह्मप्रवादिनाम् । शब्द एव परं तत्त्वं परब्रह्मस्वरूपि यत् ।। १ ।। स्फोटाख्यं व्यापकं तत्त्वं यावदर्थप्रवाचकम् । अर्थशक्त्याश्रयः शब्दः स्फोटतादात्म्यसंगतः ।। २ ।। स्फोटः स्वयंप्रकाशोऽस्ति सर्वाऽऽलोकनदृष्टिकः । ज्ञप्तिचन्द्रार्कविद्युद्भावह्न्यादीनां प्रकाशकः ।। ३ ।। सर्वप्रकाशकं ब्रह्म परं यत् स्फोट एव तत् । सर्वदेहिषु चैतन्यं चित्तत्त्वं स्फोट एव तत् ।। ४ ।। सर्वेषां बहिरन्तःस्थज्योतिषां च प्रकाशकम् । स्फुटत्याविर्भवन्त्यस्मादर्थाः स्फोटः स्फुटो हरिः ।। ५ ।। अन्तर्यामी स्वयं स्फोटः सर्वाधारश्च सर्ववित् । स स्वरूपेण शब्देन जगत् स्रष्टुं समैक्षत ।। ६ ।। स्वस्मात् कालाऽऽख्यशक्तिं च मायाशक्तिं व्यवर्तयत् । विवृत्यैवं ततस्ताभ्यां पुना रूपं व्यवर्तयत् ।। ७ ।। कालशक्त्या ततो वृत्तं त्ववस्थादिविवर्तनम् । मायाशक्त्या तथा वृत्ताः सत्त्वं रजस्तमो गुणाः ।। ८ ।। अवस्थागुणवैवर्त्यं चैतन्यं समजायत । बुद्धितत्त्वं हि तत्प्रोक्तं महत्तत्त्वं हि तन्मतम् ।। ९ ।। आत्मतत्त्वमहच्चित्तं मनश्चेति हि तन्मतम् । बुद्धितत्त्वात् प्रजातं वै

सूक्ष्ममिन्द्रियमण्डलम् ॥ १० ॥ इन्द्रियेभ्यः प्रजातं वै तत्तद्विषयमण्डलम्। विषया अर्थरूपास्ते शब्दब्रह्मगताः पुरा ॥ ११ ॥ निष्क्रान्तास्ते जगद्रूपाः स्थूलाऽवस्थाऽक्षगोचराः। विवृता ब्रह्मतस्तद्विवर्तोपादानकारणम् ॥ १२ ॥ शब्दब्रह्मैव संप्रोक्तं, तस्माच्छब्दात्मकं जगत्। नामरूपाऽभिसम्वेद्यं स्थूलं ब्रह्मविवर्तकम् ॥ १३ ॥ स्फोटशक्तिगुणबुद्धीन्द्रियार्थाः षट् जगन्मयाः। एकैषा सरणिः प्रोक्ता स्फोटब्रह्मप्रवादिनाम् ॥ १४ ॥

अथ स्फोटस्वरूपं तत् परब्रह्म स्वयं निजम्। व्यवर्तयद् विमर्शाख्यं समष्टिब्रह्मरूपि यत् ॥ १५ ॥ सगुणं ब्रह्म तत् प्रोक्तं सर्वान्तर्यामिरूपि च। समष्ट्यात्मविमर्शाद्धि सगुणब्रह्मतस्ततः ॥ १६ ॥ विन्द्वाख्यं निजरूपं व्यावर्तयद् बहुचेतनम्। विवेकचित् प्रविज्ञानं यदात्मा ज्ञातृचेतनः ॥ १७ ॥ मुक्ता ईशा महेशाश्च देवा दैत्या महर्षयः। मानुषाः पक्षिसर्पाद्यास्तिर्यञ्चो भूरुहादयः ॥ १८ ॥ आत्मानस्तेऽणवो विन्दुस्वरूपा माययावृताः। कालभोग्यार्थदेहा यैर्जगत्कृत्स्नं प्रसंभृतम् ॥ १९ ॥ विन्द्वाख्यात्तु निजाद् रूपात् नादान्व्यवर्तयत् प्रभुः। नाऽद्यन्तेऽन्यानदन्त्येते नादाश्चान्तरवृत्तयः ॥ २० ॥ बुद्धिचित्तमनोऽहन्तारूपा नादा हि ते मताः। व्यष्टिरूपाश्च ते सर्वे तूपाधिज्ञप्तिसंभृताः ॥ २१ ॥ तेभ्यो नादेभ्य उद्भावा व्यवर्तन्त ध्वनीश्वराः। ध्वनन्ति ज्ञापयन्त्येव चेतनं कारणं निजम् ॥ २२ ॥ ध्वनयस्ते मतान्यत्रेन्द्रियाणि ध्वनिकानि वै। सूक्ष्मरूपा ध्वनयस्ते भिन्नरूपास्तताऽभवन् ॥ २३ ॥ व्यवर्तन्त ततश्चार्था विषया ध्वनिगोचराः। स्थूलाकारा जगद्रूपाः शब्दब्रह्मगताः पुरा ॥ २४ ॥ विवृता ब्रह्मतस्तद्विवर्तोपादानकारणम्। शब्दब्रह्मैव विज्ञेयं नामरूपं यतो जगत् ॥ २५ ॥ स्फोटविमर्शविन्दुनादध्वन्यर्था हि षट् जगत्। अन्येयं सरणिः प्रोक्ता स्फोटब्रह्ममतिञ्जुषाम् ॥ २६ ॥

स्फोटो नित्यं परंब्रह्म, विमर्शस्तु ततोऽवरम्। ब्रह्म तत् सगुणं मायाप्रकृत्याख्यं च वा मतम् ॥ २७ ॥ विन्दुस्तु परनादोंकारात्मकं ब्रह्म वेरितम्। अनाहतोऽपि विन्दुः स मायाविकृतिरीरिता ॥ २८ ॥ ततो नादमयोऽशुद्धो विन्दुधर्मो व्यवर्तत। अशुद्धोऽयं महत्तत्त्वाद्यात्मकः सात्मसंस्थितिः ॥ २९ ॥ नादोऽयं कीर्त्यतेऽहंकारादितन्मात्रसंभृतः। ततो जाता ध्वनयश्च वेदाः शास्त्राणि चागमाः ॥ ३० ॥ संहिता इतिहासाश्च पुराणानि गिरस्तथा। सूत्राणि विविधा भाषा भाष्याणि ध्वनयस्त्विमे ॥ ३१ ॥ ध्वनिभ्यश्च ततस्त्वर्था व्यवर्तन्त जगद्धि तत्। नित्यशब्दमयत्वाद्धि जगन्नित्यं च शाश्वतम्

॥ ३२ ॥ अवस्थान्तरयोगास्तु कालशक्तिप्रयोगतः। विवर्तन्तेऽनुवर्तन्ते न नश्यन्ति कदाचन ॥ ३३ ॥ स्फोटस्वगुणौ (ओँ)तन्मात्रवागथोः षड् जगन्मताः। प्रोक्तेतरेयं सरणिः स्फोटब्रह्मविरामिणाम् ॥ ३४ ॥

अथापि स्फोटसंज्ञं यत् परंब्रह्म-परा तु सा। दिव्या वाणीस्वरूपा वै व्यापिनी ब्रह्मदेवता ॥ ३५ ॥ स्वयं स्वस्यैव विषयं नान्यस्य विषयं क्वचित्। निर्गुणं च निराकारं मतं चाऽविषयत्वतः ॥ ३६ ॥ ब्रह्मधामाऽपि सा प्रोक्ता ब्राह्मी शक्तिरपीति सा। मुक्तिदेशा च सा सर्वज्ञप्तिरूपाऽस्ति शाश्वती ॥ ३७ ॥ दिव्याऽनन्तमहाश्चर्यबीजोपादानरूपिणी। विवर्तते निजैवेति पश्यन्तीवृत्तिमेति सा ॥ ३८ ॥ मायाकालमहाशक्तिस्वरूपा दृष्टिसृष्टिगा। ईश्वराश्चाऽधिदैवाश्चाऽऽत्मानः कर्मठयोगिनः ॥ ३९ ॥ ब्रह्मरुद्रर्षिरूपाश्च पश्यन्तीरूपिणो हि ते। चिदानन्दमयाश्चैते चैतन्यामृतचेतनाः ॥ ४० ॥ परा सा मूलचक्रेऽस्ति शब्दाद्यविषया यतः। व्याकरणाऽगोचरा सा पश्यन्तीरूपतां गता ॥ ४१ ॥ नाभौ पश्यति पश्यन्ती नाडीचक्रं सकन्दकम्। सर्वनाडीषु चैकात्म्यं ब्रह्माण्डानां विवर्तते ॥ ४२ ॥ पश्यन्ती सगुणं ब्रह्म समष्टिज्ञप्तिरूपिणी। अंकुरात्ममयी तस्या मध्यमा च व्यवर्तत ॥ ४३ ॥ ओंकारगर्भा सर्वात्मपृथग्भावाभियोजिका। पृथग्गुणस्वभावा सा हृदयेषु व्यवस्थिता ॥ ४४ ॥ दिव्या च व्यापिनी सूक्ष्मा सृष्टिकललसंभृता। शक्तिमण्डलसौषुम्ना, वैखर्यस्या व्यवर्तत ॥ ४५ ॥ मध्यमस्थूलभावाढ्या बुद्धितन्मात्रगामिनी। विपर्ययख्यातिसम्पन्ना महानादाभिवर्षिणी ॥ ४६ ॥ कण्ठस्थानाप्रयत्ना सा भेदभावाभिगामिनी। वैराजरूपिणी चेयं व्यष्टिविग्रहरूपिणी ॥ ४७ ॥ सारस्वतं समस्तं वाङ्मयं चाऽस्या व्यवर्तत। इन्द्रस्य शक्तयः सर्वा विविधा वृत्तयस्तथा ॥ ४८ ॥ ग्राह्यग्राहकतागर्भा व्यवर्तन्त यतस्ततः। मुखवासा बहिर्वासा बहिर्वेगसमाश्रया ॥ ४९ ॥ इन्द्रियाख्यस्वरूपा सा श्रावणौजस्वती तथा। अस्या अर्थाः प्रपञ्चाख्या व्यवर्तन्त यतो जगत् ॥ ५० ॥ वागियं ब्रह्मरूपा वै न जडा किन्तु चेतना। सत्स्वरूपा बहिर्वाचामगोचरसुशक्तिका ॥ ५१ ॥ शब्दाकाशस्वरूपा सा वागाकाशः स्वयं हि वाक्। पाञ्चभौतिकसृष्ट्यौ सर्वा वाणीजनिर्मता ॥ ५२ ॥ परापश्यामध्यमावैखरीसारस्वतार्थकाः। षड् जगद्रूपतापन्नाः सरणिस्त्वपरा त्वियम् ॥ ५३ ॥—

शब्दो ब्रह्म परं स्फोटो वेदस्तस्माद् व्यवर्तत। देवनामस्वरूपाणि व्यवर्तन्त ततः परम् ॥ ५४ ॥ यज्ञरूपः स्वयं तस्माद्धर्मरूपाद् व्यवर्तत। ततः पुण्यं ततः स्वर्गं जगत् सर्वं व्यजायत ॥ ५५ ॥

स्फोटवेदद्युसद्यज्ञाऽदृष्टाऽर्थाः षड् जगन्मतम्। विलक्षणेयं सरणिः शब्दब्रह्मगिरांगिनाम् ॥ ५६ ॥

एवं नित्यं जगच्छब्दविवर्तात्मकमुच्यते। ऋङ्यजुःसामरूपं स्वस्वरूपं स्वोत्तरक्षणे ॥ ५७ ॥ देवतात्मस्वरूपं वै महावैराजसंज्ञकम्। यज्ञो ब्रह्मा ततो धर्माऽधर्मावदृष्टमूर्जितम् ॥ ५८ ॥ तत्फलानां प्रभोक्तृत्वं वक्तृत्वं वाचि संस्थितम्। विश्वरूपं हि तद्भोग्यं त्वर्थाकारं विशेषतः ॥ ५९ ॥ वक्तव्यार्थस्य सर्वस्य वाच्यन्तर्भाव ईरितः। सर्वोपादानता वाचि कल्पिताकारहेतुता ॥ ६० ॥ उपादानस्वरूपाऽपि वाच्येवास्ति चितौ यतः। ससंज्ञानां विसंज्ञानामन्तःसंज्ञकदेहिनाम् ॥ ६१ ॥ सुखदुःखाऽऽप्तिसंवित् साऽन्तर्वाग्रूपाऽनुवृत्तिका। वाक्तत्त्वं चितिरूपं यद् वागरूपाऽनश्चितिक्रिया ॥ ६२ ॥ भेदाद्ग्राहिविवर्तेन लब्धाकारपरिग्रहा। वाङ्नेत्रा वाग्व्यवहारा वाग्विभागो गद्यादयः ॥ ६३ ॥ बाह्यजगत्समाऽन्तःस्थाः स्वाप्नार्था वाग्विवर्तकाः। ऽन्तःस्थसृजौ कूटब्रह्माधिष्ठानवृत्तिता ॥ ६४ ॥ साक्षात्परम्पराप्राप्ता, ब्रह्मवैवर्तकं जगत्। महत्तत्त्वं मनश्चेन्द्रियाणि ज्ञानानि वृत्तयः ॥ ६५ ॥ गुणत्रयं च मात्राणि भूतानि तनवोऽर्थकाः। शब्दब्रह्मविवर्तास्ते शब्दाद्वैतं ततो जगत् ॥ ६६ ॥ स्वाप्ने ब्रह्मविवर्तोऽस्ति शुक्तौ ब्रह्मविवर्तना। सुतरां शुक्तिरजते ब्रह्मवैवर्तनं मतम् ॥ ६७ ॥ विवर्तोपादानहेतुत्वं शुक्तिर्विपर्ययोऽपि च। शब्दः शुक्तिरिति, व्याप्तं ज्ञानं शुक्तिरिति स्मृतम् ॥ ६८ ॥ ग्राह्यं ग्रहणमेवाऽत्र ग्रहीता ब्रह्म चैव तत्। राजतो विषयश्चैवं रजतं शब्दनं तथा ॥ ६९ ॥ ज्ञानं रजतमित्येवं बाह्यं चान्तरमित्यपि। शब्दब्रह्मैव वैजात्याऽन्यथाभाख्यातिरेव सा ॥ ७० ॥ सामान्येन तु रूपेण ब्रह्मण्येकत्वमेव वै। विशेषेण स्वरूपेणाऽनेकत्वं ब्रह्मणीति च ॥ ७१ ॥ निर्गुणेन स्वरूपेणाऽभिन्नत्वं ब्रह्मणः सदा। जीवात्मादिस्वरूपेण भिन्नत्वं ब्रह्मणोऽपि च ॥ ७२ ॥ ब्रह्म स्वस्यैकदेशाद्धि कर्मवासनसंघतः। विविधं जायते यद्वा विवर्तात्मकमेव तत् ॥ ७३ ॥ कर्मज्ञानप्रचयेन मुक्तिर्वैवर्त्यलोपनात्। प्रकृतिप्रत्ययाद्यात्मा विभागः कल्पनामयः ॥ ७४ ॥ विभागो नास्ति वै शब्दब्रह्मणीदमहङ्कृतः। अद्वैते द्वैतभावस्य भ्रान्तित्वं द्विशशांकवत् ॥ ७५ ॥ गगनं निर्मलं लोकस्तिमिरी तिमिरप्लुतम्। प्रपद्यते यथा तद्वच्छुद्धं ब्रह्म तमोवृतम् ॥ ७६ ॥ अमृतं मृतरूपं वाऽभिन्नं भेदमयं तथा। अद्वैतं द्वैतरूपं वा देवाद्यात्म प्रपद्यते ॥ ७७ ॥ प्रत्यक्षं जायते भेदस्वरूपि ब्रह्म वै ततः। शक्त्याश्रयो महान् स्फोटो न प्रत्यक्षो ह्यतीन्द्रियः ॥ ७८ ॥ परावाणीस्वरूपः सोऽसंप्रज्ञातेन गृह्यते। संप्रज्ञातेन पश्यन्तीरूपः

पश्चाद्धि गृह्यते ॥ ७९ ॥ मध्यमा मानसेनैव बोधेन परिगृह्यते । वैखरी कर्णतत्त्वेन गृह्यते स्थूलरूपिणी ॥ ८० ॥ अर्थः स्फोटे वसत्येव तादात्म्येन तथा पुनः । अर्थोपस्थापकशक्तितादात्म्येन विशेषतः ॥ ८१ ॥ तस्मादर्थमयं चेदं जगत् स्फोटात्मकं मतम् । स्फोटो ब्रह्म च सर्वत्र स्वशक्त्याधायको विभुः ॥ ८२ ॥ विषयेषु स्थिता या या शक्तयः स्फोटजा हि ताः । लीयन्ते च यदा तर्हि लीयन्तेऽर्थाः स्वरूपतः ॥ ८३ ॥ इन्द्रियेषु प्रलीयन्तेऽर्थास्तदेन्द्रियमण्डलम् । सशक्तं त्वान्तरे तत्त्वे हृदये लीयते त्वनु ॥ ८४ ॥ हृन्मनः शक्तियुक्तं वै बुद्धितत्त्वे प्रलीयते । सुशक्ता बुद्धिरेवेयं यावत्तिष्ठति तावता ॥ ८५ ॥ स्वाप्नप्रबोधवृत्तिः सा विवर्तात्मा प्रकाशते । विभक्तपुरुषाकारा वाक्तत्त्वे नित्यमास्थिता ॥ ८६ ॥ अतः स्वाप्नास्तथा बाह्याः सृष्टयः पुमनुव्रताः । विवर्तरूपाः स्वाधिष्ठानाऽऽप्तसत्त्वा भवन्ति हि ॥ ८७ ॥ प्रकाशात्म परेशस्य स्वभावाः सर्वशस्त्विमे । गारुडादिप्रमन्त्रा वै सुशक्ता विषहारिणः ॥ ८८ ॥ ब्रह्मरुद्रास्त्रमन्त्राश्च सुशक्ताः शरदर्पिणः । जलोत्पातसम्पन्नाः संहारान्ता भवन्ति हि ॥ ८९ ॥ आगमा निगमा मन्त्राः शब्दब्रह्म सुशक्तिकम् । भवत्येवेति शक्त्यात्मख्यातिस्तत्र मताऽत्र वै ॥ ९० ॥ स्वप्ने नारीप्रयोगेण कामतृप्तिर्यथा मता । शक्तं ब्रह्म तदा नारीस्वरूपं संविवर्तते ॥ ९१ ॥ तस्मात् शक्तिविवर्ताख्या ख्यातिर्नारीस्वरूपिणी । एवं शाब्दिकतत्त्वानां शक्तिः सर्वस्वरूपिणी ॥ ९२ ॥ शुक्तौ रजतमित्यत्र शक्ती राजतरूपिणी । शक्तिवैवर्तिकख्यातिः सर्वत्रैवं समाहिता ॥ ९३ ॥ इति ॥

प्रत्यभिज्ञानमन्तॄणां शिवब्रह्म परं स्वयम् । तत्त्वमेकं प्रकाशाख्यं व्यापकं स्वप्रकाशकम् ॥ १ ॥ नित्यसंवित्स्वरूपं स्वाऽन्यप्रकाशाद्यगोचरम् । शिवाद्वयं स्वतन्त्रं तत् शिवो ब्रह्म परं पदम् ॥ २ ॥ शिवमेवाऽद्वितीयं तन्नेह नानाऽस्ति किञ्चन । स ऐक्षत बहु स्यां तत् शक्तिं स्वस्मादजीजनत् ॥ ३ ॥ स्फूर्तिरूपां विमर्शाख्यां शक्त्यानन्त्यसमन्विताम् । अहं-स्फूर्तिस्वरूपां तामहंभावप्रयोजिकाम् ॥ ४ ॥ ज्ञानशक्तिमयीं चापि क्रियाशक्तिसमन्विताम् । विरामशक्तियुक्तां च विकासादिसमन्विताम् ॥ ५ ॥ अहमंशो यथा तद्वदिदमंशोऽपि स्फुरत्यपि । स्फूर्तिशक्त्या विमर्शाख्यविद्यया च ततो द्रुतम् ॥ ६ ॥ अंशद्वयोपपन्नाऽन्या मायाशक्तिरजायत । अविवेको हि सा माया तन्माता तु शिवा मता ॥ ७ ॥ स्फूर्तिरूपा चित्स्वरूपा चैतन्या सर्वगोचरा । तस्या एव स्वपुत्र्यां वै चैतन्यं समुपावृतम् ॥ ८ ॥ अल्पज्ञत्वात्मकं तस्याश्चैतन्यं समवर्तत । शिवस्याऽप्यविवेकोऽभूत् शिवात्मा न स्फु-

रत्यतः ॥ ९ ॥ अहन्तेदन्तयोस्तत्र पृथक्त्वाऽभास उद्गतः। द्वैतं स्फुटं ततो जातं, चैतन्यांशस्य वै तदा ॥ १० ॥ संकोचोऽप्यभवत् तेन किञ्चिद्वित्त्वं शिवस्य वै। सम्पन्नं नित्यतृप्तेश्चाऽभानं जागर्ति तेन च ॥ ११ ॥ शिवस्यैवं भवत्येव द्वैतविषयरागिता। रागवेगेन वै तस्माज्जगद्भोग्यं व्यजायत ॥ १२ ॥ महेश एव सर्वं तत् स्वस्मिन्नाभासयत्यपि। स्थापयत्येव वै स्वस्मिन् स्वस्मिन् संहारयत्यपि ॥ १३ ॥ अभिन्नमपि सर्वं वै भिन्नमाभासयत्यपि। स्वेच्छैव कारणं तत्र, न कर्माऽपेक्षणं मनाक् ॥ १४ ॥ जगत् क्षणिकं नाश्यं च शिवो नित्यश्च शाश्वतः। शिवस्य शक्त्यभिन्नस्य सर्वात्मत्वमबाधितम् ॥ १५ ॥ समष्ट्याकारनानाऽर्थसंभूता या विमर्शिनी। तयाऽसंख्यजगद्रूपाकाराऽऽधानादभिन्नता ॥ १६ ॥ नानाऽपि क्षणिकं सर्वं सच्छिवात्मकमित्यतः। उपादानस्य सत्यत्वाद्विकाराणां सदात्मता ॥ १७ ॥ शिवस्य ज्ञानशक्तौ च स्वेच्छाशक्तौ जगत् स्थितम्। ज्ञाने ज्ञेयस्य संस्थानं दृष्टिसृष्टिर्हि सा मता ॥ १८ ॥ नाना वस्तु समस्तं च मतं सत्कारणाद्धि सत्। शक्तिविमर्शरूपा सा प्रकाशा मितिरीश्वरी ॥ १९ ॥ शक्तिं विना तु निःसारं शिवतत्त्वं यतः खलु। विना शिवं तु सा शक्तिर्निःसाराऽतस्तयोः सदा ॥ २० ॥ सुसारत्वं सदा चैक्यं तादात्म्यं भेद एव न। सारश्च स्फुरणा ह्यत्र स्पन्द एव शिवा मता ॥ २१ ॥ शिवा स्वाश्रयतत्त्वस्य द्वैतत्वं प्रापयत्यपि। स्वकार्याणि त्वबाध्यानि सृजन्ती द्वित्वमेति सा ॥ २२ ॥ शिवं प्रकाशयन्ती सा जाड्यं द्वैतं शिवस्य हि। सम्पादयति त्वद्वैतं शंभोर्दूरीकरोत्यपि ॥ २३ ॥ सधर्मा चैतया शंभुः शंभुना सा सधर्मिणी। शिवेच्छारूपिणी सा वै निरपेक्षः शिवः सदा ॥ २४ ॥ स्वातन्त्र्येण महाकाशादींश्च संभावयत्यपि। शक्तिः सदाशिवं चापीश्वरं विद्यां च पावनीम् ॥ २५ ॥ मायां कलां च विद्यां च रागं कालं तथा पुनः। नियतिं भावयत्येव जायन्ते तानि शंभुतः ॥ २६ ॥ शक्तिः स्फूर्तिश्चित्प्रधाना चित्प्रधानस्तथा शिवः। शक्तिरानन्दमुख्या च ताभ्यां चेच्छाप्रधानतः ॥ २७ ॥ सदाशिवस्वरूपं चाऽन्तर्निमेषस्वरूपि यत्। बाह्योन्मेषस्वरूपं चेश्वरतत्त्वं व्यवर्तत ॥ २८ ॥ ज्ञानशक्तिप्रधानं तदीश्वरत्वं शिवस्य हि। विद्याशक्तिप्रधाना च विद्या शुद्धा शिवात्मिका ॥ २९ ॥ सदाशिवस्य वै चान्तर्निमेषेण क्रियात्मताम्। धत्ते ज्ञानात्मकः शंभुर्यश्चाऽत्रेश्वरसंज्ञितः ॥ ३० ॥ अहन्त्वेदन्त्वयोः स्फूर्तिविमर्शः शुद्धरूपकः। विद्या शुद्धा हि सा प्रोक्ता शिवस्य स्वाभिबोधिका ॥ ३१ ॥ अहमर्थः प्रकाशो वै विद्यारूपः प्रकीर्त्यते। माया तु कीर्त्यते तत्त्वाऽविवेकोऽज्ञानसंज्ञ-

कः ॥ ३२ ॥ कलादीनां च तत्त्वानां मूलं माया ततो मता। अविद्याऽज्ञानमेवोक्तं तत्त्वानामान्ध्यकारकम् ॥ ३३ ॥ ततः कला च विद्या च रागः कालस्तथा पुनः। नियतिश्च व्यजायन्त तैर्जीवाः शिवजातयः ॥ ३४ ॥ शिवात् सर्वे व्यजायन्ताऽपंचगास्तेषु कलादयः। पञ्च निरोधकाः सन्त्यावरणानि मतानि च ॥ ३५ ॥ तद्विद्वं च जडं सर्वं विषयांशं व्यजायत। इदमंशात्मकं प्रोक्तं प्राकृतं तत्त्वमेव तत् ॥ ३६ ॥ शिवस्यापि च जीवस्येदन्त्वांशः प्रस्फुरत्यति। विषयास्ते स्फुटाः सर्वे भवन्त्येवाऽऽत्मनां ततः ॥ ३७ ॥ अहन्त्वांशेन तादात्म्यमापन्नेदन्त्वलोचनैः। बाह्यसत्तास्फुरणं वै जायते नाऽऽन्तरं ततः ॥ ३८ ॥ आच्छादितस्त्वहन्त्वांऽशो जीवो बाह्यमितिः शिवः। शिवो जातो हि संसारी भोक्ता कर्ता विलोकिता ॥ ३९ ॥ स्वतन्त्रं शिवतत्त्वं यत् स्वेच्छया तु चराचरम्। परतन्त्रस्वरूपं तज् जातं, कर्म न कारणम् ॥ ४० ॥ लीलयैव प्रजातं हि लीलाकैवल्यमेति च। शिवोद्भूते हि वै कालकर्मणी शिवरूपिणी ॥ ४१ ॥ सूर्यचन्द्रस्वरूपो वै कालः क्षणनियामकः। शिवः कालस्वरूपो वै यजमानः शिवो मतः ॥ ४२ ॥ भूमिरापोऽनलो वायुः खं मनो बुद्धिरित्यपि। आत्मा चेत्यष्टसंज्ञो वै शिवः प्रकृतिनामभृक् ॥ ४३ ॥ शिवो जीवो न वै भिन्नः शिवः सोऽहमिति स्वकम्। प्रत्यभिज्ञानमभ्यस्तं मुक्तिदं जायते द्रुतम् ॥ ४४ ॥ साक्षात्कारः शिवोऽहं वै नान्य इत्येव सर्वथा। प्रत्यभिज्ञा निजस्यैव मुक्तिकारणमुच्यते ॥ ४५ ॥ शिवकृपाऽर्जनीया वै दीक्षया च ततस्त्विह। दीक्षा द्वेधाऽनुसंग्राह्या सत्यसंवित्स्वरूपिणी ॥ ४६ ॥ संवित्प्रवेशफलिका चैकाऽन्या तु क्रियामयी। भौतिकी दैहिकी दीक्षा ततो भोगो विरागकृत् ॥ ४७ ॥ निर्विघ्नाऽऽस्वादरूपा च रसाऽऽढ्येयं मता शिवे। रसनागोचराः सर्वे रसा नव शिवे ततः ॥ ४८ ॥ स्वसंवेदनरूपास्ते रसैकघनताकराः। पराऽऽनन्दप्रदाः सर्वचमत्कारविधायकाः ॥ ४९ ॥ निवृत्तिदाः शिवे नैजे स्वरूपे सत्क्रियार्पणात्। शिवात्माऽयं च संसारी शिवोऽहं चेति भावयेत् ॥ ५० ॥ नूतना भावना नेयं प्राचीना शिवसंगता। प्रत्यभिज्ञास्वरूपैव शंभ्वनुग्रहकारिणी ॥ ५१ ॥ ततोऽहं शिव एवेति-स्फूर्त्या नैजाऽपरोक्षता। संविद्रूपा सततं चाऽभिज्ञायेत तदाऽस्य वै ॥ ५२ ॥ परासिद्धिर्ब्रह्मशंभुरूपा मुक्तिर्भवेदिति। अणूनां सर्वजीवानां दीक्षितानामयं महान् ॥ ५३ ॥ अमूर्तसंविदो मूर्त्यात्मना च क्रियया ऽन्वहम्। नाममन्त्रजपाद्यं चाऽत्रभागं मोक्षदं मतम् ॥ ५४ ॥ अयते सर्वमित्येवं शुद्धाऽध्या मोक्षदः शिवः।

तथेयं प्रत्यभिज्ञाऽस्ति वस्तुनाजात्यलम्बिनी ॥ ५५ ॥ न त्वथैक्य-प्रयोज्या, सा ज्वालैक्यादिसमा यतः। प्रत्यभिज्ञावलाज्जीवे सृष्टौ दृष्टिः शिवात्मिका ॥ ५६ ॥ सृष्टिदृष्टिप्रवादोऽयं प्रत्यभिज्ञाप्रमाकृतः। शंभुसृष्टे तु जीवे या स्वदृष्टिः सृष्टिदृष्टिका ॥ ५७ ॥ शुक्तौ रजत-मित्यत्र प्रत्यभिज्ञातमेव यत्। स्फूर्त्यात्म रजतं प्रत्यभिज्ञाख्यातिस्ततो मता ॥ ५८ ॥ शुक्तिर्मायामयी शंभुरूपिणी रजतं शिवः। द्वयोरैक्यं तु वै वस्तुसाजात्यात् समदृश्यत ॥ ५९ ॥ सृष्टिदृष्टिप्रवादस्याऽबाधि-तत्वात् ततोऽत्र वै। सृष्टिदृष्टिस्वरूपा वै ख्यातिर्बोध्या हि राजती ॥ ६० ॥ सत पदार्थस्वरूपं च नाऽसत् किञ्चित् प्रवर्तते। सत्त्वाद् रजतरूपं च शिवसत्यत्वबोधिनी ॥ ६१ ॥ ख्यातिः सत्यस्वरूपा वै बोध्या सर्वत्र वै तथा। एवमेव पदार्थानां शिवत्वं नान्यदिष्यते ॥ ६२ ॥ भ्रान्तौ दोषे तथा स्वप्ने चेन्द्रजाले च मान्त्रिके। वैतथ्ये तथ्यलाभे वा शिवमायामये शिवे ॥ ६३ ॥ शवख्यातिः समस्ता वा व्यस्ता नाऽस्या हरं विना। प्रत्यभिज्ञा शिवस्यैव शिवद्वारा मता-ऽऽत्मनः ॥ ६४ ॥ प्रत्यभिज्ञानमेवास्ति तत्तदागमसंश्रयात्। गुरूपदे-शनालाभात् स्वाऽपरोक्ष्यगतिस्ततः ॥ ६५ ॥ इतिभुवेशतत्त्वं वै ब्रह्मा-ऽऽनन्दभृतं स्वयम्। संसाररूपं शक्त्यैव चिज्जडं समपद्यते ॥ ६६ ॥ सर्वमानन्दरूपं तत् न त्वनानन्दगन्धयपि। किन्तु लोकेऽत्र वै प्राति-कूल्यं यत्र ज्ञायते तु तत् ॥ ६७ ॥ नाऽन्धकारं विना तेजोमूल्यं श्रेष्ठं प्रवर्तते। न चाऽज्ञानं विना ज्ञानस्यापि मूल्यं प्रवर्तते ॥ ६८ ॥ न क्षुधामन्तरा तृप्तेर्मुक्तेर्मूल्यं प्रजायते। नापि रिक्तत्वविरहे पूर्णता मूल्यभागिनी ॥ ६९ ॥ प्रातिकूल्यं विना नैवाऽनुकूलत्वं समूल्यकम्। दुःखमात्रस्पृष्टे नैव सुखमात्राऽस्तिमूल्यगा ॥ ७० ॥ अनानन्दं विना नैवाऽऽनन्दो मूल्यगो भवेत्। अशिवं च विना नैव शिवमूल्यं भवेदिति ॥ ७१ ॥ विचार्यैव विमर्शाख्यशक्त्याऽनानन्दमात्रिका। प्र-काशिता निजाद्रूपात् महानन्दगतिप्रदा ॥ ७२ ॥ ततो दुःखात्मि-कायां वै रचनायां हरस्य वै। लीलैव कारणं स्वस्य महानन्दाभिसा-रकम् ॥ ७३ ॥ अतो दुःखांशरूपे स्वे भावे नास्ति शिवे मनाक्। दूषणं भूषणं तद्वै स्वस्याऽद्वैतमये विभौ ॥ ७४ ॥ प्रमाणान्यागमाः सर्वेषामानां वेदसन्निभाः। परम्पराऽऽगताः पूर्णा वेदोद्देशप्रसाधकाः ॥ ७५ ॥ तद्वत् तन्त्राणि सर्वाणि त्रायन्ते यैश्च सर्वथा। अतो ब्रह्म-गिरश्चैताः सर्वज्ञस्यैव शक्तयः ॥ ७६ ॥ विमर्शाख्या तु या शक्तिः सर्वशक्तिरूपी शिवा। निगमादिस्वरूपा सा सर्वतत्त्वाभिबोधिनी ॥ ७७ ॥ आगमा निगमाश्चापि तन्त्राण्यपि विमर्शनः। प्रकाशं सम-

पद्यन्ते तस्माद् याथार्थ्यमेषु वै ॥ ७८ ॥ तत्प्रतिपाद्यतत्त्वैक्यं शिवस्यैव परात्मनः। तच्छक्तिस्तु चितिः प्रत्यवमर्शाख्या मितिर्हि गीः ॥ ७९ ॥ स्वेच्छोदिता शिवाऽभिन्ना स्वातन्त्र्याऽपरनामिका। ऐश्वर्यं परमं शंभोः स्फुरणाख्यं परं मतम् ॥ ८० ॥ महासत्तास्वरूपं तद्दिव्यं नित्यं च शाश्वतम्। सर्वचेतनचैतन्यं देशकालाऽविशेषितम् ॥ ८१ ॥ शक्त्याऽनया परब्रह्म शिव एव प्रकाशते। एकमेवाऽद्वितीयं तत् तस्मादद्वैतमुच्यते ॥ ८२ ॥ इति।

द्वैताः पाशुपतास्तत्र शिवाऽद्वैतं प्रमन्वते। पतिः शिवः परब्रह्म त्वेक एव न चाऽपरः ॥ १ ॥ शिवाऽद्वैतं तथारीत्या भवत्येव हि नान्यथा। मायातत्त्वं सदा चाऽऽस्ते शिवादन्यमतो द्विता ॥ २ ॥ द्वैतं तत्त्वप्रणाल्यां वै मतं पाशुपतं मतम्। कारणं कार्ययोगौ च विधिर्दुःखान्त इत्यपि ॥ ३ ॥ पञ्चतत्त्वानि सन्त्यत्र, कारणं शिव उत्तमः। पतिः शिवः परब्रह्म निमित्तं कारणं मतम् ॥ ४ ॥ सृष्टौ माया, प्रधानाख्येपादानं कारणं मतम्। महत्तत्त्वादिकार्याणि पृथिव्यन्तानि सन्ति हि ॥ ५ ॥ प्रधानादेव जायन्ते लीयन्ते तत्र वै पुनः। जीवा नित्यास्तु पशवः कर्माढ्यास्तानपेक्ष्य वै ॥ ६ ॥ तत्कर्मानुगतं कार्यं शिवः सर्वं करोति हि। संसारिणो हि योगेन शिवार्पणविधायिना ॥ ७ ॥ कर्मणा च तथा दीक्षाविधिप्राप्त्या ततो द्रुतम्। दुःखान्तं सम्प्रपद्यन्ते मोक्षाख्यं शिवसन्निधौ ॥ ८ ॥ माया सती च नित्या च जीवा नित्यास्ततस्त्वयम्। संसारस्य प्रवाहोऽपि नित्य एव भवत्यपि ॥ ९ ॥ मायया पशवः सर्वेऽल्पज्ञा अज्ञानपाशिताः। कर्मपाशाऽवनद्धाश्च भ्रान्ता योगं प्रयान्ति न ॥ १० ॥ भ्रान्तिः स्वार्थमयत्वं वै परार्थे शंकरार्थिनि। शंकरार्थपरत्वे तु याथार्थ्ये मौक्षिणी गतिः ॥ ११ ॥ अर्थः प्रयोजनं प्रोक्तं स्वाऽऽयत्तेष्टत्वमेव तत्। रजते यत्तु वै स्वायत्तेष्टत्वं तद् यदा भवेत् ॥ १२ ॥ शुक्तौ प्रवर्तते तत्र तदा भ्रान्तिर्मता हि सा। शुक्तिर्वा रजतं वापि मायिकं तत्त्वमेव तत् ॥ १३ ॥ स्वायत्तेष्टत्वविज्ञानं ज्ञानं त्वात्मांश एव वै। रजतं स्वायत्तेच्छाविषयं शुक्तिगोचरम् ॥ १४ ॥ शुक्त्यात्मके तदा तत्रोत्पन्नं न रजतं यतः। ज्ञाने विषयमेवाऽस्ति स्वायत्तेष्टत्वगोचरम् ॥ १५ ॥ स्वायत्तेष्टत्वविषया ख्यातिर्वै रजतस्थले। मता विषयतारूपा क्षणिका लयगामिनी ॥ १६ ॥ इति

द्वैताः सिद्धान्तिशैवाश्च तत्त्वत्रयविवेचकाः। पतिः पशुश्च पाशश्च त्रीणि तत्त्वानि तानि वै ॥ १ ॥ पतिः शिवः परब्रह्म सर्वशक्तिगुणान्वितः,। पशुर्जीवः कर्मलिप्तः, पाशः पञ्चविधो यथा-

।। २ ।। मलो, माया, रोधशक्तिः, कर्म, बिन्दव, एव वै। वासना मलरूपा सा त्रिविधा-त्वाणवी, तथा ।। ३ ।। कार्मणिकी, मायिकी च, माया-भ्रान्तिस्वरूपिणी। रोधशक्तिरविज्ञानं कुण्ठितत्वं च बन्धनम्, ।। ४ ।। कर्माऽसितं सितं मिश्रं, बिन्दुर्वाक् सा चतुर्विधा-। परा वाणी च, पश्यन्ती, नादिनी, वैखरी तथा, ।। ५ ।। आगमा वै परा वाणी शिवब्रह्मोदिता यतः। सेयं पाशात्मिकी शैवपाशरूपा न मायिकी ।। ६ ।। मायापाशाऽपहन्त्री सा शिवब्रह्माऽधिपाशिनी,। पश्यन्ती शैवसंलाप्या या धार्या हृदये मता ।। ७ ।। शंभुसायुज्यके चेयं परावाण्यां प्रयोजिका,। नादिनी कर्णसंग्राह्या कण्ठस्था चान्तरात्मिकी ।। ८ ।। इयं बन्धनरूपा वै भिन्नार्थाढचा जगन्मयी, वैखरी स्थूलरूपा लौकिकार्था बहुविस्तृता ।। ९ ।। महापाशंकरी चेयं, यदि स्याच्छिवयोजिता। तदा पाशप्रणाशाय ससामर्थ्या भवत्यपि ।। १० ।। महामाया महापाशः पृथिव्यन्तः प्रकीर्तितः। मायातत्त्वानि सूक्ष्माणि महत्तत्त्वादिकानि च ।। ११ ।। आकाशादिस्वरूपैर्वै विभिन्नानि भवन्ति हि। दीपाद् धूमो विभिन्नो वै गगनादभ्रमण्डलम् ।। १२ ।। स्वाप्ने स्त्र्यादिपदार्था वै कार्यं च स्खलनादिकम्। जायन्ते मृत्तिकातश्च मणयः कनकादिकम् ।। १३ ।। विजातीयं मिथश्चैतच्चिरदृश्यं क्षणदृशम्। मरौ देशे च किरणैर्जलं दृश्यक्षणं तथा ।। १४ ।। शुक्तौ रूप्यं क्षणदृश्यं जायते च विलीयते। जननं खलु संसारो, लयो मोक्षः शिवाऽऽप्तिदः ।। १५ ।। तस्माच्छुक्तौ तु रजतं क्षणिकं दृष्टिगोचरम्। जायतेऽधिष्ठितिवैरूप्याख्यख्यातिर्हि सा मता ।। १६ ।। कारणस्य हि वैरूप्यं क्षणं प्रख्यायते यतः। शुद्धानामपि जीवानामशुद्धत्वं विरूपिता ।। १७ ।। एवमेव मता, तस्मादवैरूप्यं तु शाश्वतम्। वर्तते शिवसायुज्यात् सा मुक्तिः शाश्वती मता ।। १८ ।। इति

अथ द्वैताऽद्वैतलकुलीशपाशुपतं मतम्। सद्योजातो वामदेवोऽघोरस्तत्पुरुषस्तथा ।। १ ।। ईशानश्चेति पञ्चैव परब्रह्मस्वरूपिणः। पतिः स एव सर्वेषां कारणं शिव एव सः ।। २ ।। कार्यकारणयोगाश्च विधिर्दुःखान्त इत्यपि। पदार्थाः पञ्च बोद्धव्याः, पतिः-कारणमीश्वरः ।। ३ ।। कार्यं त्रेधा—तु वै विद्या, कला, च पशुरित्यपि। विद्या द्वेधा तु वै बोधात्मिकी चाऽबोधरूपिणी, ।। ४ ।। कला तु शंभुकलिका कार्यकारणरूपिणी। अहंकारादिभूम्यन्ता सर्वा जाडचमयी हि सा ।। ५ ।। पशुः पञ्चविधः प्रोक्तः—साऽञ्जनश्च, निरञ्जनः,। संहृतश्चापि, कैवल्यगतो, निष्ठासुयोगवान् ।। ६ ।। योगः-शिवेन सायुज्यं सोऽष्टांगश्चापि कीर्तितः। क्रियात्मकः क्रियातत्त्वविरामश्चापि सम्मतः

॥ ७ ॥ अर्पणक्रियया शर्वसामीप्यं च ततः परम् । क्रियोपरत्या जायेत शंभुसायुज्यमोक्षणम् ॥ ८ ॥ दुःखान्तो मोक्ष एवापि द्वेधा सम्प्रद्यतेऽत्र तु । सर्वदुःखोपरामस्तु मोक्षश्चाऽनात्मको मतः ॥ ९ ॥ शिवसायुज्यपरस्तु मोक्षः सात्मक ईरितः । अत्र सार्वज्ञ्यमाप्नोति सर्वकर्तृत्वमित्यपि ॥ १० ॥ जीवाः शिवाः प्रजायन्ते द्वैतास्त्वद्वैततां शिवे । लभन्तेऽतो न भेदोऽस्ति शिवान्मुक्तिगतस्य वै ॥ ११ ॥ जीवानां पाशवे भावे कारणानि तु यानि हि । मिथ्याज्ञानं तथाऽधर्मः प्राऽऽसक्तिर्हेतुमण्डलम् ॥ १२ ॥ च्युतयश्च महादोषात्मकानि यानि पञ्च वै । क्रियादिभिर्लये तेषां शिवे सम्यक् सुयोजनम् ॥ १३ ॥ आत्मानः खलु सत्या वै सद्रूपाः शिवयोगिनः । कारणाद्धि शिवात् कार्यं–विद्या चैव कला पशुः ॥ १४ ॥ कार्यसंघातरूपं वै जायते सर्वदाऽस्ति च । शिवस्य वृत्तिरूपा वै सृष्टिर्लीला शिवस्य हि ॥ १५ ॥ शिवशक्तौ स्थितं कार्यं त्रिविधं शक्तिमान् शिवः । शक्तिः सामर्थ्यमैश्वर्यं गुणसत्ता शिवा चितिः ॥ १६ ॥ स्फूर्तिः शिवादभिन्नायाः शिवैक्यं न तु भिन्नता । शिवस्याऽन्तर्गतं सर्वं बाह्यं किञ्चन नास्ति हि ॥ १७ ॥ भिन्नं चाऽनेकरूपेणाऽभिन्नं शर्वाऽऽन्तरत्वतः । भिन्नाऽभिन्नमिदं चातः शुक्तौ रजतमित्यपि ॥ १८ ॥ शुक्त्यात्मके तु मायाख्ये तत्त्वे रजतमस्ति यत् । मायाख्यं रजतं चापि जीवस्फूर्त्यां जनिं गतम् ॥ १९ ॥ कार्यरूपेण दृश्यं तत् कारणे विलयं गतम् । शुक्तिरेवाऽस्ति रजते कारणं शिवसंज्ञकम् ॥ २० ॥ संसारे कारणं शर्वः शक्तिश्चापि च कारणम् । सत्यः सर्वोऽपि संसारो मिथ्याज्ञानं क्षणं स्थितम् ॥ २१ ॥ जीवस्त्वशिवो यज्ज्ञानं मिथ्याज्ञानं हि तन्मतम् । जीवः शिवेतिविज्ञानं ज्ञानं सत्यं तु तन्मतम् ॥ २२ ॥ रजतं त्वशुक्तिरेवं ज्ञानं मिथ्या हि तन्मतम् । रजतं शुक्तिरूपं वै ज्ञानं सत्यं तु तन्मतम् ॥ २३ ॥ शुक्तिरूपं हि रजतं प्राप्यते तु तदर्थिना । रूप्यरूपेण रजतं प्राप्यते न तदर्थिना ॥ २४ ॥ रूप्येच्छुर्निष्फलस्तत्र शुक्तीच्छुः सफलो यतः । तस्मात् ख्यातिः प्रभिन्नाऽभिन्नत्वरूपाऽत्र सम्मता ॥ २५ ॥ कारणख्यातिरेवेयं शुक्तिधर्मक्षणार्थिनी । शुक्तियोगं गता स्फूर्तिः कार्यराजतगोचरा ॥ २६ ॥ शुक्तौ स्वस्यां तु तादात्म्यं शुक्तिः शुक्ताववस्थिता । शुक्तिर्हि शुक्त्यवयवेष्वेव नित्याऽभिसंगता ॥ २७ ॥ शुक्तित्वं शुक्तिसंलग्नं न शुक्त्यवयवेष्वपि । शुक्तिस्वरूपमेवाऽस्ति शुक्तित्वं नित्यसंस्थितम् ॥ २८ ॥ शुक्तिः स्वस्यास्तु चाक्यत्वे शैथिल्याख्यसुयोगिनी । भवत्येव ततश्चाक्यं शुक्तेः रूपान्तरं गुणः ॥ २९ ॥ चाकचक्यं तु वै शुक्तेः सर्वतः समवेक्ष्यते । अतश्चाक्यं तु वै कार्यं शुक्तेः शिथिलरूपकम् ॥ ३० ॥ एवं

वै चाकचक्यस्य मार्दवं मध्यताऽन्विता। राजते रूपके योग्या या सा तत्र प्रजायते ।। ३१ ।। सैव शुक्तिश्चाकचक्यमार्दवेन हि राजतीम्। स्थिति प्राप्नोति तत्रैव राजतं शुक्तिकोद्भवम् ।। ३२ ।। न रूप्यं तत्र वै धातुश्चान्दिकात्मकमुत्तमम्। राजतं तु भवेच्छौक्त्यं शुक्लैः रजोभिराहितम् ।। ३३ ।। तस्माद्वै राजतं द्रव्यं क्षणमात्रस्वरूपकम्। चाकचक्योद्भवं बोध्यं विलक्षणकृतिप्रखम् ।। ३४ ।। चाक्याज्जातस्य वै चाकचक्यख्यातिर्हि सा मता। शिवस्य चाकचक्यात्मा जीवः संख्यायते यतः ।। ३५ ।। चाकचक्यमयी ख्यातिः शिवे जीवस्य निश्चिता। लकुलीशस्य वै चाकचक्यख्यातिर्जगन्मतम् ।। ३६ ।। इति

विशिष्टाद्वैतिशैवानां मतं त्वित्थं समीरितम्। ब्रह्म शक्ति विना ज्ञातुं शक्यते न कदाचन ।। १ ।। अतः शक्तिर्महाज्ञप्तिस्वरूपा शंकरे स्थिता। विशेषणं शिवस्यैषा शक्तिमान् शिव उच्यते ।। २ ।। शिवो विशिष्टश्चैकश्च परब्रह्म प्रकीर्तितः। शिवेन निजशक्त्यैव जगत् सर्वं प्रकाशितम् ।। ३ ।। शक्तिर्गुणस्वरूपा वै चित्स्वरूपा शिवस्थिता। कमले नीलतावद्वै कमलं नीलमुच्यते ।। ४ ।। शिवः शक्तियुतः शक्तः शिवः कारणमुच्यते। विशेषणविशेष्याख्ययोगबद्धं द्वयं हि तत् ।। ५ ।। ययोरेकस्य विज्ञानं नाऽपरेण विना भवेत्। ययोरेकं भवेन्नैवाऽपरस्वातन्त्र्यतः क्वचित् ।। ६ ।। विशेषणविशेष्यात्मभावव्याप्तिस्तयोः सदा। शक्तौ सर्वं जगच्चास्ति बीजरूपमनादितः ।। ७ ।। जगतामुद्भवः शक्त्या सती शक्तिस्तु सर्वदा। अविनाभावसम्बद्धा शिवे व वर्तते द्विता ।। ८ ।। शिवस्य ज्ञप्तिहेतुः सा शक्त्याः ज्ञप्तौ तु मानसम्। विज्ञानं कारणं तत्र विज्ञाने मानसे पुनः ।। ९ ।। बाह्यमैन्द्रियकं ज्ञानं प्रत्यक्षं कारणं मतम्। बाह्ये विषयसम्बन्धः, कारणानि भवन्ति हि ।। १० ।। सम्बन्धानां यथार्थत्वे सम्बद्धानां यथार्थता। सम्बन्धानां न याथार्थ्यं सम्बद्धानां प्रमा न हि ।। ११ ।। अतः संसर्गताख्यातिः संसर्गिज्ञानयोजिका। शुक्तौ रजतमित्यत्र रजतं तु विशेषणम् ।। १२ ।। संसर्गोऽस्य न तादात्म्यं संयोगोऽपि मतो न हि। नित्यश्चापि न सम्बन्धः स्वरूपोऽपि न तद्द्वयोः ।। १३ ।। चाकचक्येऽस्ति वै शुक्तेः संसर्गस्तन्निरूपिता। संसर्गताद्यवच्छिन्नाऽऽधेयता रजते नहि ।। १४ ।। निरूपितत्वसंसर्गो यथार्थश्चाकचक्यके। नाऽयं राजतचाक्येऽस्ति वृत्तिस्थे चाक्यरूपिणि ।। १५ ।। राजतं वृत्तिचाक्यं यद् वृत्तियोगेन शुक्तिजे। चाकचक्ये गतं तत्र द्वयोः संसर्गयोर्मिथः ।। १६ ।। निरूपितत्वनाम्नोर्वै द्वयोश्चाक्यप्ररूढयोः। तादात्म्यमिव सम्पत्तिश्चाक्यनिरूपितत्वयोः ।। १७ ।। सेयं संसर्गताख्यातिर्गुणसंसर्गरूपिणी। संसर्गख्यापनात् तत्र

वाक्ययोः ख्यापनात् ततः ।। १८ ।। वाक्याश्रयद्वयोः ख्यातिः क्षणं रूप्यं च शंखिनी । क्षणं वै ज्ञायते शुद्धे संसर्गं शंखशुद्धता ।। १९ ।। एवं वे जीवतत्त्वं च नित्यं चाऽणुस्वरूपकम् । ज्ञानाश्रयं च वै ज्ञानं कृतैः कर्मभिरञ्चितम् ।। २० ।। उपास्त्या कर्मणां शंभावर्पणेन च सर्वथा । योगांगैश्चापि सम्प्रध्वस्ताऽणुमालिन्यदुर्विधः ।। २१ ।। अभिव्यक्ताऽतिशयितज्ञानानन्दश्च सद्विधः । शिवसाम्यां परां मुक्तिं लभते ब्रह्मणिस्थितिम् ।। २२ ।। नर्तक्यां नाट्यकर्त्र्यां वा नायके नाट्यवेषिते । प्रेक्षकाणां यथा वृत्तितादात्म्यं रसदं तदा ।। २३ ।। तथैव रसदा मुक्तात्मनां शर्वतदात्मता । रसश्चात्मगतः सर्वः शर्वस्थेन रसेन सः ।। २४ ।। तादात्म्यभावमापन्नः शिवाऽऽनन्दप्रदोऽस्ति सः । देवताऽऽवेशतो यद्वल्लोके भूताऽभिवेशितः ।। २५ ।। देही देवादितादात्म्यव्यवहारकरो भवेत् । परकायप्रविष्टश्च योगी यद्वत् तदात्मताम् ।। २६ ।। स्वस्मिन्ननुभवत्येव तथा मुक्तः शिवात्मताम् । सर्वानन्दप्रमोदादिमयीं विन्दति सद्रसाम् ।। २७ ।। एवं जीवो भवेच्छंभुः साम्यख्यातिस्ततो मता । शुक्तेः साम्यं हि रजते साम्यं वाक्यादिसंगिता ।। २८ ।। साम्यं संसर्गतानिष्ठं साम्यख्यातिस्ततो मता । सन्मौक्तिके कृत्रिमे मौक्तिकेऽपीयं तथा मता ।। २९ ।। इति ।

वीरशैवमतं लिंगायतध्यातमलौकिकम् । सेश्वराद्वैतमेवैतच्छिवाद्वैतमिदं तथा ।। १ ।। शुद्धद्वैताऽद्वैतरूपं जंगमादिसमाश्रितम् । परब्रह्म शिवः प्रोक्तः शक्तिर्ब्रह्म मता ध्रुवा ।। २ ।। यच्छक्तौ विषयं सर्वं शक्तिः सा स्फुरणा मता । विद्यारूपा हि विषयाश्रया विषयिरूपिणी ।। ३ ।। ज्ञानं भानं तथा ध्यानं सर्वं शक्तौ व्यवस्थितम् । शुद्धं द्वैतं महाशक्तिः शिवः शुद्धोऽस्ति सर्वथा ।। ४ ।। शक्तिः शक्तिमतोऽभिन्ना ह्यद्वैतं तत एव च । महदादीनि तत्त्वानि जीवाऽऽत्मानोऽणवस्तथा ।। ५ ।। सर्वे शक्तिस्थिता द्वैता अद्वैते ब्रह्मणि स्थिताः । अद्वैतं स्फुरणं शंभौ परे ब्रह्मणि चैकताम् ।। ६ ।। आपन्नं जायते नित्यं द्वैताऽद्वैतमतो मतम् । विः-विद्या शंभुना चैक्यबोधिका मुक्तिदायिनी ।। ७ ।। रमन्ते तत्र ये भक्ता वीरशैवा हि ते मताः । विः-विकल्पो हि सन्देहस्त्वात्मनः शिवतामतौ ।। ८ ।। तेन ये रहितास्ते वैं वीरशैवाः प्रकीर्तिताः । शब्दज्ञानानुपातेन शुक्तौ रजतवच्च यः ।। ९ ।। विकल्पो वस्तुशून्यो वै शिवे जीवस्य कल्पना । तच्छून्यत्वं यदा विद्या तदा मुक्तिः परा भवेत् ।। १० ।। शिवोऽहं शिवरूपोऽहं ब्रह्माऽहं ब्रह्मतां गतः । शिवो मे मस्तके कण्ठे शिवो मे हृदये करे ।। ११ ।। शिवो मे वर्ष्मसंस्थासु शिवोऽहं चेत्युपासना । करोति शिवसायुज्यं शिवाऽऽ-

नन्दप्रदायकम् ।। १२ ।। जीवोऽयं शिवलिङ्गं वै देहोऽपि शिवलिंगवत् । सूर्यचन्द्रादयः सर्वे शंभुलिंगानि सन्ति हि ।। १३ ।। कणाः फलानि बीजानि कन्दाः स्तम्बाश्च शाखिनः । सर्वेऽर्थाः शिवलिंगाभाः शिवः सर्वमयो ह्यतः ।। १४ ।। शक्तिस्तत्राऽस्ति सर्वत्र शिवाऽभिन्ना तदङ्किता । ततः शंभुमयं सर्वं नरो नारी नपुंसकम् ।। १५ ।। भूषायां भुवि वै क्षेत्रे गृहे वस्त्रे जनेषु मे । सर्वत्र शंकरश्चास्ति शांकरी चितिरस्ति मे ।। १६ ।। शिवलिङ्गस्वरूपोऽहं शिवानन्दमयोऽस्मि च । शिवाशक्तिस्वरूपोऽहं शिवारूपोऽस्मि हि सर्वथा ।। १७ ।। शिवो मेऽस्ति पतिः स्वामी शिवाऽहं स्वामिनी प्रिया । प्रिया शक्तिस्वरूपोऽहं शक्त्यभिन्नस्ततः शिवा ।। १८ ।। एवं भक्त्या सदोपास्त्या शिवसायुज्यमश्नुते । सार्वज्ञ्यं सर्वथाऽऽनन्दं प्रमोदं सुखमुत्तमम् ।। १९ ।। तृप्तिं सर्वोत्तमां पूर्णब्रह्मदोहनरूपिणीम् । प्राप्नोत्येव शिवोपास्तिकरो ब्रह्म भवत्यपि ।। २० ।। ब्रह्मरूपे स्थितश्चाऽहं विश्वं ब्रह्मणि वै परे । शक्त्याश्रयं स्थितं सर्वं पश्यत्येवाऽपरोक्षवत् ।। २१ ।। अन्तःशक्तिमहागर्भोऽनन्तविश्वं बिभर्ति यः । स्वेच्छया काशयत्येव स्वेच्छया संहरत्यपि ।। २२ ।। अन्तःशिवाद् बहिः किञ्चिन्नैव नैव च नैव च । सगुणब्रह्मरूपोऽयं जीवः शंभुर्गुणाश्रयः ।। २३ ।। भक्तिर्भक्तस्य वै भज्यमाने भेदाश्रयाद् भवेत् । अर्प्याऽर्पकप्रभेदेन सत्ता भिन्ना द्वयोर्मता ।। २४ ।। भक्त्योपासनया पश्चान्नद्या वारिधिरूपता । यथा तद्वद् भवेच्छर्वजीवयोश्चाऽप्यभिन्नता ।। २५ ।। वह्नेर्दाहकशक्तिर्न वह्नेर्भिन्ना तथा शिवा । जीवयुक्ता न वै भिन्ना सुतरां मुक्तिसंस्थितौ ।। २६ ।। जगत् जगत्स्वरूपेणाऽतात्त्विकं तद्विवर्तकम् । जगत् शक्तिस्वरूपेण तात्त्विकं परिणामकम् ।। २७ ।। एवं सत्यमिदं सर्वं व्यवहारे सुसत्तकम् । परमार्थस्वरूपे तु न सत्यं तद्विवर्तकम् ।। २८ ।। विकल्पो वा विवर्तो वा शुक्तौ रजतसंस्थले । स्फूर्तिवैवर्त्यविख्यातिः शुक्तौ वै राजती ततः ।। २९ ।। एवं शिवेऽपि जीवेऽपि स्फूर्तिवैवर्त्यकाशनम् । स्वप्नेऽपि च तथा बोध्यं विद्यया सा विनश्यति ।। ३० ।। विद्या जीवशिवैक्यस्य बोधिका ज्ञप्तिरुत्तमा । विद्वांस्त्वेवंविधश्चात्र ब्रह्म कामान् समश्नुते ।। ३१ ।। इति ।

नन्दिकेशशिवाद्वैतवादिनां मतमुच्यते । परब्रह्म परं तत्त्वं सर्वशब्दात्मकं हि तत् ।। ११ ।। शिवः स्वयं परब्रह्म डमरुश्चित् तदात्मकः । अक्षराः सूत्ररूपा वै ब्रह्मराशिः शिवोद्भवः ।। २ ।। अकारः सर्वतत्त्वाग्रयश्चिच्छक्त्याश्रय एव च । सर्वज्ञः शिवरूपोऽयं स्वेच्छाशक्त्याश्रयस्तथा ।। ३ ।। महैश्वर्यात्मकश्चापि सर्ववर्णेश्वरस्तथा । सार्व-

कामिक ईशोऽसावक्षरात्मा हरः स्वयम् ॥ ४ ॥ अक्षराख्यशिवस्यैव इकारो वाञ्चछना मता। चिच्छक्तिः सा स्वात्मरूपा स्वाऽभिन्ना नित्यशंकरा ॥ ५ ॥ अकारो निर्गुणं ब्रह्म इकारश्चित्कला परा। तया त्वाभासयत् सर्वं द्वयोरैक्यं ततो मतम् ॥ ६ ॥ स्वस्य कामात्मसंकल्पात् तृतीयं समजीजनत्। तृतीयं तस्य विद्यादि उकारात्मकमेव तत् ॥ ७ ॥ काम्यं विद्यादिकं तद्धि चिच्छक्तौ संस्थितं पुरा। स्वेच्छयोद्घाटयत्येव स्वेच्छाद्वारं ततो जगत् ॥ ८ ॥ न कर्माधीनताऽस्याऽस्त्युत्पत्तौ किन्तु स्वतन्त्रता। स्वातन्त्र्येण स्वयं रन्तुं विश्वं संरचयत्यसौ ॥ ९ ॥ ॠर्माया वै पञ्चविंशत्यात्मतत्त्वभरा सदा। जीवतत्त्वमहागर्भा शंभुरूपा प्रभासते ॥ १० ॥ लृर्मनोवृत्तिरेवाऽस्ति वृत्त्याधारविलासिता। आभासते जगत् तस्यां ज्ञप्तिमात्रं ततो जगत् ॥ ११ ॥ ए प्राणा ओं प्रणवात्मा वासुदेवस्तु ऐ स्मृतः। औ तु प्रधानपुरुषो हकारो भूमपूरुषः ॥ १२ ॥ यस्तु हिरण्यगर्भो वै वो महाविष्णुरुच्यते। रो महापूरुषश्चोक्तो महालक्ष्मीस्तु लः स्मृता ॥ १३ ॥ णो–मूला प्रकृतिः प्रोक्ता मो महत्तत्त्वमुच्यते। ङोऽहंकारस्वरूपश्च णस्तु वैराजपूरुषः ॥ १४ ॥ नो नारायणसंज्ञो वै ज्ञस्तु ब्रह्मा च भो हरः। धो घ्राणं ढस्तु वै पायुः यस्तथोपस्थ उच्यते ॥ १५ ॥ जश्चक्षुः बस्त्वचा प्रोक्ता गः श्रोत्रं डश्च वाङ्मता। दः करः खस्तु रसना फः पादौ छस्तु सौरभः ॥ १६ ॥ ठः शब्दः थश्च वै स्पर्शः चो रूपं टो रसस्तथा। तश्च तेजो जलं कश्च पृथ्वी पः शः समीरणः ॥ १७ ॥ षो व्योम वै सश्च साक्षी जीवात्मा हस्तु सम्मतः। जडचेतनयोगः क्षो ज्ञश्चितां योग इत्यपि ॥ १८ ॥ परा ब्राह्मी परं ब्रह्म त्वेकमक्षरमण्डलम्। द्वितीया सा परा शक्तिः प्रकाशः स्फूर्तिरस्य वै ॥ १९ ॥ सदावृत्तिस्वरूपं च ताभ्यां विषयिसंज्ञकम्। जातं तत्त्वत्रयं चैतत् परा स्फूर्तिः शिवस्त्विति ॥ २० ॥ ईश्वरश्च ततो जातः सगुणः सृष्टिलोकनः। माया महत्त्वहं चैकादशेन्द्रियाणि पंच च ॥ २१ ॥ तन्मात्राणि च वै प्राणाः पञ्च भूतानि पंच च। चेतनाश्चाऽप्यसंख्याश्च सत्त्वं चापि रजस्तमः ॥ २२ ॥ प्रत्येकं तु स्वभावाख्यं पृथक् जातमनन्तकम्। एवं तत्त्वानि बोध्यानि सप्तत्रिंशद्धि तानि वै ॥ २३ ॥ परात्मकानि सर्वाणि त्वाभासन्ते परात्मनः। जन्यजनकरूपेण शिव एव न चाऽपरः ॥ २४ ॥ अतोऽद्वैतं शिवस्यैव स्वांशैः सर्वैर्निजात्मता। शिवैक्यं जगतोऽस्याऽस्ति जगदैक्यं शिवस्य च ॥ २५ ॥ ब्रह्मचित्कलयोरैक्यं सृष्टचैक्यं परमात्मना। परेशात्मकमेवेदं परावृत्तिस्वरूपि च ॥ २६ ॥ वृत्तिराभासरूपा च शंभुस्वातन्त्र्यसंसती। स्वस्मिन्नाभास-

मात्रं तन्मया त्वाभासरूपिणी ॥ २७ ॥ मनोवृत्तिस्वरूपा च यया त्वाभासते जगत्। ज्ञप्तिमात्रं निजस्फूर्तिमात्रं सर्वं त्विदं जगत् ॥ २८ ॥ आभासात्मकवृत्त्याख्यख्यातिरेव जगन्मयी। शुक्तौ रजतमित्यत्राऽऽभासवृत्तिर्हि राजती ॥ २९ ॥ आभासवृत्तिरूपा वै ख्यातिस्तस्मात् चिदंशिका। शिवोऽहं चेत्युपास्त्याऽयं जीवः सञ्जायते शिवः ॥ ३० ॥ संहारे वा कृतेः स्वेच्छाप्रयोज्ये शिवरूपता। सर्वेषां जायते चैत्याऽचैत्यानां प्रलयेऽभितः ॥ ३१ ॥ इति

रसेश्वरप्रवादस्य तात्पर्यं चात्र वर्ण्यते। रसेश्वरः परंब्रह्म रसः शक्तिश्चिदात्मिका ॥ १ ॥ शक्तिशक्तिमतोश्चैक्यं शिवस्तस्माद् रसात्मकः। रसश्चानन्द एवस्ति सच्छिवः परमेश्वरः ॥ २ ॥ चिच्छक्तिः परमास्फूर्तिस्त्रयैक्यं ब्रह्म शंकरः। रसेश्वरो महादेवः स्वस्माद्विश्वमिदं पुरा ॥ ३ ॥ चिच्छक्तौ स्फुरयाञ्चक्रे रसं शक्तौ न्यवेशयत्। शक्तीः रसात्मिकाः सर्वाः सा समाना असर्जयत् ॥ ४ ॥ तथैव सद्रसान् स्वस्माज्जीवान् रसमयान् बहून्। ईश्वरांश्चापि देवांश्च महत्तत्त्वादिकानपि ॥ ५ ॥ पृथिव्यन्तान् स्थूलरूपान् लीलयाऽभासयत् ततः। तत्रैव रमणं चक्रे शक्तिभिः सह शंकरः ॥ ६ ॥ चिद्विज्ञानं महाविद्या शुद्धा माहेश्वरी प्रधीः। सा वै शिवेच्छया नैजोत्तमांशच्युततां गता ॥ ७ ॥ शक्तौ पातान्महादेवः स्वल्पदेवो बभूव ह। स्वमेव रन्तुं स्वं पातं समैच्छत् पाशवानभूत् ॥ ८ ॥ पाशः स्वस्य त्वभानं वै ततोऽहंकार इत्यपि। कर्म चापि मलं रागो द्वेषः पाशो भवत्यपि ॥ ९ ॥ आगमेन गुरोर्वाक्याच्छिवोऽहं संजपेत् ततः। जीवः शिवो भवत्येव पाशनाशे शिवः पुनः ॥ १० ॥ देहान्ते शिवता चेयं न स्याद्वै द्वारमन्तरा। द्वारं चात्रैव देहादौ दिव्यत्वाऽर्जनमर्जयेत् ॥ ११ ॥ परा मुक्तिर्न वै स्याद्धि ऋते जीवनमुक्तिकाम्। जीवने सति मुक्तित्वं दिव्यदेहाभिसर्जनम् ॥ १२ ॥ दिव्यत्वं चौपधैर्दिव्यैर्घृताद्यैश्च परैः रसैः। पारवाद्यैः सुसंशुद्धैर्ग्रसितैः संभवेदिति ॥ १३ ॥ शिवस्यैव महावीर्यं पारदः परिकीर्तितः। रसः स एव पारं वै शिवं शंभुस्वरूपकम् ॥ १४ ॥ ददात्येव महासिद्धिमजरामरवर्ष्मताम्। रसोपयोगकृद् योगी दिव्यदेहः प्रजायते ॥ १५ ॥ दिव्येन्द्रियस्तथा दिव्यहृदयो दिव्यरूपवान्। दिव्यात्मा जायते पश्चादत्रैव शिवतां व्रजेत् ॥ १६ ॥ शिवोऽहं च शिवोऽहं च कामी काम्यं चरामि च। एवं विद्वांस्त्विहैवाऽऽप्नात् सर्वान् कामान् समश्नुते ॥ १७ ॥ अस्मिन् देहे त्वभेदेन शिवतादात्म्यवेदनम्। विद्यया जायते सा वै मुक्तिर्जीवनसंज्ञिका ॥ १८ ॥ ततो देहः स्वयं तत्त्वे परे ब्रह्मणि शंकरे। विलीयते हि रसवान् रसेशाऽभिन्नतां व्रजेत् ॥ १९ ॥

देहस्याऽसिद्धिमुत्सृज्य सिद्धिं लब्ध्वा रसात्मिकाम्। रसेश्वराऽभिसंज्ञानी माहेश्वरगतिं लभेत् ॥ २० ॥ देहे त्वसिद्धिविज्ञाना ख्यातिः पूर्वां ततः परा। रसो वै सः रसख्यातिः सिद्धिख्यातिः परा भवेत् ॥ २१ ॥ शुक्तौ रजतमित्येषा असिद्धिख्यातिरुच्यते। सिद्धिमान् रजतं शुक्तौ सत्यं समुपपादयेत् ॥ २२ ॥ असिद्धिसिद्धिरूपा सा ख्यातिः रसमयी ततः। योगिदेहो यथा नाश्यः पूर्वं पश्चान्न नाशवान् ॥ २३ ॥ स्वस्यैवोपासनाशक्त्या सिद्धिं नित्यां समर्जयेत्। शुक्तौ तथैव योगीन्द्रः सिद्धः सिद्धिं तु राजतीम् ॥ २४ ॥ संकल्पयेत् तथा सत्यं यथेष्टं तद्विवर्जयेत्। अनाख्यातं प्रसंख्यातं कारयेत् स्वबलान्मुहुः ॥ २५ ॥ तस्मात् ख्यातिरियं प्रोक्ताऽसिद्धिसिद्धिस्वरूपिणी। असिद्धं तु जगज्जीवः संसिद्धो जीवशंकरः ॥ २६ ॥ जगत्सिद्धं शिवपूर्वं ततोऽसिद्धमिवाऽभवत्। असिद्धं च पुना रत्वा सिद्धं स्वस्मिन् प्रकारयेत् ॥ २७ ॥ इयं ख्यातिः सिद्ध्यसिद्धिमयी पूर्वं ततः परम्। असिद्धिसिद्धिरूपा सा स्फूर्तिश्चोभमयी यतः ॥ २८ ॥ शिवस्तत्त्वं परब्रह्म परा ब्राह्मी परं पदम्। शक्तिं सदाशिवं चापीश्वरं विद्यां ददाति सः ॥ २९ ॥ मायां कलां च विंत्तिं च रागं कालं तथा ततः। नियतिं चेति तत्त्वानि स्वस्मिन् रक्षति सर्वदा ॥ ३० ॥ स्थूलानीमानि दृश्यन्ते लीयन्ते सूक्ष्मरूपतः। पूर्वं सिद्धानि वै पश्चादसिद्धानीव सन्ति हि ॥ ३१ ॥ पश्चात् सिद्धानि जायन्ते सिद्धेश्वरसुयोगतः। सिद्ध्यसिद्धिमयी ख्यातिः संसारे व्यवहारिणी ॥ ३२ ॥ मुक्तावसिद्धिसिद्ध्याख्या ख्यातिः सिद्धात्मनां तदा। एवं मायाविकारेषु बोध्यं शंभुस्वरूपिषु ॥ ३३ ॥ इति।

अथ कालीक्रमदर्शनस्याऽभिप्रायमुत्तमम्। वर्णयामास यं तं वै सम्यगत्र वदाम्यपि ॥ १ ॥ काली कालमयी ब्राह्मी परा सा तात्त्विकी चितिः। परब्रह्म शिवः कालः स एवाऽस्ति पुमानपि ॥ २ ॥ काली कालस्वरूपा वै कालः कालीस्वरूपकः। एकं स्त्रीपुम्मयं तत्त्वं सर्वकारणकारणम् ॥ ३ ॥ विज्ञानं चित्परा स्फूर्तिर्व्यापिनी चात्मरूपिणी। चेतना सर्वरूपा सा सर्वगर्भा महासती ॥ ४ ॥ विद्या पराऽपि सा देवी परा चापि महेश्वरी। प्रोक्ता स्वेच्छामयी सृष्टिकारिणी पुरुषोत्तमी ॥ ५ ॥ क्षेपज्ञानप्रसंख्यानगतिनादमयीं स्वयम्। करोति कलनां काली यतः सर्वमिदं जगत् ॥ ६ ॥ कलः क्षेपे गतौ चापि प्रसंख्याने च शब्दने। एतदर्थवती काली स्वान्तर्भावान् क्षिपत्यपि ॥ ७ ॥ प्रसारयति सर्वांश्च ख्यापयत्यपि तान् पुनः। आभासयति भावांस्तान् मनुते स्वात्मकानपि ॥ ८ ॥ स्वाऽभिन्नानात्मनः सर्वान् पृथक्त्वेन निजेच्छया। आभासयति स्वातन्त्र्यात् स्वात्मसम्बन्धसंगतान्

॥ ९ ॥ व्यवहारविषयाँश्च स्वयं कारयतीश्वरी। स्वयं भुंक्ते भुज्यते च भोजयत्यपि वै स्वयम् ॥ १० ॥ बुभुक्षते मिथश्चान्यान् भोजयत्यपि कालिका। सम्भुज्य रामणीं तृप्तिं प्राप्य सर्वं भनक्त्यपि ॥ ११ ॥ सेयं भगवती काली भगानि प्रावृणोत्यपि। तदा ब्राह्मीस्वरूपा सा त्वेकमेवाऽद्वितीयकम् ॥ १२ ॥ वर्तते ब्रह्म यद्वै सा परब्रह्मस्वरूपिणी। स्वेच्छामात्रं महासृष्टौ कारणं स्वविलासनम् ॥ १३ ॥ क्षिपत्येव स्वयं सर्वं जानात्येव स्वयं सदा। गणनां च स्वयं सर्वां करोत्येव ततः पुनः ॥ १४ ॥ गतिं यानं प्रवाहं च स्थितिं संहारमित्यपि। करोत्येव स्वयं काली नादयत्येव साऽभितः ॥ १५ ॥ नदत्येव तथा तत्र व्यवहारं करोत्यपि। अतः क्षेपमयी ज्ञानमयी भेदमयीति सा ॥ १६ ॥ सृष्टिप्रवाहरूपाऽपि शब्दब्रह्ममयीति सा। सा वै शिवस्वरूपाद्धि जीवानुत्पादयत्यपि ॥ १७ ॥ स्वशक्तिभिर्विकल्पाँश्च जीवेष्वावासयत्यपि। विकल्पमिश्रिता नैजस्वरूपाऽनवबोधिनः ॥ १८ ॥ शुद्ध्यन्ति क्रमशो जीवाः शुद्धे कल्पे तु मुक्तता। विकल्पः संस्कृतश्चाऽन्ते परासाक्षात्करो भवेत् ॥ १९ ॥ विकल्पो भ्रान्तिविज्ञानं काल्यनात्मकशून्यता। स्वस्वरूपाऽप्रभानं तद् विकल्पस्तामसः स्मृतः ॥ २० ॥ यत्र चिन्न शिवो नैव जीवो नैव च भासते। विकल्पस्तामसो यत्र जडं सर्वं विलोक्यते ॥ २१ ॥ आत्मशून्यं च चैतन्यशून्यं चापि विलोक्यते। गुरोः शरणसंस्कारात् शून्यता विगता भवेत् ॥ २२ ॥ तत्स्थाने चात्मचैतन्यं सर्वत्राऽस्तीति लोक्यते। दीक्षया च ततश्चात्मा संस्कृतः स्वं विभावयेत् ॥ २३ ॥ देहादिभ्यः पृथक् चेति त्वियं नैजात्मसंस्कृतिः। अथ कालीमहाशास्त्रनयश्रवणतस्ततः ॥ २४ ॥ सर्वत्रात्मा पृथग् देहादिभ्यश्चास्तीति लोक्यते। गुरोस्ततस्तु कृपया संस्कृतः स्वात्मदर्शनम् ॥ २५ ॥ कुरुते चेतनाव्याप्तं काल्यधिष्ठितमुत्तमम्। अथोपासनया स्वात्मन्येव कालीं प्रपश्यति ॥ २६ ॥ ततः शिवमहाज्ञानात् कृपया शिवजन्यया। शिवोऽहं खलु नाऽन्योऽहं शिवं चेति प्रपश्यति ॥ २७ ॥ सर्वं शिवात्मकं तत्त्वं नान्यत् किंचन विद्यते। एवं षष्ठप्रसंस्कारे भवत्यस्य शिवात्मता ॥ २८ ॥ जडेति कल्पना पूर्वा शून्यभावमयीति सा। संस्कृता सा शरण्येन सूतेऽन्यां चितिकल्पनाम् ॥ २९ ॥ अस्फुटा कल्पना पूर्वा सा स्फुटा चितिरूपिणी। दीक्षया संस्कृता चैत्यकल्पनाऽऽत्मविभावनी ॥ ३० ॥ प्रस्फुटाऽऽत्मस्वरूपा सा देहादिभ्यः पृथक्करी। सा कालीनयबोधाद्यैः संस्कृताऽऽत्ममयं जगत् ॥ ३१ ॥ एवं स्फुटतरा जाता कल्पना सर्वचेतना। सा गुरोः कृपया चापि संस्कृताऽऽत्मप्रदर्शिका ॥ ३२ ॥

कल्पनेयं स्फुटतमा स्वात्मसाक्षात्प्रकारिणी। अथोपासनया सा संस्कृता वै कल्पना निजे ॥ ३३ ॥ स्वरूपे तु महाकालीं पश्यत्येव परां सतीम्। शुद्धस्फुटतमोदारा कल्पनेयं सुसंस्कृता ॥ ३४ ॥ ततः सार्वज्ञ्यमेत्येव शिवोऽहं-परमात्मताम्। शिवतादात्म्यमेत्येव संस्कृतौ षट्क्रमैर्वरैः ॥ ३५ ॥ कल्पनापोहरूपैश्च निर्विकल्पां स्थितिं पराम्। संविद्रूपां समभ्येति शिवसायुज्यमेत्यपि ॥ ३६ ॥ परमेशशिवस्यैव संवित् सा स्फुरणा क्रमात्। व्योमेश्वरी खेचरी च दिक्चरी गोचरी ततः ॥ ३७ ॥ भूचरी पञ्चरूपा वै जायते वहिरर्थिनी। चिदाकाशमहाकाशस्वरूपाऽऽद्या भवत्यपि ॥ ३८ ॥ द्वितीयाऽन्तःकरणाख्या तृतीया प्राणरूपिणी। चतुर्थीन्द्रियरूपा च पञ्चमी भूतरूपिणी ॥ ३९ ॥ ताभ्यः सृष्टिः स्थितिश्चान्तः संहृतिश्चाप्यनाख्यता। आभासाश्चेति रूपा वै प्रजायन्ते प्रशक्तयः ॥ ४० ॥ सैव-स्फूर्तिः-परा, सूक्ष्मा पश्यन्ती, मध्यमा तथा,। वैखरीति स्वरूपा च, चतुर्वर्ण्यो भवन्ति हि ॥ ४१ ॥ आद्यया कालिकापीठं ध्येयं चाथ द्वितीयया। प्राणपीठं हि हृदयं ध्येयं चान्तरमुत्तमम् ॥ ४२ ॥ तृतीयया तु नयनत्रयस्थानं प्रभासि वै। ध्येयमिन्द्रियमूर्धन्यं लिंगमानन्दकारि वा ॥ ४३ ॥ तुर्यया वृन्दचक्राणि त्वाधारादीनि सर्वतः। ध्येयान्येव च पञ्चम्या ललाटे गुरुपंक्तिका ॥ ४४ ॥ ध्येया ध्यानैस्ततः स्पष्टः समाधिः समपद्यते। शिवतादात्म्यसंप्राप्तिश्चिच्छक्तिर्व्यापिनी भवेत् ॥ ४५ ॥ आनन्दशक्तिः सम्पूर्णा वर्तते च ततः खलु। सत्यसंकल्पतेच्छाख्या शक्तिः सर्वा प्रवर्तते ॥ ४६ ॥ ज्ञानशक्तिश्च सार्वज्ञ्यसत्यकामावसायिता। सर्वक्रियार्थसाध्यात्मा शक्तिस्तत्र शिवात्मवत् ॥ ४७ ॥ प्रोल्लसन्ति निजाः सर्वाः पञ्च कालीस्वरूपगाः। मद्यमांसमिथुनानि कालीधर्माणि सर्वथा ॥ ४८ ॥ पूतान्येव भवन्त्यस्मान्नाऽधर्मः कालिकाकृतः। उद्देश्यायाः पराशक्तेर्नैर्मल्यान्निर्मलानि हि ॥ ४९ ॥ शिवो वापि शिवा वापि कालः काली च वा तथा। ब्रह्म ब्राह्मी च वा चेतश्चितिर्वा नहि भिन्नता ॥ ५० ॥ पतन्मते क्रमवैकल्पिकी ख्यातिस्तु चेतने। शुक्तौ रजतमित्यत्र क्रमवैकल्पिकी प्रभा ॥ ५१ ॥ क्रमवैकल्पिकी ख्यातिः राजती भासते यतः। राजती प्रथमा वृत्तिश्चाकचक्यमयी ततः ॥ ५२ ॥ शुक्तिरूपा ततो जाता शक्तिरूपा ततः परम्। शिवस्वरूपिणी पश्चात् क्रमख्यातिस्ततो मता ॥ ५३ ॥ इति

कौलदर्शनसंवेद्यं मतं त्वित्थं विभाव्यते। परमेशः शिवः साक्षात् परब्रह्म पतिः प्रभुः ॥ १ ॥ कुलं तस्य महाशक्तिर्महैश्वर्या परेश्वरी। परा शक्तिर्हि सा प्रोक्ता यावत्कुलकुटुम्बिनी ॥ २ ॥

माता सर्वपदार्थानामिच्छाज्ञानक्रियात्मनाम्। कार्यकारणरूपं च स्थूलसूक्ष्ममयं तथा ॥ ३ ॥ परप्राणेन्द्रियभूताद्यात्मकं कुलमुच्यते। बोधरूपं कुलं संवित् भैरवीचक्रमित्यपि ॥ ४ ॥ कुलं भासात्मकं नैजं स्फाररूपं जगत् कुलम्। विश्वोत्पत्तिस्थितिह्रासाश्रयं तत्त्वं कुलं हि चित् ॥ ५ ॥ कुलं शक्तिप्रसरो वै जगत्स्थौल्यं कुलं मतम्। स्वातन्त्र्यमूर्ध्वता शक्तिरोजो वीर्यं तनूश्च वित् ॥ ६ ॥ पिण्डं सामर्थ्यमतुलं कुलं शक्तिर्महेशितुः। कुलं संस्त्यानरूपं च स्त्यानं चाऽकर्मसाधुता ॥ ७ ॥ कर्मलेपविहीनत्वं कुलं शक्तिः शिवस्तथा। कुलं परा महादेवी वामा शिवशिवा मता ॥ ८ ॥ परावाणीस्वरूपा च सर्वशक्तीश्वरी परा। सप्तत्रिंशत्तु तत्त्वानि परामात्रात्मकानि वै ॥ ९ ॥ अद्वैतं हि परायास्तु तत्त्वैश्चाति शिवेन च। अनुत्तरं परं तत्त्वं परब्रह्म प्रकीर्तितम्, ॥ १० ॥ परा शक्तिर्द्वितीया सा परा स्फूर्तिस्वरूपिणी,। शिवतत्त्वं तृतीयं च सगुणं ब्रह्म कीर्तितम्, ॥ ११ ॥ माया तत्त्वं चतुर्थं च सर्वशक्तिसमन्वितम्। द्वैतभानाश्रयं चापि शिवभ्रान्तिप्रयोजकम् ॥ १२ ॥ नित्यसार्वज्ञ्यसंकोचप्रवर्तकमतो मतम्,। प्रधानादिचतुर्विंशत्यर्थतत्त्वाश्रयं त्विदम् ॥ १३ ॥ प्रधानं प्रकृतिः प्रोक्ता प्रकृतिश्च प्रधानकम्। महत्तत्त्वपृथिव्यन्तत्रयोविंशतिसंग्रहम्; ॥ १४ ॥ सदाशिवस्ततः प्रोक्तो महाविष्णुस्वरूपवान्,। ईश्वरोऽपि ततः प्रोक्तो हिरण्यगर्भरूपवान् ॥ १५ ॥ वैराजाद्या अनेके चेश्वराः सन्ति नियन्त्रिताः,। कला, कालश्च, विद्या च, जीवाः, सत्त्वं, रज,स्तमः, ॥ १६ ॥ तत्त्वान्येतानि कौलेष्वागमेष्वत्र भवन्ति हि। सर्वं ब्रह्मस्वरूपं वै लीलया रन्तुमीहितम् ॥ १७ ॥ सप्तत्रिंशद्धि तत्त्वानि स्वाऽभिन्नानि भवन्ति हि। परं तत्त्वं स्वयं तादृग् भूत्वाऽत्र रमते स्वयम् ॥ १८ ॥ पुम्प्रकृत्यात्मना स्वं वै भुंक्ते भोगान् स भोगिराट्। न भिन्नं स्वस्य वै भोग्यं न भोक्ताऽस्य स्वतोऽपरः ॥ १९ ॥ सूक्ष्मं स्थूलं क्षणं चापि रूपं चिरं च शाश्वतम्। सर्वं स्वमेव भात्येव लीलाकैवल्यमस्ति यत् ॥ २० ॥ न पुण्यं न च पापं वै जीवे शिवेऽस्ति सर्वथा। सर्वं वै पावनं स्वस्योद्देश्यकं स्वार्पणात्मकम् ॥ २१ ॥ पुण्यं शंभोः प्रसादश्च पापं तत्प्रतिकूलता। मद्यं मांसं तथा मुद्रा मारो मुक्तिश्च पञ्चमी ॥ २२ ॥ मकाराः पञ्च वै दिव्यो अत्र सन्ति परत्र च। आत्मानं शिव एवाऽसौ द्वेधा कृत्वाऽसरत् ततः ॥ २३ ॥ सर्वं पुण्यमयं भोग्यं परानन्दपरं मतम्। परब्रह्मप्रदं सर्वं निर्गुणं मोक्षमार्गमम् ॥ २४ ॥ कौलागमे प्रवेशश्च पराप्रसादमेलनम्। महापीठाविमर्शश्च ब्रह्मप्रासिकराणि हि ॥ २५ ॥ पेयं मद्यं पलं खाद्यं भोक्तव्या

च वरांगना। निर्गुणं तत् परा जाप्या प्राप्तव्यं तत्परं पदम् ॥ २६ ॥ आनन्दं ब्रह्मणो रूपं देहे लिंगे विशेषतः। तदभिव्यञ्जके मद्ये मांसे भोग्ये हि योगिनाम् ॥ २७ ॥ देवान् पितृन् समभ्यर्च्य देवीशास्त्रोक्तवर्त्मना। गुरुं स्मरन् पिबन् मद्यं खादन् मांसं न दोषभाक् ॥ २८ ॥ देवताभ्यश्च पितृभ्यो मधुवाता ऋतायते। स्वादिष्ठ ग मदिष्ठया क्षीरं सर्पिर्मधु प्रिया ॥ २९ ॥ मद्यं मांसं च मत्स्यं च भगलिंगाकृतिः शुभा। मैथुनं चेति वै पञ्च देवताप्रीतिकारकाः ॥ ३० ॥ गोनरेभाऽश्वमहिषवराहाऽजमृगोद्भवम्। महामांसाष्टकं प्रोक्तं देवताप्रीतिकारकम् ॥ ३१ ॥ कुलकुलाष्टकं वापि निमन्त्र्याऽऽहूय पुष्पिणीम्। अभ्यंगेन विशुद्धांगीमासने चोपवेशयेत् ॥ ३२ ॥ जांगली चर्मकारी च मातंगी पुष्कसी तथा। श्वपची खटकी चैव कैवर्ती गणिका तथा ॥ ३३ ॥ कम्बुकी शौण्डिकी चापि शस्त्रजीवा च रञ्जकी। गायकी रजकी शिल्पा कोसटी चाऽष्टकीद्वये ॥ ३४ ॥ अन्योन्यवदनं कृत्वा ताभिर्मद्यं पिबेत् सह। आगलान्तं पिबेन्मद्यं स मुक्तो नाऽत्र संशयः ॥ ३५ ॥ पीत्वा पीत्वा पुनः पीत्वा यावत् पतति भूतले। उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते ॥ ३६ ॥ आनन्दात् तृप्यते देवी मूर्छया भैरवः स्वयम्। वमनात् सर्वदेवाश्च मृत्युना शंकरः स्वयम् ॥ ३७ ॥ योनिपूजां शनैः कृत्वा यथेष्टं विहरेत् तया। तदारूढेषु वीरेषु कार्याऽकार्यं न विद्यते ॥ ३८ ॥ इच्छैव विधिरेष्वयश्चेत्याज्ञा पारमेश्वरी। मद्यकुंभसहस्रैश्च मांसभारशतैरपि ॥ ३९ ॥ न तुष्यामि वरारोहे भगलिंगामृतं विना। भगिनी वा सुतां भार्यां यो दधात् कुलयोगिने ॥ ४० ॥ मद्यमत्ताय देवेशि ! तस्य पुण्यं न गण्यते। भ्रातृभार्यां स्नुषां वापि जननीं मदमन्थराम् ॥ ४१ ॥ भ्रातृजां यौवनोन्मत्तां विवस्त्रां च स्वलंकृताम्। निवेद्य गुरवे नत्वा निर्विकल्पधिया स्वयम् ॥ ४२ ॥ तालवृन्तेन देवेशि ! श्रमनाशाय वीजयेत्। तयोस्तु सामरस्याद् यत् कललं च्यवतेऽगतः ॥ ४३ ॥ धृत्वा कपालपात्रेण यष्ट्वा कालीं च तेन वै। शेषं समर्पयेद् भक्तेभ्यः प्रसादं पिबेदिति ॥ ४४ ॥ जीवन्मुक्तः स विचरेत् सर्वैश्वर्यसमन्वितः। इह लोके परे चापि शिवोऽयं न निवार्यते ॥ ४५ ॥ इदं तीर्थमिदं तीर्थं भ्रमन्ति तामसा जनाः। योनितीर्थं परातीर्थं लिंगतीर्थं परः शिवः ॥ ४६ ॥ तत्स्नानात् तत्पयःपानात् परा शान्तिः परं सुखम्। परा मुक्तिः परो लाभः परा प्राप्तिर्न चेतरा ॥ ४७ ॥ शैवैः पाशुपतैः कारुणिकैः कापालिकैस्त्वयम्। परमार्गो महादेवश्चाश्रयणीय एव नै ॥ ४८ ॥ शैवं पाशुपतं सौम्यं लाकुलं वाममित्य-

पि। दाक्षिणं मिश्रमेवापि सिद्धान्तं चाश्रयेत् सदा ॥ ४९ ॥ शक्तिप्रधानं वामं वै दक्षिणं भैरवोध्र्वगम्। सप्तमातृप्रधानं वै मिश्रं ब्रह्म समाश्रयेत् ॥ ५० ॥ शक्तं च कारणं नियामकं निष्कलमाप्तिमत्। प्रकाशकं गुणाढ्यं च ब्रह्म सर्वात्मकं मतम् ॥ ५१ ॥ शुद्धं स्वयं कुलाद्याख्यं लीलासृष्टिरियं ततः। सृष्टिलीलाविकारोऽयं सर्वं यच्छिवमण्डलम् ॥ ५२ ॥ लीलाख्यातिरतः सृष्टिस्तद्वच्छुक्तौ च राजती। ख्यातिर्लीलामयी शैवी शिवः पश्यति राजतम् ॥ ५३ ॥ शुक्ति चापि शिवस्तत्र पश्यत्येव तनौ कृताम्। लीलया रूपणा भिन्ना भवन्ते शिवमूर्तयः ॥ ५४ ॥ इति। अथ—

केवलाऽद्वैतदृष्टीनां सत्यं ज्ञानमनन्तकम्। नित्यं विज्ञानमानन्दं ब्रह्मैकं तत्त्वमीरितम् ॥ १ ॥ सच्चिदानन्दरूपं तद् व्यापकं स्वप्रकाशकम्। सन्निर्वाच्यं च परमार्थकं कूटस्थनित्यकम् ॥ २ ॥ स्वाऽप्रकाश्यं प्रकाशोऽन्याऽप्रकाश्यं न जडं ततः। सर्वप्रकाशकं निर्धर्मकं निर्गुणमेव च ॥ ३ ॥ एकमेवाऽद्वितीयं तद् बहुधाऽविद्यया स्वयम्। व्यजायतेति वै मूलाऽविद्यया त्वीश्वरास्तथा ॥ ४ ॥ तुलाऽऽख्याऽविद्यया जीवात्मानः सर्वे तथाऽभवन्। अविद्या वै महामाया त्वीशशक्तिः प्रकीर्तिता ॥ ५ ॥ जीवशक्तिरविद्या वै ताभ्यां ब्रह्म जगन्मयम्। मायाऽविद्ये ब्रह्मणोऽहंभावसम्पादिके मते ॥ ६ ॥ मायाऽऽवरणशक्तिर्वै ब्रह्माऽवरणिका मता। अस्या विक्षेपशक्त्या च विश्वाकारसृजिर्मता ॥ ७ ॥ अस्या मालिन्यशक्त्या च विश्वाकारस्थितिर्मता। अस्या वैशद्यशक्त्या च विश्वसंहार ईरितः ॥ ८ ॥ शक्तित्रयोपपन्ना सा माया त्रिगुणसंज्ञिका। राजसी सृष्टिसंवेगा सात्त्विकी स्थैर्यपोषिका ॥ ९ ॥ तामसी लयकर्त्र्येवं जगन्मायामयं मतम्। मायामये प्रपंचेऽत्र ब्रह्मसत्ताऽस्ति सर्वथा ॥ १० ॥ ब्रह्मसत्ता सती प्रोक्ता मिथ्याऽसती तु मायिकी। व्यावहारिकसत्त्वं वै शुक्त्यादौ दृष्टिगोचरे ॥ ११ ॥ प्रातिभासिकसत्त्वं वै रजतादौ तु वृत्तिजे। रजतं ख्यायते प्रातिभासिक्या सत्तया क्षणम् ॥ १२ ॥ अतो वै रजते प्रातिभासिकी ख्यातिरुच्यते। एवं वै ब्रह्मणि वैवर्तिकी ख्यातिर्जगन्मयी ॥ १३ ॥ ब्रह्मण्यविद्यया भासो जगद् वैवर्तिको हि सः। मायायां तु जगद्भासः पारिणामिक इत्ययम् ॥ १४ ॥ मायायाः सहकारेण त्वीशस्य स्वातिरेकिणि। कार्ये जगन्मये वै विवर्तोपादानहेतुता ॥ १५ ॥ अविद्यासहकारेण जीवस्यापि जगन्मये। स्वातिरेकिणि कार्ये विवर्तोपादानहेतुता ॥ १६ ॥ मनोमयं तु यत् प्रातिभासिकं रजतादिकम्। जगद्धाऽत्र चितस्तद्विवर्तोपादानहेतुता ॥ १७ ॥ मायायां परिणामे-

ऽस्य जगतः सम्मतोऽपि च। शुद्धसत्त्वमयः साक्षी तद्भास्या वृत्तिरान्तरी ॥ १८ ॥ राजत्यविद्यावृत्तिस्थं साक्षिभास्यं हि राजतम्। न सन्नासन्नोभयं तदनिर्वाच्यमतो मतम् ॥ १९ ॥ अनिर्वाच्या ततः ख्यातिः, मता राजतगोचरा। दृश्ये चाविद्यके प्रातिभासिके रजतेऽत्र तु ॥ २० ॥ चिद्विज्ञानात् पृथग्रूपे विज्ञानाद्भिन्नता मता। विज्ञानं सद्धि निर्वाच्यम् अनिर्वाच्या तु वृत्तिका ॥ २१ ॥ ततोऽनिर्वचनीयाख्या वैतथ्याख्यातिरेव सा। शुक्तौ तु व्यावहारिक्याख्यातिर्व्याहृतिसत्त्वजा ॥ २२ ॥ नित्यज्ञाने परमार्थसत्यख्यातिर्मता यतः। यन्नाना तदसन्मिथ्या, मिथ्याख्यातिर्हि सा मता ॥ २३ ॥ चित्तत्त्वं ग्राहकं सर्वं तस्मात् तत्पारमार्थिकम्। प्रातिभं व्याहृतं ग्राह्यं तत्त्वं मिथ्या हि तन्मतम् ॥ २४ ॥ कल्पनाधिष्ठितिर्ज्ञानं निर्वाच्यं तत्तु सर्वथा। प्रकाशानन्दविज्ञानात्मैक्यभावात् प्रमोक्षणम् ॥ २५ ॥ प्रपञ्चस्य विनिवृत्तिर्मोक्षो ब्रह्मस्वरूपता। प्रमाणं तत्र विज्ञानं त्वौपनिषदमुत्तमम् ॥ २६ ॥ अखण्डब्रह्मविषयं निर्विकल्पमबाधितम्। विद्यया तु प्रमाणेनाऽविद्यानाशे ततो द्रुतम् ॥ २७ ॥ भेददृष्टिविनाशेन ब्रह्मभावो हि मोक्षणम्। एकत्वांशेन मोक्षोऽस्ति नानात्वांशेन संसृतिः ॥ २८ ॥ वृक्षे त्वैक्यं प्रशाखासु नानात्वं तद्विवर्तनम्। अब्धावैक्यं तरंगेषु नानात्वं तद्विवर्तनम् ॥ २९ ॥ मृद्येकत्वं घटादौ तु नानात्वं तद्विवर्तनम्। विज्ञानस्य विवर्तोऽयं गोचरोऽध्यासरूपवान् ॥ ३० ॥ अन्तःकरणसंस्थं वा प्रतिबिम्बावभासनम्। आभासः प्रतिबिम्बो वाऽवच्छिन्नो वाऽऽत्मरूपवान् ॥ ३१ ॥ परेशस्य तु मालिन्यसत्त्वाविद्याऽधिबिम्बनम्। कार्याऽन्तःकरणोपाधिकत्वं वा जीवतत्त्वकम् ॥ ३२ ॥ आविद्यकाऽन्तःकरणच्छिन्नचित्प्रतिबिम्बनम्। जीवतत्त्वं च तन्मिथ्या ब्रह्मभिन्नत्वतो यतः ॥ ३३ ॥ शुद्धसत्त्वात्ममायायां चित्प्रतिबिम्ब ईश्वरः। अविद्योपाधिको वापीश्वरस्ते विषमा मिथः ॥ ३४ ॥ बिम्बतादात्म्यसंसर्गाच्चैतन्यस्योपपत्तिका। ब्रह्माऽहमिति तत्त्वाभ्यासेन मायाविनाशनम् ॥ ३५ ॥ ब्रह्मैव शेषतस्तिष्ठेत् स्वरूपाप्तिर्हि मोक्षणम्। ब्रह्म प्रमाणाऽविषयं प्रमाण्यं वृत्तिरूपि यत् ॥ ३६ ॥ वृत्तिर्मिथ्या यतः सर्वा जीवो मिथ्या च सर्वथा। जीवोऽपि प्रतिबिम्बश्चेत् वृत्तिर्या प्रतिबिम्बिनी ॥ ३७ ॥ राजती जायते सा प्रतिबिम्बख्यातिरीरिता। जीवश्चेदीश्वराभासो वृत्तिराभासरूपिणी ॥ ३८ ॥ राजती च तदायत्ता साऽऽभासख्यातिरीरिता। जीवश्चान्तःकरणावच्छेद्यश्चेद् वृत्तिरान्तरी ॥ ३९ ॥ जीवाऽवच्छिन्नतां प्राप्ताऽवच्छेद्यख्यातिरीरिता। स्वच्छः काचघटो रक्तजलसंभृत एव

चेत् ॥ ४० ॥ रक्तोऽवलोक्यते चोपाधिना रक्तजलेन वै। उपाधिख्यातिरेवेयं घटे वृत्तिस्वरूपिणी ॥ ४१ ॥ नीरूपस्यापि शब्दस्य प्रतिध्वानस्वरूपिता। वृत्तौ त्वालोच्यते कर्णे प्रतिध्वानाऽऽख्यता हि सा ॥ ४२ ॥ अध्यासो जीव इत्येवं वृत्तिरध्यासरूपिणी। राजतोऽध्यास एवापि ख्यातिरध्यासरूपिणी ॥ ४३ ॥ अज्ञानाऽऽवृत एवाऽयं जीवश्चेद् वृत्तिरान्तरी। अज्ञानात्मा ततः ख्यातिरज्ञाना राजती मता ॥ ४४ ॥ राजती वृत्त्यवच्छिन्ना शक्तिश्चेद् रजतं मतम्। शक्तिख्यातिस्ततस्तत्र वृत्तिः शक्तिमयी यतः ॥ ४५ ॥ संस्काराढ्या मनोवृत्तिर्बहिः राजतरूपिणी। शुक्तौ व्याप्या भवेत् तर्हि संस्कारख्यातिरेव सा ॥ ४६ ॥ रजतं ख्यायतेऽविद्या साऽविद्याख्यातिरित्यपि। शुक्तित्वस्य तु संसर्गः समवायोऽस्ति यः स ह ॥ ४७ ॥ भासते रजतत्वेन संसर्गख्यातिरेव सा। व्यापकं चित्ततत्त्वं चेद् भासते रजतात्मकम् ॥ ४८ ॥ चित्तख्यातिस्तदा तत्र वृत्ती राजतभा यतः। भेकवसाञ्जने यस्य सर्पाकाराऽवलोकनम् ॥ ४९ ॥ सा वृत्तिस्थाऽञ्जनख्यातिः रजतं चापि तादृशम्। स्वप्ने पदार्थसंदृष्टिः संस्काराऽदृष्टकारिता ॥ ५० ॥ वृत्तिः संस्कारजाऽदृष्टमयी ख्यातिरपीति सा। पीतः शंख इति ख्यातिर्वृत्तिः कामलमिश्रिता ॥ ५१ ॥ दोषख्यातिर्हि सा प्रोक्ता वृत्तिर्दोषमयी यतः। कृष्णोऽहं कृष्ण एवाऽहं वामदेवादिवद् यदि ॥ ५२ ॥ अहं सर्वं हि तादात्म्यचैतन्यख्यातिरेव सा। योगिनां यत्र साक्षाद्वै पदार्थपरिवर्तनम् ॥ ५३ ॥ नवीकरणमेवाऽपि वस्तूनां तत्र सर्वथा। चमत्कारमयी ख्यातिः संयमैश्वर्यशोभना ॥ ५४ ॥ यत्राऽणिममहित्वादिसिद्धिजन्यविलोकनम्। विप्रकृष्टादिवस्तूनां सिद्धिख्यातिर्हि सा मता ॥ ५५ ॥ मन्त्रादिपरिभूतानां वस्तूनां रूपणान्तरम्। दृश्यते वा प्रवाहादिदर्शनं पूर्ववत् परे ॥ ५६ ॥ तत्राऽभिचारकृद्वृत्तिप्रवाहख्यातिरेव हि। विश्वरूपे वामनस्य श्रीकृष्णस्य च दर्शने ॥ ५७ ॥ दिव्यचैतन्यकैश्वर्यख्यातिस्तत्र परा मता। दिव्यदृष्टिश्च वा ख्यातिर्विश्वरूपाऽर्जुनदृशि ॥ ५८ ॥ मीमांसावाक्यसन्दोहे निन्दाशंसामहित्वकाः। ख्यातयः समपद्यन्तेऽन्यार्थाऽऽयोजनिकास्तदा ॥ ५९ ॥ परेशस्याऽपरोक्षार्थख्यातिः सर्वत्र सम्मता। हेत्वाभासप्रसंख्यातिर्हेतौ न्यायनये मता ॥ ६० ॥ शुक्त्यपेक्षं हि रजतं न कृष्णमृदपेक्षणम्। अपेक्षाख्यातिरेवैषाऽपेक्षावृत्तिर्यतो हि सा ॥ ६१ ॥ मूर्च्छार्था च विरामाख्या ख्यातिर्वृत्तिर्विरामिका। वह्नेरदाहकत्वे तु शैत्ये चन्द्रमणौ सति ॥ ६२ ॥ शीतलख्यातिरेवास्ति तेजःकिरणसंगता। शब्दज्ञानानुपातित्वे वस्तुशून्ये विकल्पने ॥ ६३ ॥ बालभी-

गृंहकोणादौ विकल्पख्यातिरस्ति सा। सामान्यलक्षणा ख्याती रजतत्त्वानुभूतिके ॥ ६४ ॥ एवं वै ख्यातयः सन्ति तत्त्वाऽतत्त्वादिभासिनी। रजतं किंस्वरूपं वा तत्त्वं किं चेति चिन्तना ॥ ६५ ॥ विशुद्धा युज्यते पश्चात् सृष्टिर्ब्रह्मणि का मता। एकविज्ञानमेवादौ चान्यविज्ञानकारकम् ॥ ६६ ॥ स्वात्मविज्ञानकृच्चापि ब्रह्मविज्ञानकृत् तथा। ज्ञानं स्वात्मपरात्माप्तं मोक्षदं चेति चांगनात् ॥ ६७ ॥ ज्ञानं त्वंगं च भक्तिस्तु प्रधाना यत्र सर्वथा। तत्र ख्यातिः सूपयुक्ता पारम्परिकधारया ॥ ६८ ॥ साक्षात्तु कारणे ज्ञाने मुक्तौ साक्षात् विडम्बिनी। ख्यातिः साक्षात् सूपयुक्ता भवत्यज्ञानहारिणी ॥ ६९ ॥ इति।

अथ कालीमते पञ्च मकारा ये प्रकीर्तिताः। तेषां तात्पर्यमध्यात्मरीत्या संवर्णयामि यत् ॥ १ ॥ मोक्षमात्रप्रदाः स्युर्नैव दोषाभिदायकम्। मद्यं मांसं च मीनं च मुद्रा मैथुनमित्यपि ॥ २ ॥ मकाराः शक्तिभक्तानां सेव्याः पञ्च भवन्ति ये। तत्र मद्यंतु वै नाडी वामेडा चन्द्रदेवता ॥ ३ ॥ तालूगताऽपि तस्या यत् त्वमृतं स्रवते ध्रुवम्। तदमृतं पिबेद् योगी मद्यं तत् मादकाऽमृतम् ॥ ४ ॥ मांसं कामस्तथा क्रोधो मदो लोभश्चतुर्थकः। पाशवस्ते मता धर्मास्तान् हत्वा तृप्तिमावहेत् ॥ ५ ॥ निष्कामः क्रोधशून्यश्च निर्मदो लोभवर्जितः। योगी शक्तिं भजेन्नित्यामात्मीयां शिवशान्तिदाम् ॥ ६ ॥ मुद्रां तु खेचरीं कृत्वा धृत्वा व्योमेश्वरीं तथा। दिक्चरीं गोचरीं लब्ध्वा प्राप्यान्ते भूचरीं तथा ॥ ७ ॥ पुनर्मुद्रालयं कृत्वा स्फूर्तिं शक्तिं समर्जयेत्। न मुद्रा भगलिंगाद्याकृतयस्त्विह वर्णिताः ॥ ८ ॥ मीनं मायामहावाधौ महाहंकार उच्यते। अहंकारं वशे कृत्वा साधयेच्छिवरूपताम् ॥ ९ ॥ मैथुनं कुण्डलीयुक्ते शिवे मोक्षपरिश्रमम्। कुर्यात्स्फूर्तियुतं नैजात्मनो ज्ञानयुतं मुहुः ॥ १० ॥ योनिपूजा तु वै सर्वयोनि ब्रह्म समीरितम्। शिवस्वरूपमेवेति सर्वकारणकारणम् ॥ ११ ॥ तस्य पूजां प्रकुर्याद्वै पावनीं मोक्षदां पराम्। स्रावप्रसादमद्याद् यत् तदप्यत्र गुरोर्मुखात् ॥ १२ ॥ ज्ञानस्रावं समद्याद्वै गुरुशिष्यविचारजम्। संवादजं महाबोधं पिबेन्मोक्षप्रदं हितम् ॥ १३ ॥ कालो यस्य वशे चास्ति काली मुक्तिर्हि सा मता। महामुक्तिर्महाकाली तां श्रयेच्छिवतां व्रजेत् ॥ १४ ॥ कुलाऽङ्गनाष्टकं प्रोक्तं ज्ञानं धर्मो विरागिता। ऐश्वर्यं सात्त्विकं चैतत् तामसं विपरीतकम् ॥ १५ ॥ अज्ञानं चाऽप्यधर्मश्चाऽवैराग्यं नेश्वरत्वकम्। अष्टकं तत्कुलं प्रोक्तं भुक्त्वा तद्विसृजेद् यतिः ॥ १६ ॥ एवं योगी निजाध्यात्मविषयान् बहुविस्तरान्। वशीकृत्य भजेद्देवं शाश्वतं ब्रह्म चाप्नुयात् ॥ १७ ॥

ऐन्द्रजालिकानां स्वसाधितमन्त्रदेवताप्रेरितशक्तिमात्रभृतरूपरूपान्तरादिदर्शनात्मिका देवताशक्त्यात्मिका ख्यायते, मानवे कपोतदृष्टिः, नरसैन्ये युद्धदृष्टिः, सा साधितदेवतेति न पृथक्पदार्थः। सा च मन्त्रशक्तिविशेषख्यातिरिति ॥

सर्वज्ञस्य तु सर्वस्वात्मकस्वनित्यविज्ञानात्मकस्वतादात्म्यतया साक्षाद्रूपं सर्वबाधकल्पनापरिवर्तनभिन्नार्थादिगन्धाऽस्पृष्टं सत्यं स्वं स्वात्मकं सत्यतादात्म्यं तादात्म्यसत्यं सर्वं ख्यायते इति सत्यतादात्म्यख्यातिस्तस्य।

शांकरैर्ज्ञानकैवल्ये विरामश्चाऽन्ततः कृतः। बौद्धैः शून्ये विरामो वै मोक्षीयः सर्वथाऽऽदृतः ॥ १ ॥ नैयायिकैर्जडे भावे विरामो हि निरायतिः। सांख्यैर्गुणादिवैधुर्ये विरामः स्वीकृतस्तथा ॥ २ ॥ बौद्धैर्विमलविज्ञाने शाक्तैः शक्तिमये विभौ। फलं त्वेषां सुखं नास्ति दुःखाभावफलं यतः ॥ ३ ॥ सुखार्थं फलमाप्तुं तु वैष्णवैः शरणागतिः। हरेः प्राप्तिर्महामुक्तिः प्रेमानन्दः प्रवर्णितः ॥ ४ ॥ वस्तुतस्तन्मतं सत्यं व्यासलेखाऽनुसारतः। वेदान्तानां प्रमाणत्वाद् आविर्भावस्वरूपिणाम् ॥ ५ ॥ अवतारस्वरूपाणां तथाबोधाद् विशेषतः। समक्रमपुनर्जन्माऽपूर्वभोगफलोदयाः ॥ ६ ॥ स्फोटाऽलंकारविध्यर्थवादतात्पर्यलक्षणाः। व्यवहारमृषाशून्यज्ञानद्रव्यचिदञ्चिताः ॥ ७ ॥ जातिनिग्रहतत्त्वैक्याऽनैक्यक्षणिकशाश्वताः। हरौ भक्त्यार्पिता मिष्टा रूक्षास्ते हरिवर्जिताः ॥ ८ ॥ हरिर्यत्र न वै शेते सोऽब्धिः क्षारमयो मतः। हरिर्यत्र सदा शेते सोऽब्धिः क्षीरमयोऽमृतम् ॥ ९ ॥ ज्ञानं यत्र हरिर्नास्ति तत्प्रोक्तं सोमलात्मकम्। ज्ञानं यत्र हरिश्चास्ति सितास्वादुसुधाभृतम् ॥ १० ॥ मुक्तिर्यत्र हरिर्नास्ति शुष्कारण्यं सुवालुकम्। मुक्तिर्यत्र हरिश्चास्ति शान्तिदं सत्फलाऽमृतम् ॥ ११ ॥ स्थलं सम्पन्नमेवाप्तं प्रवासी सुसुखी भवेत्। शुष्कास्तुषप्रहन्तारश्चार्द्रा मोदकभोजिनः ॥ १२ ॥ दार्शनिका विलोक्यन्ते बुद्ध्यास्वादनतत्पराः। आत्माऽऽस्वादनविधुरा हर्यास्वादानवञ्चिताः ॥ १३ ॥ विशालाऽरण्यवेगास्ते मध्ये सर्वस्वहोमिनः। पारगा न भवन्त्येते विना तद्ग्राहकं हरिम् ॥ १४ ॥ अपि नैर्गुण्यसंस्थाना उत्तमश्लोकसद्रसाः। कुर्वन्ति रसदां भक्तिं हरेः प्रेमप्रसारिणीम् ॥ १५ ॥ आनन्दात्खलु भूतानि जायन्तेऽत्र विशन्त्यपि। आनन्दं श्रीहरेर्विद्वान्न बिभेति कुतश्चन ॥ १६ ॥ ख्यातिदर्शनमित्येतत् श्रीहरौ प्रसमर्पितम्। श्रीहरेर्दर्शनं ख्यातिदर्शनं फलदं यतः ॥ १७ ॥

धीक्षेत्रं सफलं किञ्चिद्विदुषां मुक्तिवादिनाम्।

दृष्टिनिदर्शनं हेतावुपास्तिः सदृशी मतिः ॥ १ ॥

नैयायिकानाम्— शुक्तौ रजतम्–अन्यथाख्यातिः, रजतत्वाऽभाववत्यां शुक्तौ रजतत्वप्रकारकं ज्ञानं, सृष्टयुपादानत्वाऽभाववति परमात्मनि सृष्टयुपादानत्वप्रकारकज्ञानं भ्रान्तिः, निमित्तकारणत्ववति परमात्मनि निमित्तकारणत्वप्रकारकज्ञानं तत्त्वज्ञानं प्रमा। दुःखजन्मप्रवृत्ति (धर्माऽधर्म) दोष (रागद्वेष) मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः, मुक्तिर्जडा ॥

मीमांसकानाम्— शुक्तौ रजतम्–सत्ख्यातिः, प्रत्यक्षं स्मरणं चेति ज्ञानद्वयं सत्यम्, दोषबशाद् विरोधिना चाकचक्येन भेदाऽग्रहात् मिश्रव्यवहारः, भेदग्रहे ज्ञानद्वयं प्रमा, आत्मा परमात्मनि भेदाऽग्रहे सति संसारी, भेदाग्रहः संसारः, भेदग्रहे प्रमा, भेदग्रहश्च वेदादिभिः, नित्यस्वर्गी मोक्षी ॥

रामानुजानाम्— शुक्तौ रजतम्–सत्ख्यातिः, शुक्तौ धवलानां पार्थिवाऽवयवानां रजते सजातीयानां सत्त्वाद् रजतप्रतिज्ञानं दर्शनात्मकं सत्, उपयोगस्तु नास्ति, अहम्ममतादिकर्मभिः संसारी, निष्कामार्पितकर्मभिर्मोक्षः ॥

सांख्यानाम्— शुक्तौ रजतम्–अख्यातिः, सविषया बुद्धिः, सा प्रतिबिम्बिता आत्मनि ख्यायते, आत्मा न ख्यायते, यावद् आत्मनोऽख्यापनं तावत् संसारः, बुद्धिश्चेतनेति संसारः, विवेकतत्त्वज्ञानं प्रमा-पौरुषेयो बोधः, प्रमया मोक्षः ॥

योगानाम्— अख्यातिः, पौरुषेयो बोधः प्रमा, अपौरुषेयो बोधो भ्रान्तिः, इदं सर्वम् अपौरुषेयमिति परमपुरुषज्ञानराहित्यं भ्रान्तिः संसारः, परमपुरुषज्ञानं प्रमा, आराधनया समाध्यात्मिकया कैवल्यम्, तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यं, तस्मात् कैवल्यम् ॥

बौद्धानाम्— शुक्तौ रजतम्–आत्मख्यातिः, अनात्मख्यातिर्भ्रान्तिः, क्षणिकं विज्ञानमात्मा, सः परस्परधर्मान्वयी यावत् तावत् संसारः, दृष्टिसृष्टिवादः, सृष्टौ दृष्टिः स्यात्, क्षणिकं विज्ञानं प्रकाशमात्रं स्वमात्रं लयमात्रावस्थं मोक्षः।

माध्यमिकानाम्— शुक्तौ रजतम्–असत्ख्यातिः, शून्यं कारणम्, शून्यतत्त्वे सर्वपदार्थानां विरामः, शून्यबोधो मोक्षः, अभावाद्भावोत्पत्तिर्नाऽनुपमृद्य प्रादुर्भावात्, असतः सज्जायेत, किं रजः ?,– अणुः, कोऽणुः ? कल्पना, का कल्पना ? विज्ञानम्, किं विज्ञानम् ? आत्मा, क आत्मा ? क्षणिका चित्, कः क्षणः ?, ध्वंसात्मकोऽभावः, तदा निरुपाख्यं तत्त्वम् आत्मा, तज्ज्ञानं निरूपाख्यम् आलयविज्ञानं मुक्तिः।

जैनानाम्— शुक्तौ रजतम्–अनैकान्तिकताख्यातिः, स्वात्मना भावरूपम्, परात्मनाऽभावरूपम्, स्वात्मना अस्तित्ववत्, परात्मना नास्तित्ववत्, स्वपरोभयात्मना सत्त्वाऽसत्त्वात्मकम्, स्वात्मना वक्तव्यम्, परात्मना अवक्तव्यम्, स्वपरोभयात्मना वक्तव्याऽवक्तव्यत्वम्, अतो नैकान्तस्वरूपम्, आत्मापि तथाऽनैकान्तरूपः, तत्राऽन्येषामविद्याविषयं सर्वं सप्तभंगीविषयम्, तत्त्वज्ञाने नित्यविमलविज्ञानोदयो मोक्षः, सम्यग्दर्शने सति तत्त्वाभिमुखी गतिः, सम्यक्त्वज्ञानंपूर्वं सर्वं मिथ्याज्ञानं, भगवत्त्वाऽवाप्तिः कर्मदग्धता वा मुक्तिरपि।

लोकायतिकानाम्— शुक्तौ रजतम्–साक्षात् ख्यातिः, सुखानन्दो मुक्तिः, मृत्युर्मुक्तिर्भूतात्मिकी, दुःखं संसारः, परोक्षम् अज्ञानम्, प्रत्यक्षं ज्ञानम्। पञ्चविलीनता मृषा मुक्तिः, पञ्चानन्दिता साक्षान्मुक्तिः, पञ्चाऽनानन्दिता संसारः। अपुनर्भवा स्थितिः ॥

माध्वानाम्— शुक्तौ रजतम्–उत्पत्तिसारूप्यख्यातिः,–भ्रान्तिः, माया त्विच्छा हरेर्मता, इच्छा त्रिगुणरूपा वै जाता, दृष्टिसारूप्यं भ्रान्तिः संसारः, सर्वथा भेदभिन्नानि सतत्त्वानि, वेदान्तवाक्यानि ज्ञप्तिसारूप्यमाश्रित्यैवयं बोधयन्ति–'अद्वितीयं ब्रह्मे'ति, तज्ज्ञानेऽभेदज्ञानं,। 'कल्पनाख्यातिः'–शुक्तौ रजतम्–कल्पना यावत् तावत् तिष्ठति राजतम्, हरेः प्रसादाद् विज्ञानं प्रपञ्चत्याग इत्यतः। पूर्वं त्वानन्दसाधर्म्यान्मायां धत्ते जनः सुखम्, मायां रजतरूपाम्, पश्चात् प्रसादलाभाद्वै कृष्णं धत्ते हि भक्तराट्, कृष्णं शुक्तिम्, कृष्णवृतिर्मुक्तिः ॥

वाल्लभानाम्,— शुक्तौ रजतम्–लीलाख्यातिः, सृष्टौ न कर्म, नाऽणवः, न प्रकृतिः, न कालः, न स्वभावः, किन्तु लीलैव कारणम्, लीलाख्यातिस्ततः प्रोक्ता कृष्णानन्दफलं परम्, परब्रह्मशक्तिर्विद्या चाऽविद्या च। कृष्णशक्तिश्चतुर्धा श्रीकृष्णसामर्थ्यरूपाऽऽद्या, व्यामोहनरूपा द्वितीया, अविद्यारूपा तृतीया, कापट्यरूपिणी चतुर्थी, व्यामोहनं सृष्टिसर्जकम्, कृष्णलीला कृष्णात्मिका प्रमा, शक्तिशक्तिमतोरभेदात्। माहात्म्यसहितप्रेमभक्तिर्मोक्षदा ॥

निम्बार्काणाम्,— राधिकाप्रकृतिस्तद्द्वारा उपादानं माधवः, राधामाधव उपास्यः, शुक्तौ रजतम्–दृष्टिसृष्टिख्यातिः, अनुपादानं माधवशक्तिर्भ्रान्तिः, शुक्त्यात्मिका शक्तिरुपादनं प्रमा, जगत् परमार्थसत्यं राधारूपत्वात्, रतिः प्रेमाख्यभक्तिः, सा मुक्तिकारणम्। राधिकावद् भवनं राधाभवनं वा मुक्तिः ॥

शाब्दिकानाम्— शुक्तौ रजतम्–विवर्तख्यातिः, अतात्त्विकोऽन्यथाभावः स्फोटाख्यब्रह्मणः, स एव भ्रान्तिः, तात्त्विकब्रह्मस्फोटात्मकमिदं

सर्वमिति प्रमा तया मुक्तिः, ब्रह्म विवर्तोपादानम्, आत्मनामपि ब्रह्म विवर्तोपादानम्, ब्रह्मता मुक्तिः ॥

प्रत्यभिज्ञानवादिनाम्— शुक्तौ रजतम्-शिवो ब्रह्म स्वयं तथा, प्रत्यभिज्ञानख्यातिः सा, स्फूर्तिः स्वस्याऽवबोधनम्, स्फूर्त्यां शिवोऽभवद्-द्वेधा नरनारीस्वरूपवान्, अल्पज्ञः सुखलाभार्थं लीलार्थं नान्यथा यतः, अनानन्दं विनाऽऽनन्दो नैव व्यज्यते, अतो न दूषणं शंभावनानन्दो मतः क्वचित्, पाशुपता लाकुलीशा वीरशैवा लिंगायता रसेश्वरा अपि शुक्तिरजतस्फूर्तिः शिवशक्तिरिति शिवात्मिका मुक्तिः ॥

कालीदर्शनवादिनाम्— काली चितिः ब्रह्मरूपा, सर्वगर्भा महेश्वरी, सर्वमुत्पादयत्येषा शुक्तौ रजतमित्यपि, क्रमवैकल्पिकी शैवी लीलाख्यातिर्हि सा मता। कालीत्वाप्तिर्महामुक्तिः, कालीत्वाऽज्ञानं संसारः, कालीत्वज्ञानं प्रमा, कालीसांसारिकी ख्यातिः शुक्तौ चापि मरावपि। रजते च मरीचिकाव्राते कालीतनुत्वकम् ॥

शांकरमतम्— शुक्तौ रजतम्–अनिर्वचनीया ख्यातिः, सदसदुभयाद्यसिद्धेश्चतुर्थीसिद्धिः, ननु तर्हि मौनिमुग्धताख्यातिः कथं न, संसारेऽपि तथा, मृषात्वं मिथ्यात्वं तत्र ख्यायते, समानन्यायात् गर्भविमर्शख्यातिर्वा कथं न, वन्ध्यस्वरूपख्यातिर्वा कथं न, डिम्भविवेदनाख्याति र्वा कथं न, आत्मा ब्रह्मेति विज्ञानं यथार्था ख्यातिः, ज्ञानकैवल्ये विरामः, फलव्याप्तिर्हि शाश्वती, अशाश्वती भ्रान्तिस्थितिः, न सा हस्तगता, तर्हि गलितगर्भख्यातिः कथं नेति ॥

स्वामिनारायणीयानाम्— शुक्तौ रजतम्–समुच्चयख्यातिः, एकाधिकानां समुच्चयात्, अनन्वितानामनवस्थानात्, ग्राहकाणामपि समुच्चयात्, व्यूहाद् व्यूहः समूह्यते, एकस्य क्वाऽप्यसंभवात्, तादात्म्येनाऽपि द्वैविध्यात्। समुच्चयो हि शाश्वतः। अविवेकतो माया। माया ख्यायते रजतम्, तच्च समुच्चितमिति, विवेकैकविज्ञानादुपासनात्मकात् स्निग्धभावान्वितान्मुक्तिः, सह ब्रह्मणा सर्वकामाशनसंभृता सेति ॥

अथ चिन्तामणिकाराणाम्— ज्ञानानां कालान्तरीयदेशान्तरीयविषयगर्भित्वात् तत्र पदार्थधर्माद्यवर्तमानत्वात् सर्वत्राऽप्रमासु विषयित्वस्याऽवैधुर्यात् ज्ञानस्यापि ज्ञाने विषयत्वात् किञ्चिज्ज्ञानीयविषयित्ववैधुर्ये ज्ञानांऽशे मिथो ज्ञानीयविषयित्वभासनम् अन्यथात्वम्, यद्वा ज्ञानीयरजततादात्म्यविधुरायां शुक्तौ रजततादात्म्यावगाहनम्, शुक्त्यजन्यरजतज्ञाने शुक्तिजन्यरजतज्ञानत्वस्य ज्ञानीयविशेषणतावच्छेदकत्वविधयाऽन्यथात्वम्, यद्वा शुक्त्यवयवाऽसमवेतरजतज्ञाने शुक्त्यवयवसमवेतरजतज्ञानत्वे तादृशसम्बन्धविधयाऽन्यथात्वम्, यद्वा ज्ञानगतजात्या-

कृतिव्यक्तिसमष्टिरजतवाच्यत्वम् अरजते शंखेऽन्यथात्वम्, यद्वा रजताऽसंयुक्तचक्षुःसंयुक्तमनःसंयुक्तात्मीयज्ञानवत्त्वे रजतसंयुक्तचक्षुःसंयुक्तमनःसंयुक्तात्मीयज्ञानवत्त्वस्य स्वीयगुणसम्बद्धान्वितविशेषणविधयाऽन्यथात्वम्, यद्वा प्रत्यक्षद्वितीयक्षणोत्थरजतसंस्कारसांकर्यमभिनवाऽन्यथात्वम् इति। तत्र तत्र यथायोगम् अभिनवाऽन्यथाख्यातित्वमिति ।। शम् ।।

卐 卐

ॐ

# अथ जातिवैशद्यम्

अथ केयं जातिः ?, व्याप्यव्यापकभावात्मकं सामान्यं नित्यं च, समूहबोधे प्रकारतया स्थितमिति । ननु महाप्रलये समूहाऽभावात् कथं जातिरिति । उच्यते–तत्रात्मनां समूहसत्त्वादात्मत्वजातिर्नित्या, परमाणुसमूहसत्त्वात् परमाणूनां जातिर्नित्येति । अथाऽऽयातम्–महाप्रलये यानि सामुहिकतत्त्वानि न सन्ति न तेषां जातिरिति । परमाणूनां निरासात्, भूतानां चिदाकाशात् क्रमश उत्पत्तेरंगीकारात्, तत्त्वानामनित्यतया जातेरनाधारायाः सत्त्वाऽऽकल्पनवैयर्थ्यात् । ननु तर्हि पृथिवीत्त्वादिकं जातिरनित्या, पृथिव्यादीनां तदानीमभावात्, पार्थिवपरमाणुषु पार्थिवजातित्वे व्यर्थविशेषणघटितत्वात् पार्थिवत्वस्य निरर्थकत्वात्, घटत्वादेस्तु घटोपस्थितेरेव नियामकत्वाज्जातित्वे बाधात् । नन्वेवं वेदस्याऽप्रामाण्यं स्यात् 'ब्राह्मणोऽस्य मुखमासीद् बाहूराजन्यः कृतः ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायते'ति (शु० य० ३१-११ । ऋ० १०-९०-१२ । अथर्व० १९-६-६ । तै० आ० ३-१२-५) ब्राह्मणत्वादेः प्रतिपादनपरस्य वेदस्य तत्तज्जातिविशिष्टानामुत्पत्तिबोधकस्याऽर्थात् सिद्धाया ब्राह्मणत्वादिनित्यजातेः प्रतिपादकस्याऽप्रामाण्यं स्यादिति चेन्न । तत्र वेदो हि गुणकर्मानुसारेण ब्राह्मण्यादि प्रतिपादयति, मानवस्य वेदादिविद्याया अधिष्ठानप्राबल्ये ब्राह्मण्यं शमदमशौचविद्याभक्तिव्रततपोयोगादिभिर्भवतीति मुखसाम्यं वर्णयति, शौर्यवीर्यबलतेजःशासनरक्षाशरण्यादिगुणवन्मानवस्य क्षात्रत्वमिति बाहुसाम्यं वर्णयति, कृषिव्यापारप्रयासोद्यमाऽऽयव्ययलाभदानाश्रयवाणिज्यकुसीदादिगुणवन्मानवस्य जीवनदाने प्रविष्टस्य वैश्यत्वमित्यूरुसाम्यं वर्णयति, सेवया भृत्यतया परिचर्याशिल्पकौशल्यकासतादिभिः सर्वथा द्रवितभावेनाऽऽश्रितस्य मानवस्य शुद्धं द्रवणं यत्तद्गुणितया वर्तमानस्य शूद्रत्वमिति पादसाम्यं वर्णयति । नहि जातेर्नित्यत्वं नित्यपदार्थत्वं वेति । 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' (गी-४ । १३) इत्यादिना ब्राह्मण्यादि गुणकर्माद्यनुसारेण सृष्टमित्यभिहितम् । पाणिनीयसूत्रभाष्ये पतञ्जलिनोक्तं 'सर्व एते शब्दा गुणसमुदायेषु वर्तन्ते–ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति' (अष्टमाध्यायः २-२-६) कथितम् । ऋग्वेदे 'आर्ष्टिषेणो होत्रमृषिर्निषीदन् देवापिर्देवसुमतिं चिकित्वान्, स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद् वर्ष्या अभि, यद्देवापिः शन्तनवे पुरोहितो होत्राय

वृतः कृपयन्नदीधेत्, देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत् (ऋ० सं० १०-९८-५-७) ऋष्टिषेणस्य पुत्रो देवापिः क्षत्रियः सन् सम्प्रति ऋषिः पुरोहितो ब्राह्मणः सन् देवानां सुमतिं कल्याणीं स्तुतिं चिकित्वान् जानन् होतुः कर्म कर्तुं निषीदन् सन् सः उत्तरस्थाद् आकाशाद् अधरं समुद्रं प्रति दिव्या वर्ष्याः आपोऽसृजत्, यतो देवापिः पुरोहितः-होतृकर्मणि वृत्तः कृपालुः सन् शन्तनोरर्थायाऽदीधेदस्तौत्, स बृहस्पतिः रराणः स्तुत्या राजीवः सन् वृष्टचर्थं वाचमयच्छत् । देवापिः शन्तनुश्च कौरव्यौ भ्रातरौ, कनीयान् शन्तनुः राजा बभूव, देवापिर्ब्राह्मणधर्मं तपश्चक्रे, तेन व्युत्क्रमदोषेण देवो द्वादशवर्षाणि न ववर्ष, द्वयोरधर्मात्, ततो यज्ञं चक्रतुः, येन ववर्ष, 'निषीद होत्रमृतुथा यजस्व देवान् देवापे ! ऋषे ! त्वं होत्रं निषिद, ऋतौ ऋतौ हविषा सपर्य सेवां कुरुत, इति ब्राह्मणत्वं क्षत्रियस्याऽपि विहितम् ।। (म० भा० श० प० ३९-३४, ३५, ३६) 'यत्रार्ष्टिषेणः कौरव्यो ब्राह्मण्यं संशितव्रतः । तपसा महता राजन् प्राप्तवान् ऋषिसत्तमम् ।। सिन्धुद्वीपश्च राजर्षिर्देवापिश्च महातपाः । ब्राह्मण्यं लब्धवान् यत्र विश्वामित्रस्तथा भुवि' ।। अथ 'गाधेरभून्महातेजाः समृद्ध इव पावकः । तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम्' ( भा० ९-१७-२० ) तथा 'ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः । क्षत्रियः सोऽप्यथ तथा ब्रह्मवंशस्य कारकः' (म० भा० श० प० ४-४८) । तथा 'एकाशीतिसंख्याकानाम् ऋषभदेवराजर्षेः पुत्राणां यवीयांस एकाशीनिर्जायन्तेयाः पितुरादेशकरा महाशालीना महाश्रोत्रिया यज्ञशीलाः कर्मविशुद्धा ब्राह्मणा बभूवुः (भा० ५-४-१३) ऋषभदेवपुत्रैः क्षत्रियैरपि ब्राह्मणवर्णत्वं तस्मिन्नेव जन्मनि प्राप्तम् ।। अथ सर्पभूतं नहुषं प्रति युधिष्ठिरवाक्यम्-(म० भा० आ० प० ८) सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा । दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः' । तथा (म० भा० व० प० १००-१-२) 'यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः । यत्रैतन्न भवेत् सर्प तं शूद्रमिति निर्दिशेत्' इति ।। (विष्णुपुराणे अं- ४-८-१) गृत्समदस्य शौनकश्चातुर्वर्ण्यप्रवर्तयिताऽभूदिति प्रकीर्तितम् ।। (हरिवंशे-२९-१५-२०)-'पुत्रो गृत्समदस्याऽपि शुनको यस्य शौनकाः । ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चापि तथैव चेति' ।। अथ सुधासिन्धौ श्रीहरिणोक्तं-'सृष्टचारंभे सर्वे ब्राह्मणा मासन् ।। अथ पद्मपुराणे उत्कलखण्डे ३८-४४ 'ससर्ज ब्राह्मणानग्रे सृष्टचादौ स चतुर्मुखः । सर्वे वर्णाः पृथक् पश्चात् तेषां वर्णेषु जज्ञिरे' ।। अथ (वा० रा० अ० का० १४-२९)-मनुर्मनुष्याञ्जनयद् रामपुत्रान् यशस्विनः । ब्राह्मणान् क्षत्रि-

यान् वैश्यान् शूद्राँश्च मनुजर्षभ ।। अथ शान्तिपर्वणि भृगुराह–'न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् । ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्' इति ।। '(अनुशास० पर्व० १४३–४९)–ज्ञानविज्ञानसम्पन्नः संस्कृतो वेदपारगः । विप्रो भवति धर्मात्मा क्षत्रियः स्वेन कर्मणा ।। एतैः कर्मगुणैर्देवि न्यूनजातिकुलोद्भवः । शूद्रोऽप्यागमसम्पन्नो द्विजो भवति संस्कृतः ।। एतत्ते गुह्यमाख्यातं यथा शूद्रो भवेद् द्विजः । ब्राह्मणो वा च्युतो धर्माद् यथा शूद्रत्वमाप्नुते ।। ७ ।। मृग्याः, कौशिकः कुशात्, जाम्बूको जम्बूकात्, वाल्मीको वल्मीकात्, व्यासो धीवरीकन्यातः, गौतमः शशपृष्ठात्, उर्वश्या वशिष्ठः, कुंभादगस्त्यः, सीता पृथिवीतः, ते गुणकर्मानुसारेण ब्राह्मणादयः ।। मनु० स्मृति–२ । १४८–'आचार्यस्त्वस्य यां जातिं विधिवद् वेदपारगः । उत्पादयति साविश्या सा सत्या साऽजराऽमरा,' अजरामरत्वं यावज्जीवनस्थायित्वं, जातेरुत्पत्तिश्च ज्ञापिता ।। मनु० २ । २८–स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः । महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' ।। म० भा० 'न चैव जन्ममात्रेण ब्राह्मी जातिर्भवेन्नृणाम् । न क्षात्री न च वा वैश्या नैव शौद्रीति निर्णयः ।। ब्राह्मणत्वादिरूपा हि या जातिः कल्पिता नृषु । कर्मैव कारणं तस्यां न जन्मेति सतीस्थितिः ।।' अथ (भ० पु० ४०–२५)–शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैव शूद्रताम् । क्षत्रियो याति विप्रत्वं विद्याद् वैश्यं तथैव च' ।। (स्क० पु० सह्याद्रिखण्डे)–मलेच्छबर्बरान् पर्शुरामः पप्रच्छ–'का जातिः कश्च धर्मश्च क्व स्थाने यैव वासनम्' ।। त ऊचुः–'जातिं पृच्छसि हे राम ! जातिः कैवर्तकः स्मृतः । सिन्धुतीरे कृतो वासो व्याधकर्मविशारदः' । 'सर्वे च गौरवर्णास्ते सुनेत्राश्च सुदर्शनाः । तेषां षष्टिकुलं श्रुत्वा पवित्रमकरोत्तदा ।। ब्राह्मण्यं च ततो दत्वा सर्वविद्यासु लक्षकम् । चितास्थाने पवित्रत्वात् चित्तपावनसंज्ञकाः ।। एते चित्तपावनब्राह्मणा जाताः' ।। अथ (भिल्लब्राह्मणा आभीरब्राह्मणाश्च)–ब्राह्मणोत्पत्तिमार्तण्डग्रन्थे कथिताः–विन्ध्याद्रौ वने रामः श्राद्धे विप्राऽभावेन चिन्तां जगाम, तत्र पञ्च कैवर्ताः प्राप्ताः, रामः प्रपच्छ–के यूयम् ? । ते प्राहुः–कैवर्ताः किराता वयम्, रामश्चिन्तयामास–इमान् द्विजान् करोमि, ततः पृथव्यां सप्त रेखाश्चकार, तान्नुल्लंघयामास, तदा प्रथमायां शुद्धभिल्लाः, द्वितीयायां शिल्पिनः, तृतीयायां शूद्राः, चतुर्थ्यां सच्छूद्राः, पञ्चम्यां वैश्याः, षष्ठयां क्षत्रियाः, सप्तम्यां विप्राः,–इत्येवं रामोऽब्रवीत्, तैः सह श्राद्धकर्माऽऽचरत् 'ततो रामोऽब्रवीत्तान्वै यूयं भूमौ द्विजातयः । भवन्तुभिल्लनामानश्चाभीराऽपरनामकाः' ।। गुर्जरे सुरतनगरे तैलिका घांचाश्चतुर्थवर्णाः श्रीमलि-

प्रियदासस्वामिना मोढवणिजः कृताः विप्रधर्मान् पालयन्ति ॥ (स्क० पु० सह्याद्रिखण्डे उत्तरकाण्डे-'अब्रह्मण्ये तदा देशे कैवर्तान् प्रेक्ष्य भार्गवः। विशिष्टाचारमादिश्य यज्ञसूत्रमकल्पयत् ॥ स्थापयित्वा स्वकीये सः क्षेत्रे विप्रान् प्रकल्पितान् ॥ (१०३-११) ते पर्शुरामकृता नम्पूतिरिब्राह्मणाः ॥ अथोत्तरप्रदेशीयाः कायस्था गुर्जरे भटनागरा जाताः ॥ (छां-उ० ४-४-२)-सत्यकामेन विद्यालाभाय स्वमाता पृष्टा-'किंगोत्रो न्वहमसीति'। सा प्राह-'नाऽहमेतद्वेद तात किंगोत्रस्त्वमसि, वह्वहं चरन्ती परिचारिणी यौवने त्वामलभे'-इत्येतदेववचनं सत्यकामजाबालस्य श्रुत्वा गौतम आह "नैतद् अब्राह्मणो विवक्तुमर्हति। समिधं सौम्याऽऽहर। उप त्वा नेष्ये। न सत्यादगा" इति ॥ (महाभारते व० प० २८-४)-'य एव सत्यान्नाऽपैति स ज्ञेयो ब्राह्मणस्त्वयेति' ॥ (ऐतरेयके ब्राह्मणे-८-१। ऋषयो ह वै सरस्वत्यां सत्रमासत ते कवषमैलूषं सोमोऽऽदनयन्, दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्ये दिक्षिष्टेति' ॥ (८-१)-तं बहिर्धन्वोदवहन्, अत्रैनं पिपासा हन्तु, सरस्वत्या उदकं मा पादिति ॥ (२-३५-१०)-एतदपो नप्त्रीयमपश्यत्, प्रवेकृत्रा ब्रह्मणे गातुरे त्विति, तं सरस्वती समन्तां पर्यधावत्, अपां नपान्मधुमतीरपोदाः, हिरण्यरूपः सहिरण्यसंदृक् अपां नपात्सेदु हिरण्यवर्णः" ॥ शूद्रः कवषः शैलूषो यज्ञे प्रविश्य दीक्षां गृहीतवान्, विप्रैर्ज्ञात्वा क्षुधितस्तृषितो म्रियतामिति मरुदेशे क्षिप्तः, तत्र तस्य महता तपसा सरस्वती प्रादुर्भूता, तेन द्विजत्वं ब्रह्मर्षित्वं च प्राप्तमिति ॥ अण श्वपाक्यात्तु पराशरो जातो ब्राह्मणः ॥ (व० स्मृ० अ-४०)-'आचारमनुतिष्ठन्तो व्यासादिमुनिसत्तमाः। गर्भाधानादिसंस्कारकलापरहिताः स्फुटम् ॥ विप्रोत्तमाः श्रियं प्राप्ताः सर्वलोकनमस्कृताः। जातो व्यासस्तु कैवर्त्याः श्वपाक्याच्च पराशरः ॥ शुक्यां शुकः, कणादाख्यस्ततोलूक्याः सुतोऽभवत्। मृगीजोऽथर्ष्यशृंगोऽपि वशिष्ठो गणिकात्मजः ॥ मन्दपालो मुनिश्रेष्ठो नाविकाऽपत्यमुच्यते। माण्डव्यो मुनिराजस्तु मण्डूकीगर्भसंभवः ॥ बहवोऽन्येऽपि विप्रत्वं प्राप्ता ये पूर्वमद्विजाः। हरिणीगर्भसंभूतः ऋष्यशृंगो महामुनिः ॥ तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ॥ अथ (शा० प० २९६-१०-१८)-'ऋषीणां च नदीनां च साधूनां च महात्मनाम्। प्रभवो नाधिगन्तव्यो महर्षीणां समुद्भवे ॥ यथा सर्वगतो ह्यग्निस्तथा तेजो महात्मसु' ॥ (हरिवं० ११-६-५८)-'नाभागारिष्टस्य पुत्रौ द्वौ वैश्यौ ब्राह्मणतां गतौ' ॥ (ब्र० पु० २२३-१४)-'स्थितो ब्राह्मणधर्मेण ब्राह्मण्यमुपजीवति। क्षत्रियो वाऽथ वैश्यो

वा ब्रह्मभूयं स गच्छति॥ (ब्र० पु० २२३। ३२।)-एभिस्तु कर्मभिर्देवि शुभैराचरितैस्तथा। शूद्रो ब्राह्मणतां गच्छेद् वैश्यः क्षत्रियतां व्रजेत्'॥ (वि० पु० ४-१९)-'तस्य त्र्यरुणपुष्करिणौ कपिश्च पुत्रत्रयमभूत्। तच्च त्रितयमपि पश्चाद् विप्रतामुपजगाम'॥ (शुक्रनीतिः-अ० १-१८)-'न जात्या ब्राह्मणश्चात्र क्षत्रियो वैश्य एव न। न शूद्रो न च वै मलेच्छो भेदिता गुणकर्मभिः'॥ (शु० नी० १-३९-४०)-'ब्रह्मणस्तु समुत्पन्नाः सर्वे ते किं न ब्राह्मणाः। न वर्णतो न जनकाद् ब्रह्मतेजः प्रपद्यते॥ ज्ञानकर्मोपासनाभिर्देवताऽऽराधने रतः। शान्तो दान्तो दयालुश्च ब्राह्मणश्च गुणैः कृतः॥ '(वृद्ध-गौतमस्मृतिः अ० २१। ९-१०) 'क्षान्तं दान्तं जितक्रोधं जितात्मानं जितेन्द्रियम्। तमेव ब्राह्मणं मन्ये शेषाः शूद्रा इति स्मृताः॥ न जातिः पूज्यते राजन् गुणाः कल्याणकारकाः। चाण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः॥ 'शंकराचार्यैर्बौद्धधर्मिणो वैदिकधर्मिणः कृतास्ते गुणकर्मादिभिर्विप्रादिषु सम्मिलिताः'॥ 'काश्यपो मुनिर्मिश्रदेशे गत्वा म्लेच्छान् सर्वान् ब्राह्मणाँश्चकार'॥ (भ० पु० प्रतिवि० खं० ४, अ० २०, ७५-७६)-'मिश्रदेशोद्भवा म्लेच्छाः काश्यपेनैव शासिताः। संस्कृताः शूद्रवर्णास्ते ब्रह्मवर्णमुपागताः॥ शिखासूत्रं समाधाय पठित्वा वेदमुत्तमम्। यज्ञैश्च पूजयामासुर्देवदेवं शचीपतिम्'॥ (भ० पु० प्रति० ४ अ० २१)-'सरस्वत्याज्ञया कण्वो मिश्रदेशमुपाययौ। म्लेच्छान् संस्कृतमाभाष्य तदा दशसहस्रकान्॥ वशीकृत्य स्वयं प्राप्तो ब्रह्मावर्ते महोत्तमे। सपत्नीकांश्च तान्म्लेच्छान् द्विजवर्णान् समाकरोत्' एवं 'वैदेशिका इहागत्य शाकद्वीपादितः पुरा। बहवः संघशोऽभूवन् ब्राह्मणाः क्षत्रिया विशः॥ म्लेच्छास्ते वैष्णवाश्चासन् रामानन्दप्रभावतः'॥ (भ० पु० प्रति० ख० ४-अ० २१) एवं पल्लीसंज्ञकशूद्रः-'श्रेष्ठः श्रीवैष्णवाचार्यः शठकोपोऽन्त्यजात्मजः। जन्मकर्मविशुद्धानां ब्राह्मणानामभूद् गुरुः'॥ (अथ याज्ञवल्क्यस्मृतिमिताक्षरायाम्। १-९०)-यथा गोत्वोष्ट्रत्वमनुष्यत्वादयो जातय आकृतिग्रहणाः, न तथा ब्राह्मणत्वादयः, आकृत्यादिभेदाभावात्। अतो ब्राह्मणत्वादयो नाऽऽकृतिप्रयोज्याः, किन्तु गुणप्रयोज्याः' ब्राह्मण्यादिजातिः स्मरणलक्षणा, धृतराष्ट्रपाण्डुविदुराः, क्षेत्रजामातृजातीयाः। (व्याकरणमहाभाष्ये पतञ्जलिनोक्तं)-'सर्वे एते शब्दा गुणसमुदायेषु वर्तन्ते,-ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति' (अष्टा० ५-१-११५) इत्यभिधातुं शक्यते, जात्यन्तरे प्रयुज्यमानत्वात्। यदि ह्येते खलु जातिशब्दा विद्येरन् न गुणशब्दाः, तदा न जातु जात्यन्तरे प्रयुज्येरन्, न ह्यश्वशब्दो गवि,

गोशब्दश्चाऽश्वे क्वचित् प्रयुज्यते, । प्रयुज्यन्ते चैते जात्यन्तरेऽपि-'ब्रह्म वाऽजः (शत० ६-४-४-१५), क्षत्रं वा अश्वः (श० १३-२-२-१७), वैश्यं च शूद्रं चाऽनुरासभः (श० ६-४-४-१२), ब्रह्म वै पलाशः (श० १-३-६-१९), क्षत्रं वा एतदोषधीनां यद् दूर्वा (ऐ० ८-२-४), इति, अतो ब्राह्मणत्वादयो वर्णवाचका न तु जातिवाचकाः। वृ-संवरणे, वृङ्-संभक्तौ, वृञ् आवरणे, इतिधातुनिष्पन्ना वर्णशब्दास्तत्क्रियागुणपरा न तु जातिपरा इति। नहि स्त्रीत्वं पुंस्त्वमेकत्र नियतं, सर्वप्राणिषु भेदद्वयसत्त्वात्, भेदस्य देहांगनियतत्वात्, सुद्युम्नराजस्य तस्याऽश्वस्य च शिवभूमौ हिमालये पार्वतीशापात् स्त्रीत्वाऽऽपातात्, ततोऽपि मासं स्त्री मासं पुमानिति तत्सन्तानस्यापि भागवतादावुक्तेर्व्यवस्थानात्। पुरुषेण विष्णुना मोहिनीरूपधारणात्। अद्वैतमतेन ब्रह्मणो नरनारीनपुंसकरूपधारणात् नपुंसके सांकर्याच्च न स्त्रीत्वादिजातिः, कुतो ब्राह्मणत्वादिरिति। किन्तु अवयवप्रयोज्यो वर्ण एव व्यवहारमात्रसम्पादकः, नहि जातिसिद्धिः। मतंगो महर्षिर्नापिताद् ब्राह्मण्यां जातो गर्दभवाक्यान्मातृव्यभिचारमवगच्छँस्तपश्चक्रे पम्पासरस्तटे कुलपतिर्जातो यस्याऽऽश्रमे तच्छिष्या अनेके ब्राह्मणा न्यवसन्, मतंगो यज्ञकर्त्रा पित्रा यज्ञे प्रेषितो गर्दभशकट्या गच्छन् प्रतोदेन मुहुर्नासिकायां गर्दभं जघान, तदा व्रणं वीक्ष्य गर्दभी प्राह-मा शुचः पुत्र! चाण्डालोऽयमधितिष्ठति, अयं पापप्रकृतिर्दयां न कुरुते, 'एतच्छ्रुत्वा मतंगस्तु रासभीं प्रत्यभाषत। कथं मां वेत्सि चाण्डालं ब्राह्मण्यं येन नश्यते॥ साऽऽह-ब्राह्मण्यां काममत्तायां त्वं वृषलेन जातस्तेन ब्राह्मण्यं ते न। ततो गत्वा महारण्यमतपत् स महातपः'॥ इति॥ अथ (म० भा० अ० ५०-अ० २८) वीतहव्यो राजा स्वपुत्रैः द्वारा दिवोदासवंशमनाशयत्। दिवोदासपुत्रः प्रतर्दनो वीतहव्यवंशम् अनाशयत्, वीतहव्यो भृग्वाश्रमे शरणं गतः, प्रतर्दनस्तत्र गत्वा प्राह वीतहव्यं देहि, भृगुराह-अत्र सर्वे ब्राह्मणाः, नैकोऽपि क्षत्रियः। प्रतर्दनः प्राह-एवं चेत्, ऐकोऽपि मया क्षत्रियत्वेन त्याजितः, क्षमस्व मामिति प्रतिगतः। वीतहव्यो ब्राह्मणो जातो भृगुवचनेन, वीतहव्यपुत्रो गृत्समदो ब्राह्मणः, अस्य वंशे वर्चा-विहव्य-वितत्य-सत्य-सन्त-श्रवा-तम-प्रकाश-वागिन्द्रप्रमितिप्रभृतयो ब्राह्मणा जाताः, तद्वंशे शौनकाद्या ब्राह्मणाः॥ अथाऽम्बरीषप्रपौत्रो रथीतरः सन्तानाय स्वभार्यायाम् अंगिरसं नियुयोज, तत्पुत्रा आंङ्गीरसा ब्राह्मणाः॥ एवं गर्गाच्छिनिः ब्राह्मणो जातः॥ अजमीढक्षत्रियवंशे ब्राह्मणा अपि बभूवुः॥ मुद्गलात् क्षत्रात् मौद्गल्या ब्राह्मणा

बभूवुः। धृष्टात् क्षत्रात् धाष्र्ट्यं ब्राह्मणकुलं जातम् ॥ अक्रियनामक-क्षत्रस्य क्षेत्रेऽग्निवेश्यः कानीनो जातूकर्ण्यो ब्राह्मणो जज्ञे, अग्निवेश्यायनं कुलं जातम् ॥ भरद्वाजाद् भारद्वाजा ब्राह्मणा जाताः ॥ गर्गस्य दायादस्य शिबेः शैब्या ब्राह्मणा जाताः ॥ ऊरुक्षवस्य क्षत्रस्य पुत्रा ब्राह्मणा जाताः ॥ आजमीढस्य पुत्रा कण्वादयः काण्वायना ब्राह्मणा जाताः ॥ मुद्गलस्य मौद्गल्या ब्राह्मणा जाताः ॥ भारते ब्राह्मणा म्लेच्छैर्म्लेच्छीकृता होरा पिराणा–मुमना–मेमण-खोजाप्रभृतयो ब्राह्मणत्वाच्च्याविता वर्तन्ते ॥ नाभागरिष्टपुत्रौ द्वौ वैश्यौ ब्राह्मणतां गतौ ॥ पृषध्रो गुरोर्गां हिंसित्वा शूद्रत्वमापन्नः ॥ बलेः पुत्रा बालेया ब्राह्मणा जाताः ॥ सुदेष्णायां बलिक्षेत्रे दीर्घतमःपुत्रा ब्राह्मणा जाताः ॥ (भविष्यपु०)–पञ्चपुत्रा ययातेश्च त्रयो म्लेच्छत्वमागताः ॥ विश्वामित्रस्तपसा ब्रह्मर्षिरभवत्' ॥ 'ऋग्वेदब्राह्मणस्याऽऽसीत् कर्ता यस्त्वैतरेयकः । दासीपुत्रः सविख्यातो ब्राह्मण्यं कर्मणा गतः ॥ स एव महीदासः ॥ अथ–(भ० पु०)–'त्रिपाठिविप्रभार्या व्याधेन रुग्धा पुत्रं व्याधकर्मिणं सुषुवे। पित्रा मातृपुत्रौ निष्कासितौ, व्याधकर्मा शिवामन्दिरे पाठकविप्राय धनं दत्वा दीक्षां जग्राह 'ओंनमः शिवाय' जजाप। पापानि कृमिरूपेण निष्क्रान्तानि, त्रिवर्षान्ते शुद्धो बभूव, शिवास्वप्ने ऋग्विद्यां ददौ, ततः स विक्रमादित्यस्य यज्ञाचार्यो बभूव ॥ अथाऽन्यो व्याधो ब्राह्मणसहस्राणि सस्त्रीकानि हतवान्, स ब्राह्मणं शरणं ययौ, ब्राह्मणः–देविकास्नानेन मद्दर्शनेन विष्णुनामजपेन च शुद्धोऽसि तपः कुरु। तपसि दुर्वासा वचो ददौ।–'उवाच वेदाः सांगास्ते सरहस्यपदक्रमाः। ब्रह्मविद्यापुराणानि प्रत्यक्षाणि भवन्तु ते ॥ भवान् सत्यतपा नाम ऋषिराद्यो भविष्यति। तव सूक्ष्मं तनु पापभूतं नष्टम्, द्वितीयं ब्राह्मणगुणं तनु जातम् ॥ अथ शूद्रयोनौ जातस्य काक्षीवतः तपसा मातृजकायपरिवर्जनाद् ब्राह्मण्यं जातं तत्सुता ब्राह्मणाः कौष्माण्डा गौतमाश्च जाताः ॥ पर्शुरामेण भयं प्रापिताः क्षत्रिया ब्राह्मणा वैश्याश्च जाताः ॥ क्षत्रियविधवा ब्राह्मणैः पुत्रानुत्पादयामासुस्ते क्षत्रिया जाताः (वराहपुराणे) ॥

गीतोक्ता–'स्त्रीषु दुष्टासु वार्ष्णेय ! जायते वर्णसंकरः। संकरो नरकायैव कुलजानां कुलस्य चे'ति तु गुणसाजात्ये वर्णसाजात्यं यत्र तत्र न सांकर्यं किन्तु गुणवैजात्ये कर्मवैजात्यं यत्र तत्र गुणसाजात्यस्य कर्मवैजात्ये सांकर्यं, स्त्रीणां दुष्टत्वमपि गुणसाजात्ये कर्मवैजात्यं कर्मसाजात्ये वा गुणवैजात्यमितिरूपं बोध्यं तेन हिंसादिप्रवृत्तो म्लेच्छात्मकेऽपत्ये नरकप्रदत्वं ततो न दोषितव्यमित्यभिप्रायः ॥

अथ महाराष्ट्रे जावालकाष्ठब्राह्मणाः, आन्ध्रे आराध्यब्राह्मणाः, गुर्जरे कण्डोलाऽऽभीराऽनाविलब्राह्मणाः, राजस्थाने पुष्करणा ब्राह्मणाः, प्रतापगढे अहीरब्राह्मणाः, गोरक्षपुरे पाण्डेयशुक्लमिश्रा ब्राह्मणाः, ग्रामताडाप्रदेशस्य पाठकब्राह्मणाः, द्रविडाद् ओझाब्राह्मणाः, विहारे भूमिहारा ब्राह्मणाः, पञ्जाबदेशस्य आभीरगुज्जरब्राह्मणाः, मध्वाचार्येण कृता अभिनवब्राह्मणाः, कर्णाटके मत्तिब्राह्मणाः, नागमाचीब्राह्मणाः, मोद्रीब्राह्मणाः, तम्बलब्राह्मणाः, सौराष्ट्रे खेडावालकर्षुकब्राह्मणाः, गुर्जरे भाटलाब्राह्मणाः, महाराष्ट्रे सेनव्या ब्राह्मणाः, कर्णाटके हैगा ब्राह्मणाः, उडासायां मस्ताना ब्राह्मणाः, ज्वालादेव्यां भोजकसारस्वताः, मरुदेशे डकोताब्राह्मणाः, चर्मकारेभ्यो गरुडिया गरोडा ब्राह्मणाः, वंगदेशे युगीब्राह्मणाः, द्राविडे पटवेगरा ब्राह्मणाः, द्रविडे अय्यरा ब्राह्मणाः, दक्षिणे भाटा ब्राह्मणाः, गणका ब्राह्मणाः, राजस्थाने हुसेनीब्राह्मणाः, सिलहटे मालाकारा ब्राह्मणाः, मिथिलायां राज्ञा जयचन्द्रेण कोलभिल्लमुशहराअभिनवब्राह्मणाः कृताः, मैथिलदेशे मलिच्छामय-सतलखे-वाटधानय-सुअरिवार-ब्राह्मणाः, एवं मध्यदेशे वैठा ओझाः कनोजियाः सरयूपारिणो दुबेतिवारीदिक्षिताः अवस्थि-पाठकाः विद्यन्ते, तदेतेषामागन्तुकब्राह्मणत्वं तत्तदैतिहासिकप्रमाणितम् ॥

जन्मतो ब्रह्मपुत्राणां सनकादीनां सात्त्विकगुणकर्मविशिष्टतया ब्राह्मणत्वं, संस्कारेण भरद्वाजजावालादीनां, तपसा विश्वामित्रादीनां, विद्यया काक्षीवत्कवषादीनां, व्रतैरार्षभाणां, भृगुवरदानेन वीतहव्यानां, च ब्राह्मणत्वमितिहासैर्ज्ञायते। अत्रिस्मृतौ ब्राह्मणानामपि गुणकर्मानुसारेणाऽऽचाण्डालान्तवर्णत्वं वर्णितम्। बोधायनर्षिणा जातब्राह्मण-श्रोत्रिय-ऽनूचान-ऋषि-कल्प-भ्रूणऋषि-भूदेवेतिभेदास्तत्तदुत्कर्षेण कथिताः ॥

वैराजाऽङ्गानि ब्राह्मणक्षत्रियवैश्यशूद्रात्मकानि तु विद्या-बल-धन-श्रमाद्यर्थपराणि समष्टिव्यष्टिरूपाणि बोध्यानि, तच्चतुष्टययुक्तो मानवः सर्वोऽपि न्यूनाऽधिकतया चतुर्वर्णो भवन् स्वयात्रापारकृत् सम्पद्यते, सर्वशरीरिषु विद्यादिचतुष्टयं विद्यत एव, तस्मात् सर्वगुणसम्पादने सर्वेषामधिकारः, भेददृष्ट्यनधिकारस्तु पतनफलक एव, आचार्यसाधुगुरूपदेष्ट्रादिसमाजोऽपि परोक्षे विवदमानो भेदिसम्प्रदायप्रवर्तको नान्तरीयकपरस्परघृणाजन्मकृदिति स एव तामिस्रो वा पञ्चपर्वाऽविद्यात्मको येनाऽत्र परत्र पूर्णत्वनिरोध इति तत्फलं त्वनभ्युदय एवेति दृश्यते। सृष्टिप्रारम्भे ब्राह्मणवर्ण एवाऽऽसीत्, मा-

नुषत्वं पशुत्वं पक्षित्वं वृक्षत्वं वल्लीत्वं स्त्रीत्वं पुंस्त्वं च यद्यपि तत्त-
दवयवकृतं न व्यभिचरति तदन्तर्भूतं ब्राह्मणत्वादिकं तु व्यभिचर-
त्येवेति न ब्राह्मत्वादिकं जातिः। कपिलेनापि 'मानुषकस्त्वेकविधः
सर्गः' इतिगर्भाधानप्रयोज्यं मानुषत्वं त्वेकमेव जातिरूपं व्यावहारि-
कशाश्वतं स्वाधिकरणात्मकमुक्तम्। अतः सन्यासिवैष्णवशैवसाध्वी-
साधुनां सुतरां गुणकर्मकृतं ब्राह्मणत्वं ब्रह्माऽणाद् विशेषतो ब्रह्मसम्ब-
न्धाच्चेति। ब्राह्मणानां यवनाऽत्याचाराऽविनाभूताऽऽपन्नयवनत्वं द-
शकोटीनां चाप्यागन्तुकं न शाश्वतम्। ब्राह्मणत्वं नामाऽग्रजन्मत्वम्,
तच्च येनकेनापि सत्कर्मणा वा चात्युत्कर्षत्वम्। क्रोधद्वेषवैरलोभ-
चौर्यस्पृहाद्वन्द्वादिरहितत्वे सति परित्यक्ततामसाहारत्वे सति अहिंसा-
वृत्तित्वे सति ब्रह्मचर्यव्रतित्वे सति सत्यशौचादिधर्मवत्त्वं ब्राह्मणत्व-
मिति वैशम्पायनोक्तं लक्षणं यत्र लक्षणयोग्यता वा यत्र तत्र ब्राह्म-
णत्वं तच्च यत्र क्वापि भवितुमर्हति। एवं सर्ववेदशास्त्रपुराणसूत्रोप-
निषदितिहासोपाख्यानादिवाचनाऽध्ययनाऽध्यापनादिप्रवृत्तिमत्त्वमपि
यथाबुद्धि मानवानामधिसम्पन्नं गुरुत्वमपि तद्गुणसारत्वाद्युपपद्यते।
सूतव्याधाऽन्त्यजगणिकादिनिदर्शनानि गुरुत्वावेदकानि शास्त्रेषूपलभ्य-
न्ते तान्यपि गुणकर्मकृतान्येव। मानुषं जन्म परमेश्वरप्राप्त्यर्थं त्व-
त्यतिनिकटसोपानतममिति परमेश्वराऽवताराास्तदंशसाधवोऽपि या-
वन्मानुषकलेवरिणामुद्धरणाय सृष्टौ स्वोपस्थितिं निर्वहन्तीति तेषां
सर्वमानुषेषु किमु चतुःखनिष्वपि ब्रह्मभावाऽऽधानयत्नवत्त्वं निराबा-
धमेव। श्रीस्वामिनारायणभगवता गुर्जरादिदेशेषु शरणागतविविध-
नरनारीणां तथाविधब्राह्मणत्वप्राप्तिमहापथसन्तानः सम्प्रवर्तितोऽद्या-
पि ब्राह्मणत्वाधायको दीक्षाविधिः स्वरूपे सध्रीचीनीकृत आसृष्ट्य-
न्तं चिरजीवनो विराजिष्यत इति। अत एव विष्णुयागादावपि दी-
क्षितानां येषां केषाञ्चिदपि मानवानामजादीनां च ब्राह्मणत्वमेव ब्रह्मा-
र्पणलाभार्थं वेदमन्त्रैः सम्प्रापितमिति, फलादीनामपि ब्राह्मणत्वं तत्र
तत्र क्रियते। अद्वैतवादे यो भेदः सद्दशायां नासीद् द्वैतारम्भदशा-
यामपि नाऽभून्मध्यदशायामविद्ययाऽऽक्षिप्तः स्वरूपाद्विकासितोऽपि भे-
ददेहोऽवनतिस्थौल्यरूपतया परिणतोऽपि न सध्रीचीनतामनुभवतीति
जात्यादीनामपि न सध्रीचीनता। वाराणस्यां ब्राह्मणमहासम्मेलने
वैष्णवाचार्याणां 'सर्वजातिभ्यो वैदिकमन्त्रप्रदानम् ओंविशिष्टतया
क्रियते तद्वेदानुसरणं न वेति' विचारे विद्वद्भिस्तत्राऽऽचार्या एव
प्रमाणं शास्त्रं त्वाचार्यनिर्मितिं शास्त्रमाचार्याननुसरेत् नत्वाचार्यः
शास्त्रमिति निर्विवादं निर्णीतं, तथा च शास्त्रोक्तमपि ब्राह्मण्यम्

आचार्यप्रदर्शितगुणकर्माऽधीनमेवेति साम्प्रतं विनाशोन्मुखतापिशाचिन्या स्वीकारितं तर्हि विद्यया कथं न स्वीकारितं भवेदिति। ब्रह्मवैवर्तपुराणे तिष्ये मानवानामेकारताऽऽवेदिता, अतो वीर्यक्षेत्रनिषेकप्रसूतिसमयसंगतिपुण्याऽपुण्यस्वभावदेशकालध्यानादयो ब्राह्मणत्वादौ कारणानीति कार्यं नैकान्ततः कुलजं वा दायभाग्भाजं, परिवर्त्तनदर्शनात् ॥

अथ नित्यत्वे सत्यनेकसमवेतत्वं जातित्वं चेत् ?, मध्यावकाशे व्यभिचारः, स्वरूपेण चेत् ?, नैयत्याऽभावात् सांसर्गिकव्यभिचारः, अवयविनामनस्तित्वे धर्मात्मकतदस्तित्वे त्वनैकान्त्यम्, स्वरूपासिद्धिश्च, तदनाश्रितत्वे सामान्यत्वहानिः। समानप्रसवात्मिका जातिरिति चेत् ?, प्रसवधर्मिरूपायास्तस्या नित्यत्वहानिः॥ यद्धि केषाञ्चिदभेदं कुत्रचिद्भेदं करोति तत्सामान्यविशेषो जातिर्गोषु गोत्वमिति मनुष्य ब्राह्मणत्वादिरिति चेति॥ अत्रोच्यते—नहि गवादाविव मानवेषु ब्राह्मणादावाकृतिविशेषो दृश्यते। आकृत्या समानेषु विशेषरूपाऽऽकृतिव्यङ्ग्या हि जातिः। ननु नाऽयं नियमः, सति त्वाकृतिभेदे तद्भेदः, न तु ब्राह्मणादिष्वाकृतिभेदः, ततोऽन्यदेव तद्व्यञ्जकम्, तच्च प्रत्यक्षादिकम्,—'अयं ब्राह्मणोऽयं ब्राह्मणः, अयं गौरयं गौरितिवत्, तच्च मातापित्रोः प्रत्यक्षमिति चेन्न। स्वज्ञप्त्यधीनज्ञप्तिकत्वादात्माश्रयः, मातापित्रोर्ब्राह्मणत्वज्ञाने तन्मातापित्रोर्ब्राह्मणत्वज्ञानं तन्मातापित्रोर्ब्राह्मणत्वज्ञानं तन्मात्रापित्रोश्चेत्येवमनवस्थापातात्। ननु नाऽयं दोषः, संसारस्याऽनादित्वादिति चेन्न। ब्राह्मणाद् ब्राह्मण्यां व्यभिचारेण जाते कुण्डे गोलकेऽपि ब्राह्मणत्वापत्तेः। नन्वभिव्यञ्जकं सापेक्षं, यथा-'विन्नास्वेव विधि'रिति सापेक्षान्नकुण्डादौ ब्राह्मण्यम्, तस्माद् ब्राह्मणत्वादिकं प्रात्यक्षिकं सापेक्षं निराबाधम्।

नैतद् युक्तम्—नहि निपुणतरमीक्षणेऽपि रत्नेष्विव ब्राह्मणादिषु पिण्डतत्संस्थानादृते कश्चिद् विशेषोऽवगम्यते, अतः प्रात्यक्षिकं तदिति तु स्वाभिमतिविजृंभितमेवेति। यद्वा दृश्यते चेत् ?, तत्र किं दृश्यते॥ पिण्डसंस्थानाऽतिरेकि या जातिर्भवेत्। आकृतिर्हंस इति प्राक्केनाऽप्यप्रतिबोधितोऽदृष्टपूर्वं हंसं प्रथमतः पश्यँश्चक्षुर्ग्रहणयोग्यामपि हंसत्वजातिम्—'अयमेतज्जातीय इति न जातिं गृह्णाति, किन्तु धर्मिमात्रं साक्षात् करोति, तत्र संस्थानातिरेकेण न कांचिज्जातिमुपलभामहे, पिण्डे दृश्यमाने संस्थानं दृश्यत एव, तस्माद् ब्राह्मण्यादिजातिर्नाऽध्यक्षसिद्धा, ब्राह्मणोऽयं ब्राह्मणोऽयमित्यनुगतप्रत्यक्षेऽपि सौसादृश्य—चर्म्मचक्षुर्गोचरम्, सौसादृश्यं तु गुणसंस्थानाद्यात्मक-

विशेषमेव, प्रत्येकं तु ज्ञानद्वयम्, तत्राऽयमिति धर्मिणोऽध्यक्षम्, ब्राह्मण इति सांकेतिकगुणसंस्थानादिविशेषस्य स्मरणम्, तत्र विशिष्टोत्पत्तिर्ब्राह्मण्यमिति तु सुतरां प्रतिषिद्धम्, अतः सर्वत्र संस्थानमेवाऽसाधारणो धर्मो जातिव्यवहार्योऽवयवसंश्लेषात्मक एवाऽध्यक्षः, तं विना न जातु पिण्डमात्रं दृश्यते, ब्राह्मणत्वादिकं नाऽध्यक्षम्, यतस्तन्नाऽवयवसंश्लेषविशेषरूपम्, किन्तु प्रकृतिपरिणतेरसाधारणगुणविशेषरूपम्, गुणविशेषश्च प्रचुरसत्त्वादि, तच्च शरीरविशेषे, सत्त्वप्रचुरान्मातापितृशरीरादुत्पन्नं हि शरीरं सत्त्वप्रचुरमेव। तस्मात् सन्तानपरम्परायामपि शारीरगुणादिविशेषादेव जातिव्यवस्था सुकल्पा, अन्तःकरणगुणविशेषादपि सा व्यवस्था, आत्मगुणनिबन्धनाऽपि च, इत्थं च वर्णभेदनिबन्धना विधिनिषेधा उपपद्यन्ते,—'पित्रोः सत्यपि सत्त्वविशेषरूपे ब्राह्मण्ये क्वचित् तामसविशेषे दुश्चरितजन्यपापविशेषरूपे शूद्रत्वे वर्तमाने तज्जन्याऽपत्ये गुणाऽन्यथाभावसंभवात्। वाराहभगवत्तो भौमाऽसुरजन्म श्रूयते, श्रीकृष्णभगवत्तः सहस्रकाकानुगमितस्य चारुदेष्णस्य हिंस्रस्य जन्मश्रूयते, हिरण्यकशिपोः प्रल्हादभक्तजन्म श्रूयते, जमदग्नेः परशुरामजन्म श्रूयते, तत्र जन्यजनकानां विभिन्नप्रकृतिः, गुणाऽन्यथाभावोऽपि ऋषिशापमात्रेण क्षत्रियत्रिशंकोश्चाण्डालशरीरवत्ता, क्षत्रियविश्वामित्रस्य ब्रह्मणोऽनुग्रहाद् गुणविशेषसम्पत्त्या ब्राह्मण्यसिद्धिः, नहुषस्य क्षत्रियस्य मुनिशापात् सर्पत्वसम्पत्तिः, श्वपच्या अरुन्धत्या वशिष्ठग्रहेण ब्राह्मणीत्वम्, गोपपुत्र्या वेधसा ग्रहाद् गायत्रीत्वम्, इयं गुणविशेषपरिवर्तनरूपा जातिः सर्वत्र न प्रत्यक्षा, यत्र न प्रत्यक्षा, तत्राऽऽप्तवाक्यनिश्चेया, यथा 'ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति तं होवाच किंगोत्रोऽसि नु सौम्ये'ति। जाबालोऽपि स्वाऽब्राह्मण्यशंकामपनेतुं मातरं पृच्छति—'ब्रह्मचर्यं भवति! विवत्स्यामि किंगोत्रो न्वहमस्मीति, माताऽऽह—त्वम् ऋषिपुत्रोऽसीति। यः सत्यवक्ता स ब्राह्मण इति सत्येन वृत्तेन निश्चितः, वृत्तविशेषलक्षणं ब्राह्मण्यं तत्र प्रमाणितम्। 'सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा। दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः'। 'शूद्रे तु यद्भवेल्लक्ष्म द्विजे तत्तु न विद्यते। न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः'। 'यत्रैतल्लक्ष्यते सर्प! वृत्तं स ब्राह्मणः स्मृतः'। जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः। वेदाध्ययनसम्पन्नः षट्सुकर्मस्ववस्थितः॥ शौचाचारस्थितः सम्यग् विघसाशी गुरुप्रियः। नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते॥ सत्यं दानमथाऽद्रोह आनृशंस्यं दया घृणा। तपश्च दृश्यते

यत्र स ब्राह्मण इतिस्मृतः ।। क्षत्रजं सेवते कर्म वेदाध्ययनसंगतः ।
दानाऽदानरतिर्यस्तु स वै क्षत्रिय उच्यते ।। वाणिज्या पशुरक्षा च
कृष्यादानरतिः शुचिः । वेदाध्ययनसम्पन्नः स वैश्य इतिसंज्ञितः ।।
'सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः । त्यक्तवेदस्त्वनाचारः स वै शूद्र
इतिस्मृतः ।। शूद्रे चैतद्भवेल्लक्ष्म द्विजे तत्तु न विद्यते । न वै शूद्रो
भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः' ।। इत्यात्माऽपि न स्वतो ब्राह्मणो
वा क्षत्रियो वा वैश्यो वा शूद्रो वा संकरः, वा, किन्तु ज्ञानैकघनः,
तस्य शरीरादौ प्रकृतिविशेषगुणादिसम्बन्धौपाधिको ब्राह्मणादिव्यवहारः,
संस्कारविशेषविशिष्टवृत्तविशेषे वा ब्राह्मणत्वादिकमिति । भविष्यपुरा-
णे–'गोवर्गमध्यं प्रगतो यथाऽश्वो निर्धार्यते ज्ञैः सुविचक्षणत्वात् । मनु-
ष्यभावादविशिष्यमाणस्तद्वद् द्विजः शूद्रगणान्न भिन्नः ।। मनुष्यजातेर्न
परो विशेषो यः कल्पते सर्वनरानुयायी' ।। 'तस्मान्नहि विभेदोऽस्ति न
बहिर्नाऽन्तरात्मनि । न सुखादौ न चैश्वर्ये नाऽऽज्ञायां नाऽभयेष्वपि ।।
न वीर्ये नाऽऽकृतौ नाऽक्षे न व्यापारे न चाऽऽयुषि । नांऽगे पुष्टे न
दौर्बल्ये न स्थैर्ये नाऽपि चापले ।। न प्रज्ञायाँ न वैराग्ये न धर्मे न
पराक्रमे । न त्रिवर्गे न नैपुण्ये न रूपादौ न भेषजे ।। न स्त्रीगर्भे न
गमने न देहमलसम्प्लवे । नाऽस्थिरन्ध्रे न च प्रेम्णि न प्रमाणे न
लोमसु ।। शूद्रब्राह्मणयोर्भेदो मृग्यमाणोऽपि यत्नतः । नेक्ष्यते सर्वधर्मेषु
संहतैस्त्रिदशैरपि ।। न ब्राह्मणाश्चन्द्रमरीचिशुभ्रा न क्षत्रियाः किंशुक-
पुष्पवर्णाः । न चेह वैश्या हरितालतुल्याः शूद्रा न चांगारसमानवर्णाः ।।
पादप्रचारैस्तनुवर्णकेशैः सुखेन दुःखेन च शोणितेन । त्वङ्मांसमेदोऽ-
स्थिरसैः समानचतुष्प्रभेदा हि कथं भवन्ति ।। वर्णप्रमाणाकृतिगर्भवास-
वाग्बुद्धिकर्मेन्द्रियजीवितेषु । बलित्रिवर्गामयभेषजेषु न विद्यते जातिकृतो
विशेषः ।। चत्वार एकस्य पितुः सुताश्च तेषां सुतानां खलु जातिरेका ।
एवं प्रजानां हि पितैक एव पित्रेकभावान्न च जातिभेदः ।। फलान्यथो-
दुम्बरवृक्षजातेर्यथाग्रमध्यान्तभवानि यानि । वर्णाकृतिस्पर्शरसैः समानि
तथैकतोजातिरिति प्रचिन्त्या ।। पृथिव्युदग्वाय्वग्निपरिणामाऽविशेषतः ।
देहतः सर्वभूतानां ब्राह्मणत्वं प्रसज्यते ।। मिथो मानुषदेह्यात्मा गर्भ-
योग्योऽस्ति सर्वथा ।। ब्राह्मणाद्याः सर्ववर्णा गर्भयोग्या मिथो यतः ।
न परस्परवैजात्यं गोऽश्वश्वादिसमं यतः । संस्कृतोऽपि दुराचारो नरकं
याति मानवः ।। निःसंस्कारः सदाचारो भवेद्विप्रोत्तमः सदा ।। ये तु
हिंसापारदार्यसुरास्तेयादिसंभृताः । ह्रापयन्ति न हेयानि कथं ते गुरवः
क्षितौ ।। न वै गुरवो वेदाढ्यैः राक्षसा रावणादयः ।। आचारहीनान्न
पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरंगैः । शिल्पं हि विद्याध्ययनं

द्विजानां वृत्तं स्मृतं ब्राह्मणलक्षणं तु ।। हेयोपादेयतत्त्वज्ञास्त्यक्ताऽन्याययथागमाः। जितेन्द्रियमनोवाचः सदाचारपरायणाः ।। नियमाचारवृत्तस्था हिताऽन्वेषणतत्पराः। संसारमोचनोपायक्रियायुक्तमनोरथाः ।। सम्यग्दर्शनसम्पन्नाः समाधिस्था हतक्रुधः। स्वाध्यायसक्तहृदयास्त्यक्तसंगा विमस्तराः ।। विशोका विमदाः शान्ताः सर्वप्राणिहितैषिणः। सुखदुःखसमालोका विविक्तस्थानवासिनः ।। व्रतोपयुक्तसर्वांगा धार्मिकाः पापभीरवः। निर्ममा निरहंकारा दानशूरा दयापराः ।। सत्यब्रह्मविदः शान्ताः सर्वशास्त्रेषु निष्ठिताः। सर्वलोकहितोपायप्रवृत्तेन स्वयंभुवा ।। ब्रह्मणा कृतमर्यादास्त एव ब्राह्मणाः स्मृताः। बृहत्त्वाद् ब्राह्मणो ब्रह्मा नाभेयास्तस्य ये जनाः ।। भक्त्यासक्ताः प्रपन्नाश्च ब्राह्मणास्ते प्रकीर्तिताः। क्षत्रियास्तु क्षतत्राणाद् वैश्या वार्ताप्रवेशनात् ।। ये तु श्रुतेर्द्रुतिं प्राप्ताः शूद्रास्तेनेह कीर्तिताः। क्षमा दमो दया दानं सत्यं शौचं धृतिर्घृणा ।। मार्दवाऽऽर्जवसन्तोषाऽनहंकारतपःशमाः। धर्मो ज्ञानमपैशुन्यं ब्रह्मचर्यममूढता ।। ध्यानमास्तिक्यमद्वेषो वैराग्यं च शमात्मता। पापभीरुत्वमस्तेयमनुतिष्ठन्ति मानवाः ।। ब्राह्मण्यं पुष्कलं तेषां नित्यमेव प्रवर्तते। यत्र वा तत्र वर्णे वा उत्तमाऽधममध्यमाः ।। निवृत्तः पापकर्मभ्यो ब्राह्मणः स विधीयते' शूद्रोऽपि शीलसम्पन्नो ब्राह्मणादधिको भवेत् ।। ब्राह्मणो विगताचारः शूद्राद्धीनतरो भवेत् ।। विप्राद्द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचो वरिष्ठः' (भागवतम्) ।।

वस्तुतस्तु–सदाचारसहकृतब्रह्मविज्ञानरूपब्राह्मण्यसम्पन्नो ब्राह्मणः, स च सर्वासु पृथिवीषु सर्वासु प्रजासु नरेषु नारीष्वपि सर्वमानवेषु च तत्तदर्ह्येषु वर्तत एवेति, वेदव्यासेनापि पातञ्जलयोगभाष्ये सर्वदेशेषु सूर्यसंयमकृतभुवनज्ञानविषयप्रसंगे चातुर्वर्ण्योल्लेखने ब्राह्मणस्थाने ब्राह्मणकर्मकारिणां शब्दान्तरैः तत्तत्कर्मबोधकैः प्रथमवर्णात्मकता बोधिता, तथा द्वितीयादिवर्णताऽपि समानार्थकशब्दैः प्रदर्शिता, अतश्चातुर्वर्ण्यं गुणकर्माद्यर्थानुसन्धानेन समुद्दिष्टमित्यतस्त्यागाश्रमिणः सर्व एव त्यागादिब्रह्मधर्माचारवन्तः उत्तमसोपानापन्नाः श्रेष्ठब्राह्मणाः, ब्रह्मचर्यपराः प्रथमाश्रमिणो गुणाढ्या मध्यमसोपानापन्ना मध्यमब्राह्मणा इति, गुणमात्रपरास्तु मृदुसोपानापन्ना मृदुब्राह्मणा इति, केवलजन्माभिमानिनस्तु निम्नमृदुसोपानस्था ब्राह्मणा इति, तस्मान्न ब्राह्मणत्वजातिर्नियतेति सूपपन्नम् ।।

बीजाधानाकृतिवाणीमूर्तिधीन्द्रियकर्मभिः। स्वभावैः समयोग्यत्वाज्जातिरेकैषु कल्पिता ।। मिथो देवमनुष्याणां विना सद्रूपधारणम्। गर्भाधानं न भवति मृतसनवरक्षसाम् ।। यद्वे मासे यस्या गर्भः

स्थैर्यं लभेत वै। यद्रूपाऽधारणे यस्यां गर्भः स्थैर्यं लभेत न ।। तत्सा-जात्यं सृष्टयधीनं ब्रह्मणा निर्मितं पुरा। तन्नान्तरीयकभेदा भाक्तव्यव-हृतिप्रदाः ।। नैकान्ततो जातिसध्रीचीनतावेदका हि ते। तस्मादवान्तर-जातिव्यवहाराः प्रकल्पिताः ।। मानवैर्न त्वजाद्यैर्वो तस्माज्जातिर्न शा-श्वती। कल्पकाः सर्व एवैते विस्मृत्याऽऽहुर्हि शाश्वतीम् ।। जातिं स्थितिं विना स्थानं तस्मान्मृग्यं तु सत्स्थलम्। परब्रह्मैव तत् प्रोक्तं तच्छ-रीरं न जातिमत् ।। श्रीस्वामिनारायणभगवता तु चर्मकारा यवनाश्चा-ण्डालाः शूद्राः संकराश्च पतिताः सर्वेऽपि स्वाश्रये समगृह्य ब्राह्मणध-र्मिणः कृताः, पावनास्ते विद्यन्ते वैष्णवाः सात्त्विका द्विजा इति ।।





# भक्तिरससरित्

रसः परब्रह्म हि साध्यभक्तिर्भक्त्याऽऽप्यते साधनरूपया यः।
दिव्याकृतिर्दिव्यगुणाब्धिरन्तःपरोऽक्षराऽऽनन्दमयोऽक्षरेशः ॥—

सुन्दरः सुकिशोरवेष आनन्दवानानन्दी परमात्मा तेजोब्रह्माऽन्तरात्मा प्रकाशघनाऽन्तर्यामी मुक्तब्रह्मानन्दसुखसन्तोषप्रदश्च नत्कारिकविलक्षणरसावेशरूपः परमानन्दाऽऽस्वादशक्त्याश्रयः सुविलक्षणाऽऽभिरूप्यतादात्म्यमूर्तिरेकरसानन्दघनचैतन्यमूर्तिर्वाच्यरसो वाचकरसो ब्रह्मरसः कामरसोऽलंकाररसो वेषरसो भोगरसः प्रेमरसो रसो वै सः सर्वरसः सर्वानन्दवर्षी रसः श्रीहरिकृष्णो भगवान् समुपास्यः। स्वप्रतिभोपासनाभावनाभावितो भावविभावाऽनुभावाकृष्टो यावद्विषयी रसोऽपि व्यतिरेकितुरीयातीतसम्प्रज्ञातपरिपाकोद्भूतसमाधिस्थसंविदात्मस्वस्वरूपे परमानन्दानुभवरसश्चिच्चैतन्यानन्दरसो मधुरादिव्यवधानैर्वरितः परब्रह्माऽन्याऽनुवेधाऽस्पृष्टोऽनावरणको निरवच्छिन्नरतिपरमानन्दास्वादभूतिरास्वादनीयः परमेश्वरो रसः। प्रेयस्त्वेन प्रियरसः स्वामित्वेन स्वरसः पतित्वेन परमरसः, रासरसिकत्वेन रमणरसः, सोऽहमिति विशिष्टाखण्डितरसधाराप्रवाहकत्वेन हंसरसः, असम्प्रज्ञाते निरवधिकाऽतिशयानन्दयापनेन योगरसः, नित्यशुद्धबुद्धमुक्तसत्यस्वभावपरमानन्दमेघवर्षी चिद्रसः, ब्रह्मरसातिशायी मधुरसः, सर्वात्मतत्त्वामृतरसः सर्वशीलरसः सर्वमिष्टस्वररसः सर्वेन्द्रियशक्तिरसरस्यः स परमेश्वरः। स्वात्मजत्वेन वात्सल्यरसः स्वाश्रयत्वेन कारुण्यरसः शरण्यत्वेनाऽनुकम्पारसो दुःखहरत्वेन दयारसः सार्वज्ञ्यप्रयुक्तत्वेन सर्वज्ञप्तिरसः सर्वलक्ष्यत्वेन व्यञ्जनारसः सर्वसंस्कारकत्वेन संस्कृतिरसः सर्वदर्पणत्वेन साक्षाद्रसः, सर्वचेष्टादिगोचरत्वेन सांकेतिकरसः सर्वाऽलंकारभूमित्वेनाऽलंकृतिरसः स्थूलसूक्ष्मान्वयिसाक्षाद्दर्शित्वेन सर्वभासरसः सर्वप्रकाशित्वेन प्रकाशरसः सर्वव्यवसायित्वेनाऽनुव्यवसायरसः, दिव्यसुरूपिणीत्वेन हिरण्यवर्णहरिणीरसः कविकलनभाततया काव्यनाट्यरसः, भावकत्वभोजकत्वशक्तिजन्यप्रातिभरसः सर्वानुसन्धातृचैतन्यत्वेन साक्षिरसः, चैतन्यात्मत्वेन कूटस्थरसः कारणीभूतत्वेन व्यूहरसः शरीरित्वेन विशिष्टरसः संवृतिसत्यत्वप्रेरकत्वेन परमार्थसत्यरसः प्राप्त्यर्थकत्वेन वेदान्तरसः, एते सर्वे स्निग्धतदात्मकभक्तिरसाः, भगवदानन्दानन्दरसास्वादनमात्मवर्गे हि, परमानन्दस्वरूपभगवन्मूर्तिरसो द्रवितान्तरचिच्चैतन्ये



विकसितो रस आस्वाद्यते भक्तेन, भक्तिरसः प्रधानः परमात्मरसधारा-

तदात्मकः, तत्र शान्तिः शान्तरसः, प्रीतिः प्रीतिरसः प्रियता प्रियरसो वत्सलता वात्सल्यरसः, मधुरता मधुररसः, एते उत्कृष्टा वर्तन्ते,ताननु च वर्तमाना हास्यरसोऽद्भुतरसो वीररसः करुणरसो रौद्ररसो भयरसो बीभत्सरसोऽपि च यथापात्रसंभवाः, तन्मयी श्रीहरिकृष्णभगवद्रतिर्मुख्या विभावानुभावव्यभिचारिभावैः सात्त्विकैः श्रवणाद्यैश्च संवर्तमाना स्थायिनी रसभक्तिः। भगवद्रत्यास्वादनकारणं विभावो रत्यास्वादांकुरयोग्यतानयनः, तदुत्थोऽनुभावः, तत्र तत्र च स्थायिषु सहकारप्रदो व्यभिचारिभावः, सर्वे भावा भगवद्रतिसमापूरकाः, आलम्बनं भगवान् आध्यायकोऽपि भगवान् आप्योऽपि भगवान् स्थायी भगवानतो रसोऽपि भगवान् प्रेमाऽपि भगवान् प्रेमरसो भगवान्, भगवत्प्रतीतिर्भगवति द्रविता भक्तिरसः, निर्विकल्पसुखात्मकस्वानन्दप्रतीती रसः, उत्कण्ठाद्यैः स विशिष्टप्रचयितोऽत्युर्वरितवेषव्यूहः सम्पद्यते, आत्ममानसादावाप्यो रस आस्वाद्यते भक्तिभावनावासितैः। स्वामिसेवकपार्थक्याऽप्रकाशेऽपार्थक्यप्रयुक्तभगवत्परमानन्दरसाऽऽस्वादनसातत्यमनुवर्तते, सेवकगतपरमानन्दसाक्षात्काररूपरसास्वादोत्पत्त्यभिवर्तते। स्वामिस्थायिसुखतदात्मकरसाभिव्यञ्जनं सेवके निरूप्यते। विभावोऽवलम्बनं रत्यात्मा रसो भगवान् स्वामी, उद्दीपनविभावा अलंकारसौन्दर्यौज्ज्वल्यकमनीयत्वयौवनपुष्टिप्रभृतयः, अनुभावा बलांगदार्ढ्यवेगस्वेदाश्रूद्गमरोमाञ्चजृम्भणसूक्ष्माऽङ्गमेजयपरिव्याप्तविक्रियाद्याः, व्यभिचारिभावाः स्थायिपोषणप्रदा निर्वेदाद्या भगवत्स्वरूपानन्दस्थायिरतिसाक्षाद्रसाऽबिधव्यूहाः परमानन्दसाक्षात्कारह्लादस्थापकाः, भक्तिरसे जीवात्मा प्रसीदति, प्रत्यक्षे भक्तिर्भागवती गरीयसी, आत्मनि भगवान् स्नेहाऽधिष्ठानं, निरूपधिस्नेहविश्रमणं स्वामिनि, कर्माण्यपि तदानीं स्निग्धानि स्नेहपर्यवसन्नानि सम्पद्यन्ते, तदा भक्तेष्वपि भगवत्त्वाऽऽविर्भावः, स्नेहपराकाष्ठायां भगवान् भक्तश्चाऽङ्गीभूते सम्पद्येतेऽपि, भगवतो भक्तानां च भक्तिरसलहर्यः समयबन्धरहिताः प्रवर्तन्ते, जनभयरहिताऽऽविष्कृता निर्गुणा रस्या भक्तिर्भगवद्गुणा, भगवद्रसा भगवत्कामिता भगवत्प्रतिभजनीकृता प्रियतमतारसिला रसभरा, एतादृग्भक्तिरसभिक्षुको भगवान्, स्वात्मसमर्पको भगवान् भक्तैक्यमावेदयति स्वीयेभ्यः। पुरुषकारत्वं भगवत्तद्भक्तयो रसभरत्वम्, उपास्तिगोचरफलदेष्टरसी परमात्मा परदेवता रससंभृता, सा गुह्यरसा वज्ररसा च, व्योमकमलोद्गमाऽक्षरसुखरसा परमानन्दमहासुखैकरसा प्रज्ञोपायसद्गुरूपदेशरसाऽऽलिकाल्यवधूतिरसा कृत्स्नकुण्डलीचक्ररसाऽऽनन्दपरमानन्दविरामानन्दसहजानन्दरसा मूर्तिः श्रीहरिः अक्षरसुखस्वरूपात्मकः प्रज्ञोपायात्मकः सहजकायो ज्ञानवज्र-

योगरसः परब्रह्म, सिसृक्षाचिच्छक्तिरसश्च तन्यसागरत्रिपुरारसः परमेश्वरः, निजापराऽपरासूक्ष्माकुण्डलिनीस्फुरदपरपरमशून्यनिरञ्जनपरमात्मरसः परब्रह्म, परमानन्दसन्दोहशीतलशिवतमरसः परमेशानः, परमानन्दप्रबोधचिदुदयप्रकाशरसोऽहंज्ञप्तिरसः परमात्मा, उदयोल्लासाऽवभासविकासप्रभापरमानन्दरसः, निष्पन्दहर्षोन्मादस्पन्दनित्यसुखानन्दप्रबोधरसः, अपिण्डपिण्डरसः सम्यग्दर्शनरसः परमसम्प्रसादरसो ब्रह्माऽऽह्लादिनीरसः परब्रह्म, ब्रह्मप्रकृतिसृष्टिसर्जकरस आनन्दधामरसः परमेशाऽनन्याऽनुरागरसः परमप्रेमाऽमृतरसः परानुरक्तिरसो मधुरोपासनाप्रपत्तिपुष्टिरसः स्मरणकीर्तनप्रणतिवन्दनाऽर्चनाऽर्पणसेवारसः, मनोमुग्धताकारिगीतिमधुरचमत्काररसः शक्तिप्रहरसोऽक्षरसमाम्नायसूत्रब्रह्मरसो भगवान्, शान्तिसरलतासन्तोषपूर्णकामत्वतुष्टिधैर्यानन्दसुखाऽसीमरसो गुणाऽब्धिर्भगवान्, निर्वाणरसाऽब्धिर्भगवान्, प्रकाशाऽभिव्यक्त्याविर्भावप्रबोधनजीवनास्वादरसो भगवान्, स व्यञ्जनाध्वनिलावण्यरसः, तत्त्वपरिष्कारधारास्वादरसः, आकांक्षाभास्यरसो जिज्ञासाभास्यरसः, परमाणुयुगीथविज्ञानरसः, भौतिक्यान्विक्षिकीविकासरसः, ज्ञानप्रभाऽऽनन्दप्रभाक्रियाप्रभारसः, सानन्दज्ञानप्रभारसः पारमेश्वरः, मन्त्रोत्साहप्रभुत्वराजमानशक्तिरसः, विद्युद्वेगाकर्षणरसः स्वस्वीयस्वकीयत्वरसः पुण्यपरमार्थभूरसः, राष्ट्रीयानन्दरसः परिशुद्धस्वरूपाऽऽविर्भावरसोऽध्यात्मविद्यारसो गुणातीतसाम्यरसो निर्दोषसमब्रह्मरसो वीतरागरसः फलितरसः स्वरोदयरसः परमात्मप्रकाशनिसर्गरसः परमात्मैश्वर्यशक्तिस्वरसः शक्तिपरावस्थादशात्मकभक्तिरसः, भिन्नसत्ताकसर्मर्पितात्मभक्तिरसः, ब्रह्मतत्त्वराड्यक्षरसमाम्नायरसः, अजराऽमररसेश्वरब्रह्मशिवभक्तिरसः, क्रियेच्छाज्ञानचिदानन्दरसः परमेशः, मातृसद्भावरसो निर्विघ्नास्वादरूपनवरसात्मकः परमात्मा, रसनैकघनपरमानन्दनिर्वृत्तिचमत्काररसः, अक्षराऽधिगमकपराब्रह्मविद्यारसः, प्रकाशमानानन्दरूपविज्ञानात्मरसः, भागवतपरमपदरसः, भगवन्माहात्म्यप्रतिपादकशास्त्रविधानभक्तिरसः, भगवद्रुचिभक्तिरसः, ज्ञानभक्तिरसः परपुरुषोत्तमोऽनादिश्रीकृष्णनारायणः सनातनचिच्छक्तिस्वरूपलीलारसः, विधिप्रवृत्ता रुचिप्रवृत्ता साधनरूपा साध्यरूपा च भक्तिः सद्रसः, शुद्धचिद्रसत्वं साध्यब्रह्मत्वम्, आनन्दरसत्वं परब्रह्मत्वम्, । परमसत्यपुरुषोत्तमध्यानप्रीतिरसः, सन्धिनीसम्विदाह्लादिनीरसः । परानुरक्तिभक्तिः परमप्रेमाऽमृता भक्तिश्चानुरागा भक्तिर्हृषीकेशसेवनभक्तिः प्रेमसंगतभगवन्ममताभक्तिर्द्रुतचित्तगोविन्दाकारताभक्तिः । सेवार्थकभजयोगिक्तिन्निष्पन्नभक्तिशब्दार्थः प्रेमसेवा सा भक्तिरत्र रागवधी श्रवणकीर्तनस्मरणपाद-

सेवनाऽर्चनवन्दनदास्यसख्यात्मनिवेदनादिरूपाऽऽनन्दातिरेकमयी विह्वलतासंभृता गद्गद्वाङ्माधुर्या द्रवितचित्ता भगवल्लीनीभूतान्तरा सुपक्वा सर्वात्मदर्शना स्वान्यभावविलया परब्रह्मदृष्टिमयी भगवत्स्वरूपसाक्षात्काररसा। प्रेमधनाकृष्टः सेवाधनावृतो भक्त्यन्वयेोपस्थितः कृपाऽम्बराऽवधृतः प्रसादभूषोज्ज्वलोऽर्पणसूत्रोपनद्धस्तादात्म्यभावं भजमानो भवति भगवान्, विज्ञानघनानन्दघनसच्चिदानन्दैकभक्तिरसो भूयान् भगवद्रसः, सत्सं गांगिनी भक्तिर्ज्ञानवैराग्यप्रसूर्वंषांऽगना भागवतपुण्यपिण्डरसा सत्संगवाहना सत्कृपाविधारिणी सेवाकृपाश्रद्धाकथारतिविशिष्टप्रबोधदृढभक्तिसाक्षात्कारसारूप्यसाष्टर्चाद्यात्मकतावर्तना प्रीतिः सा, मधुरहरितोषाऽवलम्बिनी सर्वस्वभूयसी पारमार्थिकी भजनमयी भवति। अथ सकामा सगुणा बहुकामा मोक्षकामा च सात्त्विकी ज्यायसी आत्मेन्द्ररञ्जनमयी भगवत्स्पृहाऽभिलाषाऽनन्यमूर्तिका सविकासा, अपि च निष्कामाऽगुणा निर्गुणा सच्चिदानन्दविशिष्टस्वरूपकामाऽहैतुक्यव्यवहिता प्रेममधुचैतन्यधारारस्यता पूर्णस्वरूपा, भगवन्मूर्तिधारावाहिकचैतन्यशीलस्वरूपा भक्तिः, भपवदाकर्षकनिबिडसान्द्रघट्टसुमूर्तप्रीणनात्मकसुखानन्दस्वरूपानन्दह्लादप्राकटचस्तरकिशोरीप्रोतकिशोरस्वामिमिष्टप - रिवेषा भक्तिः, परमपुरुषार्थप्रीतिसेवासुखसागरो भक्तिपिण्डः, सम्यङ्मसृणितनि जत्वातिशयाञ्चितसान्द्रात्मद्रवभावप्रेमा भक्तिः, माहात्म्यज्ञानपूर्वकसुहृढस्नेहो भक्तिः, भगवत्प्रेमरसो भक्तिरसो भक्तिः, दर्शनसमानाकाराऽविच्छिन्नधाराऽत्यर्थस्फूर्तिप्रीतिभक्तिः, तत्रैव भर्गप्रणवबीजमहेशप्रेयोभूमपरमप्रियवल्लभगोप्यरसिकसौभगात्मात्मेशप्राणप्राणेशरसाः, पुष्टचनुग्रहनिर्गुणभक्तिरसः, मत्सेवनात्यन्तिकभक्तिरसः, मनःस्थैर्यभजनरसः, शृंगारस्थितस्थायिभावरस उद्बोध्यस्वामिनीभावप्रभुरसः प्रीतिसेवासेव्यनिगूढोत्कृष्टाऽनंगसुखरसः, आनन्दोपादानकानन्दसृष्टिरसः, भगवल्लीलासृष्टिभगवद्रूपरसः, प्रेमभक्त्यासक्तिसुव्यसनरतिरसो नित्यलीलाप्रवेशरसो भगवत्क्रीडनात्मकमहानिरोधरसः स्वरूपव्यवस्थितिरसः। सत्स्वरूपानन्दस्वरूपस्वयम्प्रकाशसर्वप्रकाशकब्रह्मरसः, दिव्यागमरसरस्यः, परब्रह्मचिन्तामणिसम्पर्करसः, स्वामिभक्त्यात्माऽर्पणरसः, निजस्फूर्तिगोचरनिजीयसाक्षात्काररसः, निदिध्यासनगोचरस्वप्रकाशिसाक्षात्काररसः, प्रत्यभिजानिजाऽखण्डार्थसाक्षात्काररसः, स्वोपास्त्यनुस्यूताप्तिमत्तेजस्विदर्शनरसः, अधिगततत्त्वस्वात्मसाक्षात्काररसः, सत्यमहामम्वित्स्वरूपरसः, नैष्ठिकनिर्वाणदीक्षागम्यहरिरसः, भोग्यभोगभोक्त्रद्वितीयप्रत्यक्षदर्शिसाक्षिपरमार्थसद्रसः, अशैक्षस्वयंसिद्धस्वरूपार्हरसः, धर्ममेघानन्दरसः, यावद्विधमहत्त्वयोगिविरतिरसः, सुदर्शनप्रेक्षणप्रभानन्दवर्षिपुंरसः, सम-

व्यूहितान्तरात्मरसः, आन्तराऽभिन्नध्येयाऽमृतरसः, चेतनाऽचेतनात्मकभावैकगम्यविशिष्टशिष्टरसः, सच्चिदानन्दप्रकाशस्थलरसः, तत्त्वाऽतीताऽऽध्यात्मिकाऽनुभूतिगम्यरसः, निजविनोदसर्जकरसः, शाश्वतस्वर्गिरसः, केवलिसार्वज्ञ्यरसः, त्रिकालाऽबाधितपरमार्थशून्यसत्त्वस्थितिरसः, समर्हणीयपरमेश्वरतत्त्वरसः, सम्प्रत्ययोत्पादनांऽग्यात्मरसः, आत्मविज्ञानाऽभिन्नसर्ववस्तुतत्त्वविज्ञानरसः, भूतभव्येशानांऽगुष्ठमात्राऽऽत्ममध्यस्थपुरुषरसः, द्वितीयप्रतियोगिकैकाकिरमणरसः, आत्मप्रीतिकामिकसर्वप्रियतारसः, ब्रह्मेश्वरपुरुषविशेषज्ञानाऽणुभूतद्रव्यप्रकृतिनादादिमूर्तिरूपरमात्मरसः, स्वरूपतटस्थलक्षणपरमात्मा रसः। स्वल्पप्रशस्तानन्दशक्तिरसः, रसस्वरूपभगवन्नियतिप्रेमस्रोतोभक्तप्रतिस्रोतःपरमात्मा रसः, श्रद्धानुरागाश्रयप्रेमवर्षी रसी भगवान्, परमप्रेमपराकाष्ठानुरक्तिर्भक्तिरसः, मधुरभक्तिशृंगाररसः, भगवत्स्वरूपास्वादनरसः, सच्चिदानन्दस्वरूपशरणागत्याधायकसारसरसः, निर्गुणभक्तिधाराररसः, सगुणभक्तिधारारसो ज्ञानप्रेमरसः स्वेष्टाराधनापुलकितसमर्पणफलरसः। मधुरभक्तिरसो वासनां परावर्त्य भावनामुद्भाव्य तत्त्वमार्जनशोधनोन्नयनोर्वरणकाण्ठितप्रेमरसाऽविधरविच्छिन्नशाश्वतमूर्तो भवति। स्वात्मविस्मृतिपूर्वकभगवत्तादात्म्यसुखित्वकामनारसोऽयं प्रेमरसः, शृंगारोन्नतवात्सल्योन्नतसख्योन्नतदास्योन्नतनिर्वेदशान्तरसो वितन्यते, कान्तशृंगारवात्सल्याऽनुनेयदास्यशान्तमधुरभावानन्दसुखमग्नतारस्यरसवत्ता भवति, माधुर्यं कामनाभावनातर्पणान्तं प्रियतमे विश्रास्यति, सर्वानन्दखनिमूर्तो भगवानानन्दाभासविश्रमणसत्यानन्दरसस्वरूपः, भक्तो भगवति विषयानन्दमर्पयन् ब्रह्मानन्दमासादयन् दिव्यपरिपूर्णानन्दवान् सम्पद्यते भगवत्तादात्म्यभावनानन्दमग्नो भवति, भगवद्भावानन्दोन्मज्जननिमज्जनधर्मा भवति, जाग्रत्यस्य भोजनपानविहरणादिभगवदानन्दमयं भवति, भगवद्भावनया सर्वे आनन्दाः स्वरूपानन्दाः सम्पद्यन्ते, एतद्विधभक्तप्रेम्णः प्रत्युपसमर्पणानन्दवर्षित्वं भगवतो भक्तवश्यतया प्रवर्तते। यथा धाम्नि तथा स एव दिव्यकिशोरोऽत्र वेषान्तरेण दृश्यते, आनन्दमूर्तिरेव सोऽत्र वर्तते, सः परपुरुषोत्तम आनन्दघनमूर्तिर्दिव्यगुणादिमान् आनन्दतत्त्वमूर्तनवलकिशोरः सृष्टिषु विहरति यथापात्ररूपगुणादिसमानो भक्तेषु स्वानन्दफलदानाय दृश्यते, सोऽत्र स एव, न तु मायामूर्तो न विभूतिमूर्तो न कल्पितमिथ्याभासमूर्तो वा, किन्तु स एवाऽत्र स एव ब्रह्मलोके स एव तत्र स एवाऽत्रेति तन्महाप्रभोरत्र जन्मकर्मादि दर्शनमात्रं दिव्यमपि भक्तसाजात्यपरिवेषितम्, उर्वरितसमनियमितन्यूनपरिषदर्शिताऽऽविस्तिरस्तुल्यपरिमाणउत्पादनस्तशक्तिसामर्थ्यैश्वर्यमत्तया कार्याकार्यमथाकर्तृ-

त्वादिशीली स एव सः, मुक्तैर्धाम्नीश्वरैर्विभूतौ जीवैर्भूगोले योगिभिर्ह्यात्मनि भक्तैः स्वपुरः सकामैः कार्ययोगे पितृभ्यामंके देवैर्गरुडे श्रीहरिर्माणिक्यावाहे यथापेक्षस्वरूपो दृश्यते स एव सः, नाऽस्याऽवतरणे निकृष्टता सहमेलने विषमता निर्गमने परायत्तता वा, सदा सत्त्वात् समत्वाद् एकस्वरूपत्वात् सएवसदृतितत्त्वात् स्ववचनैर्दिव्यैकस्वत्वाच्छाश्वतव्यतिरेकित्वात् स्वेष्टलीलावत्त्वाद् आनन्दपरमात्ममात्रत्वात् स्वातन्त्र्यपूर्णत्वात् स्वज्ञातॄणां स्वसाधर्म्योपदेशादेकविज्ञानकसर्वविज्ञानफलदत्वाद् रसोवैसएवेत्येकतत्त्वम् आनन्दरसमयं परब्रह्मेति सर्वात्मभिः सदुपासनभक्त्या रसभरया लभ्यमिति शम् ॥

卐 卐 卐



# परमात्मनि शास्त्रवाक्यानि (भगवद्वैशद्यम्)

[स्कन्दपुराणे वैष्णवखण्डे वेंकटाद्रिमाहात्म्येऽध्याये ७, श्लोकः ९,] 'स्वामी नारायणोऽस्माकमास्ते श्रीवेंकटाचले। कदाचिद्धय-मारुह्य हंसशुक्लं मनोजवम् ॥ ९ ॥ नारदपञ्चरात्रे भारद्वाजसंहितायां परिशिष्टे द्वितीयाऽध्याये श्लोकः ४०, 'न्यासाख्यं परमं मन्त्रं वाचयित्वाऽथबोध्येत्। श्रीमन्नारायणः स्वामी दासस्त्वमसि तस्य वै' ॥ ४० ॥ ब्रह्मवैवर्तपुराणे श्रीकृष्णजन्मखण्डे अध्याये ७८, श्लोकः ४०, शृणुनारायणक्षेत्रं जलाद्धस्तचतुष्टयम्। अत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥ षट्चक्रनिरूपणे पादुकापञ्चकटीकायां पुरश्चरणरसोल्लासे श्रीमहादेव उवाच– शृणु प्रिये! प्रवक्ष्यामि यदेतत् पृष्ठमुत्तमम्। सहस्रारं महापद्मं सहस्रदलसंयुतम् ॥ सदा ब्रह्मपुरं तत्तु नित्यानन्दमयं सदा। नानागन्धयुतं पद्मं सहजानन्दमन्दिरम् ॥ प्रबोधचन्द्रोदये षष्ठांके श्लोक १४, उपनिषदुवाच– ततो मयोक्तम्–यस्माद्विश्वमुदेति यत्र रमते यस्मिन् पुनर्लीयते, भासा यस्य जगद् विभाति सहजानन्दोज्ज्वलं यन्महः। शान्तं शाश्वतमक्रियं यमपुनर्भावाय भूतेश्वरं, द्वैतध्वान्तमपास्य यान्ति कृतिनः प्रस्तौमि तं पूरुषम् ॥ वृहन्नारदीये पूर्वखण्डे अध्याये ७०, तारहृत्पूर्वकं डे·ऽन्तं नारायणपदं भवेत्। अष्टाक्षरो मनुश्चाऽस्य साध्यो नारायणो मुनिः ॥ पद्मपुराणे उत्तरखण्डे–अध्याये ७२, विष्णुसहस्रनामसु नरः कृष्णो हरिर्धर्मनन्दनो धर्मजीविकः ॥ श्रीमद्भागवते एकादशस्कन्धे अध्याये ५, श्लोकः ३८, कृतादिषुप्रजाराजन् कलाविच्छन्ति संभवम्। कलौ खलु भविष्यन्ति नारायणपरायणाः ॥ श्रीमद्भागवते द्वितीयस्कन्धे अध्याये ४, श्लोकः १८,–किरातहूणाऽऽन्ध्रपुलिन्दपुक्कसा आभीरकंका यवनाः खसादयः। येऽन्ये च पापा यदुपाश्रयाश्रयाः शुद्ध्यन्ति तस्मै प्रभविष्णवे नमः ॥ १८ ॥ श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे अध्याये ५०, श्लोकः १०, अन्योऽपि धर्मरक्षायै देहः संभ्रियते मया। विरामायाऽप्यधर्मस्य काले प्रभवतः क्वचित् ॥ १० ॥ शिवपुराणे रुद्रसंहितायां २, सतीखण्डे २, अध्याये ४३, श्लोकः–३४, नाऽनीतिकारकः स्वामी परब्रह्म सतां गतिः ॥ ब्रह्मवैवर्तपुराणे खण्डे ४, पूर्वार्धे, अध्याये २२, श्लोकः ४८, धेनुक उवाच– अंशेन ज्ञानिनां श्रेष्ठौ नरनारायणावृषी। त्वं च धर्मसुतो भूत्वा लोकनिस्तारकारकः ॥ स्कन्दपुराणे काशीखण्डे ४ उ० स० अ० ६१, पृष्ठ २६२, श्लोक–७,

८, ९, नारायणाः शतं, पञ्चशतं च जलशायिनः, । त्रिंशत् कमठरूपाणि, मत्स्यरूपाणि विंशतिः, ॥ गोपालाश्च शतं साऽष्टं, बुद्धाः सन्ति सहस्रशः, । त्रिंशत् परशुरामाश्च, रामा एकोत्तरं शतम्, ॥ विष्णुरूपोऽस्म्यहमेको मुक्तिमण्डलमध्यगः ॥ श्रीमद्भागवते द्वितीयस्कन्धे अध्याये ७, श्लोकः २६, भूमेः सुरेतरवरूथविमर्दितायाः क्लेशव्ययाय कलया सितकृष्णकेशः। जातः करिष्यति जनाऽनुपलक्ष्यमार्गः कर्माणि चात्ममहिमोपनिबन्धनानि ॥ विष्णुपुराणेंऽशे ५, अध्याये १, पराशर उवाच– एवं संस्तूयमानस्तु भगवान्परमेश्वरः । उज्जहाराऽऽत्मनः केशौ सितकृष्णौ महामुने ॥ ५९ ॥ उवाच च सुरानेतौ मत्केशौ वसुधातले। अवतीर्य भुवो भारक्लेशहानिं करिष्यतः ॥ ६० ॥ वसुदेवस्य या पत्नी देवकी देवतोपमा। तत्राऽयमष्टमो गर्भो मत्केशो भविता सुराः ॥ ६२ ॥ हतेषु तेषु कंसेन शेषाख्योंऽशस्ततो मम। अंशांऽशेनोदरे तस्याः सप्तमः सम्भविष्यति ॥ ७२ ॥ शिवपुराणे रुद्रसंहितायां ३, अध्याये ५,–अष्टाविंशे द्वापरे तु पराशरसुतो हरिः। यदा भविष्यति व्यासो नाम्ना द्वैपायनः प्रभुः ॥ ४३ ॥ तदा षष्ठेन चांऽशेन कृष्णः पुरुषसत्तमः। वसुदेवसुतः श्रेष्ठो वासुदेवो भविष्यति ॥ ४४ ॥ शिवपुराणे उमासंहितायाम् अध्याये ४०, रामो दशरथाज्जज्ञे विष्णवंशः सूर्यवंशजः ॥ १७ ॥ पद्मपुराणे उत्तरखण्डे अध्याये २५७ मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः। रामो रामश्च कृष्णश्च बुद्धः कल्किश्च ते दश। एते तु विभवाऽवस्था ब्रह्मणः परमात्मनः। नृसिंहरामकृष्णेषु षाड्गुण्यं परिकीर्तितम्। पराऽवस्थातु देवस्य दीपादुत्थितदीपवत् ॥ ४० ॥ ४१ ॥ ४२ ॥

ब्रह्मवैवर्तपुराणे खण्डे ४, अध्याये ११५,–सनत्कुमारः कपिलो नरो नारायणस्तथा। ध्यायन्ते हृदयाम्भोजे भगवन्तं सनातनम् ॥ २७ ॥ ब्रह्माण्डपुराणे उपोद्घाते तृतीयपादेऽध्याये ७३, धर्मान्नारायणस्तस्मात् संभूतश्चाक्षुषेऽन्तरे । ७२ । चतुर्थ्यां तु युगाख्यायां द्वितीयो नृसिंहोऽभवत् ॥ ७४ ॥ नवमे विष्णुरेवाऽसौ वामनः कश्यपात्मजः । ९३ । त्रेतायुगे तु दशमे दत्तात्रेयो बभूव ह ॥ ८८ ॥ मान्धाता पञ्चमो जातः पञ्चदश्यां तु चक्रवृत् । ९० । एकोनविंश्यां त्रेतायां जामदग्न्यो व्यजायत । ९१ । चतुर्विंशे युगे रामो जज्ञे दशरथात्मजः। अष्टमो द्वापरे व्यासस्त्वष्टाविंशे पराशरात् ॥ ९२ ॥ देवक्यां वसुदेवात्तु कृष्णाऽष्टाविंशके युगे ॥ ९४ ॥ कलेरन्ते महाघोरो विष्णुः कल्किर्भविष्यति ॥ १०४ ॥ वायुपुराणेऽध्याये ९८, त्रेतायां सप्तमे युगे। तृतीयो वामनोऽभवत् ॥ ७४ ॥ वाराहपुराणे-

ऽध्याये १०, वाराह उवाच- हे पृथिवि! स च नारायणो देवः कृते युगवरे प्रभुः ॥ १५ ॥ त्रेतायां रुद्ररूपस्तु द्वापरे यज्ञमूर्तिमान्। कलौ नारायणो देवो बहुरूपो व्यजायत ॥ १६ ॥ कूर्मपुराणेऽध्याये २७, श्रीकृष्ण उवाच- हे महर्षयः? ये ब्राह्मणा वंशजाता युष्माकं वै सहस्रशः। तेषां नारायणे भक्तिर्भविष्यति कलौ युगे ॥ १२ ॥ परात्परतरं यान्ति नारायणपरा जनाः ॥ १३ ॥ श्रीभगवद्गीतायां- यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्। श्रीमद्भागवते दशमोत्तरार्धेऽध्याये ५०, श्लोकः १०, भक्तरञ्जन्याम्-धर्मदेवात्तदामूर्तौ नरनारायणात्मना। प्रवृत्तेऽपि कलौ ब्रह्मन् भूत्वाऽहं सामगो द्विजः॥ ४३ ॥ मुनिशापान्नृतां प्राप्तं सर्षिं जनकमात्मनः। ततोऽविता गुरुभ्योऽहं सद्धर्मं स्थापयन्नजः ॥ ४४ ॥ शिवपुराणे शतरुद्रसंहितायां ३, अध्याये ५, अष्टाविंशे द्वापरे तु पराशरसुतो हरिः। यदा भविष्यति व्यासो नाम्ना द्वैपायनः प्रभुः ॥ ४३ ॥ तदा षष्ठेन चांऽशेन कृष्णः पुरुषसत्तमः। वसुदेवसुतः श्रेष्ठो वासुदेवो भविष्यति ॥ ४४ ॥ ब्रह्मवैवर्तपुराणे प्रकृतिखण्डे २, अध्याये ६३,-शिवः शेषश्च धर्मश्च ब्रह्मा विष्णुर्महान् विराट्। सनत्कुमारः कपिलः सनकश्च सनन्दनः ॥ २३ ॥ वोढुः पञ्चशिखो दक्षो नारदश्च सनातनः। भृगुर्मरीचिर्दुर्वासाः कश्यपः पुलहोऽङ्गिराः ॥ २४ ॥ मेधावी लोमशः शुक्रो वशिष्ठः क्रतुरेव च। बृहस्पतिः कर्दमश्च शक्तिरत्रिः पराशरः ॥ २५ ॥ मार्कण्डेयो बलिश्चैव प्रल्हादश्च गणेश्वरः। यमः सूर्यश्च वरुणो वायुश्चन्द्रो हुताशनः ॥ २६ ॥ अकूपार उलूकश्च नाडीजंघश्च वायुजः। नरनारायणौ कूर्म इन्द्रद्युम्नो विभीषणः ॥ २७ ॥ नवधाभक्तियुक्ताश्च कृष्णस्य परमात्मनः। एते महान्तो धर्मिष्ठा भक्तानां प्रवरास्तथा ॥ २८ ॥ ये तद्भक्तास्ते तदंशा जीवन्मुक्ताश्च सन्ततम् ॥ २९ ॥ ब्रह्मवैवर्तपुराणे ब्रह्मखण्डे अध्याये ३,-आविर्बभूव तत्पश्चाद् वक्षसः परमात्मनः। सस्मितः पुरुषः कश्चिच्छुक्लवर्णो जटाधरः ॥ ४१ ॥ धर्मज्ञानयुतो धर्मी धर्मिष्ठो धर्मदोऽभवत् ॥ ४२ ॥ आविर्बभूव कन्यैका धर्मस्य वामपार्श्वतः। मूर्तिर्मूर्तिमती साक्षाद् द्वितीया कमलालया ॥ ५३ ॥ ब्रह्मवैवर्तपुराणे प्रकृतिखण्डेऽध्याये १,-मूर्तिश्च धर्मपत्नी सा कान्तिरूपा मनोहरा। परमात्मा च विश्वौघा निराधारो यया विना ॥ १२१ ॥ वराहपुराणेऽध्याये ३, वाराह उवाच- हे पृथिवि!-मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः। रामो रामश्च कृष्णश्च बुद्धः कल्की च ते दश ॥ २ ॥ इत्येताः कथितास्तस्य मूर्तयो भूतधारिणि!।

दर्शनं प्राप्तुमिच्छूनां सोपानानि च शोभने। यत्तस्य परमं रूपं तत्र पश्यन्ति देवताः। अस्मदादिस्वरूपेण पूरयन्ति ततो धृतिम् ॥ ४ ॥ सुधासिन्धौ मध्यतरंगे १३, श्लोकः ६३,–रामकृष्णादयः सर्वेऽवताराः सन्त्यतो हि मे। पुरुषोत्तमस्य वित्तेत्येतत्सत्यं ब्रवीमि वः ॥ ६३ ॥ ब्रह्मवैवर्तपुराणे खण्डे ४, अध्याये २१,–अक्षरं परमं ब्रह्मज्योतीरूपं सनातनम्। गुणातीतं निराकारं स्वेच्छामयमनन्तकम् ॥ ७९ ॥ भक्त-ध्यानाय सेवायै नानारूपधरं परम्। शुक्लरक्तपीतश्यामं युगानुक्रमणेन च ॥ ८० ॥ शिवपुराणे उमाखण्डे ५, अध्याये ५०,–अविनाशि परंधाम मायातीतं परात्परम्। श्रुतयो वर्णयन्ते यत् तद्रूपं तु ममैव हि ॥ ३७ ॥ सगुणं निर्गुणं चेति तद्रूपं द्विविधं मतम् ॥ ३८ ॥ बृहन्नारदीयपुराणे उत्तरखण्डे अध्याये ५८,–सर्वे प्राकृतिका लोका गोलोको निर्गुणः स्वयम् ॥ ४६ ॥ गावस्तेजोंऽशवो भद्रे वेदविद्भि-र्निरूपिताः ॥ ४७ ॥ शिक्षापत्री १२१ श्लोक-भाष्ये,–'ऋग्वेदे अष्ट० २, अ० २, वर्ग २४-६, शुक्लयजुषि अ० ६, ३,–यत्र गावो भूरि-शृंगा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि ॥ यत्र धाम्नि, गावः–रश्मयः, भूरिशृंगाः–अत्युन्नताः, अयासः–अतिविस्तृताः, अत्र ह–ब्रह्मलोके, उरुगायस्य–असंख्यनित्यमुक्ताऽभि-ष्टुतस्य, वृष्णः–सर्वकामवर्षिश्रीहरेः, तत्–मुक्तप्राप्यमक्षरं, परमं पदं–धाम, भूरि–अनन्तायामम्, अवभाति–स्वतः प्रकाशते ॥ कूर्मपुराणे अध्याये ८,–सर्वज्ञता तृप्तिरनादिबोधः स्वच्छन्दता नित्यमलुप्तदृष्टिः। अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरंगानि महेश्वरस्य ॥ १३ ॥ बृहन्नारदीयपुराणे उत्तरखण्डे अध्याये–६७,–तीर्थे नारायणे (नारायण-ह्रदे) स्नात्वा मुक्तिमाप्नोति मानवः ॥ ८१ ॥ दामोदरगृहं दृष्ट्वा सुखमाप्नोत्यनुत्तमम्। ८४। दामोदरे स्वर्णरेखा (सोनरखनदी) ब्रह्मकुण्डं च रैवते (गिरनारपर्वते) ॥ ८५ ॥ मृगीकुण्डं (मरघीकुण्ड) च सर्वस्वं क्षेत्रे वस्त्रापथे (पाघडीपट्टात्मकं तीर्थक्षेत्रं) स्मृतम् ॥ ८६ ॥ ब्रह्मवैवर्तपुराणे कृष्णजन्मखण्डे,–वेदा विष्णुवचो, विप्रा मुखं, गाव-स्तनुर्हरेः। अंगानि देवताः साक्षात् साधवो ह्यसवः स्मृताः ॥ गी-तायां–'ज्ञानी त्वात्मैव मे मतः' ॥ श्रीभागवते–'साधवो हृदयं मह्यं साधूनां हृदये त्वहम् ॥ वायुपुराणेऽध्याये १, श्लोकः ४०,–'पितॄणां मानसीकन्या वासवी समपद्यत। अपध्याता च पितृभिर्मत्स्ययोनौ बभूव सा ॥ ४० ॥ तस्यां जातो महायोगी व्यासो वेदविदां वरः ॥ ४१ ॥ वायुपुराणेऽध्याये १, श्लोकः १४८,–वासुदेवस्य देवक्यां विष्णोर्जन्म प्रजापतेः ॥ वायुपुराणेऽध्याये ..., ...मास्थाय विपुलं

वाराहममितं हरिः। पृथिव्युद्धरणार्थाय प्रविवेश रसातलम् ॥ १५ ॥ वायुपुराणेऽध्याये २३, श्लोकः-२१८,-यदा भविष्यति व्यासो नाम्ना द्वैपायनः प्रभुः। तदा षष्ठेन चांऽशेन कृष्णः पुरुषसत्तमः। वसुदेवाद् यदुश्रेष्ठो वासुदेवो भविष्यति ॥ वायुपुराणेऽध्याये २४,-शेषशायी 'नारायणमुखोद्गीर्णः सोऽग्रमः पुरुषोत्तमः ॥ १० ॥ वायुपुराणेऽध्याये २५, शंभुर्विष्णुब्रह्माणावाह-'भो भो हिरण्यगर्भ त्वां त्वां च कृष्णं वदाम्यहम् ॥ ६ ॥ ब्रह्मणा दत्तकवचाद् विष्णुजिष्णुकवचात् कन्या मोहिनी मधुकैटभनाशार्थं प्रादुर्बभूव सा सावित्री ॥ ४८ ॥ वायुपुराणेऽध्याये ४१,-शबलवने 'तत्र विष्णोः सुरगरोर्दीप्तमायतनं महत् । ४८ । त्रिंशद्योजनविस्तीर्णं नवत्यायतयोजनम्' ॥ ४९ ॥ (१) विस्तीर्णे मध्यमे कूटे पीताम्बरधरो हरिः ॥ (२) 'आभूतसम्प्लवस्थानं तद्विष्णोः परमं पदम् (३) वैकुण्ठं एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरम् ॥ २२२ ॥ वायुपुराणेऽध्याये ६७,-एवंप्रभावो दैत्येन्द्रो हिरण्यकशिपुर्द्विजाः। तस्याऽऽसीन्नरसिंहः स विष्णुर्मृत्युः पुरा किल ॥ ६६ ॥ वायुपुराणेऽध्याये ७०,-अत्रेः पुत्रं महात्मानं शान्तात्मानमकल्मषम्। दत्तात्रेयं तनुंविष्णोः पुराणज्ञाः प्रचक्षते ॥ ७७ ॥ वायुपुराणेऽध्याये ८८,-विष्णुं कपिलरूपेण हंसं नारायणं प्रभुम् ॥ १४७ ॥ वायुपुराणेऽध्याये ९२,-धन्वन्तरेः संभवोऽयं मध्यमानेऽमृते पुरा ॥ ९ ॥ द्वितीये द्वापरे काशीराजगृहे 'तस्य गेहे समुत्पन्नो देवो धन्वन्तरिस्तदा ॥ २१ ॥ 'देवो विष्णुरितिख्यातः शक्रादवरजोऽभवत् ॥ १९६ ॥ कुलानि दश चैकं च यादवानां महात्मनाम् ॥ २५५ ॥ भागवते स्कन्धे १, अध्याये ३, वैराजनारायणतः-'स एव सर्वप्रथमं कौमारं सर्गमास्थितः। ६। द्वितीयं सौकरं वपुः। ७। तृतीयं देवर्षित्वम्। ८। तुर्ये धर्मकलासर्गे नरनारायणावृषी ॥ ९ ॥ पञ्चमः कपिलः ॥ १० ॥ षष्ठे त्वत्रेरपत्यत्वम् ॥ ११ ॥ सप्तम आकुत्यां रुचेर्यज्ञः ॥ १२ ॥ अष्टमे नाभेर्मेरुदेव्याम् उरुक्रमः। १३। नवमं पार्थिवं वपुः ॥ १४ ॥ मात्स्यम् ॥ १५ ॥ कमठः ॥ १६ ॥ धान्वन्तरं द्वादशम् ॥ १७ ॥ चतुर्दशं नारसिंहम् ॥ १८ ॥ पञ्चदशं वामनकम् ॥ १९ ॥ षोडशकः पर्शुरामः। २०। सप्तदशो व्यासः ॥ २१ ॥ अष्टादशो नरदेवः ॥ २२ ॥ एकोनविंशौ रामकृष्णौ ॥ २३ ॥ बुद्धः ॥ २४ ॥ कल्किः ॥ २५ ॥ श्लोके। 'अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः ॥ २६ ॥ भागवते स्कन्धे १ अध्याये ४ श्लोकः १४-



तृतीये युगपर्ययेद्वापरे पाराशरो व्यासः॥ भागवते चतुर्थस्कन्धेऽध्याये १, 'सोमोऽभूद्ब्रह्मणोंऽशेन दत्तो विष्णोस्तु योगवित्। दुर्वासाः

शंकरस्यांऽशो निवेधांऽगीरसः प्रजाः ॥ ३३ ॥ भागवते चतुर्थस्कन्धेऽध्याये १५, 'पृथुः कलयाऽवतीर्णः' ॥ १९ ॥ अध्याये ३, नाभिगृहे कलया ऋषभदेवः ॥ १८ ॥ भागवतेऽष्टमस्कन्धेऽध्याये १,-तत्रापि जज्ञे भगवान् हरिण्यां हरिमेधसः। हरिरित्याहृतो येन गजेन्द्रो मोचितो ग्रहात् ॥ ३० ॥ भागवतेऽष्टमेऽध्याये ५,-पत्नी विकुण्ठा शुभ्रस्य वैकुण्ठैः सुरसत्तमैः। तयोः स्वकलया जज्ञे वैकुण्ठो भगवान् स्वयम्। ४। वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः ॥ ५ ॥ अध्याये ८,-अमृताऽऽपूर्णकलशं बिभ्रद्वलयभूषितः। स (धन्वन्तरिः) वै भगवतः साक्षाद्विष्णोरंशांऽशसंभवः ॥ ३४ ॥ अध्याये १३, आदित्यानामवरजो विष्णुर्वामनरूपधृक् ॥ ६ ॥ अध्याये २४,-'उवाच चरितं विष्णोर्मत्स्यरूपेण यत् कृतम् ॥ ४ ॥ भागवते नवमे, अध्याये १०,-अंशांशेन चतुर्धाऽगात्पुत्रत्वं प्रार्थितः सुरैः। २। रामलक्ष्मणभरतशत्रुघ्नइतिसंज्ञया ॥ ३ ॥ अध्याये १५,-राम इत्यभिविश्रुतः। १३। यमाहुर्वासुदेवांशं हैहयानां कुलान्तकम्। १४। अध्याये १५, दत्तं नारायणस्यांऽशमाराध्य परिकर्मभिः। सहस्रार्जुनः। १७। भागवते दशमे अध्याये ३, सुतपाऋषेः प्रश्निपत्न्यां प्रश्निगर्भोऽभवत्। ४१। द्वितीयो वामनः। ४२। तृतीयः कृष्णः इति। ४३। अध्याय ३८,-प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती। अवतीर्णौ जगत्यर्थे स्वांशेन बलकेशवौ। ३२। अध्याय ७०, 'कलयाऽवतीर्णः' । २७। अध्याये ८९,-युवां नरनारायणावृषी'। ६०। भागवतेएकादशे अध्याये ७,-मया निष्पादितं ह्यत्र देवकार्यमशेषतः। यदर्थमवतीर्णोऽहमंशेन ब्रह्मणाऽर्थितः ॥ २ ॥ भागवते द्वादशेऽध्याये ६,-पराशरात्सत्यवत्यामंशांशकलया विभुः। अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥ ४९ ॥ विष्णुपुराणे अध्याये ४-भवतो यत्परं तत्त्वं तन्न जानाति कश्चन। अवतारेषु यद्रूपं तदर्चन्ति दिवौकसः ॥ १७ ॥ अध्याये ९,-मायया मोहयित्वा तान् विष्णुः स्त्रीरूपमास्थितः। १०९। लक्ष्म्यवताराः-पुनश्च पद्मादुत्पन्ना आदित्योऽभूद् यदा हरिः। भार्गवो रामो धरणिश्च। १४३। राघवत्वेऽभवत् सीता रुक्मिणी कृष्णजन्मनि। अन्येषु चावतारेषु विष्णोरेषाऽनपायिनी। १४४। देवत्वे देवदेहेयं मनुष्यत्वे तु मानुषी। विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुम्। १४५। विष्णुपुराणे अध्याये २२,-एकेनांऽशेन ब्रह्मा। २४। एकेनांशेन विष्णुः। २६। एकांशेन रुद्रस्वरूपः। २८। विष्णोरेता विभूतयः। ३२। विष्णुपुराणे द्वितीयांऽशेऽध्याये २७,-भद्राश्वे हयशिरा, केतुमाले वराहः, भारते कूर्मः। ५०। मत्स्यः कुरुषु ॥ ५१ ॥

विष्णुपुराणे द्वितीयांऽशेऽध्यायः ५,-पातालानामधः शेषस्तामसी तनुः । १३ । अध्याये ८,-ऊर्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्र व्यवस्थितः । एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भासुरम् । १०० । अध्याये १४, कपिलर्षिर्विष्णोरंशः । ९ । अंशे चतुर्थेऽध्याये १, स्वांशेन विष्णुरवतीर्णः केशवांशो बलदेवनामा । ९१ । अध्याये ४४, पुरुषोत्तमस्यांशभूतः कपिलः । १२ । भगवानब्जनाभो रामलक्ष्मणभरतशत्रुघ्नरूपेण आत्मांशेन । ८७ । अध्याये ७,-नारायणस्यांशं परशुरामसंज्ञम् । ३६ । अध्याये ११, यदुवंशेंऽशेन विष्णुरवाततार । २ । भगवदंशं दत्तात्रेयमाराध्य बाहुसहस्रं लेभे । १२ । नारायणांशेन परशुरामेणोपसंहृतः । २० । अध्याये १३, अंशेन मानुषरूपधारिणम् कृष्णम् । २० । नारायणस्यांऽशेन भवता भवितव्यम् । ५३ । अध्याये १४,-भगवदंशाऽवतारम् । २८ । अवतीर्णांशस्योपरि शिशुपालो द्वेषं चकार । ५१ । अध्याये २४, वासुदेवस्यांऽशः कल्किरूपी । ९८ । यदेव भगवान् विष्णोरंशो यातो दिवं द्विज । वसुदेवकुलोद्भूतस्तदैवाऽत्राऽऽगतः कलिः । १०८ । गते सनातनस्यांऽशे विष्णोस्तत्र भुवो दिवम् । ११० । विष्णुपुराणेंऽशे पञ्चमे अध्याये १,-अंशाऽवतारो ब्रह्मर्षे योऽयं यदुकुलोद्भवः । २ । अंशांशेनाऽवतीर्योर्व्याम् । ३ । विष्णोरंशांशसम्भूतिचरितम् । ४ । उज्जहारात्मनः केशौ सितकृष्णौ । ५९ । एतौ मत्केशौ । ६० । अष्टमो गर्भो मत्केशः । ६३ । शेषाख्योंऽशांशेन । ७२ । विष्णुपुराणें अंशे ५,-विष्णोरंशे भुवं याते । ४ । अध्याये १५, वसुदेवसुतौ तत्र विष्णोरंशसमुद्भवौ । १४ । अंशे ५, अध्याये १७,-चिन्तयामास चाऽक्रूरो नास्ति धन्यतरो मया । योऽहमंशाऽवतीर्णस्य मुखं द्रक्ष्यामि चक्रिणः । २ । भगवद्वासुदेवांशो द्विधा योऽयं व्यवस्थितः । २६ । अंशावतारं पुरुषोत्तमस्य ह्यनादिमध्यान्तमजस्य विष्णोः । ३३ । अध्याये २३-विष्णोरंशस्य चक्रिणः । १३ । मुचकुन्द आह-ज्ञातो भवान् विष्णोरंशः । २६ । द्वापरान्ते हरेर्जन्म यदुवंशे । २७ । अध्याये २९, अंशेन लोकमायातः । २५ । अध्याये ३७,-उत्सृज्य द्वारकां कृष्णस्त्यक्त्वा मानुषमात्मनः । सांऽशो विष्णुमयं स्थानं प्रविवेश मुने निजम् । ४ । दूतः-देवैश्च प्रहितो वायुः प्रणिपत्याह केशवम् । लीलासमापनीया, अवशिष्टभारं क्षपयित्वा स्वर्गम् आगमिष्यामि । १६...२७ । वामनपुराणेऽध्याये ६,-हरिं कृष्णं च देवर्षे नरनारायणौ तथा । योगाभ्यासरतौ नित्यं हरिकृष्णौ बभूवतुः । २ । नरनारायणौ चैव जगतो हितकाम्यया । अध्याये २९,-येनैकवंष्ट्रेण समुद्धृतेयम् । २५ । सः षोडशांऽशेन । २६ ।

अध्याये ४६,–वेदव्यासेन मुनिना आराध्य परमेश्वरम् । सर्वज्ञत्वं ब्रह्मज्ञानं प्राप्तं देवप्रसादतः । ४२ । अध्याये ९०,–मत्स्यो मानसे ह्रदे, कूर्मः कौशिक्याम्, हयशीर्षा कृष्णायाम्, गोविन्दो हस्तिनापुरे, त्रिविक्रमः कालिन्द्याम्, भवो लिङ्गभेदे, नारायणो बदर्याम्, वाराहे गरुडध्वजः, कृतशौचे नृसिंहः, गोकर्णे विश्वधारः, विशाखयूपेऽजितः, हंसपदे हंसः, महोदये हयग्रीवः, प्रयागे योगशायी । १....१४, महाभारते अंशावतरण (आदि) पर्वणि अध्याये ६३,–विष्णुर्वसुदेवाद् देवक्यां प्रादुर्भूतः । ९९ । संभवपर्वणि अध्याये ६४–नारायणममित्रघ्नं वैकुण्ठमुपचक्रमुः । ५१ । अंशेनाऽवतरेत्येवं तथेत्याह च तं हरिः । ५४ । महाभारते वैवाहिक (आदि) पर्वणि अध्याये १९७,–तैरेव सार्धं तु ततः स देवो जगाम नारायणमप्रमेयम् । अनन्तमव्यक्तमजं पुराणं सनातनं विश्वमनन्तरूपम् । ३१ । स चापि तद् व्यदधात् सर्वमेव ततः सर्वे सम्बभूवुर्धरण्याम् । स चापि केशौ हरिरुद्बबर्ह शुक्लमेकमपरं चापि कृष्णम् । ३२ । तौ चापि केशौ निविशेतां यदूनां कुले स्त्रियौ देवकीं रोहिणीं च । तयोरेको बलदेवो बभूव योऽसौ श्वेतस्तस्य देवस्य केशः । कृष्णो द्वितीयः केशवः सम्बभूव केशो योऽसौ वर्णतः कृष्ण उक्तः ।। ३३ ।। महाभारते खाण्डवदाह (आदि) पर्वणि अध्याये २२४,–संभूतौ तौ विदित्वा तु नरनारायणावृषी । ५ । नरनारायणौ यौ तौ पूर्वदेवौ विभावसो ! । सम्प्राप्तौ मानुषे लोके कार्यार्थं हि दिवौकसाम् । ८ । अर्जुनं वासुदेवं च ।। ९ ।। कृष्णपार्थौ ।। १२ ।। अध्याये २२८,–वासुदेवाऽर्जुनावेतौ, नरनारायणावेतौ ।। १८ ।। भगवद्गीतायाः श्रीगोपालानन्दस्वामिकृतभाष्ये अध्याये १०, श्लोकः १३,–एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः । नागपर्यंकमुत्सृज्येहागतो मथुरां पुरीम् ।। १ ।। महाभारते वनपर्वणि अध्याये ४०, श्लोकः १०, ११, नरनारायणावृषी । हृषीकेशधनञ्जयौ । अध्याये ९९, विष्णुः दाशरथिः । ४१ । अध्याये १५१–रामाभिधानं विष्णुं हि ।। ७ ।। अध्याये २७३–अग्निः स कपिलो नाम सांख्ययोगप्रवर्तकः । २१ । विष्णुर्वामनः ७०, विष्णुः कृष्णः । ७२ । 'महाभारते उद्योगपर्वणि अध्याये ४९, नरनारायणौ । ८ । वासुदेवार्जुनौ । १९ । नारायणो नरश्चैव सत्त्वमेकं द्विधा कृतम् । २० । अध्याये ७०,–कृषिर्भूवाचकः शब्दः णश्च निर्वृत्तिवाचकः । विष्णुस्तद्भावयोगाच्च कृष्णो भवति शाश्वतः ।। ५ ।। अध्याये ९६–नरनारायणौ यौ तौ तावेवाऽर्जुनकेशवौ ।। ४९ ।।

भीष्मपर्वणि अध्याये ८, श्लोकः २६, अध्याये ६६ श्लोकः ११, अध्याये ६८, श्लोकः १५, १८ । द्रोणपर्वणि अध्याये ११ श्लोकः ४१,

४२। अध्याये ८१, श्लोक ९, १०। महाभारते कर्णपर्वणि अध्याये १६, केशवार्जुनौ नरनारायणौ। १९। २० :। अध्याये ८७, श्लोकः ७९। अध्याये ९६ श्लोकः २७। २८। महाभारते शान्तिपर्वणि अध्याये २०९,–ततो विष्णुर्महातेजा वाराहं रूपमास्थितः। १६। ३०। अध्याये ३३८,–३३९–श्वेतद्वीपवासी एव हयशिरा ॥ ५९ ॥ कपिलः ६८। नरसिंहः। ७८। द्वादशादित्यः। ८१। वामनः। ८३। पर्शुरामः। ८४। दाशरथिरामः। ८६। मथुरायां। ९०। नरनारायणौ। १००। हंसः कूर्मो वामनो रामो रामचन्द्रः कल्किश्च सात्वतः। १०३। १०४। शान्तिपर्वणि अध्याये ३४१ नरनारायणौ प्रविष्टौ मानुषीं तनुम्। ३८। साश्वतः कृष्णः। ७८। ७९। शान्तिपर्वणि अध्याये ३४९ नारायणस्यांऽशजं द्वैपायनम्। ४। वाराहं नारसिंहं वामनं मानुषम्। ३७। अनुशासनपर्वणि अध्याये १४, माधवः तपसा शिवं प्रसाद्य तनयं साम्बं लेभे ९....६८। वेदव्यासः शंभुमाराध्य यशो-लेभे ९०। ९१। नारदः शिवमाराध्य कला लेभे। १०६। १०७। भारतभावदीपे अनुशासनपर्वाध्याय १७ महादेवावतारः कृष्ण इत्युक्तम्। ब्रह्मोत्तरखण्डे महादेवस्य गोपशिशुं प्रति स्वस्य जन्मवरदानात्। अनुशासनपर्वणि अध्याये १३९ तपतः कृष्णस्य वक्त्राद् वहिरुद्भूतः स वसुदेवः, तद्गृहे वासुदेवः। १०। १६। अध्याये १४७,। ३२। अनन्तो बलरामः। ५४....६१। अध्याये १६७, नारदो व्यासश्च प्राह–नरनारायणौ संभूतौ मनुजेष्विह। ४४। स्वर्गारोहणपर्वणि अध्याये ५,–यः स नारायणो नाम देवदेवः सनातनः। तस्यांऽशो वासुदेवस्तु कर्मणोऽन्ते विवेश ह ॥ २४ ॥





# अथ भगवतश्चिन्हानि

विष्णुपुराणे प्रथमेंऽशे अध्याये १२,-हस्ते तु दक्षिणे चक्रं दृष्ट्वा तस्य (पृथोः) पितामहः ।। ४४ ।। विष्णोरंशं पृथुं मत्वा परितोषं परं ययौ ।। ४५ ।। विष्णुचिन्हं करे चक्रं सर्वेषां चक्रवर्तिनाम् ।। ४६ ।। विष्णुपुराणे पञ्चमेंऽशे अध्याये १८,-चिन्तयन्नेव गोविन्दमुपगम्य च यादवः । अक्रूरोऽस्मीति चरणौ ननाम शिरसा हरेः ।। १ ।। सोऽप्येनं ध्वजवज्राऽब्जकृतचिन्हेन पाणिना । संस्पृश्याऽऽकृष्य च प्रीत्या सुगाढं परिषस्वजे ।। २ ।। वामनपुराणेऽध्याये ४७,-धनुर्बाणांऽकितकरश्चक्रध्वजसमन्वितः ।। २२ ।। स राज्यं प्राप्य वैन्यस्तु (पृथुः) चिन्तयामास पार्थिवः ।। २५ ।। ब्रह्मवैवर्तपुराणे ब्रह्मखण्डेऽध्याये २१,-हस्तपादादिवलितं सुकपोलं मनोहरम् । पद्मचक्रांऽकितं पादपद्मं चाऽतुलमुज्जवलम् (नारद उपबृंहणपुत्रोऽभूत्तदा) ६४ ।। विष्णुपुराणे द्वितीयेंऽशेऽध्याये ५७,-शेषः-सहस्रशिरसा व्यक्तस्वस्तिकाऽमलभूषणः । (स्वस्तिकं फणास्थरेखा अमलं भूषणं यस्य शेषस्य सः) ।। १४ ।। अध्यात्मरामायणे शिवः पार्वतीमाह (२ । ८ । २)-स तत्र वज्रांकितवारिजाऽञ्चितध्वजादिचिन्हानि पदानि सर्वतः । ददर्श रामस्य भुवोऽतिमंगलान्यचेष्टयत् पादरजस्तु सानुजः ।। पद्मपुराणे उत्तरखण्डेऽध्याये २६९, शंभुः पार्वतीमाह-तस्य (रामस्य) श्रीपादकमले हस्ताऽब्जे च वरानने ।। ८१ ।। शंखचक्रगदापद्मध्वजवज्रादिचिन्हिते । दृष्ट्वा वक्षसि श्रीवत्सं कौस्तुभं वनमालया ।। ८२ ।। अध्याये २७२,-हर्षात् समेत्य गोपाल (श्रीकृष्णं) परिणीय प्रणम्य च । रक्तारविन्दसदृशे वज्रचक्रांऽकचिन्हिते ।। ३३७ ।। स (अक्रूरः) मूर्ध्नि धृत्वा पादाब्जे प्रणनाम पुनः पुनः ।। २३८ ।। श्रीमद्भागवते दशमेऽध्याये १६,-ते तत्र तत्राऽब्जयवांऽकुशानि ध्वजोपपन्नानि पदानि विश्पतेः । मार्गे गवामन्यपदान्तरान्तरे निरीक्षमाणा ययुरंग सत्वराः ।। १८ ।। पद्मपुराणे उत्तरखण्डेऽध्याये २७९,-एतस्मिन्नन्तरे मृगयाजीविकः स हरेस्तदा । कालप्रभावेण चक्रवज्रध्वजांऽकुशादिचिन्हितमतिरिक्ततमं पादकमलं दृष्ट्वा विव्याध ।। ७२ ।। सत्संगिजीवने प्रथमप्रकरणेऽध्याये २२, श्लोक ६४ टीकायां,-षोडशैव तु चिन्हानि मया दृष्टानि तत्पदेः । दक्षिणे नव चिन्हानि, इतरे सप्तसंख्यया ।। ध्वजः पद्मं तथा वज्रमंकुशो यव इत्यपि । स्वस्तिकश्चोर्ध्वरेखा च अष्टकोणं च जाम्बवम् । इन्द्रचापं त्रिकोणं च कलशश्चार्धचन्द्रकः । अम्बरं मत्स्य-

चिन्हं च गोष्पदं चेति षोडश ।। अंकान्येतानि भो विद्वन दृश्यन्ते यत्पदोः स्फुटम् । कृष्णाख्यं तत्परंब्रह्म भुवि जातं न संशयः ।। (शंखध्वजाऽऽतपत्रैश्च चिन्हितं चरणद्वयमिति तापन्युक्तेः) ।। श्रीहरिदिग्विजये षष्ठोल्लासे नूतनकोकनदकोमलशोणे दक्षपादतलकेऽस्य हि सन्ति । स्वस्तिकध्वजयवांकुशदण्डा अष्टकोणपविजम्बुकुजानि ।। १२ ।। वामपादतलके मृदुकान्ते नूतनपल्लवसमश्रियि सन्ति । अर्धचन्द्रघटगोष्पदखानि सत्त्रिकोणशफरेन्द्रधनूंषि ।। १३ ।। एषु चैकमपि लक्ष्म यदि स्यात् कस्यचित् स्फुतरं भुवि तर्हि । प्राप्नुयात् स हि नराधिपतित्वं स्यात् कथं न सकलांऽकभृदीशः ।। १४ ।। ह्रस्वपर्वसमसंहतदक्षाऽऽवर्ततुङ्गरुचिराः करशाखाः । शोणपाणितलके अतिरम्ये पश्य धर्म ! तनयस्य सुरेखे ।। २० ।। छत्रचामरगजादिसुचिन्हं दृश्यते करतलेऽस्य च दक्षे । चक्रमप्रतिहतं च तदेतत् सूचयत्यपि हरेरवतारम् ।। २१ ।। अष्टास्त्रिजम्बुयवकेतुकजोर्ध्वरेखासत्स्वस्तिकांकुशपवीन् पदकेऽस्य दक्षे । अर्धेन्दुगोष्पदधनुर्घटखत्रिकोणमत्स्यांश्च वामपदके विलुलोकिरे ते ।। ४ ।। (टिप्पणी) अंकान्येतानि भो विद्वत् दृश्यन्ते तु यदा तदा । श्रीकृष्णाख्यं परं ब्रह्म तद् विज्ञेयं न संशयः ।। द्वयं वाऽथ त्रयं चापि चत्वारि पञ्च चैव हि । दृश्यन्ते वैष्णवश्रेष्ठ अवतारे कथंचन ।। (टिप्पणी) रोम्णां यो दक्षिणावर्त्तः स श्रीवत्साभिधो हृदि ।। श्रीहरिलीलाप्रदीपेऽध्याये २०,–पादेऽस्य लक्षणान्यब्जकेतुमुख्यानि दक्षिणे । धनुर्व्योमघटादीनि सन्ति वामपदे तथा ।। २१ ।। चिन्हं यद्येकमेतेषु कस्यचित्स्यान्महामते । आधिपत्यं स लोकानां प्राप्नुयान्नात्र संशयः ।। २२ ।। श्रीहरिलीलाकल्पतरौ स्कन्धे १, अध्याये १२,–नहीनमीनकीनवीतचिन्हपाणिशालिनम् ।। २७ ।। नहीनः–अगर्ह्यः, मीनः । कीनः–गजेन्द्रः । विः–पक्षी मयूरः । इनः–सूर्यः । त एव चिन्हानि रेखात्मकलक्ष्माणि ययोस्तौ च पाणी ताभ्यां मालते शोभते तम् ।। २७ ।। सुधासिन्धावुपोद्धाते–श्लोकः–२०४–अष्टांगयोगाभ्यसनं पुरा कृतवतः प्रभोः । गुल्फयोस्तदधस्ताच्चाऽऽसनघृष्टेश्च लक्ष्मणी ।। २०४ ।। त्रिवल्याख्यन्तु बहुजनाचार्यत्वसूचकम् ।। २०८ ।। सामुद्रिके–अंकुशं कमलं चक्रं यस्य पाणितले भवेत्' तस्य राज्यं विनिर्दिष्टं समुद्रवचनं यतः ।। ध्वजवज्रांकुशच्छत्रशंखपद्मादयस्तले । पाणिपादेषु दृश्यन्ते यस्य सः श्रीपतिः पुमान् ।। सामुद्रिके शिवपार्वतीसम्वादः–यत्करे मीनरेखाऽस्ति कर्मसिद्धिश्च जायते । धनाढ्यः सतु विज्ञेयो बहुपुत्रो न संशयः ।। ३ ।। पद्मं चापश्च खड्गश्च अष्टकोणादि दृश्यते । स्त्रिया वा पुरुषस्यापि बलवान् स सुखी नरः ।। ५ ।। शंखचक्रध्वजाकारो मालाकारोऽपि दृश्यते । सर्वविद्या-

प्रदाता स बुद्धिमान् सुसुखी भवेत् ।। ६ ।। त्रिशूलं करमध्येऽस्ति तेन राज्यं प्रवर्तते। यज्ञे धर्मे च दाने च देवे द्विजे प्रपूजकः ।। ७ ।। शक्तिस्तोमरबाणश्च करमध्ये च दृश्यते। रथचक्रध्वजाकारः स च राज्यं लभेन्नरः ।। ८ ।। अंकुशं कुण्डलं चक्रं यस्य पाणितले भवेत्। तस्य राज्यं जनेशत्वं हर्यंशत्वं समुद्रवाक् ।। ९ ।। श्रीलक्ष्मीनारायणीयसंहितायां कृतयुगसन्ताने १, अध्याये २९,–नारायणो यदा श्रीमान् नररूपेण दृश्यते। तदा तद्दक्षिणे हस्ते ध्वजवज्राब्जवेणवः ।। १६ ।। स्वस्तिकश्च धनुर्बाणौ त्रिशूलं मत्स्यकस्तथा। पद्मं शंखस्तथा चक्रं सूर्यो हस्तिर्मयूरकः ।। १७ ।। एकं द्वयं त्रयं वामेऽवतारे तु ध्रुवं भवेत्। हृदये स्वर्णरेखाऽमलक्ष्मीचिन्हं शुभं भवेत् ।। १८ ।। उरसि चमणि स्वर्गहाररेखा शुभाभवेत्। उदरे त्रिवलीरेखा लम्बमाना भवेन्ननु ।। १९ ।। लिङ्गे कृष्णो भवेद् बिन्दुर्ललाटे तिलकं भवेत्। रेखाप्येका ललाटस्य प्रान्तद्वयप्रसारिणी ।। २० ।। वामे सक्थ्नि भवेल्लक्ष्म पाण्डुरं पटलं महत्। दक्षजंघोपरि कृष्णबिन्दुस्तु संभवेत्तथा ।। २१ ।। गुल्फत्रिकं भवेत्तस्य पादयोस्तु द्वयोः शुभम्। शरीरं स्वर्णवर्णं तद्रम्यं सौन्दर्यशोभितम् ।। २२ ।। राजीवप्रेमभून्नेत्रे रक्तप्रान्ते दयायुते। भ्रकुटयाः सकटाक्षे सुवक्रभंगतरंगके ।। २३ ।। स्वस्तिकध्वजयवांकुशदण्डा अष्टकोणपविजंबुकजानि। अर्धचन्द्रघटगोष्पदखानि सत्त्रिकोणशफरेन्द्रधनूंषि ।। २४ ।। दक्षिणे पत्तले तानि स्वस्तिकादीन्यथोनव। वामे तलेऽर्धचन्द्राद्या रेखाः सप्त भवन्ति वै ।। २५ ।। एकं द्वयं त्रयं वापि दृश्यते यस्य सोऽच्युतः। अवतारो हरेरेव भगवान् हरिरंशजः ।। २६ ।। निर्लेपः स तु विज्ञेयः पापतापप्रणाशकः। स्त्रीधनादिमहाभोगेऽप्यनिर्बाध्यः स वै प्रभुः ।। २७ ।। कामात् क्रोधाद् भयाल्लोभान्मत्सरात्तं भजन्ति ये। तत्प्रतापात्तु ते सर्वे मुक्तिंयान्त्यपुनर्भवाम् ।। २९ ।। अंशावतारः कृतसर्वकार्यः सम्पश्यति घ्राति विहन्ति भुंक्ते। निद्राति चाऽऽश्लिष्यति चुम्बतीति सम्मेहतीशं पिबतीति दिव्यम् ।। ३९ ।। श्रीलक्ष्मीनारायणसंहितायां कृतयुगसन्ताने १, अध्याये २८,–श्रीनारायण उवाच– चिन्हानि तानि सम्वक्ष्ये शृणु लक्ष्मि ममाग्रतः ।। ४४ ।। मध्ये तु स्तनयोर्यासांहृहि नारायणस्य वै। चरणोर्ध्वतिलकाख्यपुण्ड्ररेखा भवेन्ननु ।। ४५ ।। नाभ्यधो जघने भागे भवेत् स्वर्णसुपिङ्गला। बाणाकृतिसमा रेखा, ललाटे मुकुटाकृतिः ।। ४६ ।। गण्डे तु दक्षिणे चाथ ललाटे मध्यदेशके। शोणबिन्दुर्भवेच्चापि सुदर्शनसमस्तथा ।। ४७ ।। उरसि यच्चतुर्हस्तविष्णुरेखा तु संभवेत्। यस्या वामे भुजबन्धे गदाचिन्हं तु संभवेत् ।। ४८ ।। वामसक्थ्नि तु यस्याः

स्यात् पादुकाचिन्हमग्रतः। हृदये वैजयन्त्याश्च रेखा यस्यास्तु पौरटी ॥ ४९ ॥ कमलं तु करे धृत्वा हस्तिर्यस्याः करे भवेत्। लक्ष्मीः स्वयं तु विज्ञेया कन्या मानुषरूपिणी ॥ ५० ॥ श्रीलक्ष्मीनारायणसंहितायां कृतयुगसन्ताने १, अध्याये २९, शृणु लक्ष्मि प्रवक्ष्यामि चिन्हानि तव पादयोः। यदा जन्म भवेल्लोके तदा बोध्या जनैस्तु तैः ॥ १ ॥ दक्षिणे तु परेऽङ्गुष्ठमूलाऽधःफलके परम्। शंखचिन्हं तु सम्बोध्यं, तथाऽङ्गुल्योस्तु मूलके ॥ २ ॥ विमानचिन्हं, फणके कनिष्ठामूलसन्निधौ। नौकाचिन्हं, तथा शंखाऽधो गदाचिन्हमित्यपि ॥ ३ ॥ मकराकारचिन्हं, च ततोऽधःशिखरं भवेत्। ततः पार्ष्णौ मत्स्यरेखा, मध्ये ताम्बूलवल्लिका ॥ ४ ॥ तत्र वामेऽङ्गुष्ठमूले यवचिन्हं प्रकीर्तितम्। तदधस्तु भवेच्छत्रं ऊर्ध्वरेखा तु शाश्वती। अंगुल्योर्मूलके तत्र कमलं फणके मतम् ॥ ६ ॥ तदधस्तु ध्वजरेखा, तत्पार्श्वे ऽकुशमुच्यते। ततोऽधः कुमुदं, पार्श्वे श्रीफलं, कलशस्तथा ॥ ७ ॥ ततोऽधः स्थलकमलं, पार्ष्णौ द्वितीयचन्द्रमाः। दशचक्राणि पूर्णानि स्वर्णरेखा फणोपरि ॥ ८ ॥ अंकान्येतानि मे लक्ष्मि दृश्यन्ते तु यदा तदा। श्रीलक्ष्म्याख्यं परंब्रह्म तद्विज्ञेयं न संशयः ॥ ९ ॥ द्वयं वाऽत्र त्रयं वापि चत्वारि पञ्च वा यदा। दृश्यन्ते चरणे देवी तवांऽशा मानुषी मता ॥ १० ॥ ललाटे पौरटो हारः, स्वर्णरेखा च बिन्दुकः। दक्षे कपोलके रक्तबिन्दुश्चिबुकबिन्दुकः ॥ ११ ॥ दक्षस्तने हस्तरेखा, वामस्तने तु चक्रकम्। कण्ठे तु पौरटो हारश्चोरस्यहं चतुर्भुजः ॥ १२ ॥ थोनेरुपरि सधनुःकामदेवस्य चिन्हकम्। सक्थ्नोः कुमुदयो रेखे, स्वस्तिको दक्षिणे करे ॥ १३ ॥ ध्वजो मत्स्यश्च, वंशी च, धनुश्चाऽप्यथ मत्स्यकः। कलशश्चेति बोध्यास्ता नारायणांऽशकन्यकाः ॥ १४ ॥ एकं वाऽथ द्वयं वापि तदधिकं तु वा पुनः। चिन्हं च दृश्यते बोध्या ब्रह्माऽवतारकन्यकाः ॥ १५ ॥ शंखौ मध्यांऽगुलिस्थौ द्वौ चक्राण्यन्यानि चाऽष्ट च। यस्य सोऽयं दिव्यरूपः श्रीपतिर्भगवान् स्वयम् ॥ १६ ॥ भारते उद्योगपर्वणि, अध्याये ७०,–५–'कृषिर्भूवाचकः शब्दः णश्च निर्वृत्तिवाचकः। तयोरैक्यं परंब्रह्म कृष्ण इत्यभिधीयते ॥ ब्र० वै० पुराणे, खण्डे २, अध्याये २,–कृषिस्तद्भक्तिवचनो नश्च तद्दास्यकारकः। भक्तिदास्यप्रदाता यः स कृष्णःपरिकीर्तितः ॥ २५ ॥ कृषिश्च सर्ववचनो नकारो बीजवाचकः। सर्वबीजं परंब्रह्म कृष्ण इत्यभिधीयते ॥ २६ ॥ पद्मपुराणे उत्तरखण्डे ६, अध्याये १७६,–ततः स्वामिनमालोक्य लोकानां स्वामिनं प्रभुम् ॥ ४८ ॥ मुक्तिं च प्रतिपद्यन्ते नाऽत्र कार्या विचारणा ॥ ५० ॥ श्रीहरिलीलाकल्पतरौ–नैवयं हि विद्यते धीमन्नवताराऽवता-

रिणोः। वर्तते वास्तवो भेदस्तारचन्द्रमसोरिव ॥ सुधासिन्धौ तरंगे १४२, (म० त० ९)–अतः कृष्णस्वरूपस्य रक्ष्यं सर्वाधिकं बलम्। तेन सर्वार्थसिद्धिः स्यात्, तद्‌द्रोहः स्यात् किलाऽन्यथा॥ १८॥ टीका–अस्याऽयं भावः–श्रीहरेरवतारिणोऽन्यावतारसमत्वेन वेदनं तद्‌द्रोहः प्रायश्चित्तशतैरप्यनिवार्यः ॥ १८ ॥ श्रीकृष्णस्य सर्वावतारमहत्त्वात् स्वकीयं पुरुषोत्तमत्वं तत्र श्रीकृष्णे आरोप्य उपासनाप्रदर्शनार्थमाह–श्रीकृष्णो भगवान् स्वयमिति । २३ । स्वामिनारायणः सोऽयं नित्यं हृदि मयेक्ष्यते । तिर्यगूर्ध्वमधोऽपारे स्थितः कोटयर्कतेजसि ॥ २४ ॥ कृतावतारो भगवान् मिलेद् र्यहि स्वयं तदा । तस्य रूपान्तरमपि न ध्येयं ध्येय एव सः ॥ १४ ॥ ब्रह्मवैवर्तपुराणे–यस्मिन् सर्वाणि तेजांसि लीयन्ते च स्वतेजसि । तं वदन्ति परे साक्षात् परिपूर्णतमः स्वयम् ॥ ९ ॥ सुधासिन्धौ मध्यतरंगे–१३, परे ब्रह्मणि यः प्रोक्तो भगवान् दिव्यविग्रहः । सोऽहमेव भवाम्यत्र स्थितो दिव्यनराकृतिः ॥ सत्संगि-जीवने प्रकरणे ४, अध्याये ६०,–साक्षाद्भगवतः संगात् तद्भक्तानां च वेदृशाम् । धर्मो ह्येकान्त एषोऽत्र प्राप्यते नाऽन्यथा क्वचित् ॥ ३४ ॥ स्कन्दपुराणे रेवाखण्डे उत्तरार्धे अध्याये १९२,–नरो नारायणश्चैव हरिः कृष्णस्तस्थैव च । विष्णोरंशांऽशका ह्येते चत्वारो धर्मसूनवः ॥ १० ॥ तथा नारायणनरौ गन्धमादनपर्वते । आत्मन्यात्मानमाधाय तेपतुः परमं तपः ॥ ११ ॥ ध्यायमानावनौपम्यं स्वं कारणमकारणम् ॥ १२ ॥ भृगुपुत्रीसमुद्रान्ते तेपे वै दुष्करं तपः । धर्मोऽपि विधिवद् वत्स विवाहं समकारयत् । देवदेवस्य राजर्षे देवतार्थे समाहितः ॥ ४० ॥ लक्ष्मी-भर्त्रा च संयुक्ताऽभवत् तत्कृतवान् प्रभुः । ब्रह्मणो जुह्वतो वह्निं याव-द्देशस्थितैः सुरैः ॥ ५६ ॥ सुधासिन्धौ तरंगे १६४ (३१)–वैराजपु-रुषद्वारा अवतारा जायन्ते, वासुदेवनारायणस्य पुरुषरूपेण वैराजे वि-राजमानताप्रयोज्याऽवताराजायन्ते इति सर्वेऽवतारा वासुदेवभगवत एव सन्ति ॥



# ॐ नव्यन्याये तत्त्वचिन्तामणौ सामान्यनिरुक्ति-दीधितिगादाधर्याः क्रोडम्

"अनुमितिकारणीभूताऽभावप्रतियोगियथार्थज्ञानविषयत्वमिति" मूलोक्तं लक्षणम् ।। अत्र–अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वमेवोच्यतामिति चेन्न, प्रतिबन्धकत्वं हि द्विविधं–कारणीभूताऽभावप्रतियोगित्वरूपं, प्रयोजकीभूताऽभावप्रतियोगित्वरूपं चेति, तत्र द्वितीयस्य लक्षणघटकत्वे 'ह्रदो वह्निमान् धूमादि'त्यादौ वह्निव्याप्यधूमवान् ह्रद–इत्याकारकपरामर्शधर्मिकाऽप्रामाण्यज्ञानाऽभावस्याऽपि अनुमितिप्रयोजकतया तत्प्रतियोग्यप्रामाण्यज्ञानविषये निरुक्तपरामर्शेऽतिव्याप्त्यापत्तेः, अतः कारणीभूताभावप्रतियोगित्वरूपस्य प्रतिबन्धकत्वस्य लक्षणघटकत्वमभ्युपेत्य तदुक्तम् । ननु–अनुमितिप्रतिबन्धकत्वमेवोच्यतामिति चेन्न, ज्ञायमानदोषस्य प्रतिबन्धकत्वाऽनंगीकारमते दोषेऽसंभवः, दोषविषयकज्ञानेऽतिव्याप्तेश्च ।। ननु–अभावपदं किमर्थमिति तु नाऽऽशंकनीयम्, परामर्शाऽवच्छिन्नभिन्नभेदरूपस्य परामर्शस्य अनुमितिकारणीभूतस्य प्रतियोगि यत् परामर्शावच्छिन्नभिन्नं घटज्ञानं तद्विषये घटेऽतिव्याप्त्यापत्तेः । यद्वा–सिषाधयिषाविरहविशिष्टसिद्ध्यभावभिन्नत्वलाभाय–अभावपदम्, अन्यथा सिद्धिविषये साध्यवत्पक्षेऽतिव्याप्त्यापत्तेः । अभावपदेन–अत्यन्ताभावत्वनिरूपितप्रतियोगितालाभार्थकता जायते, तथा च–अनुमितिकारणतावच्छेदकानुयोगितानिरूपितप्रतियोगित्वाश्रयत्वलाभार्थकम्, अभावपदम् ।। न चैवं ज्ञानपदं व्यर्थम्, 'ह्रदोवह्निमानि'–त्यनुमितिप्रतिबन्धककामिनीजिज्ञासाप्रतिबध्यतायां न तादृशानुमितित्वव्यापकत्वम्, 'ह्रदो वह्निमान् कामिनी चे'त्याकारकसमूहालम्बनानुमितावपि निरुक्तानुमितित्वस्य सत्त्वेन तत्र कामिनीजिज्ञासाप्रतिबध्यताया विरहात्–इत्युच्यते, तदा–यादृशस्थले कामिनीविषयकसमूहालम्बनानुमितिर्न जाता तत्र कामिनीज्ञानेऽतिव्याप्तिवारणार्थं ज्ञानपदमनुसन्धेयम् । कामिनीज्ञानाऽन्यज्ञानं प्रति कामिनीजिज्ञासायाः प्रतिबन्धकत्वात् ।।

अथवा तत्त्वनिर्णयः–साध्यवत्ताज्ञाने प्रमात्वनिश्चय इति गादाधरी तथा च 'इयम् अनुमितिः प्रमा साध्यव्याप्यहेतुविशिष्टपक्षविषयकज्ञानत्वावच्छिन्नजन्यज्ञानत्वात्' एवम् 'इयमनुमितिः प्रमा स्वविरोध्यनुमितिजनकपरामर्शविषयहेत्वदुष्टत्वज्ञानविघटकदुष्टत्वज्ञानकालीनज्ञानत्वात्' । तथा च दुष्टत्वज्ञानेन अप्रामाण्यज्ञानस्योत्पादात् परम्परया दुष्टत्वग्रहस्य प्रमात्वनिश्चयप्रयोजकत्वात् ।। अत्र हेतुः–साध्यव्याप्यहेतुविशि-

प्रपक्षविषयक(परामर्श)ज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यतावज्ज्ञानत्वादिति, तेन धूमत्वेन धूलीपटलविषयकपरामर्शजन्यज्ञानेऽनुव्यवसाये न व्यभिचारः ॥

"मूलोक्तलक्षणानां दुष्टहेतुलक्षणत्वे दोषेष्वतिव्याप्तिः, यथार्थज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वपर्यन्तस्य समूहालम्बनविषयताश्रयोदासीनपदार्थवारणाय प्रथमलक्षणे विवक्षणीयतया बाध दिज्ञानप्रतिबन्धकतायां प्रायशो हेतुविषयतायामनवच्छेदकत्वादिति" तत्र हेतोरव्याप्तिश्चेति ॥ गादाधरी ॥ ननु-धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारमादाय ह्रदो वह्निमान् धूमादित्यत्र धूमाभाववद्ध्रदरूपस्वरूपाऽसिद्धिमादाय तत्र तत्र हेतौ दुष्टत्वस्य संभवात् कुतः सामान्यलक्षणे दुष्टेऽव्याप्तिरिति चेन्न, धूमो बाधेन दुष्टइतिव्यवहाराभावस्यैवाऽव्याप्तिपदार्थत्वात्। वस्तुतस्तु-उत्पत्तिकालीनघटो गन्धवानित्यत्र पृथिवीत्वहेतोर्बाधेनैव दुष्टतया तत्र दोषान्तराऽभावात् अव्याप्त्यापत्तेः। ह्रदो वह्निमान् ह्रदात् इत्यत्र ह्रदविषयतायाः प्रतिबन्धकतावच्छेदकत्वेन तत्र लक्षणसमन्वयसंभवात्प्रायश इत्युक्तम् ॥

"निरूपकत्वं चात्र यदि प्रतियोगित्वं तदा कार्यस्य कार्यताप्रतियोगित्वाऽभावादनुमित्यसंग्रह" इति गादाधरी। ननु-कार्यताप्रतियोगित्वाऽनुयोगित्वान्यतरवद्ग्रहनिष्ठप्रतिबध्यतानिवेशेनैव सामञ्जस्ये तादृशगुरुतरनिवेशनम् असंगतमिति चेन्न, अन्यतरत्वस्य भेदद्वयाऽवच्छिन्नप्रतियोगिताकभेदरूपतया लाघवाऽनवकाशात्, जन्यत्वजनकत्वयोः स्वरूपसम्बन्धरूपत्वात् ॥ न च जनकतावच्छेदकीभूतसाक्षात्कारविषयतायाः अनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वमवश्यं निवेश्यम्, तेन पर्वतो वह्निमान् घटवाँश्चेत्यनुमितिसाक्षात्कारजनकसाक्षात्कारोऽनुमितिपरामर्शसाक्षात्कारस्तद्विषयताग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकता घटाभाववान्पर्वत इत्यस्यास्तीति तत्र नातिव्याप्तिः, एवं च-अन्यतरत्वनिवेशापेक्षया गौरवमिति वाच्यम्,-व्यवहारं प्रति व्यवहर्तव्यज्ञानस्य कारणतया भेदद्वयावच्छिन्नप्रतियोगिताकभेदरूपाऽन्यतरत्वघटितलक्षणज्ञानस्य दुष्टताव्यवहारं प्रति हेतुत्वात्, भेदद्वयस्य विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुतरकार्यकारणभावद्वयापत्तेः ॥

"अतः सम्बन्धिपदं सम्बन्धित्रयसाधारणस्य तत्साक्षात्कारजनकसाक्षात्कारविषयतात्मकनिरूपकत्वस्य लाभायेति" गादाधरी। नन्वत्र साक्षात्कारपदद्वयं कथम्?, कार्यताविषयकत्वावच्छिन्नजन्यता-

निरूपितजनकतावच्छेदकविषयताश्रयपर्यन्तनिवेशेनैवोपपत्तिसंभवादिति चेन्न, धर्मसम्बन्धसाधारणैकाऽवच्छेदकत्वाऽस्वीकारेण कार्यताविषयकत्वनिष्ठं यत् धर्मविधयाऽवच्छेदकत्वं तन्निरूपकजन्यतानिरूपितजनकताया धर्मविधया यदवच्छेदकत्वं तद्वद्विषयताश्रयत्वनिवेशे तादृशस्थलविशेषे प्रतियोगिसाक्षात्कारोऽनुयोगिसाक्षात्कारश्च तद्व्यक्तित्वेनैव जायते न तु रूपान्तरेण, प्रतियोगिसाक्षात्काराद्यनन्तरं रूपान्तरेण कार्यतासाक्षात्कारो न भवति किन्तु तद्व्यक्तित्वेनैव कार्यतासाक्षात्कारो भवति तादृशस्थले लाघवात् विषयितया तद्व्यक्तिविशिष्टप्रत्यक्षं प्रति विषयितया तद्व्यक्तिविशिष्टप्रत्यक्षत्वेन हेतुत्वात् कार्यताविषयकत्वादेस्तु धर्मविधयाऽवच्छेदकत्वाऽभावेन तत्राऽव्याप्त्यापत्तेः, अतः कार्यताविषयकसाक्षात्कारत्वावच्छिन्नजन्यतानिरूपितजनकत्वं यद्विषयकसाक्षात्कारत्वव्यापकं तत्त्वमेवाऽर्थो वाच्यः, एवं च साक्षात्कारपदानुक्तौ कार्यतानिरूपकत्वस्य अनुमितिशाब्दबोधादौ वर्तमानत्वादसंभवापत्तेः ॥

"बाधसत्प्रतिपक्षस्वरूपासिद्ध्याश्रयासिद्धिष्वव्याप्तिवारणाय प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकत्वनिवेश" इतिगादाधरी । ननु-प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकत्वानुपादाने साध्यव्यापकीभूताभावप्रतियोगिहेतुरूपाऽसाधारण्येऽपि अव्याप्तिः संभवति, तद्विषयकनिश्चयस्य प्रकृतहेतुमत्पक्षज्ञानसहितस्य पक्षे साध्यवत्ताबुद्धिं प्रति विरोधित्वादिति तदप्रदर्शनान्न्यूनता स्यात् । न च पक्षतावच्छेदकावच्छिन्नपक्षकत्वोपादानेऽपि यद्विषयकनिश्चयत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तत्त्वमिति लक्षणे हेतुमत्ताज्ञानाऽसमानकालीनाऽसाधारणविषयकनिश्चयत्वस्य अनुमितिप्रतिबन्धकताऽतिरिक्तवृत्तित्वादिति वाच्यम्, यद्विषयकनिश्चयत्वव्यापकः प्रकृतानुमित्यप्रतिबन्धकत्व-पक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वोभयाभावस्तत्त्वस्य विवक्षितत्वात्, ततश्च पक्षतावच्छेदकावच्छिन्नविशेष्यकत्वाऽनुपादानेऽसाधारण्यविषयकनिश्चये निरुक्तोभयसत्त्वेनाऽव्याप्तेरवारणात्-इति चेन्न, यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापक = प्रकृतानुमित्यप्रतिबन्धकत्वाऽसाधारण्यविषयिताशून्यत्वोभयाभावस्य विवक्षिततत्वात्, तथा चाऽसाधारण्येऽव्याप्तिशंकैव नोदेतीति तत्परित्यज्याऽव्याप्तिरभिहिता, द्रव्यं वह्निमद्वह्निव्याप्यधूमवच्चेत्यनुमित्यप्रतिबन्धकत्वसत्त्वेऽप्यसाधारण्यविषयिताशून्यत्वाऽभावेनोभयाभावसत्त्वादव्याप्त्यभावात् । स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन पक्षतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिताव-

च्छेदकरूपवृत्तिर्या विशेष्यता तच्छाल्यनुमितेर्ग्रहणात् असाधारण्येऽव्याप्तिशंकाऽनुदयात् ॥

"बाधस्वरूपाऽसिद्ध्याश्रयासिद्धिषु अव्याप्तिवारणाय-पक्षतेत्यादि"-गादाधरी। नन्वत्र द्वितीयदले पक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वादेवाऽऽश्रयाऽसिद्ध्यव्याप्तिवारणसंभवेऽव्याप्त्यभिधानमसंगतमिति चेन्न, सकृन्निवेशाभिप्रायेणैवाऽव्याप्तेरभिधीयमानत्वात्, निवेशरीतिश्च प्रकृतपक्षतावच्छेदकविशिष्टानुमितित्वव्यापकप्रतिबध्यतेत्याद्या, वैशिष्ट्यं च स्वावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्व-स्वावच्छिन्नविशेष्यतानिरूपितसाध्यव्याप्तिविशिष्टप्रकृतहेतुप्रकारताकत्वोभयसम्बन्धेनेति ॥

"अवच्छेदकत्वं च···तत्पर्याप्त्यधिकरणत्वं, तेन-अतेजस्वी पर्वतो वह्निमानिति"गादाधरी। ननु वह्न्यभावव्याप्यवदतेजस्वी पर्वत इतिसत्प्रतिपक्षेऽपि त्वव्याप्तिसंभवे तदप्रदर्शनान्न्यूनत्वमिति चेन्न, सत्प्रतिपक्षत्वावच्छेदेनाऽव्याप्तेरभावात् तद्व्यक्तित्वव्यापकवह्न्यभावसमानाधिकरणतद्व्यक्तित्ववत्पक्षात्मकसत्प्रतिपक्षे लक्षणसमन्वयात्, तद्व्यक्तित्वव्यापको वह्न्यभावस्तद्व्यक्तित्ववांश्च पक्ष इत्याकारकनिश्चयविशिष्टनिश्चयप्रतिबध्यतायाः पर्वतो वह्निमान् अतेजस्वी पर्वतो वह्निमान्-इत्याकारकानुमितिद्वयसाधारणतया निरुक्तानुमितित्वव्यापकत्वात्। न्यूनवारकपर्याप्त्यनिवेशे-अतेजस्वी पर्वतो वह्निमान्-इत्यादौ बाधे, काञ्चनमयपर्वतो वह्निमान्-इत्याश्रयाऽसिद्ध्यादावव्याप्तिर्दत्ता गदाधरेण, ननु-अतेजस्वी पर्वतो वह्निमानित्यत्रैवाऽऽश्रयाऽसिद्ध्यव्याप्तिसंभवे स्थलान्तरानुसरणं किमर्थमिति चेन्न, सामानाधिकरण्येनाऽतेजस्वित्वस्य पक्षतावच्छेदकतया तादृशपक्षतावच्छेदकविशिष्टबुद्धौ अवच्छेदकावच्छेदेन तेजःसामान्यस्य पक्षे निश्चयः प्रतिबन्धकस्तस्य च भ्रमात्मकतया तद्विषयविशिष्टस्याऽप्रसिद्धत्वात्, तत्राऽदोषात् स्थलान्तरेऽव्याप्त्यनुधावनात् ॥

"यत्तु साध्याऽप्रसिद्ध्यव्याप्तिवारणप्रयोजकत्वं तदुपादानस्येति तु न सदिति"गादाधरी। नन्वत्राऽपि पक्षतावच्छेदकस्येव साध्यतावच्छेदकस्याऽपि सकृन्निवेशसंभवस्तथाहि-साध्यतावच्छेदकविशिष्टविशेष्यतानिरूपकानुमितित्वव्यापकतेत्यादिः, वैशिष्ट्यं च स्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताविशिष्टत्व-स्वावच्छिन्नव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वोभयसम्बन्धेन, विशेष्यतावैशिष्ट्यं च-स्वाऽवच्छेदकधर्माऽवच्छिन्नत्वस्वनिरूपकज्ञानीयत्वोभयसम्बन्धेन, एवं चैतन्मते न कोऽपि दोष इति चेन्न,

पक्षपदस्य सकृदुल्लेखनेन सकृन्निवेशोपयोगिपरम्परायाः संसर्गत्वं स्वीक्रियते, साध्यपदस्य च द्वेधोल्लेखेन सकृन्निवेशोपयोगितत्संसर्गता नाऽङ्गीक्रियते, एवं च साध्यपदस्य द्विधा प्रवेशेन द्वितीयदलादेव साध्याऽप्रसिद्धयव्याप्तिवारणसंभवात्तन्मतं दूषितं गदाधरेणेति ॥

"यत्र व्यभिचारज्ञानोत्पत्तिद्वितीयक्षणे कथञ्चिद्व्याप्तिग्रहस्तत्र न व्यभिचारो दर्शित" इतिगादाधरी। ननु-यत्रैकदा व्यभिचारग्रहो व्याप्तिग्रहश्च सामानाधिकरण्येन, तत्र क्षणैकविलम्बेनाऽनुमितिस्वीकारेऽपि व्यभिचारतादवस्थ्यम्, एवं यत्राऽऽदौ अपेक्षाबुद्धयात्मकव्यभिचारग्रहस्ततो व्याप्तिग्रहस्तत्र क्षणैकविलम्बेनाऽनुमितिस्वीकारेऽपि, यत्र व्यभिचारोत्पत्तिचतुर्थक्षणे बाधनिश्चयस्तत्र क्षणैकविलम्बेनाऽनुमितेः स्वीकर्तुमशक्यतया तद्दोषतादवस्थ्यमिति चेन्न, सामानाधिकरण्येन व्याप्तिग्रहस्य हेतुत्वम्, अपेक्षाबुद्धेर्द्वितीयक्षणे ज्ञानान्तरोत्पत्तिं बाधनिश्चयस्य कार्यकालवृत्तितया प्रतिबन्धकत्वं चाऽनभ्युपगम्य तावद्दूरानुधावनात् ॥

"ननु तद्धर्मावच्छिन्नलिङ्गकत्वं चाऽव्यवहितोत्तरत्वसम्बन्धेन··· तदन्यत्वमेव वा जन्यतावच्छेदकं वाच्यमि" तिगादाधरी। अत्राऽव्यवहितोत्तरत्वं तृतीयक्षणसाधारणं स्वध्वंसाधिकरणकालध्वंसाऽनधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वरूपं बोध्यम्, एवं च-धूमव्यभिचारी वह्निरित्यादिज्ञानानन्तरं लौकिकसन्निकर्षादिना धूमव्याप्यवह्निमानयमिति यत्र परामर्शस्ततस्तृतीयक्षणेऽनुमितिस्तदनुमितेः परामर्शद्वितीयक्षणे नाऽऽपत्तिः, न वा यत्राऽऽदौ अपेक्षाबुद्धयात्मकव्यभिचारज्ञानं ततोऽपेक्षाबुद्धयात्मकपरामर्शस्ततः पञ्चमक्षणेऽनुमितिस्तदनुमितेश्चतुर्थक्षणे आपत्तिरिति ॥ यद्वाऽपेक्षाबुद्धेर्द्वितीयक्षणे ज्ञानान्तराऽनुत्पादेन नोक्तापत्तिरिति ॥

"अभिधेयत्वं प्रमेयत्वव्यभिचारीत्यत्रे' तिगादाधरी। ननु-साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्न-साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपिताऽभावविषयतानिरूपिताऽधिकरणताविषयतानिरूपितवृत्तित्वविषयतानिरूपिताऽभावविषतानिरूपितहेतुविषयतानिरूपित-पक्षविषयताशालिनिश्चयत्वेनाऽनुमितिहेतुता भवतु, एवं च भ्रमस्य नाऽप्रसिद्धिरिति चेन्न, गुणकर्मान्यत्वोपलक्षितसत्ताभाववद्वृत्तित्वज्ञानात् शुद्धसत्तात्वावच्छिन्नविधेयताकाऽनुमित्यनुपपत्तेः; उपलक्षणीभूतस्यापि धर्मस्य प्रकारतावच्छेदकत्वात्, अतः साध्यतावच्छेदकधर्मावच्छिन्नत्वं प्रतियोगितायामेव देयम्, उपलक्षणीभूतधर्मस्य प्रतियोगितानवच्छेदकत्वेन तदनुपपत्तिवारण-

संभवात् ॥

"तस्य सम्बन्धघटकतया तत्प्रकारकत्वघटिततद्भ्रमत्वानुपपत्तेरि"तिगादाधरी। ननु शक्तिव्युत्पत्तिवादे संसर्गतावच्छेदकांऽशे भ्रमत्वं नांगीकृतं, व्याप्तिपंचके जगदीशेन सांसर्गकोटावेव भ्रमत्वमंगीकृतमित्येतयोरभिप्रायस्तु-सांसर्गकोटौ भ्रमत्वानङ्गीकारमते संसर्गांशे प्रकारत्वादिविरहेऽपि विशेषणत्वादिकमस्त्येव, तथा च तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठविशेषणताशालिज्ञानस्यैव भ्रमत्वमुक्तं जगदीशेन, संसर्गांशे प्रकारविशेष्यभावाभावात् प्रकारताविशेष्यताघटितभ्रमत्वं नोक्तं गदाधरेणेति ॥

"प्रतियोगितासंसर्गकज्ञानस्यैवाऽनुमितिहेतुतये"ति गादाधरी। ननु प्रतियोगितासंसर्गकज्ञाने किं लाघवम् ? साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपिताऽभावत्वावच्छिन्नविषयतानिरूपिताऽधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिताऽभावीयविषयतानिरूपितहेतुविषयतानिरूपितपक्षविषयताशालिनिश्चयत्वेन हेतुत्वकल्पने साध्यतावच्छेदकस्य द्विधा प्रवेशे गौरवादिति चेन्न, प्रतियोगिताप्रकारकज्ञानस्य हेतुत्वे प्रतियोगितानिष्ठप्रकारतायाः किञ्चित्सम्बन्धावच्छिन्नतया साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वादिसम्बन्धपर्यालोचनतया प्रतियोगिताप्रकारकज्ञानापेक्षया प्रतियोगितासंसर्गकज्ञानस्यैव हेतुत्वस्याऽऽवश्यकतया लाघवादिति ॥ ननु-स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तत्तदनिरूपकत्वं भ्रमभिन्नत्वमुक्तं गदाधरेण, तत्र भ्रमभिन्नत्वं कथमुच्यते ?, नित्यज्ञानाऽवृत्तिविषयताशून्यत्वस्यैव सम्यक्त्वादिति चेन्न, विशिष्टज्ञानीयवह्न्यभाववद्ध्रदविषयिताया नित्यज्ञानेऽसत्त्वेन नित्यज्ञानाऽवृत्तिविषयिताशून्यत्वस्य विशिष्टज्ञाने विरहादसंभवापत्तेः विशिष्टविषयकत्वस्य नित्यज्ञानेऽनभ्युपगमात् ॥

"स्व(ह्रदविशेष्यता)व्यधिकरणप्रकारावच्छिन्ना या या विषयता तदनिरूपकत्वस्य भ्रमभिन्नत्वस्य प्रमात्वस्येति"गादाधरी। अथ स्वाधिकरणनिरूपितवृत्तित्वाभावः स्वव्यधिकरणत्वम्, स्वपदं विशेष्यत्वपरम्, नन्वत्र वृत्तित्वं केन सम्बन्धेन ?, यदि सम्बन्धसामान्येन, तदा पर्वतो वह्न्यभाववानित्यादिज्ञानस्यापि प्रमात्वापत्तेः, वह्न्यभावस्यापि कालिकसम्बन्धेन पर्वतवृत्तित्वात्, यत्किञ्चित्सम्बन्धेन तथात्वोक्तौ तु ह्रदो वह्न्यभाववानित्यस्यापि प्रमात्वानुपपत्तेः, ह्रदनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाभावस्य वह्न्यभावे सत्त्वात्। न च

स्वनिरूपितप्रकारतावच्छेदकसम्बन्धेन तथात्वं वक्तव्यमेवं च न कोऽपि दोष इति वाच्यम्, गुणो गुणकर्मान्यत्वविशिष्टसत्तावानित्यस्याऽपि प्रमात्वापत्तेः, गुणनिरूपितवृत्तित्वस्य तत्र सत्त्वात्। यद्यपि स्वाश्रयनिष्ठाधिकरणतानिरूपिततादृशसम्बन्धावच्छिन्ननिरूपकतानवच्छेदकरूपावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाऽनिरूपकत्वं प्रमात्वमुच्यते तदा जातिः समवायेन सत्तावतीत्याकारकज्ञानस्य भ्रमत्वानुपपत्तेः, जातिनिरूपितसमवायसम्बन्ध.वच्छिन्ननिरूपकतायाः अप्रसिद्धेरिति चेत्!, अत्र केचित्–विशेष्यताविशिष्टप्रकारत्वाऽनिरूपकत्वमेव सर्वांशे भ्रमभिन्नत्वं, वैशिष्ट्यं च–स्वनिरूपितत्व–स्वाश्रयनिष्ठाधिकरणतानिरूपिताधेयतावदन्यत्वेभयसम्बन्धेन, आधेयतावत्ता च–स्वानवच्छेदकानवच्छिन्नत्व–स्वसामानाधिकरण्य–स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन, स्ववृत्तित्वं च–स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन॥

"तदर्थं प्रकारान्तरानुसरणे चे'ति गादाधरी। यादृशविशिष्टविषयकनिश्चयत्वं तादृशानुमितिविरोधितानतिरिक्तवृत्तित्वम्,॥ ननु प्रकारान्तरानुसरणं तावद् यद्रूपावच्छिन्नविषयकत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपवत्त्वमेव वाच्यम्, एवं च वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वस्य संशये ऽप्रामाण्यज्ञानास्कन्दिते ज्ञाने, आहार्यज्ञाने च सत्त्वादसंभववारणाय यथार्थपदसार्थक्यसंभवे कथं वैयर्थ्योक्तिः संगच्छते इति चेन्न, जलं वह्न्यभावविरोधि–इत्याकारकज्ञानकालीनस्य ह्रदो जलवान् वह्न्यभाववान्वा–इत्यादिज्ञानस्य संशयतया सर्वांशे यथार्थत्वेन वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायाः अनुमितिप्रतिबन्धकताऽतिरिक्तवृत्तित्वात्, अतो यद्रूपावच्छिन्नविषयितायां संशयान्य–निश्चयवृत्तित्वविशेषणं देयम्। तदर्थं यथार्थपदसार्थक्याऽसंभवात्। न च यद्रूपावच्छिन्नविषयितायाः आहार्याऽप्रामाण्यज्ञानाऽऽस्कन्दितज्ञानेऽपि सत्त्वेन पुनरसंभवोऽतः आहार्यादिवारणाय यथार्थसार्थक्यं संभवतीति वाच्यम्॥ ह्रदो वह्निमानितिज्ञानानन्तरम् इच्छाप्रयोज्यं यद् वह्न्यभाववान् ह्रदइतिज्ञानं तस्य यथार्थाऽऽहार्यतयाऽसंभवभयेन यद्रूपावच्छिन्नविषयकनिश्चयेऽनाहार्यत्वस्य एवं भाविज्ञानमप्रमा ततो वह्न्यभाववान् ह्रद इतिज्ञानं ततोऽतीतज्ञानम् अप्रमा–इत्यप्रामाण्यज्ञानद्वयपुटित–वह्न्यभाववान्ह्रद–इतिज्ञानस्य सर्वांशे यथार्थत्वेनाऽसंभवभयात्–अप्रामाण्यज्ञानाऽनास्कन्दितत्वस्याऽपि निश्चयविशेषणतया न तद्वारणाय यथार्थपदसार्थक्यम्॥

ननु यद्रूपावच्छिन्नविषयतासामान्यं प्रतिबन्धकतावच्छेदकं तद्रूपविशिष्टप्रकारकप्रमाविशेष्यत्वमितिकल्पे-पाषाणमयत्ववत्पर्वतमादाय पर्वतो वह्निमान् धूमादित्यत्र धूमस्य दुष्टतापत्तिः, पाषाणमयो न वह्निमान्-इत्याकारकज्ञानविशिष्टपर्वतः पाषाणमय इत्याकारकज्ञानविषयीभूतपाषाणमयत्ववत्पर्वतविषयतासामान्यस्यैव प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वात् ज्ञानभेदेन विषयताभेदानभ्युपगमात् अन्यथाऽग्रेऽपि तादृशज्ञानमादायाऽतिव्याप्तिदानाऽसंगतेरिति चेन्न, ज्ञानभेदेन विषयताभेदमङ्गीकृत्यैवैतल्लक्षणकरणात्, अग्रे च समानाकारकज्ञानीयविषयतैक्यमादृत्य दोषस्य वक्ष्यमाणत्वात्, एवं च अनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दिताऽव्याप्यवृत्तित्वभ्रमाऽनास्कन्दितनिश्चयवृत्तित्वं यद्रूपावच्छिन्नविषयतायां निवेश्यम्, अन्यथाऽसंभवाऽऽपत्तेः, न चैवमसाधारणेऽव्याप्तिः, तद्विषयतासामान्यान्तर्गतपक्षधर्मताज्ञानाऽसमानकालीनतज्ज्ञानीयविषयतायाः प्रतिबन्धकताऽनवच्छेदकत्वादिति वाच्यम्, अस्य दुष्टहेतुलक्षणत्वेन दोषलक्षणत्वाभावात्, असाधारणनियतबाधस्वरूपासिद्ध्याद्यन्यतमदोषमादाय हेतोर्दुष्टत्वसंभवात्। ज्ञानभेदेन विषयताभेदाऽनभ्युपगमे तु-अनाहार्यत्वादिविशिष्ट-यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकः प्रकृतानुमित्यप्रतिबन्धकत्वाऽसाधारण्यविषयताशून्यत्वैतदुभयाऽभाव इतिविवक्षणीयम्, एवं च पाषाणमयत्ववत्पर्वते नाऽतिव्याप्तिः पाषाणमयो न वह्निमानित्यादिज्ञानाऽकालीनपाषाणमयत्ववत्पर्वतनिश्चये तादृशोभयाभावस्याऽसत्त्वान्नातिव्याप्तिः॥

"यद्यपि पर्वतत्वाद्यवच्छिन्ने वह्नित्वाद्यवच्छिन्नसाधने धूमत्वावच्छिन्नो दुष्ट"इतिगादाधरी। ननु नञऽसमभिव्याहारस्थले यत्र धर्मिणि येन सम्बन्धेन यत्प्रकारकबोधोऽनुभवसिद्धः नञ्समभिव्याहारस्थलेऽपि यादृशधर्मिणि येन सम्बन्धेन तदभावः प्रतीयते इति नियमनस्यांऽगीकर्तव्यतया पर्वते वह्नेः साधने धूमो न दुष्ट इत्यादिव्यवहारानुपपत्तिः, तत्र दुष्धात्वर्थाऽप्रसिद्ध्या नञा तदभावप्रत्ययस्याऽसंभवात् इतिचेन्न, अत्राऽनन्यगतिकतया तादृशव्युत्पत्त्यस्वीकारेण नञ्समभिव्याहारस्थले सर्वत्राऽनुमितिप्रतिबन्धकतावच्छेदकतायां स्व(हेतु)वृत्तितावच्छदकत्वोपलक्षितधर्मावच्छिन्नविषयतात्वव्यापकत्वाऽभावः प्रतीयते, वृत्तित्वं च-स्व(दोष)ज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्नं ग्राह्यम्॥

"अथवा-इतरभेदानुमापकमेवेदं लक्षणमिति"गादाधरी। वह्निना धूमसाधने रासभो दुष्ट इति तृतीयाया अभेदार्थकत्वे रासभे

तद्बोधेन न तत्र दुष्टताव्यवहारापत्तिरित्यत आह–अथवेति ॥

"तर्हि यथार्थेति व्यर्थमिति" शिरोमणिः। नन्वखण्डाभावघटकतयैव सार्थक्यसंभवे कथं व्यर्थत्वोक्तिरिति चेन्न, अनुमितिप्रतिबन्धकतावृत्त्यभावीया अवच्छेदकत्वनिष्ठप्रतियोगितानिरूपिता या प्रतियोगितात्वावच्छिन्नाऽवच्छेदकता तन्निरूपितभेदनिष्ठावच्छेदकतानिरूपिताऽऽधेयत्वत्वावच्छिन्नावच्छेदकतानिरूपितयाथार्थ्यसमानाधिकरणा या निश्चयत्वावच्छिन्नाऽवच्छेदकतानिरूपितविषयित्वनिष्ठाऽवच्छेदकता तन्निरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्वत्त्वं हेत्वाभासत्वमिति लक्षणानुसारेण यथार्थपदवैयर्थ्यमभिहितम्, न तु याथार्थ्यस्य प्रतियोगितावच्छेदकतया भानमभ्युपगम्येति ॥

"लिङ्गमविवक्षितमि" तिशिरोमणिः। 'ननु लिङ्गाज्ञानं लिङ्गज्ञानमितिव्युत्पत्त्या यद्रूपावच्छिन्नविषयकानुमितित्वव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपवत्त्वमित्यर्थलाभेनाऽनाहार्यत्वाद्यप्रवेशेन लाघवात्। न च घटोऽवृत्तिरित्यत्र घटवद्रूपबोधेऽव्याप्तिः, निर्धर्मितावच्छेदकानुमितेरप्रसिद्धत्वादिति वाच्यम्। तत्र घटवत्–घटवत्स्वरूपस्य बाधत्वाऽङ्गीकारे क्षत्यभावादिति चेन्न',–यादृशस्थलविशेषे दोषविषयकानुमितेरप्रसिद्धिस्तादृशस्थले दोषेऽव्याप्त्यापत्तेरतो लिङ्गांऽशस्याऽविवक्षितत्वोक्तिः साध्वी संगच्छते। अथ–यद्रूपावच्छिन्नविषयित्वाऽव्यापकीभूतविषयिताशून्यलिङ्गविषयकयद्रूपावच्छिन्ननिश्चयाऽप्रसिद्ध्याऽसंभवसंभवे तत्परित्यागे का युक्तिरिति चेदियम्–अव्यापकीभूतविषयिताशून्यत्वस्य ज्ञानेऽनिवेशात्, अपि तु यद्रूपावच्छिन्नविषयित्वाऽव्यापकीभूतविषयिताशून्यज्ञानीयत्वोपलक्षितत्वस्य यद्रूपावच्छिन्नविषयितायां निवेशनीयत्वात्, एवं च–लिङ्गविषयकदोषविषयकसमूहालम्बनज्ञानमादाय लक्षणसमन्वयसंभवः। न चैवं ह्रदो वह्निमान् वह्निमद्ध्रदात् इत्यत्र लिंगविषयकवह्न्यभाववद्ध्रदविषयकाऽनाहार्यनिश्चयस्याऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम्, लिंगताऽवच्छेदकावच्छिन्नस्य पर्याप्त्यनिवेशेन केवलह्रदत्वावच्छिन्नविषयकवह्न्यभाववद्ध्रदइतिज्ञानस्याऽनाहार्यस्य संभवात्। न च तथापि लिंगपदस्य वैयर्थ्यसंभवे निष्प्रयोजनकत्वकथनमसंगतमिति वाच्यम्, लिंगविषयकयद्रूपावच्छिन्नविषयकनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीत्याकारकव्यापकतारूपाऽभावस्य यद्रूपावच्छिन्नविषयकनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीत्याकारकव्यापकतारूपाऽभावाऽघटिततया वैयर्थ्याऽसंभवात् ॥

"यत्संबन्धावच्छिन्नयत्निष्ठप्रकारताकत्वेनाऽनुमितिविरोधित्वं

तेन सम्बन्धेन तद्वत्त्वं दुष्टत्वमि"तिगादाधरी। ननु पर्वतत्वसामानाधिकरण्येन वह्नेः साध्यतायां धूमहेतोः सद्धेतुतया तदनुमितिं प्रति पर्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धेन वह्न्यभावप्रकारकपर्वतविशेष्यकज्ञानस्य प्रतिबन्धकतया तादृशसम्बन्धस्याऽप्रसिद्ध्यैव पक्षविशेष्यकभ्रममादाय सद्धेतावतिव्याप्तिवारणसंभवात् कथं तादृशभ्रममादायाऽतिव्याप्तिर्दत्तेति चेन्न, पर्वतत्वसामानाधिकरण्येन वह्न्यनुमितिं प्रति यथा पर्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धेन वह्न्यभावप्रकारकज्ञानस्य प्रतिबन्धकत्वं तथा वह्न्यभावव्याप्यपर्वतत्वप्रतियोगिकसमवायसम्बन्धेन पर्वतत्वनिष्ठाऽवच्छेदकताकविशेष्यताकशुद्धस्वरूपसम्बन्धेन वह्न्यभावज्ञानस्य प्रतिबन्धकतया तत्सम्बन्धेन तद्वत्त्वस्य धूमहेतौ सत्त्वेन तादृशभ्रममादायाऽतिव्याप्तेः संभावनीयत्वात्। न चैवं सति तादृशसम्बन्धावच्छिन्नपर्वतत्वनिष्ठाऽवच्छेदकताकशुद्धसंयोगसम्बन्धावच्छिन्नाऽऽधेयतासम्बन्धावच्छिन्नपर्वतप्रकारकवह्न्यभावव्याप्यविशेष्यकज्ञानस्य प्रतिबन्धकतया शुद्धसंयोगसम्बन्धावच्छिन्नाऽऽधेयत्वसम्बन्धेन पर्वतवत्ताया धूमे सत्त्वेन पक्षविशेष्यकभ्रममादायाऽपि धूमहेतावतिव्याप्तिः संभवतीति वाच्यम्। यादृशसम्बन्धावच्छिन्नयादृशरूपनिष्ठावच्छेदकताकयादृशसम्बन्धावच्छिन्नप्रकारताकत्वेन प्रतिबन्धकत्वं तादृशसम्बन्धावच्छिन्नतादृशरूपनिष्ठावच्छेदकताकतादृशसम्बन्धावच्छिन्ननिरूपकतानिरूपिताऽधिकरणत्वस्य दुष्टत्वव्यवहारनियामकत्वोपगमेन पक्षविशेषणकभ्रममादाय प्रसिद्धधूमहेतावतिव्याप्तेरयोगात् तादृशसम्बन्धाऽप्रसिद्धेः। न चैवं विवक्षणे कथम् अन्यतरत्वहेतावतिव्याप्तिरिति वाच्यम्, व्याप्तिज्ञानं प्रति साध्याभावधर्मिकस्वरूपसम्बन्धावच्छिन्नाऽऽधेयतासम्बन्धेन हेतुमत्प्रकारकज्ञानस्य प्रतिबन्धकतया तादृशभ्रममादायाऽन्यतरत्वहेतावतिव्याप्तेः संभवात्। ननु–धूमवान् पर्वतो वह्निमान् धूमादित्यत्र धूमत्वाभाववत्पर्वतस्याऽऽश्रयाऽसिद्धित्वेन तादृशधूमत्वाऽभावस्य हेतावसत्त्वात् कथं दुष्टत्वव्यवहारः?, एवं रूपवत्पर्वतो वह्निमान् तद्रूपात्-निरूपकतासम्बन्धेन पर्वतनिरूपिताऽऽधेयत्वनिरूपिताऽऽधेयत्वनिरूपिताऽऽधेयतावान्पर्वतो वह्निमान् पर्वतनिरूपिताधेयत्वादित्यादौ सर्वत्र दुष्टत्वव्यवहारानुपपत्तिरिति चेन्न, सर्वत्रैव तदभावव्याप्यः पर्वत इतिज्ञानमादाय हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतासम्बन्धावच्छिन्नपक्षप्रकारकव्याप्यविशेष्यकज्ञानस्यापि प्रतिबन्धकत्वात् तेन सम्बन्धेन तद्वत्ताया हेतौ सत्त्वात्। वस्तुतस्तु–सर्वत्रैव क्लृप्तधूमत्वाभावत्वादिना घटाऽभावज्ञानस्य स्वरूपसम्बन्धेन प्रतिबन्धकतया स्वरूपसम्बन्धेन घटाभाववत्त्वादिकमादाय सर्वत्रैव दुष्टत्वव्यवहारसंभवात्॥

नन्वत्र–यत्प्रकारकत्वेन प्रतिबन्धकत्वं तत्त्वं दोषत्वमिति लक्षणे वह्न्यभाववद्ध्रदस्य दोषत्वाऽनुपपत्तिर्वह्न्यभावस्य दोषतापत्तिश्च। यदि च दोषाऽघटितमेव दुष्टलक्षणं तदा दोषवत्त्वं दुष्टत्वमिति नियमाऽनुपपत्तिरिति चेन्न। अन्तरा भासमानविषयतयोरभेदाऽभ्युपगमेन वह्न्यभाववद्ध्रदवान्धूमइतिज्ञानीयस्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धावच्छिन्नह्रदत्वावच्छिन्नप्रकारताया अपि तन्निष्ठविशेष्यत्वाऽभिन्नतया प्रतिबन्धकतावच्छेदकत्वात् यत्प्रकारकत्वेन प्रतिबन्धकत्वं तत्त्वं दोषत्वमित्यायातम् ॥

"भ्रमपदं निश्चयसामान्यपरम्"इतिगादाधरी। ननु 'भ्रमविषये साध्याभावादौ"इतिशिरोमण्युक्तात् आदिना बाधितदुष्टहेतौ भ्रमविषयसाध्याभावादिकमादाय दुष्टत्वापत्तिसंभवे भ्रमपदस्य निश्चयसामान्ये लक्षणाकरणमनर्थकमितिचेन्न, लक्षणाकरणं प्रमाविषयसाध्याभावमादाय संभव इति प्रसंगाऽकथनन्यूनतापरिहारार्थम् ॥ अथ–अनुमितिप्रतिबन्धकत्वाभावो यद्रूपावच्छिन्नविषयकनिश्चयाऽवृत्तितद्रूपवत्त्वस्य, अथवा–प्रकृतानुमितिप्रतिबन्धकत्वाऽभावत्वं यद्रूपावच्छिन्नविषयकनिश्चयवृत्तितानवच्छेदकं तद्रूपवत्त्वस्य विवक्षितत्वात् स्वव्यापकत्वेत्याद्यभिधानस्याऽसंगतत्वापत्तेरिति चेन्न, प्रथमेऽभावस्याऽधिकरणभेदेन भिन्नतामते घटविषयकनिश्चयवृत्तिप्रतिबन्धकत्वाऽभावस्य पटनिश्चये ऽवर्तमानत्वात् ह्रदो वह्निमानित्यत्रोदासीनपटादावतिव्याप्तेः। द्वितीये च–विशेष्यवृत्तिपदार्थस्य विशिष्टानुयोगिकाऽभावस्याऽनभ्युपगमे शुद्धाभावत्वे तादृशनिश्चयवृत्तिताऽवच्छेदकत्वसत्त्वेन प्रतिबन्धकताविशिष्टाऽभावत्वे तदभावाऽनभ्युपगमात् पर्याप्त्यादिनिवेशे च लाघवाऽनवकाशात् ॥

"अनाहार्याऽप्रामाण्यज्ञाना ऽनास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयित्वव्यापकप्रकृतानुमितिप्रतिबन्धकता तद्रूपवत्त्वमिति"-गादाधरी। ननु यद्रूपावच्छिन्नविषयित्वं प्रकृताऽनुमित्यवृत्ति तद्रूपवत्त्वस्यैव विवक्षणात् स्वव्यापक–त्वकत्व–निवेशनमनर्थकमिति चेन्न, वह्न्यभावव्याप्यसाध्यकस्थले वह्निमत्पर्वतेऽतिव्याप्त्यापत्तेः, वह्निमत्पर्वतविषयिताया वह्न्यभावव्याप्यवत्पर्वतविषयकसमूहालम्बनानुमित्यवृत्तित्वात्। न च तथापि अनुमितिप्राक्क्षणवृत्तिज्ञानाऽवृत्तियद्रूपावच्छिन्नविषयित्वं तद्रूपवत्त्वमेव विवक्ष्यतां, वह्निमत्पर्वतविषयितायाः प्रकृताऽनुमितिप्राक्क्षणवृत्तिज्ञानाऽवृत्तित्वेन वारणसंभवादिति वाच्यम्। ह्रदो वह्निमान् जलवद्ध्रदात् इत्यत्र वह्न्यभाववज्जलवत्यतिव्याप्तिः, तादृशवह्न्यभाववज्ज्वलवत्त्वावच्छिन्नविषयितायाः अनुमितिप्राक्क्षणवृत्तिज्ञानाऽवृत्तित्वात्। वह्न्यभाववान् जलवान्, वह्निव्याप्यजलवद्ध्रदवा-

ह्रदो वह्निमान्,–इतिज्ञानद्वयं क्षणद्वयसाधारणम् ।।

"यत्तु प्रतिबन्धकताशून्यतादृशनिश्चयाऽवृत्तित्वमेवाऽनतिरिक्तवृत्तित्वमिति" गादाधरी ।। नन्वत्र–पक्षाऽवटितसाध्यव्यापकीभूताऽभावप्रतियोगिहेतुरूपाऽसाधारण्येऽव्याप्तिः, तद्विषयितायाः अनुमितिप्रतिबन्धकताशून्य–तन्निश्चयवृत्तित्वादिति चेन्न, पक्षधर्मिकहेतुमत्ताज्ञानकालीनानुमितिप्रतिबन्धकताशून्यनिश्चयाऽवृत्तित्वस्य विवक्षितत्वात्, तादृशाऽसाधारण्यज्ञानं यदि हेतुमत्ताज्ञानकालीनं तदा प्रतिबन्धकमेवेत्यदोषः ।

"शुद्धह्रदत्वाद्यवच्छिन्नेऽतिप्रसंगाच्चे"तिगादाधरी । यद्विषयकत्वेनेति दीधितौ तृतीयायाः शून्यत्वम् अवृत्तित्वं चार्थः, शून्यत्वे प्रतिबन्धकत्वस्य, अवृत्तित्वस्य च मूलोक्तज्ञानपदार्थनिश्चयेऽन्वयेन विशिष्टलाभसंभवात् न मूलोक्तज्ञानपदस्य वैयर्थ्यम्, अतो दोषान्तरमाह–शुद्धह्रदत्वेनाऽतिप्रसंगाच्चेति । न च–अनुमितिप्रतिबन्धकताशून्याऽनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयवृत्तिविषयितानिरूपकतानवच्छेदकरूपवत्त्वस्य विवक्षणान्न शुद्धह्रदेऽतिव्याप्तिः संभवतीति वाच्यम्, ह्रदो वह्निमान् धूमादत्र संयोगाऽभाववति संयोगज्ञानस्य नियताहार्यतयाऽनुमितिप्रतिबन्धकताशून्याऽनाहार्यनिश्चयवृत्तिविषयितानिरूपकतानवच्छेदकत्वस्य च संयोगवत्संयोगाऽभाववत्त्वे सत्त्वेन तत्राऽतिप्रसंगात् ।। नन्वत्राऽनुमितित्वव्यापकत्वस्य प्रतिबन्धकतायां निवेशो व्यर्थः, यत्किञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतेत्यादिनिवेशेनैव सामञ्जस्यात्, निरुक्त (वह्निमान्वह्निव्याप्यधूमवान्) समूहालम्बनानुमितिव्यक्तिमादायैव सर्वत्र लक्षणसमन्वयसंभवात् इति चेन्न, यादृशस्थलविशेषे ह्रदो वह्निमानित्याकारकानुमितिः कदाचिद् घटवद्भूतलकदाचिद्घटाभाववद्भूतलान्यतरविषयिणी भवति न त्वन्यतरत्परित्यज्याऽपि भवति तादृशस्थले घटाऽभाववद्भूतलेऽतिव्याप्तिः, निरुक्तसमूहालम्बनाऽनुमितिव्यक्तिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताया घटाभाववद्भूतलनिश्चये सत्त्वात्, अनुमितित्वव्यापकत्वोक्तौ च घटाभाववद्भूतलनिश्चयप्रतिबध्यताया न निरुक्तानुमितित्वव्यापकत्वं निरुक्तानुमितित्वस्य ह्रदो वह्निव्याप्यधूमवान् घटाभाववच्च भूतलमित्याकारकानुमितावपि सत्त्वात्, अतो व्यापकत्वनिवेशः ।।

"अथैवमपि जातित्वादिना ह्रदत्वादिविषयकस्य जातिमान् जात्यभाववानित्यादिज्ञानस्याऽपी"तिगादाधरी।। जातित्वेन ह्रदत्वावगाहिजातिमान्वह्न्यभाववानितिज्ञानमादायाऽसंभववारणायाऽव्यापकीभूतविषयिताशून्यत्वं निवेशितं गदाधरेण, जगदीशेन तन्न निवेशितं, अनयोरभिप्रायस्तु–जगदीशमते–यादृशसमुदायत्ववृत्तिनिरूपकताकविषयित्वं प्रकृ-

तानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिताद्दशसमुदायत्वविशिष्टवत्त्वं लक्षणार्थः, एवं च-वह्न्यभाववद्ध्रदत्वगत (ह्रदह्रदत्ववह्निवह्नित्वाऽभावाऽभावत्व) समुदायत्ववृत्तिनिरूपकताकविषयिताया जातिमान्वह्न्यभाववानितिज्ञानेऽसत्त्वाज्जगदीशमते नाऽसंभवः। गदाधरमते च-याद्दशसमुदायवृत्तिसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्त्यवच्छेदकताकविषयित्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिनिवेशः, जातिमान्वह्न्यभाववानितिज्ञाने जातित्वस्याऽधिकस्य भानेऽपि वह्न्यभाववद्ध्रदस्य निरूपकतावच्छेदकघटकतया वह्न्यभाववद्ध्रदत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयितायास्तत्र सत्त्वात् असंभवसंगतिः, न च गदाधरेणापि जगदीशरीत्या कथं न निवेशितमिति वाच्यम्, याद्दशस्थले घटवद्भूतलमितिज्ञानं वह्न्यभाववद्ध्रदइतिज्ञानात्मकमेव जायते यदा च वह्न्यभाववद्ध्रदइतिज्ञानात्मकं तदा घटत्वांऽशे नियमतो जातित्वावगाह्येव भवति ताद्दशस्थले घटवद्भूतलेऽतिव्याप्तिः, जगदीशमते च एताद्दशांकुरे प्रमाणाभावात्, अतो जातित्वेन ह्रदत्वावगाहिज्ञानमादायाऽसंभवो दत्तो भट्टाचार्येण ॥ ननु ह्रदत्वसामानाधिकरण्येन वह्निसाध्यकस्थले ह्रदत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपेण वह्न्यभाववद्ध्रदरूपबाधे लक्षणसमन्वयात्कथमसंभवः?, गदाधरमते च एकदेशव्यापकत्वाऽसत्त्वेन जातिमान्वह्न्यभाववानितिज्ञाने ह्रदत्वव्यापकताया अभावात्। न चाऽभावत्वांऽशे प्रमेयत्वाऽवगाहि-ह्रदो वह्नीयप्रमेयवत्त्वादितिज्ञानमादायाऽसंभव इति वाच्यम्, व्यापकतावच्छेदकरूपभेदेन व्यापकताया भिन्नत्वात् वह्न्यभावत्वावच्छिन्ने ह्रदत्वव्यापकताघटितोक्तबाधविषयिताया उक्तज्ञानेऽसत्त्वादिति चेन्न, स्वरूपत्वांऽशे प्रमेयत्वावगाहि-ह्रदोह्रदत्वव्यापकवह्न्यभावप्रतियोगिकप्रमेयवत्तासम्बन्धेन-वह्न्यभाववानितिज्ञानमादायाऽसंभवसंभवात् ॥

"पक्षतावच्छेदकांशे ऽन्या ऽप्रकारकत्वादिनिवेशस्या ऽशक्यत्वादि"तिगादाधरी। ननु किमिदं पक्षतावच्छेदकांऽशेऽन्याऽप्रकारकत्वम्?, न च पक्षतावच्छेदकनिष्ठविशेष्यतानिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकपक्षतावच्छेदकत्वाभाववन्निष्ठप्रकारत्वा ऽनिरूपकत्वमेव तदिति वाच्यम्, ह्रदो वह्न्यभाववानिति ज्ञानेऽपि सामानाधिकरण्यसम्बन्धेन धर्मिपारतन्त्र्येण ह्रदत्वे वह्न्यभावस्य प्रकारतयाऽसंभवापत्तेरिति चेन्न, विशेष्यताविशिष्टप्रकारत्वाऽनिरूपकत्वमेव पक्षतावच्छेदकांऽशेऽन्याऽप्रकारकत्वम्, वैशिष्ट्यं च-स्वनिरूपितत्व-स्वावच्छिन्नावच्छेदकताकविशेष्यतानिरूपितप्रकारत्वानवच्छिन्नत्वोभयसम्बन्धेन, निरुक्तप्रकारतायाम् अवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकपक्षतावच्छेद-

काऽभाववन्निष्ठत्वनिवेशात् न जलवान्वह्निमानित्यादिस्थलीयबाधाऽसंग्रहः अतः स्थलान्तरेऽव्याप्तिमाह–किञ्चिद्विशिष्टेति, ह्रदो जात्यभाववानित्यत्र जातिमद्ध्रदरूपबाधेऽव्याप्तिरित्यर्थः, तत्र जातित्वस्य ह्रदत्वे प्रकारतया जातिमान्ह्रदइत्यादिनिश्चयस्य निरुक्तप्रकारत्वाऽनिरूपकत्वाऽभावादिति ।।

"तादृशविशिष्टाऽघटकपदार्थाऽविषयकेति"गादाधरी । अस्याऽयमर्थः,–प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिरूपवत्त्वं हेत्वाभासत्वं, वृत्तित्वं च–स्वविशिष्टनिश्चयत्वव्यापकत्वसम्बन्धेन, स्ववैशिष्ट्यं च निश्चये स्वावच्छिन्नविषयितावत्त्व–स्वावच्छिन्नविषयिताव्यापकविषयिताकाऽन्यनिष्ठविषयिताशून्यत्वोभयसम्बन्धेन ।।

"यद्रूपावच्छिन्नस्य यस्य यस्य यादृशविशिष्टघटकते"तिगादाधरी । ननु–यद्यद्रूपावच्छिन्नस्य यस्य यस्य यादृशविशिष्टाऽघटकत्वं तत्तद्रूपावच्छिन्नतन्निष्ठविषयिताशून्यत्वं लाघवान्निवेश्यम्, किं तद्विषयिताव्यापकविषयिताकत्वरूपघटकत्वनिवेशेनेति चेन्न, घटकत्वसंख्याऽपेक्षयाऽघटकत्वसंख्याया आधिक्येन भेदकूटगौरवात्, एतत्कल्पार्थः–प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिरूपवत्त्वं हेत्वाभासत्वम्, वृत्तित्वं च स्वविशिष्टनिश्चयत्वव्यापकत्वसम्बन्धेन, वैशिष्ट्यं च निश्चये स्वावच्छिन्नविषयितावत्त्व–स्वावच्छिन्नविषयिताव्यापकविषयितानिरूपकतावच्छेदकरूपविशिष्टाऽन्यकिञ्चिदवच्छिन्नविषयिताशून्यत्वोभयसम्बन्धेन, रूपवैशिष्ट्यं च–स्वावच्छिन्नत्व–स्वसामानाधिकरण्योभयसम्बन्धेन । यद्यद्रूपावच्छिन्नत्वाऽनुक्तौ सर्वमाकाशवदित्यत्राऽव्याप्तिः, यस्य यस्येत्यनुक्तौ ह्रदः प्रमेयवह्निमान् इत्यादौ गुरुधर्मस्याऽभावप्रतियोगितावच्छेदकत्वे प्रमेयवह्न्यभाववद्ध्रदरूपबाधेऽव्याप्तिः, प्रमेयत्वेन ह्रदत्वावगाहिज्ञानेऽपि निरुक्तविषयिताशून्यत्वस्य सत्त्वात्, अतो यस्य यस्येत्युक्तम्, तथा च प्रमेयत्वविशिष्टवह्निविषयिताभिन्नविषयितायास्तत्र ज्ञाने सत्त्वान्न तमादायाऽव्याप्तिः ।।

"यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविषयकनिश्चयत्वमि"तिगादाधरी । अत्र–अव्यापकीभूतविषयिताशून्यत्वनिवेशेनैव संशयवारणसंभवे निश्चयद्वयोपादानं किमर्थमिति नाऽऽशंकनीयम्, जातिपक्षकद्रव्यत्वसाध्यकस्थले द्रव्यभेदरूपबाधो भवति तत्र द्रव्यभेदवत्सद्भेदवद्वृत्तिजातित्वावच्छिन्नेऽतिव्याप्तिः, सद्भिन्नो द्रव्यं न वेतिसंशयीयनिरवच्छिन्नद्रव्यत्वनिष्टप्रकारताकज्ञाने सद्भेदवद्द्रव्यभेदवद्विशिष्टविषयकत्वसमानाधिकरणाऽभावप्रतियोगितावच्छेदकीभूत–द्रव्यत्वत्वावच्छिन्नविषयतानिरूपितसद्भिन्नत्वावच्छिन्नविषयतात्वावच्छिन्नविषयताया अ-

भावसत्त्वात्, अतो निश्चयपदम्, यत्र सद्भेदस्तत्र द्रव्यभेदः सद्भेदवती जातिरिति ।। अथ यादृशविशिष्टविषयकनिश्चयविशिष्ट–यादृशविशिष्टविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकतावत्–इत्यस्यैव सामञ्जस्येऽनतिरिक्तवृत्तित्वविशेषणं व्यर्थमिति चेन्न, अनुमितित्वावच्छिन्नं प्रति चिकीर्षासामग्र्याः प्रतिबन्धकत्वमते कृतिसाध्यत्वप्रकारकनिश्चयविशिष्टेष्टसाधनत्वप्रकारकनिश्चयस्यापि प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपाऽवच्छेदकतावत्त्वेन तत्तद्विशिष्टद्वयविषयत्वाऽभावकूटस्य प्रतीतौ निवेशे गौरवादतो नाऽतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशनम् ।।

अथ विशिष्टान्तराऽघटितत्वविचारः–स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकरूपे प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावद्विषयितानिरूपकताकाऽवच्छेदकत्वनिवेशे निरवच्छिन्नस्वरूपसम्बन्धेन वह्न्यभाववद्ध्रदस्य प्रतिबन्धकतादोषत्वमते शुद्धस्वरूपसम्बन्धेन वह्न्यभाववद्ध्रदत्वस्य प्रतिबन्धकत्वाऽनामते विशिष्टान्तरतावच्छेदकतया स्वरूपसम्बन्धरूपाऽवच्छेदकतावद्विषयितानिरूपकतावच्छेदकतया च तद्घटिते तादृशदोषेऽव्याप्त्यापत्तेरतोऽनतिरिक्तवृत्तित्वरूपावच्छेदकतावद्विषयितानिरूपकतावच्छेदकत्वनिवेशः । न च तथापि तादृशस्थले प्रकृतानुमित्यवृत्तिविषयितानिरूपकतावच्छेदकत्वमेव निवेश्यतां किमतिरिक्तवृत्तित्वनिवेशेनेति वाच्यम्, पर्वतो वह्न्यभावव्याप्यवान्पर्वतीयवह्न्यभावादित्यत्र पर्वतीयवह्निमत्पर्वतरूपस्वरूपाऽसिद्धौ अव्याप्त्यापत्तेः, तादृशानुमित्यवृत्तिविषयिताकेन वह्निमत्पर्वतेन घटितत्वात् । न च तथापि अनुमित्यव्यवहितप्राक्क्षणवृत्तिज्ञानाऽवृत्तित्वमेव विषयितायां निवेश्यतामिति वाच्यम्, यादृशस्थले ह्रदो वह्निमान्–इत्यनुमित्यव्यवहितपूर्वं वह्न्यभावइतिज्ञानं कदापि न जातं तादृशस्थले वह्न्यभावविषयितायाः प्रकृतानुमित्यव्यवहितप्राक्क्षणवृत्तिज्ञानाऽवृत्तितया वह्न्यभावस्य विशिष्टान्तरपदेन धर्तुं शक्यत्वात् तद्घटितवह्न्यभाववद्ध्रदेऽव्याप्त्यापत्तेः ।।

"सत्प्रतिपक्षघटकतादृशविशिष्टद्वयविषयताभिन्नेत्यादि" गादाधरी । तथा–च यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं सत्प्रतिपक्षतावच्छेदकरूपावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशविशिष्टद्वयविषयिताभिन्नत्वं निरुक्तविशिष्टद्वयविषयितायां निवेश्यम् । अत एवोक्तं 'यत्र सत्प्रतिपक्षाऽप्रसिद्धिस्तत्र भिन्नान्तमनुपादेयमेवे'ति ।। ननु धूमव्यभिचारिवह्निमान् धूमवान्वह्नेरित्यत्र धूमव्यभिचारि-वह्निपर्यन्तस्यैव पक्षत्वेन कृतकृत्यतया

वह्निमत्पर्यन्तस्य पक्षत्वं किमर्थमिति चेन्न, अवच्छेदकावच्छेदेन सामानाधिकरण्येन च बाधप्रदर्शनार्थं वह्निमत्पर्यन्ताऽनुसरणम्, अन्यथा धूमव्यभिचारिवह्नित्वावच्छेदेन धूमाऽभावाऽसत्त्वेन अवच्छेदकावच्छेदेन बाधत्वानुपपत्तिः स्यात् । अथ विशिष्टान्तराऽघटितत्वकल्पे ह्रदत्वावच्छेदेन वह्निसाध्यकस्थले ह्रदत्वावच्छेदेन वह्न्यभाववद्ध्रदस्य बाधत्वानुपपत्तिः, तस्य सामानाधिकरण्येनैव वह्न्यभाववद्ध्रदरूपविशिष्टान्तरघटितत्वादिति चेन्न, अवच्छेदकावच्छेदेन साध्यस्थलेऽवच्छेदकावच्छेदेन वह्न्यभाववद्ध्रदस्य बाधत्वाऽनङ्गीकारात्, सामानाधिकरण्येन वह्न्यभाववद्ध्रदस्यैव बाधत्वसंभवात् ॥

"स्वावच्छिन्ना ऽ विषयकप्रतीतिविषयतावच्छेदकावच्छिन्नार्थकमि"तिगादाधरी । ननु पश्चादुक्तदलस्य व्यावृत्तिं प्रथमतोऽभिधाय प्रथमदलस्य पश्चाद्व्यावृत्त्यभिधानमसंगतमिति चेन्न, द्वितीयविशिष्टान्तररूपावच्छिन्ना ऽ विषयकप्रतीतिविषयत्वपर्यन्तनिवेशेऽसंभवा ऽ नवकाशात् 'व्यभिचारत्वावच्छिन्ना ऽ विषयकप्रमेयमितिप्रतीतिविषयवृत्तिव्यभिचारत्वावच्छिन्नाऽविषयकप्रमेयमितिप्रतीतिविषयवृत्तित्वस्य व्यभिचारत्वे सत्त्वात्, परन्तु प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिस्तद्वारणाय द्वितीयदलेऽवच्छेदकत्वं, प्रथमदलेऽवच्छेदकत्वाऽप्रवेशे भवत्यसंभव इति तात्पर्यात् ॥ अथ यद्रूपावच्छिन्नविषयकनिश्चये विशिष्टान्तरतावच्छेदकरूपाऽवच्छिन्नाविषयकत्वनिवेशवत् विशिष्टान्तराऽघटितत्वघटकनिश्चयेऽपि स्वावच्छिन्नाऽविषयकत्वं निवेश्यतां किं तादृशगुरुतरस्वावच्छिन्नाऽविषयकत्वं प्रतीतौ निवेश्य तद्विषयतावच्छेदकत्वस्य विशिष्टान्तरतावच्छेदके निवेशेन ? 'स्वावच्छिन्नाऽविषयकयद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नाऽविषयकस्वावच्छिन्नविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतावच दकं तद्रूपावच्छिन्नत्वमिति समुदितार्थः' इति चेन्न । यादृशस्थले व्यभिचारविषयकज्ञानं प्रमेयत्वविशिष्टव्यभिचारविषयकसमूहालम्बनात्मकं भवति शुद्धव्यभिचारविषयकज्ञानमप्रामाण्यास्कन्दितमेव भवति तादृशस्थले मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तेः, स्वावच्छिन्नाविषयकव्यभिचारनिश्चयस्याऽप्रामाण्यज्ञानाऽऽस्कन्दिततया बाधादेरेव विशिष्टान्तरतया तदघटितत्वस्य मेयत्वविशिष्टव्यभिचारे सत्त्वात् । न च तथापि—जगदीशरीत्या स्वानवच्छिन्नप्रकारतावच्छेदकनिरुक्तविषयितानिरूपकतावच्छेदकरूपानवच्छिन्नप्रकारतावच्छेदकत्वमेव लक्ष्यतावच्छेदकत्वे निवेश्यतामिति वाच्यम्, यादृशस्थले घटविषयकज्ञानं नियमतो बाधविषयकमेव भवति तादृशस्थले घटेऽतिव्याप्त्यापत्तेः, घटत्वाऽनवच्छिन्नप्रकारतावच्छेदकबाधत्वा-

नवच्छिन्नप्रकारतावच्छेदकत्वस्य घटत्वे सत्त्वात्, मन्मते तु तादृशविशि-ष्टान्तरबाधत्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वस्य घटत्वे विरहान्नातिव्याप्तिः ।।

प्रथमे न च कल्पे–स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेद-कयद्रूपावच्छिन्नविषयिताव्यापकं स्वावच्छिन्नविषयिताव्यापकप्रतिब-न्धकतासामान्यं तद्रूपावच्छिन्नाऽघटितत्वमिति समुदितार्थः, द्वितीया-ऽवच्छेदताया स्वरूपसम्बन्धरूपत्वे जलव्यापकवह्न्यभावसमानाधिकर-णजलवद्ध्रदरूपसत्प्रतिपक्षाऽव्याप्त्यापत्तेः, तादृशसत्प्रतिपक्षत्वावच्छिन्न-विषयित्वव्यापकप्रतिबन्धकतासामान्यनिरूपितस्वरूपसम्बन्धरूपावच्छेद-कताया जलवद्ध्रदत्वावच्छिन्नविषयितासामान्ये सत्त्वाज्जलवद्ध्रदस्य विशिष्टान्तरपदेन धर्तुमशक्यत्वात्, अतो यद्रूपावच्छिन्नविषयिताव्या-पकत्वं निरुक्तप्रतिबन्धकतासामान्ये निवेशितम्, एवं च प्रथमाऽवच्छेद-कतायाः स्वरूपसम्बन्धरूपत्वे वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव-च्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयिताकरूपाऽप्रसिद्ध्या वह्न्य-भाववद्ध्रदेऽव्याप्त्यापत्तेः, अतोऽनतिरिक्तवृत्तिस्वरूपाऽवच्छेदकत्वं निवे-शितम्, तथा चाऽसंभववारणायाऽव्यापकीभूतविषयिताशून्यत्वमपि तत्त-द्विषयितायां निवेश्यमिति ।। विपरीतबाधत्वादिकं विशिष्टान्तरत्वेनो-पादाय लक्षणसमन्वयः कर्तव्यः । न चैवं विशिष्टान्तररूपाऽप्रसिद्धि-निबन्धनमत्र कल्पेऽसंभवदानमसंगतम्, विपरीतबाधत्वादेरेव विशिष्टा-न्तरत्वसंभवादिति वाच्यम्, बाधविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय यद्रूपावच्छिन्नविषयितायां स्वावच्छिन्नविषयित्वाऽव्यापकीभूतविषयि-ताशून्यज्ञानीयत्वस्य निवेशनीयतया विपरीतबाधत्वादेर्विशिष्टान्तररूपा-ऽप्रसिद्धेः, अन्यथा बाधविशिष्टव्यभिचारत्वावच्छिन्नाऽविषयकप्रतीति-विषयतावच्छेदकत्वस्य व्यभिचारविशिष्टबाधत्वे सत्त्वेन बाधविशिष्ट-व्यभिचारेऽतिव्याप्तिवारणस्याऽशक्यत्वात्, तथा चैवं रीत्या सर्वत्र विशिष्टान्तररूपाऽप्रसिद्ध्या भवत्यसंभव इति ।। अत्र कल्पे स्वावच्छि-न्नविषयितायाम् असाधारण्यविषयित्वाऽव्यापकीभूतविषयिताशून्यज्ञा-नीयत्वोपलक्षिताऽसाधारण्यविषयितावत्त्वहेतुमत्पक्षज्ञानकालीनत्वोभया-ऽभाववन्निश्चयीयत्वं निवेश्यम्, अन्यथाऽसाधारण्याऽव्याप्त्यापत्तेः ।। केचित्तु कल्पेऽभावानुयोगिनि स्वत्वान्तर्भावकल्पे अत्र वदन्तीत्यादिना वक्ष्यमाणप्रविष्टविरोधिविषयिताप्रयुक्तत्वदलस्य वैयर्थ्यमाशंकितं भट्टा-चार्येण, तन्न समीचीनम्, यतो यद्विषयकनिश्चयस्य विरोधिविषयिता-प्रयुक्तस्तादृशोभयाभाव इति सर्वस्यैव वैयर्थ्यं स्यात्, तत उदासीनाति-



व्याप्तिवारणप्रयोजनकत्वात्तस्य, उदासीनानां च ताद्रूप्येण साजात्यवि-

रहादेव निवृत्तेरिति चेन्न, वृक्षः कपिसंयोगीत्यत्र कपिसंयोगाभाववद्वृक्षेऽतिव्याप्त्यापत्तेः, अव्याप्यवृत्तित्वज्ञानाभावविशिष्टवृक्षविशेष्यककपिसंयोगाभाववत्तानिश्चयस्य कपिसंयोगीतिबुद्धेर्विरोधित्वात् कपिसंयोगाभाववद्वृक्षवृत्तित्वाख्यःवरूपहेत्वाभासत्वविभाजकरूपप्रसिद्धेः, अस्माकन्तु – अव्याप्यवृत्तित्वज्ञानाऽभावविशिष्टयद्विषयकनिश्चयीयविरोधिविषयिताप्रयुक्तस्तादृशोभयाभावइतिरीत्या विशेष्यदलस्य वक्तव्यत्वेन कपिसंयोगाभाववद्वृक्षे तदसत्त्वान्नातिव्याप्तिः ॥

"विशिष्टान्तराऽघटितत्वेनाऽघटितस्य साध्यसाधनग्रहाऽविरोधि ज्ञाननिष्ठविषयितासम्बन्धेने"त्यादिगादाधरी। अत्र धूमवान् अवृत्तिवह्नेरित्यत्र धूमाभाववद्वृत्तिवह्निरूपव्यभिचारस्य व्याप्तिग्रहत्वव्यापकप्र.तिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्मवद्वृत्तिवह्नित्वसजातीयविशिष्टान्तरहेत्वसिद्धिघटितत्वेनाऽव्याप्तिरतः साधनग्रहाऽविरोधित्वनिवेशः, एवम्-अवृत्तिवह्निकालीनधूमवान्वह्नेरित्यत्र वह्निकालीनधूमाभाववद्वृत्तिवह्निरूपव्यभिचारत्वस्योक्तरीत्या वृत्तिवह्निरूपसजातीयतापन्नसाध्याऽप्रसिद्धिघटितत्वात् अव्याप्तिः, अतः साध्यग्रहाऽविरोधित्वनिवेशः, तदर्थश्च-साध्यतावच्छेदकविशिष्टसाध्यग्रहत्वाऽव्यापकत्वे सति हेतुतावच्छेदकविशिष्टहेतुग्रहत्वाऽव्यापिका या व्याप्तिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता तदनतिरिक्तवृत्तिस्वावच्छिन्नविषयिताकधर्म एव व्यभिचारत्वमित्यादिरीत्या परिष्कार्यं तथा च स्ववृत्तिनिरुक्तप्रतिबन्धकतेत्याद्यन्यतमप्रतिबन्धकतावत्त्वमेव साजात्यं, वृत्तित्वं प्रतिबन्धकतावत्त्वं च स्वावच्छेदकविषयितानिरूपकतावच्छेदकत्वसम्बन्धेन ॥

अत्र वदन्तीतिकल्पे तु-स्ववृत्तिहेतुधर्मिकव्याप्त्यवगाहित्वाभावाधिकरणता, पक्षे साध्यावगाहित्वाभावाधिकरणता, इत्याद्यन्यतमाधिकरणतावत्त्वमेव साजात्यं वाच्यम्, वृत्तित्वम् अधिकरणतावत्त्वं च स्वनिष्ठप्रयोज्यतानिरूपितप्रयोजकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, स्वम्-अधिकरणत्वम् ॥

"न च स्ववृत्तियावद्धेत्वाभासविभाजकरूपेण साजात्यं विवक्षणीयमि"तिगादाधरी। स्ववृत्तिहेत्वाभासविभाजकरूपत्वव्यापकत्वमर्थः, व्यापकता च स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन, ननु तादृशसाजात्यकथनेऽपि बाधविशिष्टव्यभिचारेऽतिव्याप्तिरुक्ता, स्वपदेन बाधवैशिष्ट्यमादायाऽतिव्याप्तिवारण भवतीत्यतिव्याप्तिदानमनुचितमिति चेन्न, स्ववृत्तियावद्धेत्वाभासविभाजकरूपेण स्वसजातीयविशिष्टान्तरभूतो यो व्यभिचारस्तद्घटितं यत्स्वं धूमव्यभिचारिवह्निमत्त्वं

तेन घटिते धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपबाधेऽशक्यपरिहाराया अव्याप्तेर्वारणाय तदघटितत्वपदेन तदवच्छिन्नविषयित्वाऽव्यापकीभूतविषयिताशून्यज्ञानीयत्वोपलक्षितविषयतावत्त्व-तदवच्छिन्नविषयकत्वैतदुभयाभाववत्प्रतीतिविषयतावच्छेदकत्वस्य विवक्षितत्वादुक्तबाधप्रतीतेस्तदवच्छिन्नविषयकत्वेऽपि तदवच्छिन्नविषयित्वाऽव्यापकीभूतविषयिताशून्यज्ञानीयत्वोपलक्षितविषयतावत्त्वविरहेणोभयाभावसत्त्वात् मेयत्वविशिष्टव्यभिचारत्वस्य तद्विषयकज्ञानविषयतावच्छेदकत्वाददतिव्याप्तिभिया-उपलक्षितपदानुधावनम् ॥

"अत्र वदन्ति-यद्विषयकनिश्चयस्य विरोधी"त्यादिशिरोमणिः। अत्र कल्पे 'कालाध्वनोरत्यन्तसंयोगे'ऽधिकरणे द्वितीयेति न युक्तं, व्यापकतात्मकात्यन्तसंयोगस्याऽविवक्षितत्वात्"इतिगादाधरी। नन्वत्र व्यापकत्वनिवेशेऽसंभव एव स्यात्, यद्रूपावच्छिन्नविषयकनिश्चयपदेन नानाकालवृत्तिनानानिश्चयबोधनात् तादृशनिश्चयोत्तरकालत्वस्य नानाकाले सत्त्वात् तत्र तत्र कस्या अप्यनुमितिव्यक्तेरसत्त्वेन अनुमितौ निरुक्तव्यापकत्वं बाधितमेवेति चेन्न, यद्रूपावच्छिन्नविषयकनिश्चयविशिष्टानुमितित्वव्यापकविरोधिविषयताप्रयुक्तनिरुक्तोभयाभावविवक्षणेनाऽदोषात्, वैशिष्ट्यं च-स्वाव्यवहितोत्तरकालत्वव्यापकत्वसम्बन्धेन, तथा च यत्किञ्चिन्निश्चयमादाय समन्वयान्नाऽसंभवावकाशः॥ अथाऽत्र कल्पे निर्वह्निःपर्वतो वह्निमान् इत्यत्र पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिः, पाषाणमयत्ववत्पर्वतविषयितायाः पर्वते वह्निवैशिष्ट्यावगाहित्वाभावप्रयोजकतया सुतरां निर्वह्निपर्वते वह्निवैशिष्ट्याभाववत्त्वावगाहित्वस्यापि प्रयोजकत्वात्, व्यापकाभावप्रयोजकस्य व्याप्याभावप्रयोजकतायाः स्वयमंगीकर्तव्यत्वादिति चेन्न-पाषाणमयत्ववत्पर्वतत्वावच्छिन्ननिश्चयपदेन शुद्धपाषाणमयत्ववत्पर्वतविषयकनिश्चयस्यापि लाभात्तदुत्तरानुमितौ व्यापकीभूतस्य पर्वते वह्निवैशिष्ट्यावगाहित्वस्याऽभावे पाषाणमयो न वह्निमान् पर्वतः पाषाणमय-इत्याकारकज्ञानविशिष्टज्ञानस्य पाषाणमयत्ववत्पर्वतविषयिताया एव प्रयोजकत्वमंगीक्रियते, एवं च विरोधिविषयिताप्रयुक्तोभयाभावेऽनुमितित्वव्यापकत्वं निवेश्यमिति न कोऽपि दोषः॥

'अत्र वदन्ति'कल्पे-काञ्चनमयपर्वतो वह्निमान् धूमादित्यादौ काञ्चनमयत्वव्यापकीभूताभावप्रतियोगिधूमेऽतिव्याप्तिवारणाय-अव्यवहितोत्तरत्वं तृतीयक्षणसाधारणं वक्तव्यम्, एवं च-साध्यव्यापकीभूताभावप्रतियोगिहेतुरूपाऽसाधारण्येऽव्याप्तिः, तन्निश्चयाऽव्यवहितोत्तरानुमितिसामान्यान्तर्गततृतीयक्षणवृत्त्यनुमितौ निरुक्तोभयाभाववि-

रद्द दिति चेन्न, साध्यव्यापकीभूताभावप्रतियोगिहेतुमत्पक्षज्ञानभिन्नत्वाऽसाधारण्यविषयित्वोभयाभाववत्त्वस्य यद्रूपावच्छिन्नविषयकनिश्चये निवेशनीयत्वात्, अव्यापकीभूतविषयिताशून्यज्ञानीयत्वोपलक्षितत्वमेव यद्रूपावच्छिन्नविषयितायां निवेश्यम्, एवं च साध्यव्यापकीभूताभावप्रतियोगिहेतुर्हेतुमाँश्च पक्ष इतिसमूहालम्बनज्ञानमादायाऽसाधारण्ये लक्षणसमन्वयात् ॥

"विशिष्टान्तरविषयित्वाऽप्रयोज्यस्वविषयिताप्रयोज्य–तादृशोभयाभावप्रयोजकाऽभावाधिकरणताकत्वरूपं तादृशविशेषणं निवेशनीयमि"तिगादाधरी। अत्र स्वविषयिताप्रयोज्यत्वाऽनुक्तौ पर्वतो वह्निमान् वह्नेरित्यत्र सामानाधिकरण्येन धूमस्य साध्यतायां मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिः, धूमाभाववत्पर्वत इतिभ्रमोत्तराऽनुमितिसामान्यनिष्ठोभयाभावप्रयोजकत्वस्य पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायामपि सत्त्वेन तत्र व्यभिचारत्वरूपविशिष्टान्तरविषयित्वाऽप्रयोज्यत्वसत्त्वेन च मेयत्वविशिष्टव्यभिचारस्य बाधादिरूपविशिष्टान्तरस्य चाऽप्रसिद्धया मेयत्वविशिष्टव्यभिचारस्य विशिष्टान्तरविषयित्वाऽप्रयोज्यतादृशोभयाभावप्रयोजकाभावाधिकरणताकत्वेन स्वपदेनोपादातुं शक्यत्वादित्यतिव्याप्तिवारणार्थं स्वविषयिताप्रयोज्येति। तथा च पक्षे साध्यवैशिष्ट्यावगाहित्वाऽभावाधिकरणतायां मेयत्वविशिष्टव्यभिचारविषयिताप्रयोज्यत्वाभावेन नातिव्याप्तिः, अत्र स्वविषयिताप्रयोज्यत्वं स्वविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वरूपं वक्तव्यम्, अन्यथा धूमव्यभिचारिवह्निमान्धूमवान् वह्नेरित्यत्र धूमव्यभिचारिवह्निमति अतिव्याप्तिः, तद्विषयितायाः पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायां प्रयोजकत्वात्, विशिष्टान्तरव्यभिचारविषयित्वाऽप्रयोज्यत्वाच्च, तन्निवेशे च बाधविषयिताऽन्तःपातिविषयितामात्रवृत्तिरूपावच्छिन्नविषयिताया एव प्रयोजकत्वात् तस्याश्च स्वविषयितात्वव्यापकरूपावच्छिन्नत्वाऽभावात्।

विशिष्टद्वयाऽघटितत्वाऽनिवेशे तु विशिष्टज्ञानत्वेन प्रतिबन्धकतास्थले विशिष्टद्वयविषयितायाः प्रयोजकताद्वयीत्युभयाभावप्रयोजकाभावाधिकरणतायां जलवद्ध्रदादिरूपविशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नविषयिताप्रयोज्यत्वात् न वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदादावतिव्याप्तिः, ह्रदत्वावच्छेदेन वह्निसाध्यकस्थले ह्रदत्वावच्छेदेन वह्न्यभाववद्ध्रदस्य लक्ष्यत्वाभावात् सामानाधिकरण्येन वह्न्यभाववद्ध्रदरूपविशिष्टान्तरघटितेऽव्याप्त्याशंकाभावात् ॥

"अत्र वदन्तीत्यत्र यद्विषयकनिश्चयस्य विरोधिविषयताप्रयुक्तो

द्वयोर्व्यतिरेक इति शिरोमणिः" । साध्यवत्पक्षेऽतिव्याप्तिवारणाय विरोधिविषयिताप्रयुक्तत्वमुक्तम् गदाधरेण, ननु–सिद्ध्युत्तरमपि साध्यविधेयतावच्छेदकानुमित्युत्पादात् सिद्धिप्रतिबन्धकतावच्छेदकं विधेयत्वमेव वाच्यम्, धर्मितावच्छेदके विधेयत्वाऽभावात् तथाच प्रतिबन्धकतावच्छेदकविषयितायाः प्रतिबध्यतावच्छेदकधर्माभावप्रयोजकत्वात् कथं साध्यवत्पक्षेऽतिव्याप्तिः, तद्विषयितायाः सिद्धिप्रतिबन्धकतानवच्छेदकतया साध्यप्रकारकत्वघटिततादृशोभयाभावाप्रयोजकत्वादिति चेन्न, यत्रांकुरविशेषे सिद्ध्युत्तरं तत्प्रकारकं ज्ञानं न कदापि जातं तत्र सिद्धिप्रतिबन्धकतायां लाघवात्तत्प्रकारताया एवाऽवच्छेदकत्वस्वीकारात् तत्रैवाऽतिव्याप्तेः, विधेयत्वं वाऽवच्छेदकतानात्मकप्रकारत्वरूपमिति ॥

"साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयितावहिर्भूता विषयिता विवक्षिता"गदाधरेण, अस्यार्थः साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयित्वावच्छिन्नभेदप्रतियोगितानवच्छेदकविषयिता, विरोधि वेषयता विवक्षणीयेति । निरुक्तविषयिताभिन्नत्वमात्रोक्तौ साध्यविषयिताया अपि तथात्वापत्तेः, तथापि पर्वतो वह्निमान् वह्न्यभावादित्यत्र वह्निमत्पर्वतरूपस्वरूपाऽसिद्धावव्याप्तिः, तद्विषयितायाः साध्यवत्पक्षविषयितात्मकतया विरोधिविषयितापदेन धर्तुमशक्यत्वात् इति चेन्न । विरोधिविषयितापदेन साध्यवत्पक्षविषयितात्वपक्षधर्मिकहेतुमत्तावगाहित्वाभावप्रयोजकीभूतविषयिताभिन्नत्वोभयाभाववद्विषयित्वस्य विवक्षणेन निर्दोषत्वसंभवात् ॥

विशिष्टान्तराऽघटितत्वसहितकल्पानुगमः–धर्मविशिष्टधर्मवत्त्वम्, वैशिष्ट्यं च–स्वतादात्म्यस्वविशिष्टानुमितित्वव्यापकपक्षे–साध्यवैशिष्ट्यावगाहित्व–साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावाधिकरणतावत्त्वोभयसम्बन्धेन, अधिकरणतावत्त्वं च–स्ववृत्तित्वस्वाश्रयवृत्त्युभयाभावप्रयोजकाभावाधिकरणतावृत्तित्वोभयसम्बन्धेन, स्ववृत्तित्वं च–स्वावच्छिन्नविषयितात्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावत्त्वसम्बन्धेन, अधिकरणतावृत्तित्वं च–स्वावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावत्त्व-स्वविशिष्टयत्किञ्चिद्रूपावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वाभाववत्त्वोभयसम्बन्धेन, रूपे स्ववैशिष्ट्यं च–स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वसम्बन्धेन, प्रथमं स्ववैशिष्ट्यमनुमितौ स्वावच्छिन्नविषयिताकनिश्चयाऽव्यवहितोत्तरत्वसम्बन्धेन ॥

अथ विशिष्टद्वयाऽघटितलक्षणानुगमः—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिव्यापकतारूपा ऽभावीयप्रतियोगितानिरूपितपरम्परयाऽवच्छेदकतावद्धर्मविशिष्टधर्मवत्त्वम्, धर्मवैशिष्ट्यं च धर्मे—स्वतादात्म्य—स्वविशिष्टनिश्चयनिष्ठावच्छेदकतावत्प्रतियोगिताकाभाववत्प्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन, स्ववैशिष्ट्यं च—अवच्छेदकतायां—स्वकालीनप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्त्यभावीयप्रतियोगितायाः परम्परया निरूपितत्वसम्बन्धेन, अवच्छेदकतावत्त्वं च—प्रतियोगितायां—स्वनिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नाऽवच्छेदकतावद्धर्मावच्छिन्नविषयतात्वावच्छिन्नत्व-स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावद्धर्मावच्छिन्नविषयतावैशिष्ट्यावच्छिन्नत्वसम्बन्धेन ॥

"यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वमिति" गदाधरः, अत्र निश्चयवैशिष्ट्यम्—एकक्षणावच्छिन्नैकात्मवृत्तित्वेन, तादात्म्येन तथात्वोक्तौ—अव्यापकीभूतविषयिताशून्यज्ञानीयत्वोपलक्षितत्वस्य च यादृशविशिष्टविषयकनिश्चयीयविषयितायां विशेषणत्वेऽपि यादृशस्थले समूहालम्बनज्ञानम् अप्रसिद्धं तादृशस्थले तादात्म्येन निश्चयवैशिष्ट्याऽप्रसिद्धिः स्यात् ॥ ननु—यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं प्रकृतानुमित्यवृत्ति तादृशविशिष्टद्वयविषयता कथं न निवेशितेति चेन्न, विशेष्यवृत्तिपदार्थस्य 'विशिष्टानुयोगिकाऽभावानभ्युपगमात् एकनिश्चयत्वेऽनुमितिवृत्तित्वसत्त्वेन तादृशविशिष्टविषयकनिश्चयत्वेऽनुमित्यवृत्तित्वस्याऽसत्त्वात् पर्याप्त्यादिनिवेशेन लाघवानवकाशात् ॥ स्वरूपसम्बन्धरूपावच्छेदकत्वे सामान्यपदं किमर्थम् ?, गोत्वाभावो गोत्वाभाववानित्यत्र बाधभ्रमैकदेशे गोत्वाभावेऽतिव्याप्तिवारणाय सामान्यपदस्य सार्थक्यसंभवात् गोत्वाभावत्वावच्छिन्नविषयित्वाऽव्यापकविषयितापदेन घटादिविषयिताया एव धर्तव्यतया गोत्ववद्गोत्वाभावस्याऽप्रसिद्धेः ॥ स्वरूपसम्बन्धरूपावच्छेदकत्वे पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिर्दत्ता गदाधरेण, ननु—पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयितासामान्यान्तर्गता वह्निमान्पर्वतः पाषाणमय इतिज्ञानीयपाषाणमयत्ववत्पर्वतत्वावच्छिन्ना या विषयिता सा च प्रतिबन्धकतानवच्छेदिका पाषाणमयो न वन्हिमानितिज्ञानकाले वन्हिमान्पर्वतः पाषाणमय इति ज्ञानस्याऽऽहार्यतयाऽप्रतिबन्धकत्वात्, अनाहार्यनिश्चयवृत्तित्वविशिष्टापि व-

न्हिमत्पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयिता भवति, अतोऽनाहार्यत्वनिवेशेऽपि नातिव्याप्तिरिति चेन्न, अव्यापकीभूतविषयिताशून्यत्वस्य निवेशनीयतया वन्हिमत्पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयितायाः पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयित्वाऽव्यापकत्वात् तच्छून्यत्वविरहेण धर्तुमशक्यत्वात् भवत्यतिव्याप्तिः ॥ अथ वन्ह्यभाववद्ध्रदनिश्चयविशिष्टवन्ह्यभाववद्ध्रदनिश्चयत्वस्याऽपि प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वात् वन्ह्यभाववद्ध्रदेऽव्याप्तिः, एवं गगनाभाववदभाववत्कालीनघटो गगनवानित्यत्र बाधे चापि, यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टद्वयाऽघटितत्वनिवेशे वन्ह्यभाववज्जलवद्वृत्तिजलाभाववद्ध्रदो वन्हिमानित्यत्र वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदे आश्रयासिद्धेऽव्याप्त्यापत्तेरिति चेन्न, यादृशविशिष्टविषयकनिश्चये प्रतिबध्यताविशिष्टान्यत्वस्य निवेशनीयत्वान्न कोपि दोषः, वैशिष्ट्यं च–स्वावच्छेदकीभूतविषयितावत्त्व–स्वनिरूपितप्रतिबन्धकताऽनवच्छेदकविषयिताशून्यज्ञाननिष्ठप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयितावत्त्वोभयसम्बन्धेनेति ॥ ननु वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदस्य वन्ह्यभाववज्जलवन्निरूपितवद्ध्रदरूपविशिष्टान्तरघटिततया तत्रातिव्याप्तिवारणसंभवे विशिष्टद्वयाऽघटितत्वनिवेशनं व्यर्थमिति चेन्न, जलव्यापकवन्ह्यभावसमानाधिकरणजलवद्ध्रदरूपसत्प्रतिपक्षस्य जलव्यापकवन्ह्यभावकालीनजलवद्ध्रदरूपविशिष्टान्तरघटिततया तत्राऽव्याप्तिवारणाय विशिष्टद्वयाऽघटितं यद्विशिष्टान्तरं तदघटितत्वस्य विवक्षणीयतया वन्ह्यभाववज्जलवन्निरूपितवज्जलवद्ध्रदस्य विशिष्टान्तरत्वस्याऽसंभवात् ॥ वस्तुतस्तु–आधेयतासम्बन्धेन वन्ह्यभाववज्जलवद्विशिष्टजलवद्ध्रदेऽतिव्याप्तिपरोऽयं ग्रन्थः, वृत्तित्वपदं च तादृशसंसर्गलाभायेति नास्ति विशिष्टान्तरघटितत्वशंकाऽपि ॥ नन्वत्र यद्रूपावच्छिन्नविषयकनिश्चये विशिष्टद्वयविषयिताशून्यत्वनिवेशेनैव लाघवसंभवात् कथं विशिष्टद्वयविषयिताशून्यप्रतीतिविषयतावच्छेदकं यद्रूपे विशेषणं दत्तं गदाधरेणेति चेन्न, यादृशस्थले ह्रदो वन्हिमानित्यत्र वन्ह्यभाववद्ध्रदविषयकं ज्ञानं वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदविषयकमेव समूहालम्बनं भवति, यदा तु न भवति तदा अप्रामाण्यज्ञानाऽऽस्कन्दितमेव भवति तादृशस्थले वन्ह्यभाववद्ध्रदेऽव्याप्त्यापत्तेः समूहालम्बनात्मकवन्ह्यभाववद्ध्रदविषयकनिश्चयस्य विशिष्टद्वयविषयिताशून्यत्वविरहात्, अप्रामाण्य-

ज्ञानाऽऽस्कन्दितनिश्चयस्य तु अनुमितिप्रतिबन्धकत्वाभावात्। अव्यापकीभूतविषयिताशून्यत्वनिवेशेऽपि अभावत्वेन ह्रदत्वावगाहि-अभाववान् वन्ह्यभाववानित्यादिज्ञानमादाय पुनरप्यसंभवः, अभावत्वावच्छिन्नविषयितायाः वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वाऽव्यापकत्वाऽभावात् इतिचेदत्र नव्याः—यद्रूपावच्छिन्नविषयकनिश्चये अव्यापकीभूतविषयिताशून्यत्वमिव यद्रूपावच्छिन्नस्य यस्य यस्य तादृशविशिष्टघटकता तत्तद्रूपावच्छिन्नविषयिताभिन्नकिञ्चिदवच्छिन्नविषयिताशून्यत्वमपि निवेशनीयमिति न कुत्रापि दोषः॥

"तदेकदेशावच्छेद्यत्वविशिष्टविशेष्यतानिरूपिततदेकदेशव्यापकत्वस्य संसर्गताया अप्रामाणिकत्वादिति" गादाधरी। न च तदेकदेशव्यापकत्वावच्छिन्नसांसर्गताया अस्वीकारे यत्र पर्वतत्वावच्छेदेन वन्हेः साध्यता तत्र वन्हिव्याप्यधूमवति पर्वते वन्हौ च लाघवमिति लाघवज्ञानानन्तरं वन्हिव्याप्यधूमान्पर्वतो वन्हिमानित्यनुमित्यप्रतिबन्धकत्वात्पर्वतत्वसामानाधिकरण्येन वन्ह्यभावत्वावच्छिन्ननिश्चयस्य बाधत्वानुपपत्तिरिति वाच्यम्, विशेष्यांऽशे लाघवज्ञाने प्रामाण्याऽभावात्, लिङ्गोपधायकमतेऽव्यवहितोत्तरत्वस्य कार्यतावच्छेदकाऽप्रवेशाल्लाघवम्॥ अथ लिङ्गोपधानमते ह्रदो वन्हिमान् जलादित्यत्र जलावच्छेदेन वन्ह्यभाववत्तानिश्चयस्य वन्हित्वावच्छिन्नप्रकारतानिरूपितजलत्वावच्छिन्नाऽवच्छेदकताकविशेष्यताशालिबुद्धित्वस्य प्रतिबध्यतावच्छेदकतया वन्ह्यभाववज्जलवत्यतिव्याप्त्यापत्तेः, वन्हिव्याप्यजलवान् ह्रदो वन्हिमान् इत्याकारकतादृशनिश्चयप्रतिबध्यत्वात् इति चेदिदमपि लक्ष्यमेव, हेतौ साध्याभाववद्वृत्तित्वस्येव साधनवति साध्याभावस्यापि व्यभिचारत्वात्। ननु तथापि तद्वत्तावुद्धिं प्रति तदभावव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकतया ह्रदो वन्हिमान् घटत्वादित्यत्र वन्ह्यभावव्याप्यवद्घटेऽतिव्याप्तिः, न च तस्यापि लक्ष्यत्वमिति वाच्यम्, साधनवति साध्याभावव्याप्यवत्तादिकन्तु अविरोधित्वान्नाभास इति दीधितिकृतोक्तत्वात्। एवं ह्रदो गगनवान् धूमादित्यत्र वृत्त्यवच्छेदेन गगनाभाववत्त्वस्याऽपि दोषत्वापत्तिः, तज्ज्ञानस्यापि धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकगगनत्वावच्छिन्नसमानाधिकरणधूमवान् ह्रदो गगनवानित्यनुमितिप्रतिबन्धकत्वात्, एवं ह्रदत्वसामानाधिकरण्येन वन्हिसाध्यकजलहेतुकस्थले जलवद्ध्रदत्वावच्छेदेन वन्ह्यभावस्यापि दोषत्वापत्तिरिति चेन्न, प्रकृतलक्षणघटकीभूतप्रतिबन्धकतायां प्रोक्तविशिष्टज्ञानीया लक्ष्यीभूततत्तत्प्रतिबन्धकता तद्भेदस्य निवेशान्न दोषः, निवेशप्रकारश्च यथा

क्रमेण घटत्वावच्छेदेन वन्ह्यव्याप्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकताभिन्नप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालित्वादि, एवं वृत्त्यवच्छिन्नविशेष्यताकगगनाभावत्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकताभिन्नेत्यादि यथायथमूहनीयम् ॥

"अथवा-इतरभेदानुमापकमेवेदं लक्षणम्, तथा च पर्वतपक्षकवन्हिसाध्यकधूमहेतुकदुष्टलक्षणस्य तथाविधानुमितिविरोधिज्ञानविषयव्यभिचारादिभ्रममादायेति गादाधरी। अथाऽस्य लक्षणस्येतरभेदानुमापकत्वे प्रतिबन्धकप्रकारकज्ञानविशेष्यत्वमात्रस्य लक्षणार्थत्वेऽपि व्यभिचारविरहात् इतरांशवैयर्थ्यमिति चेन्न, सामान्यमुखीव्याप्त्यनुरोधेन तादृशनिवेशात्, सा च-यत्पक्षकयत्साध्यकयद्धेतुकानुमितिनिरूपितप्रतिबन्धकप्रकारकनिरुक्तसम्बन्धावच्छिन्नःवावगाहिपदार्थज्ञानविशेष्यतावान् भवति सः तत्पक्षकतत्साध्यकतद्धेतुकाऽनुमितौ दुष्टशब्दप्रतिपाद्येतरभिन्नो भवतीतिरूपा, हेतुभूतलक्षणे तादृशानुमित्यप्रवेशे सामान्यमुखीव्याप्तिभंगप्रसंग इति॥ अथ तथापि इतरभेदसाधनमनुपपन्नम्, प्रमेयरूपहेतुकस्थले तदितराऽप्रसिद्धेरिति चेन्न, प्रतियोगितावच्छेदकवत्यपि धर्मान्तरावच्छेदेन भेदसत्त्वस्वीकारात्, सत्तात्वावच्छेदेन सत्तायां विशिष्टसत्ताभेदः, विशिष्टसत्तात्वावच्छेदेन सत्ताभेदः, तद्वदत्रापि तादृशदुष्टप्रमेयभेदो घटत्वाद्यवच्छेदेन प्रमेये एव, यद्वा प्रमेयहेतुके इतरभेदानुमापकत्वाऽसंभवेऽपि दर्शितस्थले एव तत्संभवात् यथार्थपदसार्थक्यरूपेष्टसिद्धिरव्याहतेति॥ अथ जातिमान् वन्ह्यभाववानितिज्ञानमादायाऽसंभववारणार्थम् अव्यापकीभूतविषयताशून्यत्वनिवेशनमावश्यकं तावतैव संशयादिकमादायाऽनतिरिक्तवृत्तित्वकल्पेऽसंभववारणात् कथमसंभवो दत्तो भट्टाचार्येणेति चेन्न, संशयाऽन्यत्वस्याऽप्रवेशे ह्रदो भेद इति स्वरूपतो भेदावगाहिस्थले भेदभेदवद्ध्रदेऽव्याप्तिः, ह्रदो भेदो न वेत्यादिज्ञानेऽव्यापकीभूतविषयिताशून्यत्वात्, असंभवश्चात्राऽप्रामाण्यज्ञानाऽनास्कन्दितत्वाद्यनिवेशाभिप्रायेण॥ ननु यद्रूपावच्छिन्नविषयितात्वं स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयिताशून्यत्वमेव ज्ञाने निवेश्यतां, किं विशिष्टान्तराऽघटितत्व-विशिष्टद्वयाऽघटितत्वनिवेनेति!। वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयकत्वावच्छिन्नज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकवन्ह्यभाववज्जलवत्कालीनजलवद्ध्रदत्वावच्छिन्नविषयित्वाऽव्यापकत्वस्य वन्ह्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयितायां सत्त्वात्, एवं प्रमेय-

त्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकशुद्धव्यभिचारत्वावच्छिन्नविषयित्वाऽव्यापकत्वस्य मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयितायां सत्त्वात्, न च धूमव्यभिचारिवह्निमान्धूमवान् वन्हेरित्यत्र व्यभिचारघटितबाधेऽव्याप्तिः, तादृशप्रतिबन्धकतावच्छेदकव्यभिचारविषयित्वाऽव्यापकत्वस्य बाधविषयितायां सत्त्वादिति वाच्यम्, विशिष्टान्तराऽघटितत्वनिवेशेऽपि तत्राऽव्याप्तेरावश्यकतया 'एतेने'त्यादिना प्रतिबन्धकतायां यत्किञ्चित्त्वनिवेशेनैव तत्राऽव्याप्तिवारणवदत्रापि प्रतिबन्धकतायां यत्किञ्चित्वनिवेशेनैव तत्राऽव्याप्तिवारणसंभवात् ।।

'एकदेशव्यापकत्वाभ्युपगमादिति''गादाधरी । धर्मितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति या स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वर्तमाना या विशेष्यता तादृशविशेष्यताव्यापकत्वमेव संसर्गांशे भासते, न तु धर्मितावच्छेदकनिष्ठावच्छेदकविशेष्यताव्यापकत्वम्, एकदेशव्यापकत्वावच्छिन्नसंसर्गस्य नीलपर्वतत्वावच्छेदेन वह्निसाध्यकस्थले पर्वतत्वावच्छिन्नविशेष्यताव्यापकसंसर्गेण वह्न्यनुमित्यापत्तेः, अतस्तन्न प्रामाणिकमिति ।।

"स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन दोषवत्त्वं दुष्टत्वमित्युक्तं गादाधर्याम्, अथ काञ्चनमयहेतुकस्थले काञ्चनमयत्वरूपहेतुतावच्छेदकवत्त्वाऽप्रसिद्ध्या, दुष्टत्वानुपपत्तिः, प्रमेयधूमहेतुकस्थले प्रमेयरूपहेतुतावच्छेदकमादाय घटादीनामपि दुष्टत्वापत्तिरिति चेन्न । हेतुनिरूपितवृत्तिताविशिष्टाया एव हेतुतावच्छेदकताया विवक्षितत्वात्, वैशिष्ट्यं च—सामानाधिकरण्यसंसर्गेण, तथा च कांचनमयधूमहेतुकस्थले हेतुनिरूपितवृत्तिताविशिष्टाऽवच्छेदकता धूमत्वनिष्ठैव, काञ्चनमयत्वस्य हेताववर्तमानत्वात्, धूमत्ववत्त्वमादाय काञ्चनमयधूमस्य दुष्टत्वात्, प्रमेयधूमहेतुकस्थले प्रमेयत्वधूमत्वद्वयनिष्ठावच्छेदकता हेतुनिरूपितवृत्तिताविशिष्टा तादृशधर्मद्वयवत्ताया घटादावसत्त्वान्न तेषां दुष्टत्वमिति ।।

विशिष्टान्तराऽविषयकप्रतीतिविषयतावच्छेदकत्वरूपयद्रूपविशेषणत्वापेक्षया यद्रूपावच्छिन्नविषयकनिश्चये एव विशिष्टान्तराघटितत्वं लाघवान्निवेशितं गदाधरेण । लाघवम्—विशिष्टान्तराऽविषयकत्वस्य यद्रूपावच्छिन्नविषयकनिश्चये निवेशपक्षेऽपि विशिष्टान्तराऽविषयक—यद्रूपावच्छिन्नविषयकनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्ति—इत्याकारकव्यापकतारूपोऽभावो लक्षणे न निवेश्यते, अपि तु—यद्रूपाव-

च्छिन्नविषयकवृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तीत्याकारकव्यापकतात्मकाऽभावीयप्रतियोगितानिरूपितपरम्परया निश्चयनिष्ठाऽवच्छेदकताविशिष्टरूपवत्त्वं, वैशिष्ट्यं च–स्वनिरूपितविषयित्वनिष्ठाऽवच्छेदकतानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व–स्वसमानाधिकरणःकिञ्चिद्रूपावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकप्रकृतानुमितिप्रतिबन्धकतावृत्तिभेदप्रतियोगितावच्छेदकत्वाभावीयेतिव्यापकताभावीयप्रतियोगितानिरूपितपरम्परयाऽवच्छेदकतावद्धर्मावच्छिन्नविषयत्वाभावस्तत्प्रतियोगितानिरूपितपरम्परयाऽवच्छेदकतावत्त्वोभयसम्बन्धेन ।। विशिष्टान्तराऽघटितत्वसहितप्रतिबन्धकताघटितलक्षणानुगमस्तु – प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिव्यापकतारूपाभावीयप्रतियोगितानिरूपितपरम्परयाऽवच्छेदकतावद्धर्मविशिष्टधर्मवत्त्वं हेत्वाभासत्वम्, वैशिष्ट्यं च–स्वतादात्म्य–स्वविशिष्टधर्मावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्वोभयसम्बन्धेन, संसर्गघटकवैशिष्ट्यं च–स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकत्व – स्वकालीनप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वोभयसम्बन्धेन ।। अथ तृतीये न च कल्पे वह्न्यभाववद्ध्रदात्मकबाधविषयितायाः तदेकदेशवह्नित्वावच्छिन्नाऽनिरूपितत्वात् असंभवसंभवे स कथं त्यक्त इति चेन्न, साक्षात्परम्परासाधारणनिरूपितत्वाभ्युपगमेन वह्न्यभाववद्ध्रदविषयितायां वह्नित्वावच्छिनाऽनिरूपितत्वानभ्युपगमात् ।। अत्र वदन्ति कल्पे–"उभयाभावप्रयोजकविरोधिविषयितावत्त्वं यद्रूपावच्छिन्नविषयिताव्यापकं तद्रूपवत्त्वमिति" गादाधरी । अथ तादृशविषयितासामानाधिकरण्यनिवेशेनैव सामञ्जस्यं शुद्धह्रदेऽतिव्याप्तिवारणसंभवात् । न चाऽसाधारणेऽतिव्याप्तिभियाऽव्यापकीभूतविषयिताशून्यज्ञानीयत्वस्योपलक्षणविधया यद्रूपावच्छिन्नविषयितायां निवेशनीयतया वह्न्यभाववान् ह्रदो घटश्चेतिसमूहालम्बनज्ञानमादाय घटत्वावच्छिन्नेऽतिप्रसंगो दुर्वार इति व्यापकत्वनिवेशनमावश्यकमिति वाच्यम् । यद्रूपावच्छिन्नविषयनिश्चये हेतुमत्पक्षज्ञानकालीनत्वाऽसाधारण्यविषयिताशून्यत्वोभयाभाववत्ताया निवेशेनैवाऽसाधारण्येऽव्याप्तिवारणसंभवात्, अव्यापकीभूतविषयिताशून्यज्ञानीयत्वोपलक्षितत्वनिवेशस्याऽनावश्यकत्वात् । वस्तुतो तादृशविषयितासामानाधिकरण्यनिवेशे दोषविषयकसमूहालम्बनज्ञानमादायोदासीनेऽतिप्रसंगो दुर्वारः, यादृशस्थले वह्न्यभाववद्ध्रदविषयकं ज्ञानं कदाचिद् घटविषयकं कदाचिच्च पटविषयकं यदा न भवति तदाऽप्रामाण्यज्ञानास्कन्दितमेव, तादृशस्थले वह्न्यभाववद्ध्रदनिश्चयस्याऽव्यापकीभूतविषयिताशून्यस्याऽप्रामाण्यज्ञा-

नाऽनास्कन्दितस्य चाऽप्रसिद्धयाऽव्याप्तिभियाऽव्यापकीभूतविषयिताशू-न्यज्ञानीयत्वोपलक्षितत्वमवश्यं निवेशनीयम्, न च स्वविषयिताप्रयोज्य-विशिष्टान्तरविषयित्वाऽप्रयोज्योभयाभावप्रयोजकाभावाधिकरणताकत्व-रूपविशिष्टान्तराऽघटितत्वस्य तत्राऽभावात् घटस्य–स्वपदेन धर्तुमशक्य-त्वादिति वाच्यम्, प्रतियोगिकोटौ स्वत्वान्तर्भावेण स्वविषयिताप्रयोज्य-विशिष्टान्तरविषयिताप्रयोज्योभयाभावप्रयोजकाभावाधिकरणताकं यद्य-त्स्वं तदन्यत्वस्य निवेशनीयतया घटेऽतिव्याप्तिसंभवात्, अन्यथा तद्वा-रणार्थं विरोधिविषयितापदं व्यर्थं स्यात् ।। अथाऽत्र वदन्ति कल्पे–का-ञ्चनमयह्लदो वह्निमान् जलादित्यत्र काञ्चनमयत्वव्यापकीभूताभावप्र-तियोगिजलेऽतिव्याप्तिवारणार्थं तृतीयक्षणसाधारणाऽव्यवहितोत्तरत्वस्य निवेशनीयतयाऽसाधारणेऽव्याप्त्यापत्तेः, असाधारण्यविषयकनिश्चयोत्तर-ताहृशानुमितौ उभयाभावविरहादिति चेन्न, साध्यव्यापकीभूताभावप्रति-योगिहेतुमत्पक्षज्ञानभिन्नत्वा–ऽसाधारण्यविषयित्ववत्त्वोभयाभावस्य यद्-रूपावच्छिन्नविषयकनिश्चये विवक्षितत्वात्, अव्यापकीभूतविषयिताशून्य-ज्ञानीयत्वोपलक्षितत्वमपि यद्रूपावच्छिन्नविषयितायां निवेश्यम् । एवं च साध्यव्यापकीभूताभावप्रतियोगिहेतुमत्पक्षविषयकसाध्यहेतुविषयकस-मूहालम्बनज्ञानमादायाऽसाधारण्ये लक्षणसमन्वयात् । न च जलाभाव-वद्ध्रदो वह्निमान् इत्यसाधारणेऽव्याप्तिः, जलवद्ध्रदविषयितायाः वि-शिष्टान्तरविषयितापदेन धर्तम् अशक्यत्वात् स्वविषयिताप्रयोज्यविशि-ष्टान्तरविषयित्वा ऽप्रयोज्योभयाभावप्रयोजकाभावाधिकरणताकत्वस्याऽ-साधारणेऽसत्त्वादिति वाच्यम् । प्रतियोगिनि स्वत्वाऽन्तर्भावेण स्ववि-षयिताप्रयोज्यविशिष्टान्तरविषयित्वा ऽप्रयोज्योभयाभावप्रयोजकाभावा-धिकरणताया यद्यत् स्वं तदन्यत्वस्य निवेशात्, तत्र च–विशिष्टान्तर-विषयित्वाऽप्रयोज्यस्वविषयिताप्रयोज्योभयाभावाधिकरणतायाम् असा-धारण्यनिश्चयाऽव्यवहितोत्तरज्ञानवृत्तितत्तदधिकरणताभेदो निवेशनीय इ-ति न कोपि दोषः । न चैवं बाधसत्प्रतिपक्षविषयकसमूहालम्बनज्ञान-मादाय बाधादावव्याप्तिः, बाधविषयिताप्रयोज्यविशिष्टान्तरसत्प्रति-पक्षविषयिताप्रयोज्योभयाभावप्रयोजकाऽभावाऽधिकरणताकत्वस्य बाधे सत्त्वादिति वाच्यम् । स्वविषयिताप्रयोज्यताहृशाभावाधिकरणतात्वव्या-पकविशिष्टान्तरविषयिताप्रयोज्यत्वस्य विवक्षणात् ।।

'यत्किञ्चिद्विशिष्टान्तरविषयित्वा ऽप्रयोज्यत्वमिति" गादाधरी ।

नन्वत्र निरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताकव्यभिचारविषयितात्वस्य जातिमात्, धूमव्यभिचारीत्यादिज्ञानसाधारणविशिष्टान्तरविषयितात्वा-ऽद्यःपक्तया मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय यत्किञ्चि-

द्विशिष्टान्तरविषयित्वाऽव्यापकीभूतविषयिताशून्यज्ञानीयतादृशविषयितात्वव्यापकत्वमवश्यं निवेश्यम्, एवं च धूमव्यभिचारिवह्निमान्धूमवान् वन्हेरिति बाधे तादृशाव्यापकीभूतविषयिताशून्यज्ञानीयविशिष्टान्तरविषयितात्मकव्यभिचारविषयितायाः पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणतायाम् अप्रयोजकत्वादेवाऽव्याप्तिवारणे व्यापकत्वनिवेशनं विफलमिति चेन्न। जलवज्जलं जलाभाववद्वृत्तिजलवज्जलात्–इत्यत्र जलवज्जलवज्जलरूपबाधेऽव्याप्त्यापत्तेः, पक्षतावच्छेदकीभूतजलत्वरूपधर्मेण घटावगाहिजलवज्जलवज्जलमितिज्ञानीयबाधविषयिताया अव्यापकीभूतविषयिताशून्यज्ञानीयजलवज्जलरूपविशिष्टान्तरविषयितात्मकतया पक्षे साध्यवैशिष्ट्याभावाधिकरणतायां बाधविषयिताप्रयोज्यत्वस्य निरुक्तविशिष्टान्तरविषयिताप्रयोज्यत्वस्य च सत्त्वादिति ध्येयम्॥

"विशिष्टान्तरविषयित्वाऽप्रयोज्य–स्वविषयिताप्रयोज्योभयाभावाधिकरणताकत्वमिति"गादाधरी। ननु विशिष्टान्तरविषयित्वाऽप्रयोज्य–स्वविषयिताप्रयोज्याऽभावप्रयोजकाभावाधिकरणताकत्वमेव निवेश्यतां, किमुभयाभावप्रयोजकाभावाधिकरणताकत्वनिवेशनेनेति चेन्न, प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्त्यापत्तेः, व्यभिचारत्वावच्छिन्ने प्रमेयत्वावगाहित्व–मेयत्वाभावव्याप्यावगाहित्वैतदुभयाभावप्रयोजिका या व्यभिचारत्वावच्छिन्ने मेयत्वाभावावगाहित्वाभावाधिकरणता तत्र विशिष्टान्तरव्यभिचारविषयित्वाऽप्रयोज्यत्वस्य स्वविषयिताप्रयोज्यत्वस्य च सत्त्वात्, अतः पक्षे साध्यवैशिष्ट्यावगाहित्वसाध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वं निवेशनीयम्॥

"साध्यवत्पक्षविषयिताबहिर्भूतविषयिताविरोधिविषयितेत्यादि"-गादाधरी। अत्र बहिर्भूतत्वं यदि साध्यवत्पक्षविषयिताभिन्नत्वं तदा साध्यविषयिताया अपि तथात्वापत्तेस्तद्दोषतादवस्थ्यमिति, अतः साध्यतावच्छेदकाऽवच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयित्वावच्छिन्नभेदप्रतियोगितानवच्छेदकविषयित्वं विरोधिविषयितापदेन विवक्षणीयम्। न चैवं पर्वतो वह्निमान् वह्न्यभावादित्यत्र वह्निमत्पर्वतरूपस्वरूपाऽसिद्धावव्याप्तिः, वह्निमत्पर्वतविषयितायाः साध्यवत्पक्षविषयितात्मकतया विरोधिविषयितापदेन धर्तुमशक्यत्वादिति वाच्यम्। विरोधिविषयितापदेन साध्यवत्पक्षविषयितात्व–पक्षेहेतुमत्त्वावगाहित्वाभावाधिकरणताप्रयोजकविषयिताभिन्नत्वैतदुभयाभाववद्विषयिताया विवक्षितत्वेन निर्दोषत्वात्॥

"साध्यवत्पक्षेऽतिव्याप्तिवारणाय साध्यवत्पक्षविषयिताबहिर्भूतत्वं विरोधिविषयितायां निवेशितं गादाधर्याम्, ननु सिद्ध्यनन्तरं सा-

ध्यधर्मितावच्छेदककानुमितेरुत्पत्त्यासिद्धिप्रतिबध्यतावच्छेदकं विधेयत्वमेव वाच्यम्, एवं चेत्कथं साध्यवत्पक्षेऽतिव्याप्तिः ?, प्रतिबन्धकतावच्छेदकविषयिताया एव प्रतिबध्यतावच्छेदकधर्माऽभावप्रयोजकतया पक्षे साध्यप्रकारकताकत्वस्य सिद्धिप्रतिबध्यतानवच्छेदकत्वेन तादृशप्रकारताकत्वाभावं प्रति साध्यवत्पक्षविषयितायाः अप्रयोजकत्वादिति चेन्न, यादृशसिद्धयुत्तरं साध्यप्रकारकं ज्ञानं कदाचिदपि नोत्पन्नं तादृशस्थले लाघवात् तत्प्रकारतैव सिद्धिप्रतिबध्यतावच्छेदिका वाच्या, तादृशसिद्धिविषये साध्यवत्पक्षेऽतिव्याप्तिवारणाय विरोधिविषयितापदेन साध्यवत्पक्षविषयिताबहिर्भूतविषयिताया निवेशितत्वात् ।।

"घटादिनिश्चयस्य विरोध्यविषयकत्वात्" ।। ननु स्वविषयिताप्रयोज्यविशिष्टान्तरविषयित्वाप्रयोज्योभयाभावाधिकरणताकत्वरूपविशिष्टान्तराऽघटितत्वस्य घटेऽसत्त्वात्कुतः उक्तस्थले घटेऽतिव्याप्तिः, स्वपदेन घटस्य धर्तुमशक्यत्वादिति चेन्न, प्रतियोगिस्वत्वान्तर्भावेणैव अतिव्याप्तिसंभवात्, तदर्थश्च स्वविषयिताप्रयोज्यविशिष्टान्तरविषयित्वाऽप्रयोज्योभयाभावाधिकरणताप्रयोजकाभावाधिकरणताकं यत् यत् स्वं तदन्यात्मकः, तस्य च घटादिसाधारण्यात्, अथवोक्तस्थले पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिवारणाय विरोधिविषयिताप्रयुक्तत्वं निवेशनीयमिति ।।

"उभयाभावप्रयोजकविरोधिविषयतावत्त्वं यद्रूपावच्छिन्नविषयिताव्यापकं तद्रूपवत्त्वं न वैयर्थ्यमित्यादि"गादाधरी । नन्वत्र कल्पे–पाषाणमयत्ववत्पर्वतेऽतिव्याप्तिसंभवे यथासन्निवेशे न वैयर्थ्यमित्युक्तिर्न संगच्छते, पाषाणमयत्ववत्पर्वतविषयिताया उभयाभावप्रयोजकत्वात् इति चेन्न, उभयाभावप्रयोजकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकतानिरूपिताऽधिकरणतायाः यद्रूपावच्छिन्नविषयिताव्यापकत्वस्य विवक्षणीयत्वात्, एतादृशाधिकरणताया विलक्षणत्वेन पाषाणमयो न वह्निमान् पर्वतश्च पाषाणमय इतिविशिष्टज्ञाने एव वर्तमानतया केवलपाषाणमयः पर्वत इतिज्ञानेऽवर्तमानतया च न पाषाणमयत्ववत्पर्वतत्वावच्छिन्नविषयिताव्यापकत्वमिति ।।

"भ्रमान्यवृत्तियदीयविषयतेत्यादिवक्राभिधानस्य सन्दर्भविरुद्धत्वादिति"गादाधर्याम् । नन्वेवं पर्वतत्वसामानाधिकरण्येन वह्न्यभावस्य यत्र पक्षता तत्र निर्वह्निः पर्वतो वह्निमान् इत्यत्र वह्निमत्पर्वतस्य दोषत्वापत्तिः, पक्षे साध्यवैशिष्ट्यावगाहिज्ञानस्य नियताऽऽहार्यतया भ्रमान्यत्वाऽभावात्, वह्निमत्पर्वतविषयकनिश्चयाऽव्यवहितोत्तरानुमितावपि तादृशोभयाभावसत्त्वादपि चेति निरुक्तातिव्याप्तिसंभवे सन्दर्भवि-

रुद्धत्वकथनमसंगतमिति चेन्न, संसर्गप्रकारसाधारणभ्रमत्वस्याऽनुगततया वक्तुमशक्यत्वात् तत्र भ्रमान्यत्वमवश्यं निवेश्यम्, एवं च निरुक्तभ्रमभेदस्याऽनिवेशादेव नोक्तस्थलेऽतिव्याप्तिरिति ।। स्वसजातीयविशिष्टान्तराऽघटितत्वकल्पे स्वपदेन लक्ष्यत्वेनाऽभिमतं धर्तुं न शक्यते, मेयत्वविशिष्टव्यभिचारभेदस्य व्यभिचारेऽसत्त्वात्, किन्तु लक्ष्यतावच्छेदकत्वेनाऽभिमत एव स्वपदार्थः, तथा च स्ववृत्तियद्व्याप्तिग्रहत्वाद्यवच्छिन्नप्रतिबध्यतानिरूपिताऽन्यतमप्रतिबन्धकत्वं तद्वत्त्वं स्वसजातीयत्वम् । वृत्तित्वं प्रतिबन्धकतावत्त्वं च स्वानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकवत्त्वसम्बन्धेन, तथा च–स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदक–स्ववृत्तितादृशप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकं यद्रूपं तद्रूपावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकस्ववत्त्वं लक्षणमिति ।। अथ प्रतिबन्धकताघटितद्वितीयलक्षणे पर्वते वह्निसाधने धूमो न दुष्ट इतिव्यवहारः कथं स्यात्, तत्र पर्वतपक्षकवह्निसाध्यकानुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्माऽप्रसिद्ध्या तादृशधर्मावच्छिन्नसम्बन्धित्वाऽभावस्य बोधयितुमशक्यत्वात् वह्न्यभाववत्पर्वतत्वाऽप्रसिद्धेरिति चेन्न, ह्रदे वह्निसाधने धूमो दुष्ट इत्यत्र दुषधात्वर्थः प्रतिबन्धकत्वं निष्ठार्थ आश्रयत्वं निरुक्तप्रतिबन्धकतायाम् अनुमित्यर्थकसाधनपदोत्तरसप्तम्यर्थविशेष्यतायाः वह्निपदोत्तरषष्ठ्यर्थविधेयतायाश्च निरूपकत्वेनाऽन्वयः, तथा च ह्रदत्वावच्छिन्नविशेष्यताकवह्नित्वावच्छिन्नविधेयताकानुमितिनिरूपकप्रतिबन्धकतावान् धूम इत्यन्वयबोधः, प्रतिबन्धकतावत्त्वं च–वृत्तिधर्मावच्छिन्नसम्बन्धित्वसम्बन्धेन, वृत्तित्वं च–स्वावच्छिन्नविषयित्वव्यापकत्वसम्बन्धेन, एवं च तुल्ययुक्त्या तादृशसम्बन्धेन प्रतिबन्धकताया अभाव एव सद्धेतौ धूमे बोध्यते। तत्र निरुक्तप्रतिबन्धकताया निरुक्तसम्बन्धस्य व्यधिकरणसम्बन्धतया तत्सम्बन्धेन तत्प्रतिबन्धकत्वाभावस्य धूमवृत्तितायां बाधकाऽभावात्। अत्र वदन्ति–कल्पे तु–ह्रदे वन्हेः साधने धूमो दुष्ट इत्यत्र प्रयोजकतामात्रं दुषधात्वर्थः, साधनपदार्थः प्रकारता, प्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितहेतुप्रकारताद्वयरूपः, वह्निपदोत्तरषष्ठ्यर्थवृत्तिस्वस्य प्रथमप्रकारतायां द्वितीयप्रकारताघटकप्रकारतायां चान्वयः, निरुक्तप्रकारताद्वये च ह्रदपदोत्तरसप्तम्यर्थविशेष्यतायाः निरूपितत्वेनाऽन्वयः, साधनपदोत्तरसप्तम्या द्वित्वं निरूपकत्वं चार्थः, द्वित्वस्य निरूपकत्वे तादृशनिरूपकत्वे च निरुक्तसाधनपदार्थप्रकारताद्वयस्याऽन्वयः, निरूपकत्वस्य च दुषधात्वर्थप्रयोजकतायां स्वनिष्ठप्रतियोगितानिरूपकाऽभावाधिकरणतानिष्ठप्रयोज्यतानिरूपितत्वसम्बन्धेनाऽन्वयः, एवं च ह्रदत्वावच्छिन्नविशेष्य-

तानिरूपितवह्नित्वावच्छिन्नप्रकारतानिरूपकत्ववह्नित्वावच्छिन्नप्रकार-तानिरूपितव्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानि-रूपकत्वद्वयाऽभावाधिकरणताप्रयोजकतावान् धूम इतिबोधः। प्रयोजक-तावत्त्वं च–वृत्तिधर्मावच्छिन्नसम्बन्धित्वसम्बन्धेन, वृत्तित्वं–स्वावच्छि-न्नविषयिताकनिश्चयाऽव्यवहितोत्तरानुमितित्वव्यापकोभयाभावाधिकर-णतात्वव्यापकप्रयोज्यतानिरूपितत्वसम्बन्धेन, सम्बन्धित्वं–स्वज्ञानविष-यप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन, न दुष्ट इत्यत्रापि तत्तत्पदार्थान्वि-तप्रयोजकताया निरुक्तसम्बन्धेनाऽभाव एव धूमे बोध्यते, उक्तप्रयोजक-तायास्तादृशसम्बन्धस्य व्यधिकरणसम्बन्धत्वात्॥ न च ह्रदो वह्नि-मानित्याकारकबुद्धित्वावच्छिन्नं प्रति ह्रदविशेष्यकवह्न्यभावविशेष्यक-निश्चयद्वयस्य कथमेकरूपेण प्रतिबन्धकत्वमिति वाच्यम्, स्वरूपसंसर्गा-तिरिक्तसंसर्गानवच्छिन्नवह्न्यभावत्वावच्छिन्नविषयतानिरूपितस्वरूप-सम्बन्धावच्छिन्नाऽऽधेयतासम्बन्धातिरिक्तसम्बन्धानवच्छिन्नह्रदत्वाव-च्छिन्नविषयताशालिनिश्चयत्वेनानुगतैकरूपेण प्रतिबन्धकतासंभवात्॥

॥ इतिनव्यन्याये सामान्यनिरुक्तिगादाधरीक्रोडम् ॥





# विशिष्टाद्वैतरामानन्दमतशैवविशिष्टाद्वैतशक्तिविशिष्टाद्वैतविशिष्टब्रह्माद्वैतानां सारूप्यवैरूप्यवैशद्यम्

श्रीरामानुजाचार्यः श्रीरामानन्दाचार्यः श्रीस्वामिनारायणभगवाँश्चेतित्रयोऽपि तत्त्वत्रयवादिनो विद्यन्ते, परं श्रीस्वामिनारायणप्रभुस्तत्त्वत्रयाभिमन्ताऽपि तत्त्वपञ्चकमन्ता विद्यते, शैवविशिष्टाद्वैतवादी माहेश्वरोऽपि श्रीकण्ठः ब्रह्ममीमांसाभाष्ये गुणगुणिनोर्नीलकमलयोरिव विशेषणविशेष्यभावः सार्वदिक इति विशेषणं शिवान्यत् शिवस्तु विशेष्यं ब्रह्मेति तत्त्वद्वयं प्राह। अथ शक्तिविशिष्टाद्वये जगतां बीजरूपेण शिवब्रह्मणः शक्तौस्थित्युद्भवौ, जगदुद्भवकारिण्याः शक्तेः शिवेन सहाविनाभावसम्बन्धः, शक्तिः शिवस्य विशेषणमिति तत्त्वद्वयं विशिष्टमेव सगुणब्रह्मात्मकमिति श्रीपतिराहश्रीकरभाष्ये। अथ विशिष्टब्रह्माद्वैतवादिश्रीस्वामिनारायणः प्राह—जीवेश्वरमायाब्रह्माणि सगुणसाकारपरब्रह्मणः शरीराणि, मूर्तिप्रकाशो ब्रह्म ब्रह्मलोकः सुमूर्तं च ब्रह्म सेवकम्, मुक्ताः सेवका ब्रह्मस्वरूपाः, मायाशरीरं मुक्तब्रह्मान्वितं सृष्टिरूपं भवति। जडचेतनविशिष्टं ब्रह्म, ब्रह्मविशिष्टं परब्रह्मेति। अन्तर्यामि ब्रह्म व्यापकं कर्मफलप्रदम्, सर्वनियामकं परब्रह्मेति। शक्तिविशिष्टे तु शक्तिः शक्तिमतो वन्हेर्दाहकत्वशक्तिरिवाऽभिन्ना, ततः सर्वं शक्तिमदिति। विशिष्टब्रह्माद्वैते सर्वं परब्रह्मान्वितब्रह्मवत्। शैवविशिष्टे सर्वं गुणवद्गुणीति गुणो गुणिवत् सन् संसारः, ततः सर्वं सदाशिवान्वितशक्तिमदिति। रामानन्दमतीयानन्दभाष्यसिद्धान्तस्तु रामानुजवत् सर्वत्रभूतेषुभौतिकेषु च साधनसामग्रीवशेन सर्वे पदार्था प्रत्यायन्ते सर्वप्रत्यया यथार्थाः सत्ख्यातिगोचराः, रामानुजो लक्ष्मीनारायणं रामानन्दो रामचन्द्रं श्रीसीतासहितपरतत्त्वं विशिष्टब्रह्माद्वैतास्तु अनादिश्रीकृष्णनारायणं श्रीस्वामिनारायणंपरतत्त्वं मन्यन्ते, सांख्ययोगानामिव प्रागपि सूक्ष्मं सत् ततः पञ्चानामपि सूक्ष्मंख्यापनम् अविरुद्धम्, पञ्चानां मते धर्मि द्रव्यं प्रनम्, गुणाः शक्तिः रूपाणिस्वरूपाणि मुख्यद्रव्यधर्माः शिवधर्मा ब्रह्मधर्माः परब्रह्मधर्मा वेति। पञ्चभिरपि सत्त्वरजस्तमांसि शब्दस्पर्शरूपरसगन्धा शक्तयः संयोगाः बुद्धिः प्रकृतिः कालः स्वीकृताः, रामानुजरामानन्दाभ्यां नित्यविभूतिरङ्गीक्रियते धामात्मिका। शैवैः शिवशक्तिः प्रभूताऽङ्गीकि-

यते स्वामिनारायणैः परब्रह्मप्रकाशो ब्रह्मस्तरो ब्रह्मलोकोऽङ्गीक्रियते। भोग्या विभूतिर्मायाशिवाशक्तिर्धामभूमिश्चेत्यादावविरोधः। भोक्ता चेतनवर्गः प्रेरिता ब्रह्मान्वितपरब्रह्म सदाशिवो वा ब्रह्मेति, भोग्यं विभूत्यादि चेति यथायथं त्रयमपि नित्यसंयुक्तम् अविरुद्धम्।

रामानुजरामानन्दीयादिवैष्णवानां मते स्थूलसूक्ष्मभूतभौतिकपञ्चीकरणान्वितत्वेन साधनसामग्रीसत्त्वेन प्रत्यायितस्यसर्वस्य सर्वं ज्ञानं यथार्थमेवेति। सत्तयाख्यायमाने तत्र श्रीस्वामिनारायणीयानां तु सत्समुच्चयख्यातिः–समुच्चयस्त्रेधा–बीजस्तम्बफलात्मकः, अधिष्ठानं बीजं, पिठरः स्तम्बः, फलम् अर्थक्रियाप्राप्त्यादिः, शुक्तिरधिष्ठानं पिठरो रजतं विरलावयवात्मकम्, फलं तत्प्रतिगमनार्थक्रिया, अर्थक्रियाऽवयवाऽधिष्ठानानामेकज्ञानस्य ख्यापनात् समुच्चयितपदार्थज्ञापनात्, समुच्चयितख्यातिः। स्थूलं यदिष्टं फलं तन्न तेन भ्रमव्यवहारोऽन्यैः क्रियते, पूर्वं साफल्येध्यातेऽपिपश्चात्फलवैधुर्यमिति यज्ज्ञानं, तत्पूर्वं निश्चयस्वरूपो भ्रमः समुच्चयख्यातिः, यावदनुस्यूतसमष्टिव्यष्टिचरार्थज्ञानत्वंप्रमात्वम्, यावन्तोऽनुस्यूता विशेषणविशेष्यसंसर्गभावमापन्ना याः समष्टयः साजात्यानि व्यष्टयो वैजात्यानि चराश्चसंसर्गाः अर्थावस्तूनि तेषां ज्ञानत्वं प्रमात्वम्। सांख्ये 'कारणभावाच्चसत्कार्यं' ततः सत्ख्यातिः, योगे भाष्ये 'सर्वं सर्वात्मकमि'ति ततः सत्ख्यातिः। जैनानां सर्वं द्रव्यात्मकमिति सत् स्वरूपं सत्ख्यातिः,। श्रीभाष्ये आनन्दभाष्ये च आत्मामायापरमात्मेति त्रेधा पदार्थाः सन्त एव, भोक्ता भोक्तव्यं प्रेरिताचेति त्रयं सत्यम्। त्रयं कथमपि न वियुज्यते। त्रयाणां तत्त्वानां सत्ता–सुषुप्तिसमाधिलीनसत्तावतामिव मुक्तानामपि पृथक्सत्ता, प्रलये मायाया अपि सत्ता पृथक्, ब्रह्मणस्त्वस्त्येव सर्वगतसिद्धा। चेतनानां विशेषसत्तानुभवाय मुक्ता ब्रह्मता च। श्रीभाष्यानन्दभाष्ययोरिव श्रीस्वामिनारायणपरब्रह्मसूत्राणामपि जीवेश्वरमायामुक्तब्रह्मपरब्रह्मणां शाश्वत्यः सत्ता विद्यन्त इति, परमेश्वरो मुख्योऽन्ये गौणा शरीररूपाः, परब्रह्मपुरुषोत्तमोऽयमक्षरातीतः। रामानुजमते परवासुदेवो नारायणो, वैकुण्ठनाथः सः। आनन्दमते सीतारामः सः साकेताधिपतिः। श्रीविशिष्टब्रह्माद्वैते परब्रह्म पुरुषोत्तमो ध्येयः, रामानुजमते नारायणो ध्येयः, आनन्दमते रामचन्द्रो ध्येयः। शक्तिविशिष्टाद्वैतमते नित्यकैलासे शाक्तः शिवः ब्रह्म ध्येयः, शक्तिस्तदात्मिका तत्तादात्म्यापि तदाधेयाऽतः शक्तिविशिष्टो ध्येयः प्राप्यश्च शक्तिद्वाराशक्तः, शक्तिश्च जीवशिवान्विता जीवा शक्त्यानन्दरा शक्तिवलाच्छिवा भवन्तीति। शैवविशिष्टाद्वैते

ब्रह्मशिवसगुणोपासनाद्वारा परब्रह्मात्मकपरमशिवोपास्त्या परब्रह्मशिवप्राप्तिर्ब्रह्मलोके शिवसायुज्यलाभा, मुक्ताः सर्वे ब्रह्मशिवाः परब्रह्मशिवतनवश्च परशिवानन्दभोक्तारो नित्यशिवाः शिवया जीवभावाः उपासनया परशिवभावाश्चेति। विशिष्टब्रह्माद्वैतमते परब्रह्मपुरुषोत्तम आनन्दघनकिशोरमूर्तिर्द्विभुजादिः दिव्यगुणभगशक्तिसामर्थ्यैश्वर्यचिन्हाभूषवेषाद्यात्मकचेतनमुक्तसमन्वयी नवयुवा परमात्मा, श्रीमन्नारायणस्तु रामानुजमते चतुर्भुजो विभूतिविग्रहो दिव्यायुधो नित्यसद्गुणशाली सलक्ष्मीस्वरूपः, आनन्दमते सः श्रीरामो नित्यानन्दश्चिदात्मा परब्रह्म सुमूर्तः ससीतः। इतरमते शक्तिसहितः सदाशिवस्त्रिनेत्रो दिव्योः महेश्वरः, शिवासहितश्च सर्वेश्वरः परब्रह्मशिवस्त्रिनेत्रः। स्वामिनारायणमतेन ब्रह्म व्यापकं परब्रह्ममूर्तितेजः, तदेव द्वितीयं रूपं परब्रह्मसरूपं ब्रह्म, तेजोऽन्तर्यामि कर्मफलप्रदम्, अन्येषां नित्यविभूतिलोका धामानि, अक्षरधाम ब्रह्मलोकः परमव्योमः चिदाकाशः, नित्यविभूतिः त्रिपाद्विभूतिः, परमपदम्, अमृतधाम, अप्राकृतलोकः आनन्दलोकः वैकुण्ठः गोलोकः साकेतोऽयोध्या वृन्दावनं नित्यकैलास इत्यादीनि स्वस्वमते नामानि। मायापरो लोकः विशुद्धसत्त्वमय इति रामानुजानन्दमतम्, मायाया धाम्नां च मध्ये विरजा नदी सीमरूपा, आनन्दमते वैकुण्ठलोकः। तत्र वैकुण्ठपुरी अपराजिता अयोध्या दिव्या नगरी। अत्र मण्डपा मन्दिराणि, तत्र श्रीभूलीलासहितो नारायणः पर्यंके विराजते, तिस्रोमहिष्यः ईश्वराण्यो वा दिव्यसुराण्य इति। सर्वे पदार्थाः शक्तयो मुक्ताः सेवका एवेति। रामनारायणावेक एव पुरुषः परमात्मा, सीता त्रिरूपधारिणी देवी, रामस्य नारायणस्यैव अवतारा सेवार्थमुक्तानामपि सहावतरणम्। शेषो लक्ष्मणः, चक्रं भरतः, शंखः शत्रुघ्नः। शक्तिविशिष्टानां शैवविशिष्टानां तु शक्तिः शिवाच नित्यकैलासवासिन्यौ सदाशिवस्वामिन्यौ, मुक्तामुक्तान्यो गणागणिकाश्च शिवासायुज्याः शिवसायुज्याश्च। गोलोके तु गोपगोपीगणा वाल्लभानाम्।

परमेश्वरः स एव परनारायणः-पर-व्यूह-विभवा-ऽर्चा-ऽन्तर्यामिरूपो भवतीति।

ज्ञानस्वरूपः परवासुदेवो जीवमनोऽहंकारान् संकर्षणप्रद्युम्नाऽनिरुद्धान् सृष्ट्यर्थमधितिष्ठति, ऐश्वर्यवीर्याभ्यां प्रद्युम्नः, शक्तितेजोभ्यामनिरुद्धः, ज्ञानबलाभ्यां संकर्षणः। एतानुपास्य परोपासनायामधिक्रियते।

विभवाः-परमेश्वरः कूर्मो वराहो नृसिंहो वामनः परशुरामः

श्रीरामो बलभद्रः श्रीकृष्णः कल्किः, मर्यादापुरुषोत्तमो श्रीरामः लीलापुरुषोत्तमः श्रीकृष्णः, शीलपुरुषोत्तमः स्वामिनारायणः। यादृशी सरित् यादृशी पुरी वृन्दावनादि च तत्र तथैवाऽऽप्यते। स श्रीकृष्णो बलदेवः सर्वस्वम्, रेवती च तस्य शक्तिः।

अर्चावतारः–मूर्तयः भूगर्भात् प्रकटीभवन्ति, निर्मिताअपि च मताः।

अन्तर्यामी–अन्तःप्रविश्य चेतनाचेतनान् यमयति, जीवान्तर्यामी, पुण्डरीकाक्षः सः।

भोक्ता जीवः–अहं नित्यो भोक्ता ज्ञाताज्ञानाश्रयः कर्ता शेषः पराधीनो विधेयः स्वयंप्रकाशोऽणुः भिन्नोऽनादिकर्मठः संसारी च चित्संसर्गात् चेतनः।

जीवास्त्रेधा–बद्धा मुक्ता नित्यमुक्ताश्च। नित्यमुक्ता दिव्यसुरयः। साशयाबद्धाः। मुक्तिगता मुक्ताः विरजांतीर्त्वागताः। विरजायां यातना देहलयः।

शरणागतायाः द्रौपद्याः रक्षा। तवास्मीतिप्रपन्नस्य विभीषणस्याऽभयदानं, गजेन्द्रस्य प्रपन्नस्य मोक्षणम्। सुषुम्णाप्रवेशात् भक्तिप्रपत्त्यधिकारिणः।

विरजारामेषु वृक्षादिरूपधारिणो दिव्यसूरयो मुक्तान् सत्कारयन्ति ऐरंमदीयसरस्तीरेऽश्वत्थछायायां पञ्चशताप्सरसो मुक्तानलंकुर्वन्ति,ब्रह्मप्रकार भोगंमुक्तं भगवान् स्वक्रोडेस्थापयति, सः प्राविर्भूतगुणाष्टको ब्रह्मसदृशो भूत्वा ब्रह्मानुभवति, न निवर्तते।

कोऽपि रासं, कोऽप्यानन्दमयीं तनूं प्राप्य रासलीलां, भोगान् भुनक्ति, भगवतो देहंप्रविश्य तिष्ठति।

रामानन्दीया विरजोत्तरं दिव्यरामसभां प्रविशन्ति, रामानन्दीयकवीरयोर्हंसा विचरन्ति यत्र। तत्र सत्त्वाब्धिरखण्डानन्दो रसधारा सर्वमानन्दमयम्।

भगवदिच्छानुसारिदेहधारिणो नित्यसूरयः, आज्ञयाऽवतरन्तिचाऽत्र, नित्यसूरयो नित्यमुक्ता भगवत्संकल्पमयाश्चेतनाः।

जगज्जडं जीवैर्भुज्यते परिणमति प्रतिक्षणम्।

जीवेश्वरौ द्रव्यौ जगद् द्रव्यं–साधर्म्यं, चेतनजडता–वैधर्म्यम्। कालो भगवान् परव्योम्नि नित्यविभूतौ भगवल्लोके वर्तते, कालो भगवतो लीलापरिकरः, नित्यविभूतौ कालो न स्वतन्त्रः, लीलाविभूतौ भगवानपि कालाधीन एव लीलां करोति। कालोऽचिद्वर्गः, कालो भगवततनुः, सा जागर्ति सदा।

प्रकृतिः-सत्त्वरजस्तमसामाश्रया, चतुर्विंशतितत्त्वात्मिका, न स्वतन्त्रा भगवदधीना शरीररूपा नोपादानं न चेतना।

भगवत्संकल्पेन सूक्ष्म जडचेतनौ कार्योन्मुखौ।

भगवल्लोके सर्वाणि शुद्धसत्त्वमयानि, संसारे प्राकृतानि भोग-भोगोपकरणभोगस्थानानि च।

बुद्धिर्मनसो वृत्तिः, प्राणो वायुविशेषः।

विशिष्टयोरद्वैतः, सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कार्यं, कार्यकारणयोरद्वैतः। न तु विशिष्टस्याऽद्वैतः।

भगवान् स्वसंकल्पेन निमित्तकारणं स्वांगैरुपादानकारणं च स्वांगपरिणामैश्च न विकृतो भवति।

अत्र श्रुतयो न गौण्यः, सर्वा अपि मुख्या इति विशेषता। तेषाममुख्यत्वं दूषणम्।

रामानन्दीयाः स्वसम्प्रदायं श्रीसम्प्रदायं मन्यन्ते भक्तिर्मोक्षोपायः, प्रपत्तिर्मोक्षहेतुः, कर्माणि भक्तेरंगानि, ब्रह्मणो जगन्निमित्तोपादानत्वम्। सविशेषं ब्रह्म।

लक्ष्मीनाथसमारम्भा, नाथयामुनमध्यमा<br>सीतानाथसमारम्भा, रामानन्दार्यमध्यमा } दीक्षामन्त्रा भिन्नाः।

वीरशैवाः-काश्मीरत्रिकदर्शनं-ईश्वराद्वयः, वीरशैवः (शिवाद्वैतं शक्तिविशिष्टाद्वैतं वा), शैवसिद्धान्तः (द्वैतम्), श्रीकण्ठस्य विशिष्टाद्वैतम्, चिच्छक्तिस्फुरणरूढं शिवतत्त्वम्। स्वतः प्रकाशस्वरूपं ब्रह्म, तत्र चेतनाऽचेतनविश्वस्य प्राविर्भावलयौ। निःशून्यलिंगे=ओंकारशक्तेः स्फुरणं, तस्मान्निष्कललिंगान्महालिंगपर्यन्तं विकासः। अभिलाषया निष्कललिंगं सानन्दं प्रपंचाकारत्वेन परिणमते, निजं स्वेछया संकोचयति कूर्मांगवत्। अ० १ पा० १ श्रीकरभाष्यं-अनन्तशक्तिविशिष्टजगदुभयकारणपशुपाशनियामकसकलनिष्कलस्थूलसूक्ष्म-चिदचित्प्रकाशसत्यज्ञानानन्तकल्याणगुणविभवाश्रयत्वं ब्रह्मत्वम्। निमित्तोपादानम् स्थलतत्त्वं ब्रह्म। स्थं-स्थानं, लंलयः। ब्रह्मधवलपटसमम्, शुद्धसत्तास्वरूपं तल्लीलामात्रं सृष्टिः। निजविनोदार्था मुदर्था सृष्टिः, तत्त्वसृष्टिर्महालिंगाज्जायते।

वीरशैवदर्शने-सर्वशून्यं निरालम्बं लिंगमेव सर्वतः सूक्ष्मतमं शुद्धसत्त्वस्वरूपं ब्रह्म, साऽवस्था शुद्धोन्मेषान्महासंकल्पात्प्राक्तनी, सर्वशून्यनिरालम्बलिंगं, निःशून्यलिंगं शून्यलिंगं चैतानि त्रीणि तस्यैव-ब्रह्मणः सूक्ष्मावस्थान्तराणि, अत्रैवाविर्भावतिरोभावौ भवतः, एवं सत्यपि तत्त्वातीतं तत्। परामहासत्ता, यदा ओंकारशक्तिः शून्यं

स्मरति तदा निःशून्यलिंगं भवति, शून्यलिंगं निष्कलं महाचित्तस्वरूपम्, महाचित्तस्वरूपनिष्कलब्रह्मणश्चिन्नादश्चिद्बिन्दुश्चित्कलाश्चाविर्भवन्ति, त्रयाणां समष्टिर्महालिंगम्। एतत् घृतकाठिन्यवत् सच्चिदानन्दमूर्तिः। अखण्डगलिकाकारस्तेजोमूर्तिः। निष्कललिंगात्-अकार-उकार-मकराणां प्रस्फोटः। त्रयाणां केन्द्रबिन्दुर्महाचित्तम्। चतुर्णामेतेषां समष्टिर्महालिंगम्। परमात्मा निजविनोदार्थं नानारूपो मुदं गच्छति। सा लीलाशुद्धाशुद्धसृष्टिः।

काश्मीरसिद्धान्तः-शिवः प्रकाशरूपः, शक्तिर्विमर्शस्वरूपिणी शिवपरमात्मनः स्वतन्त्रा, स्वातन्त्र्यशक्त्या अद्वैतं द्वैतत्वेन भासते, सृष्टिराभासः परशिवान्न भिन्नासृष्टिः, परमशिवः स्वानन्दाय तत्त्वरूपेण परिणमते, तत्रोज्ज्वलयौ, प्रत्यभिज्ञाः-ओंकारशक्तिः प्रत्यभिज्ञानशक्तितोविलक्षणा, पूर्णाहन्तापरमशिवः स्वस्वातन्त्र्येण शिवशक्तिसदाशिवेश्वरविद्यातत्त्वस्वरूपैः परिणमते। अत्र मते शक्तिस्तत्त्वस्वरूपिणी, नत्वोंकारशक्तिः। तत्त्वसृष्टिः शिवतत्त्वम् प्रक्रमते। शक्तितत्त्वं परवर्ति। निःशून्यलिंगान्यपि सूक्ष्मविलक्षणानि तरतमभावानि। परशिवोऽधिष्ठानं। महालिंगं=महाबिन्दुरिति तुलना। महालिंगात् शुद्धाशुद्धतत्त्वसृष्टिः-पञ्चशक्तयः, पञ्च सादाख्याः पञ्चविंशतितत्त्वानि मिलित्वामहालिंगेन सह-षट्त्रिंशत्तत्त्वानि।

शिवतत्त्वम्-एकमद्वितीयं सर्वप्रपञ्चकारणं प्रपञ्चस्वरूपं सर्वगतं नित्यं साक्षित्वरूपज्ञानक्रियास्वभावं स्वातिनिष्कान्तस्वरूपानुगतव्यापकं स्वभिन्नतत्त्वाऽभावात् कारणरूपेण व्यापकम्, स्वसमानाऽसमानपुरुषान्तराऽभावादेकत्वम्। इच्छाज्ञानक्रियात्मकः केवलपूर्णानन्दस्वभावः परमशिवः, अस्य जगत्सृष्टीच्छा प्रथमः स्पन्दः शक्तिः। सेयं बहिरुल्लिलसिषा, तथाऽहमिति परामर्शः परानन्दचमत्कारोद्रेकावस्थः। इच्छामात्रनिमित्तकौ निमेषोन्मेषरूपौ जगतः उदयप्रलयौ, इच्छाशक्तौ चित्रं जगत् अविकृताऽनुपजातस्वस्वरूपाऽव्यतिरेकेण जगत् अवतिष्ठते मनाक् परमार्थसत्यां शिवदशायां स्वेच्छयास्वभित्तौ विश्वमुन्मीलयति। शिवस्य ज्ञानशक्तौ ज्ञेयस्य विश्वस्य स्थितिः, तत्प्रकाशकः शिवः। इच्छया सृष्टदृष्टिवादः। ज्ञानेन दृष्टसृष्टिवादः। भुवनं विग्रहो ज्योतिः खं शब्दो मन्त्र एव च। बिन्दुनादादिसम्भिन्नः षड्विधः शिव उच्यते। तन्त्रालोके (६३)। एतेषां ध्यानेन फलाभिलाषशून्येन शिवैकात्म्यं मोक्षः। ज्ञानक्रियारूपं भासमानमप्यनाभासरूपं शिवतत्त्वम्।

प्रत्यभिज्ञाहृदये-चितिः स्वतन्त्रा विश्वसिद्धिहेतुः, विश्वस्य सदा

शिवादेर्भूम्यन्तस्य निष्पत्तौ तत्प्रकाशने स्थित्यात्मनि, परप्रमातृविश्रान्त्यात्मनि च संहारे, पराशक्तिरूपा चितिः भगवती स्वतन्त्राऽनुत्तरविमर्शमयी शिवभट्टारकाऽभिन्ना हेतुः, नाऽन्या स्वतन्त्रा माया असंभवात्। चितिरियं व्यापकनित्योदितपरिपूर्णप्रकाशरूपाप्रकाश्यभिन्ना। सदाशिवे स्वेच्छया सदैवांकुरायमाणं जगत्, अहन्तयाऽऽच्छाद्य स्थितं तदेव ईश्वरतत्त्वम्। अहन्तेदन्तयोरैक्यप्रतिपत्तिः शुद्धविद्या। 'ईश्वरो बहिरुन्मेषो निमेषोऽन्तः सदाशिवः' क्रियाशक्तिप्रधानं विद्यातत्त्वम्। ज्ञानशक्तिप्रधानमीश्वरतत्त्वम्, इच्छाशक्तिप्रधानं सदाशिवतत्त्वम्। तच्चतुष्टयं सदाशिवः शक्तिविशिष्टाद्वैतम्, इच्छाविशिष्टाद्वैतं ज्ञानविशिष्टाद्वैतं विद्याक्रियाविशिष्टाद्वैतम् ईश्वरशिवविशिष्टाद्वैतम्।

परमेश्वरः पारमेश्वर्या स्वरूपं गूहयित्वा संकुचितः पुरुषसंज्ञः। स चैन्द्रजालिकस्वेच्छया सम्पादितमोहैश्वर्यः संसारी, मोहानभिभूतश्चिद्घनोमुक्तः परमशिव एव। भेदप्रथा माया, अहन्तेदन्तयोरभेदप्रथा शुद्धविद्या, एतया ईश्वरत्वप्रत्यभिज्ञा, ततः सदाशिवत्वप्रत्यभिज्ञा, ततः शक्तितत्त्ववत्ताभिज्ञा, ततः शिवतत्त्वाभिज्ञा, ततः परमशिवता स्वरूपं मोक्षः।

नीलादिचितिर्मायाप्रमातृता, असंकुचितचैतन्यचितिर्विद्याप्रमातृता, तत एव स्वेश्वरसदाशिवशिवपरमशिवरूपता स्वप्रमातृता-शाश्वती सार्वज्ञ्यप्रत्यभिज्ञा तदिदम् ईश्वरविशिष्टाद्वैतं सदाशिवविशिष्टाद्वैतं शिवविशिष्टाद्वैतं परमशिवःपरमात्मेति।

१ शिवतत्त्वम्-काश्मीरप्रत्यभिज्ञायाः शिवाद्वयम्, शिवशक्तिसामरस्य-स्वरूपम्-३७-तत्त्वानि, षट्त्रिंशत्तत्त्वानि। १ शिवः प्रकाशः स्वप्रकाशः स्वभिन्नप्रकाशाऽविषयः, शक्तिशक्तिमतोरभेदात् 'अहमिति'स्फूर्तिर्विमर्शशक्तिस्तया शिवः स्वप्रकाशः। २ शक्तिं विना निःसारः शिवोऽपि जडप्रायः, आश्रयं विनाशक्तिरकिञ्चिदिति। जगदुपादानत्वविभुत्वनित्यत्वसर्वात्मत्वसजातीयद्वितीयराहित्यादिस्वरूपः शिवः। विमर्शशक्तिः स्फूर्तिः शिवस्य सृष्टिस्थितिसंहारशक्तिः, विश्वाकारस्फूर्तिः सृष्टिः, विश्वप्रकाशः स्थितिः, विश्वसंहरणं संहारः, विमर्शसंकोचः स्वरूपः। एषा शिवस्य चैतन्यं स्वातन्त्र्यं कर्तृत्वं विज्ञातृत्वं स्फुरत्ता सारो हृदयं स्पन्दो वा गीयते।

२ सदाशिवतत्त्वम्-शिवस्यान्तरनिमेषोऽयं ज्ञानविशेषः, क्रियाप्रागवस्थः, इदमंशः विषयांशः स्फूर्तिविषयः। बाह्यसत्तास्फुरणे सदाशिवेऽहमित्यंश आच्छादितः। सत्त्वं त्वस्त्येव। विषयाः शक्ति-

रूपाः।

४ ईश्वरतत्त्वम्–शिवो वाह्यनिमेषावस्थः ईश्वरः, विषयाः स्फुटाः, इदमिदमिति विषयप्रधाना विमर्शाः। तेऽप्यहमंशाऽभिन्नाः स्फुरन्ति। पारमार्थिकी सत्ता।

५ शुद्धविद्यातत्त्वम्–अहमंशेदमंशयोः समानभावा स्फूर्तिः, शिवात्मतया जगद्विमर्शो विद्या।

६ मायातत्त्वम्–तत्त्वानामविवेको माया, अविवेकात् कालादौ शिवात्मता न स्फुरति, पृथगवभासोऽहमिदमांशयोः। द्वैतं स्फुटं, चैतन्यांशसंकोचः। नानासृष्टिः। सर्वकर्तृत्वं विसृज्य किञ्चित्कर्तृत्वं शिवो धत्ते। परिमितः किञ्चिज्ज्ञो भवति, नित्यतृप्तेरभावाद् रागी, कालवशो नित्यत्वनिरोधवान्, अस्वतन्त्रः भवति। कञ्चुकैः कला ७ विद्या ८ राग ९ काल १० नियति ११ तत्त्वैर्द्वादशो भवति सोऽयं जीवात्माऽतस्तस्येदृग्विषयदमंशा विषयाः, त्रयोदशं तु प्रकृतितत्त्वम्।

प्रत्यभिज्ञायाम्–अनन्तशक्तिसमष्टिर्विमर्शशक्तिः, तस्या अभिन्नः शिवः सर्वात्मकतया। शिवाऽद्वैतं–शैवमतेऽत्र नानात्वमपि सत् न तु मिथ्या। त्रिकतन्त्रे शिवात्मकं त्रिकं सत् सन्ति तत्त्वानीति। सत्या शक्त्या लीलाकैवल्यं सृष्टिश्चोपसंहृतिश्च। मुक्तानां न भोगः। ईश्वरानुग्रहादेषाऽद्वैतभावना शक्तिदीक्षितस्य शिवानुग्रहादहं सर्वमिति स्फूर्त्या शिवात्मसाक्षात्कारेण मुक्तिः।

२५–एकादश–शिवः १ शक्तिः २ सदाशिवः ३ ईश्वरः ४ शुद्धविद्या ५ माया ६ कला ७ विद्या ८ रागः ९ कालः १० नियतिः ११।

१ चित्प्राधान्ये शिवतत्त्वम्, २ आनन्दप्राधान्ये शक्तितत्त्वम्, ३ इच्छाप्राधान्ये सदाशिवतत्त्वम्। ४–ज्ञानशक्तिप्राधान्ये ईश्वरतत्त्वम्, ५–क्रियाशक्तिप्राधान्ये शुद्धविद्यातत्त्वम्, तत्त्वेश्वराः क्रमशः शिव–शक्ति–सदाशिवेश्वर–जीवा अनन्ताः, अणवः शांभवाः शाक्ताः मन्त्रमहेश्वरा मन्त्रेश्वरा मन्त्राश्च इति विशेषा अनन्ताः। चतुरनुगताः सर्वे। त्रयोविंशतितत्त्वानां मायात उत्पत्तिः।

आगमेषु शिवस्य सृष्टिस्थितिलय–तिरोधानाऽनुग्रहाणि शक्तिविमर्शद्वारा पञ्चकार्याणि। शिवस्य षड् विभवाः–'सर्वज्ञता तृप्तिरनादिबोधः तन्त्रता नित्यमलुप्तदृष्टिः। अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरंगानिमहेश्वरस्य'। शिवांशा अविद्यामलान्विता विज्ञानकलाः प्रलयकलाः सकलाश्च त्रेधा जीवाः अनन्ताः, विस्मृतनिजस्वरूपो जीवः, मलविमोचनाय विश्वनिर्मितिः। आणवमायीयकार्मजपाशैर्जीवाः पशवः। शिवदीक्षया मोक्षः। इच्छासंकोचात् मन्यतारूपमाण-

वम्, ज्ञानसंकोचात् किञ्चिज्ज्ञत्वं मायिकम्, क्रियासंकोचात् किञ्चित्कर्तृकं कार्मिकं मलम्। स संसारी। वेधा-मन्त्र-क्रिया-दीक्षाभिः शिवोभवति।

शैवप्रभेदा नव-१ अनादिशैवः, साक्षाच्छिव एकः। २-आदिशैवाः परशिवपञ्चवक्त्राद्दीक्षितानां कौशिककाश्यपभारद्वाजात्रिगौतमादिऋषीणां वंशजाः। ३-लोकपूजया महान्तो महाशैवाः। ४-दीक्षिताः क्षत्रियवैश्याः ५-अनुशैवाः वैश्यशूद्राः, ६-उवान्तरशैवाः-वर्णान्तरसंकराः, ७-अन्त्यशैवाः अन्त्यजाः। ८-योगशैवज्ञानशैवाः पारमेश्वरे वीरशैवाः पृथक्। एतेमहापाशुपताः वीरशैवाः लिंगकण्ठा लिंगकराश्च। सामान्यलिंगपूजकाः पाशुपताः। 'वीरशैवोपास्या गुरुर्लिगजंगमाः। जगति विशिष्ट ईर्यते-वीरः शिवसम्बन्धी-शैवः, वी-विद्याशिवजीवैक्यबोधिका, तस्यां रमन्ते ये शैवाः वीरशैवाः॥ स्वामिभक्त्याऽऽत्मानमर्पयति वैराग्ययुक्तो वीरशैवः। महात्यागी शिवोऽहंमहामाहेश्वरः। वीरशैवदर्शनं-शक्तिविशिष्टाद्वैत-विशेषाद्वैत-द्वैताद्वैत-शिवाद्वैत-षट्स्थलसिद्धान्तादिभिः पर्यायनामभिरभिधीयते।

शिवाद्वैतवादो विशिष्टाद्वैतवादः। श्रीकण्ठकृतं शैवभाष्यं ब्रह्मसूत्राणाम्। कर्मभिर्ज्ञानं ब्रह्मज्ञानं परमपुरुषार्थः। कर्मभिश्चित्तशुद्धिस्ततोऽवबोधः। ब्रह्म सगुणं सविशेषं जगद्रूपेणपरिणतं बाह्यकरणाऽभावेऽपि सर्वं पश्यति।

शैवविशिष्टाद्वैतं, श्रीकण्ठो मनुते-जगद्बीजानि शिवशक्तौ स्थितानि, शक्तेः शिवेन सहाऽविनाभावसम्बन्धः, शिवो विनाशक्ति ज्ञातुं न शक्यतेऽतो विशेषणं शक्तिः-शक्तिविशिष्टाद्वैतम्। नायकतादात्म्यद्वाराऽनुभूतोरसः-अतः शिवसाम्यम्, न शिवभावत्वम्, प्रेक्षकस्येव मुक्तस्य, शिवसाम्यं, प्रेक्षकस्य सत्ता नायके न निमज्जति पशोर्निरतिशयानन्दस्य शिवसाम्यं शिवतादात्म्यम् उपासनया।

शैवविशेषाऽद्वयः, शुद्धद्वैताद्वैतः, सेश्वराद्वैतः, शिवाद्वैतः, शक्तिविशेषाद्वैतं, सगुणब्रह्मवादं, विश्च शेषश्च विशेषौ,-तयोरद्वैतं, भ्रमरकीटवज्जीवस्य स्वाभाविकभेदनिवृत्तिः। विश्वरूपे शिवे जगत्तिष्ठति, न तु बहिः, शिवे तिष्ठति शिवे लीनभावमपि तिष्ठति।

उक्तानि सर्वाणि मतानि परब्रह्मपरमात्मानं सर्वेतरवाधारं सर्वकर्तारं सर्वान्वितं सर्वनियामकं द्विर्भूतं द्विर्वर्तमानं द्विरानन्दितं द्विस्तादात्म्यं द्विःसमभिहारं द्विर्मात्रीयगौणाऽगौणैक्यं ख्यापयन्तीति परब्रह्मण्येव शक्तिमायावैशिष्ट्यं जीवेश्वरादिवैशिष्ट्यं मुक्तब्रह्मादिवैशिष्ट्यं सूक्ष्मस्थूलावस्थादिवैशिष्ट्य आविरनाविर्गुणधर्मादिवैशिष्ट्य

संकल्पदृष्टप्रवेशादिव्यज्यकारणतादिवैशिष्ट्यं व्यतिरेकस्वभावेऽपि यथापरिकरवैशिष्ट्यमन्ततस्तादात्म्येन स्ववैशिष्ट्यं तत्रावेदयन्तीति विजयते ब्रह्मविशिष्टं परब्रह्म सर्वविशिष्टब्रह्माद्वैतमित्यलं तद्विस्तरेण।

यत्सिद्धं सर्वदा यादृक् तादृग् बुद्धया विचिन्त्यते।
समन्वयोऽयं ध्यानात्मा भक्तिरूपोऽस्तु तत्प्रभौ ॥ १ ॥
नान्योक्तं परिवर्तेत निष्पद्यते च नाऽन्यथा।
यथावत्तद्धि फलतः प्रभात्विति विदां श्रमः ॥ २ ॥
सम्प्रदायस्य दाढर्चार्थं यतन्तेऽन्तर्विदः श्रिताः।
विद्याधनार्पणं व्याजसहितं चार्प्यते हरौ ॥ ३ ॥
यथायावाँश्च यादृक् च स्वामिनारायणः प्रभुः।
परब्रह्माऽस्ति चान्तःस्थस्तथातावानुपास्यते ॥ ४ ॥
स एवात्राऽपरोक्षः सञ्छ्रिताग्रपवर्गिकाम्।
निष्पत्तिं स्वेन रूपेणाऽर्पयेत्येतत्समर्थ्यते ॥ ५ ॥

इति श्रीकृष्णवल्लभाचार्येण

महत्तत्त्वम् —अव्यक्ते गुणसाम्ये लीयते।
अव्यक्तम् —अक्षरे चेतनसमष्टिगणेऽव्यक्ते लीयते।
अक्षरं —तमसि चिद्गर्भाऽचिद्गर्भेतिविवेचनाऽशक्येऽतिसूक्ष्मेऽव्यक्ते लीयते।
तमः —परे देवे महापुरुषे तद्विशिष्टे परमात्मन्येकी भवति।
सुबा–उ० श्रुतिः—'अक्षरं तमसि लीयते तमः परे देवे एकीभवति'।

卐 ओम्–इतिश्रीस्वामिनारायणपरमात्मा विजयते 卐

## वाक्यपदीये ब्रह्मकाण्डे

'अव्याहता कला यस्य कालशक्तिमुपाश्रिताः। जन्मादयो विकाराः षड् भावभेदस्य योनयः' ॥ अत्र शब्दब्रह्मणो जगत्सृष्टौ कालापेक्षा दर्शिता, 'वैषम्यनैर्घृण्ये न, सापेक्षत्वात्तथाहिदर्शयती'तिवेदान्तसूत्रे परमेश्वरस्य सृष्टौ कर्मापेक्षा दर्शिता, कालकर्मणी भगवत्कृते भगवद्रूपे, तत्सहकारेण भगवान् सर्वं जगल्लीलया निर्मिमीते 'लोकवत्तु लीला कैवल्यमि'त्यत्रोक्तम्। भगवाँस्तु–आनन्दघनमूर्तिर्दिव्यगुणादिमान् नवलकिशोर आनन्दतत्त्वमूर्तवेष एव सृष्टिषु विहरति दृश्यते यथापात्ररूपगुणादिसमान आनन्दप्रदत्वस्यफलाय भक्तेषु, सोऽत्र स एव न तु मायातत्त्वमूर्तिर्न विभूतितत्त्वमूर्तिर्न वा कल्पितमिथ्यामूर्तिः किन्तु स एवात्र स एव ब्रह्मलोके स एव तत्र स एवात्रेति जन्मकर्मादि दर्शनमात्रं दिव्यमपि भक्तसाजात्यपरिवेषितम्, उर्वरितसमनियमितत्यूनपरिदर्शितविस्तिरस्तु-

ल्यपारिमाण्डल्याद्यनन्तशक्तिसामर्थ्यैश्वर्यवत्तया कर्त्रकर्तृविकर्तृत्वादिशोली स एव सः, मुक्तैर्धाम्नि ईश्वरैर्विभूतौ जीवैर्भूगोले योगिभिर्हृद्यात्मनि भक्तैर्द्राक्स्वपुरतः सकामैः कार्ययोगे पितृभ्यामंके देवैर्गरुडे यथापेक्षस्वरूपो दृश्यते स एव सः, नाऽस्याऽवतरणे निकृष्टता सहमेलने विषमता निर्गमने प्रोत्समता वा, सदा स्वत्वात् समत्वादेकस्वरूपत्वात् स एव स इतितत्त्वात् स्ववचनैर्दिव्यैकस्वत्वात् शाश्वतव्यतिरेकित्वात् स्वेष्टलीलावत्त्वात् आनन्दपरमात्ममात्रत्वात् स्वातन्त्र्यपूर्णत्वात् स्वज्ञातृणां स्वसाधर्म्योपदेशात् एकविज्ञानकसर्वविज्ञानकथनात् रसो वै स इत्येकतत्त्वात्। एवं सर्वशास्त्रादिषु परमात्मनो रसवत्त्वं रसत्वं चावेदितं, तन्मूर्तौ भक्तेरवस्थितत्वेन साऽपि रसा कर्तव्येति सारतमः।।

"भारते पश्चिमे प्रान्ते पुण्ये सागरसङ्गते। 'रैवताऽद्रि'समाधारे कङ्कसौराष्ट्रविश्रुते ।। १ ।। वैक्रमेऽष्टादशशते वर्षे सर्वशुभावहे। बलिखातमहाराजः कूकावालाख्यभूपतिः ।। २ ।। यं प्रधानं नियोज्यैव ग्रामान् संगृह्य द्वादश। अस्थापयद् राजधानीरूपां हि नगरीं शुभाम् ।। ३ ।। नामतः कुंकुमवापीं नवतिग्राममूर्धनीम्। कूकानृपतिमान्यस्य राज्यकल्याणमिच्छतः ।। ४ ।। श्रीमत् 'कल्याण'देवानीकस्य ख्यातस्य तस्य वै। नवतिग्रामसमूहात्मकस्य मण्डलस्य यः ।। ५ ।। राष्ट्राध्यक्षो बली 'लिम्बा'देवानीकः सुपुत्रकः। कूकावालानृपपुत्रे आलावालाख्यभूपतौ ।। ६ ।। राज्ये शासत्युन्नतिं वै राष्ट्रस्य कृतवाँस्तदा। आलावालानृपे स्वर्गं गते राज्ञी च धीमती ।। ७ ।। राज्यं समकरोत् कम्त्री लिम्बादेवसहायतः। तस्य पञ्चमपुत्रस्य सर्वसद्गुणशालिनः ।। ८ ।। श्रीमद्गोपालदेवानीकस्य पुण्यवतो गृहे। धर्मपत्न्यां कम्भरायां देव्यां पुत्रस्तृतीयकः ।। ९ ।। वैक्रमे चन्द्रषण्णिधिभूमिते (१९६१) वत्सरे शुभे। ऊर्जकृष्णाष्टमी–(आश्वीनकृष्णाऽष्टमी) प्रातः पुत्रो यो जन्म लब्धवान् ।। १० ।। (ता० २१–८–१९०५) (शनिवारे)। अधीतभाषाषड्वर्गो गुणातीतमुनेस्ततः। बालमुकुन्दमुन्याख्येशिष्येऽर्पितस्वजीवनः ।। ११ ।। वर्षे चतुर्दशे यः श्रीस्वामिनारायणस्य च। दीक्षां दुर्गपुरे भाद्रे वैष्णवीं लब्धवान् शुभाम् ।। १२ ।। जीर्णदुर्गे च संस्थानं कृत्वाऽष्टादशवर्षके। काशीमागत्य शास्त्राणि सर्वाण्यधीत्य तत्त्वतः ।। १३ ।। सन्दृब्धे येन भाष्ये वै प्रगल्भे सांख्ययोगयोः। वेदान्तन्यायसाहित्यसांख्ययोगसमाश्रयाः ।। १४ ।। टीकाग्रन्थाश्च सुस्पष्टा रचितास्तात्त्विकास्तथा। प्रमाख्यातिविमर्शाद्याः भाष्यं ब्रह्मरसायनं ।। १५ ।। सुधासिन्धोरथ श्रीस्वामिनारायणदर्शनम्। सत्संगभाष्यमथ वै हरिस्वरूपनिर्णये ।। १६ ।। तत्त्वप्रभावलीभूमण्डलीयाद्यास्तथाऽपरे। अपिग्र-

न्थाश्च रचिताः सिद्धान्ता वर्णिताः स्फुटाः ॥ १७ ॥ दृष्ट्वा तं योग्यविद्वांसं सर्वसद्गुणशालिनम् । वृत्तालयपदाऽऽधीशाऽऽनन्दप्रसाददेशिकाः ॥ १८ ॥ वृत्तालयेपुरे यस्मै सद्गुर्वाख्यं पदं ददुः । काशीपण्डितधौरेयैः सभायां काशिकापुरे प्रदत्तं वैष्णवविद्वत्सार्वभौमपदं महत् ॥ १९ ॥ अन्ये उपाधयश्चापि काशीलब्धाः परीक्षणे । गुर्वाशिषस्तथा लब्धाः प्रसादफलबोधिकाः ॥ २० ॥ "श्रीकृष्णवल्लभाचार्यः स्वामिनारायणाश्रितः । न्यायाचार्यपदैरन्यैः सांख्यादितीर्थभूषितः ॥ २१ (१) ॥ योऽसौ काशीं समागत्य तृणीकृतपरिश्रमः । अर्थैः स्वार्थं विहायेदं प्रकाशयति सादरम् ॥ २२ (२) ॥ तस्मै मत्प्रियशिष्याय वश्यायाऽशेषभक्तये । सदानन्दमयायैवमाशीर्वादः प्रदीयते ॥ २३ (३) ॥ पूर्णपण्डितभावस्त्वं यशोमुकुटमण्डितः । पूर्णायुः सर्वपुण्यानामाश्रयः सन् सुखी भव ॥ २४ (४) ॥ (वामाचरणभट्टाचार्येण) ॥ नव्ये न्याये च सांख्ये श्रुतिशिरसि च योगेऽन्यशास्त्रेषु योऽस्ति, मीमांसायां च काव्ये नवकृतिरचने पारगो दर्शनेषु । वाग्धारायां विमर्शे विबुधसदसि वैशेषिके लेखने च निष्णातश्चेतिहासे जयति स निगमे तन्त्रशास्त्रे पुराणे ॥ २५ ॥ (१) । श्रीकृष्णो वल्लभाचार्य इह सुरनिभश्चार्हणाऽर्हः शुभाङ्को विद्वान् ज्ञाने प्रवीणो बुधपरिषदि काश्यां च यो लब्धकीर्तिः । मूर्धन्यं यत्सुधासिन्धुरसमरचयद् ब्रह्मरासायनाख्यं भाष्यं वै दर्शनानां पुरुमततत्यो यत्र विश्रान्तिमापुः ॥ २६ ॥ (२) ॥ गोपालानन्दमुनिकृद्वार्ताः संस्कृतपद्यगाः । गुणातीतानन्दमुनिवार्ता जग्रन्थ संस्कृते ॥ २७ (३) ॥ यश्चकाराऽन्यशास्त्राणि विविधानि मुदा हरेः । साम्प्रदायिकसिद्धान्तावेदकानि प्रसादतः ॥ २८ ॥ (४) ॥ सोऽयं विराजते स्वामी स्वामिनारायणाश्रितः । साध्वाशीर्वादपीयूषाऽसीमपानप्रजीवनः ॥ २९ (५) ॥ शास्त्रार्थे, च विलेखने, नवकृतौ, चाऽध्यापने, पर्षदि, व्याख्याने, च विवेचने, नवनवोन्मेषे, प्रमानिर्णये, । ऊहे च ग्रथने, परात्मभजने, शास्त्रेषु पारंगतः, श्रीकृष्णान्वितवल्लभार्यमुनिराट् विद्याब्धिरास्ते जये ॥ ३० ॥ (१) ॥ (श्रीवामाचरणभट्टाचार्येण) ॥ काश्यां यस्य विराजते सुमहिमा यः शास्त्रसिद्धान्तविद् विद्वच्छ्रेणिषु यः सतां बहुमतः श्रीस्वामिनारायणे । श्रीसत्संगिसुजीवनाख्यपरमग्रन्थार्णवस्तातधीर्जीयात्कृष्णसुवल्लभाऽऽर्य इह: स प्रौढप्रभाभासुरः ॥ ३१ ॥ (३१) श्रीवृजलालशास्त्रिणः ॥



# शुद्धिपत्रम्

| पृष्ठं | पंक्तिः | अशुद्धं | शुद्धम् |
|---|---|---|---|
| ९ | १२ | निरतियनित्याः | निरतिशयनित्याः |
| १० | २१ | परमात्मकः | परमात्मात्मकः, |
| ११ | २४ | पृथिव्ययमृ | पृथिव्ययममृ-, |
| ११ | २६ | आत्मभेद- | आत्मेद- |
| १४ | १२ | अदृष्ट | अदृष्टं द्रष्टृ |
| १४ | २९ | अन्वक्रामति | अन्ववक्रामति |
| १७ | २ | अतो नि | अतो भवति |
| १७ | ३३ | अहतः | अहन्तः |
| १९ | २ | चैत्रापि | चैवाऽपि |
| १९ | १६ | तच्च | त्यच्च |
| १९ | ३२ | व्याद्यात | व्याघात |
| २० | २९ | मदकरोत् | मन्तमकरोत् |
| २५ | १ | निाम | निमि |
| २५ | १६ | धर्मधर्मं | धर्माऽधर्मं |
| २८ | १३ | वाचा | वाच्यता |
| २९ | ३० | यग्रह | यग्रह |
| ३७ | ६ | रूपिप | रूपित |
| ४२ | १६ | कट | कटक |
| ४४ | २५ | विशेशो | विशेषो |
| ४६ | २६ | तत्प्रयत्नीक | तत्प्रत्यनीक |
| ४८ | ३ | सैर्वैः | सर्वैः |
| ५० | १९ | वावा | वाचा |
| ५० | २७ | षुः, तेः | षुंः, तैः, |
| ५५ | १४ | कषंकं | कर्षकं |
| ५७ | १५ | तद्धषां | तद्वैषां |
| ५८ | १८ | त्ये | तये |
| ६४ | १३ | प्राण्य | प्राण्य |
| ६५ | २६ | कास | कारु |
| ६६ | १८ | लीप्ता | लिप्ता |
| ६८ | ३३ | काशरू | काशकृ |
| ६९ | १ | मूर्तिमत् | मूर्तिसमन्तमूर्तिमत |

| | | | |
|---|---|---|---|
| ६९ | १२ | मत्तया | वत्तया |
| ७१ | १४ | स्त्रत्व | स्वत्व |
| ७१ | २८ | भोक्तत | भोक्त |
| ७२ | १८ | द्वारा | द्वारारा |
| ७४ | १३ | लदेवं | तदेवं |
| ७५ | २ | त्रिफुटी | त्रिकुटी |
| ७५ | १४ | दाढर्य | दाढर्य |
| ७५ | ३३ | धाधम् | चाधम् |
| ९३ | २१ | पममे | परमे |
| १०६ | १६ | गुणाड्वाव्यं | गुणोड्वाव्यं |
| १०७ | १३ | निर्लेपो | निर्लेपः |
| १०९ | ४ | क्षक्षर | अक्षर |
| १०९ | २४ | शाश्वत | शश्वत् |
| ११२ | १७ | मिद्धेः | सिद्धेः |
| ११२ | ३१ | शुशोभत्वं | सुशोभत्वं |
| ११६ | २१ | रूपे | रूपं |
| ११८ | २५ | कत्वत्प | कत्वाप |
| ११९ | ३२ | पमस्यि | पमस्ति |
| १२० | ३ | मस्तीणि | मस्तीति |
| १२० | ११ | भयवतः | भगवतः |
| १२१ | २० | रमितो | रभितो |
| १२३ | २० | वन्दिव्य | वह्विव्य |
| १२३ | २६ | तता | तीता |
| १३० | ४ | मित्यं | मित्थं |
| १३१ | ३१ | मनसाच्च | मानसाच्च |
| १३२ | १८ | सर्वस्मृ | सर्वस्तृ |
| १३५ | १४ | दिकं | दिकस्य |
| १४३ | ३१ | मिन्ना | भिन्ना |
| १४४ | ३३ | असम | असम |
| १४७ | २९ | पतन्ना | पतन्नाना |
| १४८ | २१ | अ० ६ | अ० ५ |
| १४८ | ३३ | संझ्या | संज्ञया |
| १५० | २३ | ३३ | ३६ |
| १५५ | २८ | ७७ | ८७ |
| १५७ | १० | अन.तम | सातम |

| | | | |
|---|---|---|---|
| १५८ | २१ | रुचिण्राणि | रुचिपराणि |
| १६२ | २६ | मूर्त्योतप्रोत | मूर्त्योतप्रोत |
| १६३ | १७ | अन्यणा | अन्यथा |
| १६४ | १२ | शाश्वतिका- | शाश्वतिक- |
| १६४ | २२ | दिद्रिय | दिन्द्रिय |
| १६५ | २६ | नेक्य | नैक्य |
| १६५ | ३० | परमेश्वराः | परेश्वराः |
| १६९ | १४ | भूत | भूतदृष्टिज्ञानेऽनवस्था- यिप्रामाण्यं पराभूत |
| १७० | ११ | न्नर | न्तर |
| १७१ | १३ | द्व्यव | ध्यव |
| १७१ | १९ | बोधे | जन्यबोधे |
| १७३ | २ | मम्वादि | सम्वादि |
| १४३ | १९ | तता | तता स्फटिकत्ववति |
| १७७ | १८ | धमिकाया | धर्मिकाया |
| १७८ | २७ | नामसत्वं | तामसत्वम् |
| १८० | १ | त्वव | त्वमेव |
| ,, | ४ | ऽस्तत्व | ऽस्तित्व |
| ,, | ८ | विचये | विलये |
| ,, | ११ | तत | तत्त- |
| ३८३ | ३२ | मौछि | मौर्छि |
| १८४ | २४ | वन्धात्वं | वन्ध्यात्वं |
| १८५ | १९ | नेवा | नैवा |
| १८८ | १० | जातेजा, | जातेर्जा |
| १९२ | ३२ | व्याघता | व्याघाता |
| १९९ | १० | नहि चैतन्ये, | नहि चैतन्यं |
| २०२ | २१ | स्वाथ | स्वार्थे |
| २०२ | ३२ | घरे | घटे |
| २०४ | १९ | प्राणच्छ | प्राणवच्छ |
| २१५ | ३ | साकानां | सकानां |
| २१५ | ४ | णीयनाम् | णीयानाम् |
| २१८ | ७ | प्रतिभासु | प्रतिमासु |
| २१९ | | गृह्णाति | गृह्णाति द्वितीया तु समीपदेशग्रहणपूर्वकं तदन्तरालाऽग्रहणस- हकृतं चन्द्रं गृह्णाति, |

| | | | |
|---|---|---|---|
| २२० | १२ | शून्यैद्र | शून्यैन्द्र |
| २२२ | १८ | दाऽग्रहा | दाऽग्रहा |
| २२३ | २७ | प्रित्त | चित्त |
| २२६ | ७ | ननभि | नभि |
| २३० | ११ | सप्तते | सप्तमो |
| २३२ | १३ | निमर्थकः | निरर्थकः |
| २३३ | २६ | मनः | मतः |
| २३४ | ३ | हृप्त | हन्त |
| २३४ | १६ | भावनामिः | भावनाभिः |
| २३४ | १७ | ऽर्दितो | ऽर्दिता |
| २३९ | ५ | प्रवेश | प्रदेश |
| २३९ | ३० | विषय | विषय |
| २३९ | ३२ | श्रस्तय | श्रयस्त |
| २४० | ३० | अन्टधा | अष्टधा |
| २४१ | ५ | जघ | जघ |
| २४६ | १३ | साक्षा वं | साक्षात्त्वं |
| २४६ | २५ | नित्यः पञ्चमेदाः | नित्यः, सनित्यो जड-जीवयोः। जडभेदो मिथो नित्यः पञ्चमेदाः, |
| २४९ | २ | नैष्कैश्वन्थं | निष्कैश्वन्यं |
| २५० | १४ | वालद्या | वालाद्या |
| २५२ | ३ | कत्वम् | कत्वकम् |
| २५२ | ३० | शक्त्यैश्व | शक्त्यैश्व |
| २५६ | ३ | अम्भराणि | अम्वराणि |
| २५६ | २३ | मम् | कम् |
| २५७ | १७ | ज्ञप्ति | ज्ञप्तिप्र |
| २५९ | ११ | वाग | वाग् |
| २५९ | १४ | न्तः | वाह्यान्तः |
| २६४ | २ | परत | परात् |
| २६८ | २४ | परस्तु | रूपस्तु |
| २७० | ४ | पव | पव |
| २७१ | २५ | पारवाद्यैः | पारदाद्यैः |
| २७५ | ११ | श्राति | श्रापि |
| २७९ | २६ | श्चर्य | श्वर्य |

| | | | |
|---|---|---|---|
| २८० | २३ | मैयुनं | मैथुनं |
| २८१ | ३ | नर | नट |
| २८१ | १७ | लकार | लंकार |
| २८३ | १५ | सतत्त्घानि | सतत्त्वानि |
| २८६ | २३ | कासता | कारुता |
| २८७ | ३१ | मासन् | आसन् |
| २८८ | १५ | चेव | त्वेन |
| २८८ | २० | यैव | चैव |
| २९५ | ३ | मेकारता | मेकाकारता |
| ३०१ | १८ | जृम्मृण | जृम्भण |
| ३०४ | ३३ | परिवदर्शि | परिदर्शि |
| ३१२ | ५ | ४४, | ४, |
| ३१२ | १३ | यदेव | यदैव |
| ३१२ | २६ | मुचकन्द | मुचुकुन्द |
| ३१२ | ३४ | समुद्धतेयं | समुद्धृतेयं |
| ३१३ | २४ | ४०,... | श्लोकः,१२,अ०४७श्लोकः |
| ३१७ | ११ | चमणि | चर्मणि |
| ३१७ | २९ | ह्रहि | हृदि |
| ३१७ | ६ | परेंऽ | पदेंऽ |
| ३१८ | ११ | तदधस्तु | महाँस्तत्र प्रासादः परिकीर्तितः । ५ । तदधस्तु |
| ३२२ | २३ | ऽसाधारण | असाधारण्य |
| ३४० | २ | क्तमृगं | क्तं ग- |
| ३५९ | १२ | हविषयद | हंविषयेद |

卐 卐 卐

